# सटीक चक्रदत्तः ।

महामहोपाध्याय चक्रपाणि दत्त

संगृहीतः ।

श्रीयुक्तबाबुभुवनचन्द्र वसाक महोदयस्य

प्रार्थनाया

श्रीहृदयनाथ तर्करत्न कविरत्न कविराजेन

परिशोधितः ।



८ नं निमतला घाट ष्ट्रीटस्थ

श्रीयुक्तबाबु भुवनचन्द्र वसाकेन प्रकाशितम् ।



कलिकाता नगर्य्याम्

८ नं निमतला घाट ष्ट्रिटस्थ

संवादज्ञानरत्नाकराख्ययन्त्रे श्रीयुक्तभुवनचन्द्र

वसाकेन मुद्रितः ।

१८८९

# चक्रदत्तस्य सूचीपत्रम् ।



अथ मसूर्य्यधिकारः।



अथ क्षुद्ररोगाधिकारः।



अथ मुखरोगाधिकारः।



अथ कर्णरोगाधिकारः।



अथ नासारोगाधिकारः

# सटीक चक्रदत्तः।

श्रीं नमः शिवाय।

गुणत्रयविभेदेन मूर्त्तित्रयमपेयुषे।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतयेनमः॥ १॥
नानायुर्वेदविख्यातसद्योगैश्चक्रपाणिना। क्रियते

---

तत्त्वचन्द्रिका।

यः सप्तवर्षदेशीयो दधार धरणीधरम्।
कंसध्वंसकरं वन्दे तं देवं देवकीसुतम्॥
तातः किमथ मातेति यं दृष्ट्वा दृष्टपूर्वकम्।
अभूत् स्कन्दोऽपि सन्देहस्तं देहं शिवयोर्भजे॥
टीका रत्नप्रभा चक्रदत्तनिर्मितसंग्रहे।
यद्यप्यास्ते तथाप्येष सङ्क्षेपाय ममोद्यमः॥
विस्तारोक्तञ्च संक्षिप्य प्रतिक्षिप्य च दुर्वचः।
व्याख्यान्तरञ्च निःक्षिप्य टीकेयं क्रियते मया॥

निशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं वा प्रारिप्सित-ग्रन्थसमाप्तिफलकं वा तत्प्रतिबन्धकविघ्नध्वंसमात्रफलकं वा स्वयंकृत-भिष्टदेवतानमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति गुणत्रयेत्यादि। गुणत्रयं सत्त्वरजस्तमोरूपं मूर्त्तित्रयं ब्रह्महरिहरस्वरूपम्॥ १॥

प्रेक्षावतां प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनमाह नानेत्यादि। सदिति सिद्धफलम्। गूढ़वाक्यं गूढ़ार्थं वचनं तद्बोधकं तदर्थप्रतिपादकं सद्वचनं तद्युक्तः, यथा—नवज्वरे मड़्गादि[?]ध्यजविधानं, तथा तत्रैव

संग्रहो गूढ़वाक्यबोधकवाक्यवान् ॥ २ ॥ रोगमादौ परीक्षेत ततोऽनन्तरमौषधम । ततः कर्म्म भिषक पश्चात् ज्ञानपूर्व्वं समाचरेत् ॥ ३ ॥

---

## ज्वराधिकारः ।

नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम । क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥ ४ ॥ ज्वरे लङ्घनमेवादाव्-

---

"न दद्यात्तत्र भेषजम्" इति भेषजनिषेधोऽपि, अतो विधिनिषेधयोरेकविषयत्वेन विरोधः स्यात्, अतस्तत्परिहारार्थं सव्यभेषजसम्बन्धो निषिद्ध इत्यादि वचनं निबद्धमिति । संग्रहेण सह सद्योगानां वाच्यवाचकलक्षणः सम्बन्धः सद्योगा एवाभिधेयाः, अवान्तरप्रयोजनं चिकित्सितं, मुख्यन्तु आरोग्यमिति ॥ २ ॥

तत्र चिकित्साक्रममाह रोगमित्यादि । आदौ निदानपूर्वरूपादिभिः रोगं परीक्षेत । ततो रोगपरीक्षानन्तरमौषधं परीक्षेत । ज्ञानपूर्वमिति कर्मदर्शनजनितज्ञानपूर्वं ज्ञायते अनेनेति ज्ञानं शास्त्रं तत्पूर्वकमिति वा ॥ ३ ॥

तत्र ज्वरस्य सर्वरोगप्रधानत्वात् प्रथमं तच्चिकित्सितं वक्तव्ये कृतमपि भेषजं निदानसेवनादकृतमिव भवतीति निदानपरिवर्जनस्यैव गरीयस्त्वात् प्रथमं निदानपरिवर्जनरूपं चिकित्सितमाह नवज्वर इत्यादि । अत्रान्न गुर्वन्न लङ्घनस्य विधानात्, अतएवोक्तं हारीते 'गुर्वन्नभोजनाच्चापि विरूक्षो दोषकोपनम्' इति । कषायांश्चेति 'न तु कल्पनकल्पितस्य कषायः परिषिध्यते' इति चरकवाक्यस्वरसात् कषायशब्देनात्र कषायरसमात्रमुच्यते, न तु स्वरसादिः । अतएव जतूकर्णेऽपि "कषायरसगुरुस्निग्धस्नानाभ्यङ्गान्न नवज्वरे वर्जयेत्" इत्युक्तम् । हरिचन्द्रेणापि "नात्रस्वरसादीनां निषेधः" इत्युक्तम् । तथा 'अपक्वान् न विपच्यन्ते कुर्वन्ति विषमज्वरम् । दोषा बद्धाः कषायेण

पद्दिष्टमृते ज्वरात्। चयानिलभयक्रोधकामशोकश्रमोद्भवात्॥ ५॥ आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाप-

स्तम्भित्वात्तरुणज्वरे' इति चरकवचने स्तम्भित्वादित्ययं हेतुः कषायरसवर्जनाभिप्रायेणैव सङ्गच्छते। उक्तं हि "कषायः स्तम्भनः शीतः" इति। स्तम्भाति येन सस्तम्भनः वाभटेऽप्युक्तं 'पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते। नवज्वरे मलस्तम्भात् कषायो विषमज्वरम्। कुरुतेऽरुचिहृल्लासहिक्काध्मानादिकानपि' इति॥ ४॥

आमाशयसमुत्थानां पूर्वं लङ्घनमौषधमित्युक्तम्, ज्वरोऽप्यामाशयसमुत्थः अतस्तत्र लङ्घनमुपदिशति ज्वरे लङ्घनमित्यादि। यद्यपि लङ्घनबृंहणीये "चतुःप्रकारा संशुद्धिः" इत्यादिना दशविधमेव लङ्घनमुक्तं तथापि व्यायामप्रवातयोर्वर्जनीयत्वेनैवोक्तत्वात् संशोधनादीनामवस्थाविशेषनियतत्वात् पारिशेष्यादत्रोपवास एव लङ्घनशब्देनोच्यते। अतएव लङ्घनमेवेत्यवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते। तेन ज्वरस्य पूर्वरूपे यल्लघ्वशनादिविधानं तस्य न निषेधः। वाभटेनापि "स्नानाभ्यङ्गप्रदेहांश्च परिशेषञ्च लङ्घनम्" इत्यनेन नवज्वरे अनशनरूपलङ्घनापेक्षया परिशेषलङ्घनप्रतिषेधं कुर्वता संशोधनादिरूपं लङ्घनं निषिध्यते किंवा चरकेण निदानस्थाने 'हितं लघ्वशनमपतर्पणं वा,' इति यदुक्तं तत् पूर्वरूपावस्थायां, व्यक्तायान्तु लङ्घनमेवेत्येवकारेण लघ्वशनमपि निषिध्यते इति ज्ञेयम्। ननु लङ्घनबृंहणीये कफपित्तज्वरकुष्ठादिषु मध्ये ज्वरं पठित्वा उक्तं 'पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्,' इति इह तु लङ्घनमेवादावित्यतो विरोधः, नैवं, तद्विषय प्रयोगस्यादौ पाचनं, न तु ज्वरस्यादावित्यवगम्यते। किंवा आदावेव लङ्घनं कार्यमिति योज्यं तेन जीर्णज्वरे न लङ्घनं कार्यमिति बोधयति। उक्तं हि वाभटे शुद्धवातक्षयागन्तुजीर्णज्वरिषु, लङ्घनम्। नेष्यते तेषभिहितं शमनं यन्न कर्षणम् इति। हारीतेन तु पित्तश्लेष्मविशुद्ध्यर्थं कुर्याद्वमनमादित इति तदुक्तं तत् कफप्रधानानित्यादिकफलक्षणावस्थायां ज्ञेयम्। चयशब्देन धातुक्षयकृतं ज्वरं किंवा

यत् । विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥६॥ अन-वस्थितदोषाग्निर्लङ्घनं दोषपाचनम् । ज्वरघ्नं दीपनं काङ्क्षा-रुचिलाघवकारकम् ॥ ७ ॥ प्राणाविरोधिना चैनं लङ्घनेनो-पपादयेत् । बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥८॥ तत्तु मारुतक्षुत्तृष्णामुखशोषभ्रमान्विते । कार्य्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्बले ॥ ९ ॥ वातमूत्रपुरीषाणां विसर्गे

---

राजयक्ष्मकृतं ज्वरं गृह्णाति । अनिलशब्देन निरामानिलग्रहणम्, उक्तं हि शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनं नेष्यते इति । किम्वा क्षयानिलशब्देन धातुक्षयकुपितानिलग्रहणम् । यदुक्तं "वायोर्धातु-क्षयात् कोपो मार्गस्यावरणेन च" इति । यस्तु वायुर्मार्गावरणेन कुप्यति स आवरकधर्मितया प्रायेण सामो भवति । तत्र लङ्घनं मात्रया कर्त्तव्यमेव । यदुक्तं "सामे वातेऽपि लङ्घनम्" इति । अनिलज्वर-मभिधायापि कामादिज्वराभिधानं, कामादिज्वरेषु कालान्तरेण वात-सम्बन्धो भवति, तेन प्रथममपि वातासम्बन्धे कामादिज्वराणामलङ्घ-नीयतोपदर्शनार्थम् ॥ ५ ॥

लङ्घनोपपत्त्यर्थं जरस्य सम्प्राप्तिमाह आमाशयस्थ इत्यादि । वाभटस्य । अत्र यत्तदोर्नित्यसम्बन्धात् यस्मादिति लभ्यते ॥ ६ ॥

लङ्घनफलमाह अनवस्थित इत्यादि । सुश्रुतस्य । अनवस्थितौ स्वस्थाने स्वमाने चानवस्थितौ दोषाग्नी यस्य स तथा । काङ्क्षा अन्न-प्रार्थना, रुचिः अभ्यवहार पाटवम् ॥ ७ ॥

एतच्च लङ्घनं तथा कार्य्यं यथा न बलहानिः स्यादित्याह प्राणाविरोधिनेत्यादि । प्राणो बलं, विरोधश्चातिक्षय इहोच्यते । हेतुमाह बलाधिष्ठानमित्यादि । अधिष्ठानमाश्रयः, अत्र बहुव्रीहिः । अतएवोक्तं "यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्मात् बलमेव प्रधानमधि-करणानाम्" इति । यदर्थः आरोग्यार्थः ॥ ८ ॥

अलङ्घनीयानाह तत्त्वित्यादि ॥ ९ ॥

गात्रलाघवे। हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमेगते॥ स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये। कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि॥१०॥ पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च। क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः॥ मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि। देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत्॥११॥ सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते। वमनं वमनार्हस्य शस्तमित्याह वाभटः॥१२॥

---

सम्यक्कृतस्य लङ्घनस्य लक्षणमाह वातमूत्रेत्यादि। हृदयस्य शुद्धिः गौरवादिराहित्यं, कण्ठस्य शुद्धिः कफलिप्ततादिविरहः, आस्यस्य शुद्धिः, अविकृतरसत्वं, तन्द्रा निन्द्रावत्क्लान्तिः, क्लमो दोषजा ग्लानिः। क्षुत्पिपासा सहोदय इति क्षुत्पिपासयोर्युगपदुदय इत्यर्थः। वाभटेऽप्युक्तं "क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठतेति"। किन्तु "सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहं लघुम्। प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम्" इति सुश्रुतदर्शनात्, क्षुत्पिपासयोरसहोऽसह्य उदय इति चक्रेण व्याख्यातम्; किन्तु न सहते इत्यसहः पचाद्यजन्तः कर्त्तरि दृश्यते, तेन असहशब्दस्यासह्यार्थत्वकल्पने कष्टं स्यादिति। कृतमिति सम्यक्कृतम्। अन्तरात्मनीति अन्तरिन्द्रिये मनसीत्यर्थः॥१०॥

अतिलङ्घितलक्षणमाह पर्व्वभेद इत्यादि। अरुचिः, सत्यामपि बुभुक्षायाम् अन्नाभिनन्दनम्; श्रोत्रनेत्रयो दौर्ब्बल्यं स्वविषयग्रहणासामर्थ्यम्। सम्भ्रमोऽनवस्थितत्वं, भ्रान्तिरित्यन्ये। अभीक्ष्णमित्यतिशयेन। ऊर्द्ध्ववातः हिक्काश्वासकर्णस्वनजृम्भादयः, न पुनरुद्गारविशेषः, अतिलङ्घनेन कफक्षयात्। स च पुनः कफकोपात् भवति यदुक्तं "अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन च। करोति नित्यमुद्गारमूर्द्ध्ववातः स उच्यते। तमो हृदि मोह इत्यर्थः॥११॥

ज्वरारम्भ एव वमनावस्थामाह सद्य इत्यादि। वाभटस्य; सन्त-

कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान्। बुद्ध्वा ज्वरकरात् काले वम्यानां वमनैर्हरेत् ॥१३॥ अनुपस्थितदोषाणां वमनं तरुणे ज्वरे। हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम् ॥ १४ ॥ तृष्यते सलिलञ्चोष्णं दद्यात् वातकफज्वरे। मद्योत्थे पैत्तिके वापि शीतलं तिक्तकैः शृतम्। दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत्। स्रोतसां शोधनं पथ्यं रुचिनिद्र-

---

पर्य्योत्थितइत्यत्र "सामे विशेषतः" इति वाभटे पाठो दृश्यते॥ १२॥

अविशेषेण तरुणातरुणज्वरे अवस्थाविशेषे वमनमाह कफप्रधानानित्यादि। चरकस्य। कफःप्रधानो येषां ते कफप्रधानाः। उत्क्लिष्टान् हृल्लासादिना वहिर्निर्गमनोन्मुखान्। काले यथाकाले वम्यानामिति वमनयोग्यानां तेन गर्भिण्यादिनिषेधः॥ १३॥

उक्तावस्थाव्यतिरेकेण वमने दोषमाह अनुपस्थितेत्यादि। चरकस्य। (अनुपस्थितदोषाणाम् अनुत्क्लिष्टदोषाणामित्यर्थः॥ १४॥

लङ्घनकाले तृष्यतो जलमाह तृष्यते इत्यादि। चरकस्य वातकफज्वर इति वातज्वरे कफज्वरे वातकफज्वरे च उष्णमर्द्धशृतम्। यदाह अग्निवेशः "क्वाथ्यमानन्तु यत्तोयं निष्फेणं निर्मलीकृतम्। भवत्यर्द्धावशिष्टञ्च तदुष्णोदकमुच्यते"। मद्योत्थ इत्यादि। मद्यस्य अत्यष्णतीयत्वादम्लत्वाच्च पित्तकर्तृत्वात्तज्जन्यज्वरस्य पित्तजत्वेन परिग्रहे सिद्धेऽपि पुनस्तदभिधानम् अन्यस्मिन्नपि मद्योत्थरोगे तिक्तकशृतजलस्यैव यौगिकत्वबोधनार्थमित्याहुः। तिक्तकैरिति वक्ष्यमाणमुस्तादिभिस्तिक्तकैः शृतम्। ज्वरघ्नमुभयञ्च तदिति उभयम् उष्णं तथा तिक्तकशृतशीतञ्च। यद्यपि त्रिदोषजकफपित्तज्वरयोः पानीयं नोक्तं, तथापि सामान्येन विमानस्थाने तदुक्तं "किं नु खलु ज्वरिभ्यः पानीयमुष्णं प्रयच्छन्ति" इत्यादिना तत् प्रामाण्यादुष्णमेव जलं देयम्। वातपित्तज्वरेऽत्यर्थंदाहकारके शीतमर्द्धशृतं जलं देयमित्यपि विमान एवात्यर्थंमित्तोत्पन्ने इत्यादिना ग्रन्थेन सूचितम्॥ १५॥

प्रदं शिवम् ॥ १५ ॥ षड़ङ्गपानीयं। मुस्तपर्पटकोशीरचन्दनो दीच्यनागरैः। शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये। मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे। तोयपेयादिसंस्कारे निर्द्दोषन्तेन भेषजम् ॥ ॥ १६ ॥

यदप्सु शृतशीतासु षड़ङ्गादिप्रयुज्यते। कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥ अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥ १७ ॥

---

तिलकैः शृतमिति यदुक्तं तदाह मुस्तेत्यादि। चन्दनं रक्तचन्दनं यदुक्तम् 'उक्ते चन्दनशब्दे तु गृह्यते रक्तचन्दनम्'। उदीच्यं बालकम्। अत्र तु शुण्ठी अतिक्ताग्यामाशयदुष्टिकारकज्वरहितत्वाद्दिह्ता। वाभटे तु पद्म काष्ठं पठ्यते न तु शुण्ठी ॥ ननु "ज्वरितं षड़हेऽतीते" इत्यादिना, सप्ताहानन्तरमेवौषधदानं वक्ष्यति, अत्र तु सप्ताहाभ्यन्तर एव षड़ङ्गाद्यौषधविधानम्, अतः पूर्वापर ग्रन्थविरोधं निराचिकीर्षुराह मुख्यभेषजसम्बन्ध इत्यादि। अन्नपानादेरसंस्कारकतया यदौषधमुपयुज्यते तत् प्रधानं तद्भिन्नं पुनरप्रधानमिति तेन प्रधानौषधस्यैव तरुणज्वरे निषेधः, नाप्रधानस्य षड़ङ्गादेः। उपयुज्यते इत्यनेन भक्ष्यविषय उपयोगो विवर्जितः, तेन खदादीनामप्रधानत्वात्तरुणज्वरे न निषेधः। अष्टाङ्गाद्यवलेहोऽपि प्रधानत्वात्तरुणज्वरेदेय एव यतः त्रिदोषजज्वरे तु सप्ताहाभ्यन्तर एव तस्य विधानं तदपवादरूपमेवेति उत्सर्गापवादरूपतया विधिनिषेधयोर्न विरोधः ॥ १६ ॥

उक्त षड़ङ्गतोयसाधनार्थं तथा वक्ष्यमाणस्य कषायसाध्यपेयादेः साधनार्थञ्च भेषजजलमानव्यवस्थापिकां दृढ़वैद्यव्यवहारसिद्धां परिभाषामाह यदप्सु, इत्यादि। शृतशीतं शृतशीतजलनिमित्तं यत् षड़ङ्गादिद्रव्यं प्रयुज्यते तत् कर्षमात्रम्। आदिशब्देन पेयादिसम्पादनार्थजलसंस्कारक धान्यपिप्पलीपञ्चमूली धान्यपञ्चकादिग्रहः। पेयादिसम्बिधाविस्था-

क्लेदयत्यतिकर्दमम्। तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी॥२४॥ मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके। ऊर्द्ध्वगे रक्तपित्ते च यवागूरहिता ज्वरे। तत्र तर्पणमेवाग्रे प्रदेयं लाजसक्तुभिः। ज्वरापहैः फलरसैर्युक्तं समधुशर्करम्। द्रवेणालोड़िताः स्ते स्युस्तर्पणं लाजसक्तवः॥२५॥

---

तत्रैव 'पञ्चगुणे जले' भक्तं विलेपी च चतुर्गुणे, यवागूः षड्गुणे तोये चतुर्दशगुणे पराम् इति। यवागूपाकार्थं जलपरिमाणमाह अन्नमित्यादि। सुश्रुतस्य। यवागरत्र पेया॥२३॥

यवागूः कस्मिन् विषये न कर्त्तव्येत्याह पांशुधाने पांशुसञ्चये अतिकर्दमं यथा स्यात्तथा क्लेदयति क्लेदं जनयति॥२४॥

मदात्यय इत्यादि। चरकस्य। चरके एतद्वचनस्योपरि कृते मद्यसमुत्थितात् इत्यस्ति, तेन मद्यकारणके ज्वरे यवागूर्निषिद्धैव। तेन मदात्यये व्याधौ तथा मद्यः नित्ये मद्यपे योऽमद्यहेतुकोऽपि ज्वरः सोऽपि पेयानर्हः तथा ग्रीष्मे यो ज्वरः तथा पित्तकफाधिको यो ज्वरः तेषु सर्वेषु यवागूर्न हितेति पित्तकफाधिक इत्यनेन पित्तकफयोरतिमात्रोद्गमे सति पेयाया अदानं बोधयति। तेन कफजे ज्वरे, पित्तजे ज्वरे अनुद्भूतदोषे पेया देया। उक्तं हि "कफजेऽपि यदा चीणो लङ्घनादिक्रमात् कफः। यस्ता तत्र यवाग्वस्तु तत्र पित्तेऽप्ययं क्रमः" इति। अतएव चरके "पैत्तिके वाथ शीतां मधुयुतां पिबेद्यवागूम्" इत्यनेन पित्तेऽपि यवागूरुक्ता। पांशुधाने यथा वृष्टिरित्यादि हारीतवचनमपि अतिवृद्धकफविषयं ज्ञेयम्। अन्ये तु मिलित पित्तकफाधिके पुरुषे यवागूप्रतिषेधमाहुः ऊर्द्ध्वगे कफपित्ते चेति पाठान्तरमनार्षं, पित्तकफाधिक इत्यनेनैव तदर्थस्य लाभात्। सुश्रुतेऽपि "कफपित्तपरीतस्य ऊर्द्ध्वोत्क्लिष्टकफपित्तिनस्तथा,, इत्युक्तम्। अन्ये तु ऊर्द्ध्वग इति ऊर्द्ध्वगरक्तपित्ते कफपित्ते चेति कफयुक्तपित्ते पित्तस्थानगते कफे इत्यर्थः। उक्तं हि वाभटे "मद्योद्भवे मद्यनित्ये पित्तस्थान-

श्रमोपवासानिलजे हितोनित्यं रसौदनः। मुद्गयूषौदनश्चापि देयः कफसमुद्भवे। स एव सितया युक्तः शीतः पित्तज्वरे हितः॥ २६॥ रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैःसह। यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः॥ २७॥ मुद्गामलकयूषस्तु वातपित्तात्मके हितः।

---

गते कफे इत्यर्थः। उक्तं हि वाभटे 'मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे। ग्रीष्मे तयोर्वाधिकयोस्तृड्दाहच्छर्दिपीड़िते। ऊर्द्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति तेषु तु' इति व्याख्याय कफपित्ते चेति पाठमुपपादयन्ति। यद्यपि चरके 'ऊर्द्ध्वगे तर्पणं पूर्वम्' इति वचसा यवागूं वाधित्वा ऊर्द्ध्वगे रक्तपित्ते तर्पणं विहितमेव, तथाप्यूर्द्ध्वगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमः कार्यः, इत्याह तत्रेत्यादि। ज्वरापहानि फलानि द्राक्षादाड़िमादीनि, उक्तं हि "द्राक्षादाड़िमखर्जूरपियालैः सपरूषकैः। तर्पणार्थेषु कर्त्तव्यं तर्पणं ज्वरनाशनम्' इति। तर्पणशब्दार्थमाह द्रवेणालोड़िताः स्युरित्यादि॥ २५॥

श्रमेत्यादि। नित्यमिति सर्वदा नवे पुराणे च। रसोमांसरसः, तेनोपसिक्त ओदनो रसोदनः। एवं मुद्गयूषौदनमित्यत्रापि व्याख्येयम्। अयञ्च रसौदनः दीप्ताग्निं प्रति बोध्यः, उक्तं हि सुश्रुते 'उपवासश्रमकृते ज्वरे वाताधिके तथा। दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम्' इति। मुद्गयूषौदनश्चापीति कफजे मुद्गयूषौदनोदेयो यवाग्वा व्याहितत्वात्। स एवेति मुद्गयूषौदनः॥ २६॥

रक्तशाल्यादय इत्यादि। चरकस्य। चरके पुराणा इत्यत्र 'शालयः' इति पठन्ति, तेन यवकादीनां निरास इत्याहुः। ये तु पुराणा इति पठन्ति तन्मते यद्यपि 'शूकधान्यं शमीधान्यं समातीतम्' इत्यनेन पुराणस्योपयोगो लब्धः, तथापि प्रमादादतिनवस्य तथातिपुरातनस्य च ग्रहणं मा भूदित्येतदर्थं पुराणा इत्युक्तम्॥ २७॥

संप्रति द्वन्द्वजेष्वाहारविधिमाह मुद्गामलकेत्यादि। आमलकापे-

ह्रस्वमूलकयूषस्तु कफवातात्मके हितः। निम्बकूलकयूषस्तु हितः पित्तकफात्मके ॥ २८ ॥ मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्। आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥ २९ ॥ पटोलपत्रं वार्त्ताकुं कूलकं कारवेल्लकम्। कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम्। पत्रं गुडूच्याः शाकार्थं ज्वरिताय प्रदापयेत् ॥ ३० ॥ ज्वरितो हितमश्नीयात् यद्यप्यस्यारुचिर्भवेत्। अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथ वा ॥ ३१ ॥ अरुचौ मातुलुङ्गस्य केसरं

---

चया मुद्गस्य भूयसी मात्रा, आहारद्रव्यत्वात्। योगोऽयं यद्यपि सुश्रुतेन अन्नपानाध्याये कफपित्तज्वरत्वेन निर्दिष्टः, तथापीह वातपित्तज्वरेऽभिधानात् वातपित्तज्वरहरत्वमपि वचनबलादेवाध्यवसीयते। ह्रस्वमूलको बालमूलकः अत्र शमीधान्यस्य यूषनोक्तत्वात् मुद्गाद्यपि बोध्यम्। एवं यत्र नास्ति तत्र सर्वत्र। किंवा व्यञ्जनपरो यूषः। निम्बकुलकेत्यादि। सुश्रुतस्य। निम्बस्य पत्रं, तथा कुलकस्य पटोलस्य च पत्रं ॥ २८ ॥

मुद्गानित्यादि। सुश्रुतस्य। मुकुष्टको वनमुद्गः ॥ २९ ॥

पटोलेत्यादि। सुश्रुतस्य। वार्त्ताकुः वार्त्ताकुफलं, कुलकमपि पटोलफलं, कर्कोटकं काकरोल इति ख्यातं गोजिह्वा दार्वीशाकः ३०

इदानीं ज्वरितस्यारुचावपि हितभोजननियममाह ज्वरित इत्यादि। अस्यारुचिरपि यदि भवेत् तथापि ज्वरितो हितमेवाश्नीयादेव, इत्युभयत्रापि नियमः। यतो दिनान्ते भोजयेदित्यनेन भुजिक्रिया विहितैव। 'नहि तस्याहितं भक्तमायुषे वा सुखाय वा' इत्यादिना हितमपि विहितम्; अतः सिद्धे सत्यारम्भो नियमाय भवति। विपक्षे दण्डमाह अन्नकाले इत्यादि। यतोऽन्नकाले हितमभुञ्जानः पुरुषः क्षीयते म्रियते वा। अन्ये तु अरुचौ सत्याम् अपितुर्भोजने

सांज्यंसैन्धवम्। धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत्॥ ३२॥ सातत्यात् स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमा-

---

इच्छाभावात् अपिशब्दं भिन्न क्रमेण योजयित्वा नञ्ं प्रश्लिष्यान्यथा व्याचक्षते। अस्य यदि अरुचिर्भवेत् तदा अहितमप्यश्नीयात्, कुत इत्याह अन्नकाले क्षीणादि यतोऽभुञ्जानस्य धातुक्षयो मरणं वा स्यात् तस्मा-दहितमश्नीयादित्यर्थः। न चैवं व्याख्याने गुर्वभिष्यन्द्यन्नकाले चेत्याद्य-नेरग्रन्थविरोधः स्यादिति वाच्यम्। यतस्तेनापि ग्रन्थेनाहितं न प्रति-षिध्यते अन्यथाव्याख्यानात्, तथाहि ज्वरी ना पुरुषः गुर्वभिष्यन्द्यन्नकाले च कथञ्चन कदाचिदद्यात् सकृद्भुञ्जीतेत्यर्थः। यतो भुक्तं भोजनं आयुषे वा सुखाय वा न अहितं किन्तु हितमेव। हिशब्दस्थाने तु-शब्दपाठेऽपि तुशब्दो निपातनस्यानेकार्थत्वात् हेतौ व्याख्येयः। नन्वेषा व्याख्या तदैव संगच्छते, यदि अहितार्थस्योपदेशः क्वापि शास्त्रे तिष्ठति, किन्तर्हि हितस्यैव सर्वत्रोपदेशः। अवस्थायां तदपि हितमिति चेत्तर्हि अहितमिति व्याहतं? सत्यं प्रायः सर्वदा सद्वादिवच्च हितमिति कृत्वा अहितमित्युच्यते, अतएवाहुः 'मनोनुकूलं यदपथ्यं तदपि क्रियत एव' इति। यदुक्तञ्चरके 'मनसोऽप्यानुकूल्येन तुष्टिरूर्जो रुचिर्बलं। सुखोप-भोगिता च स्याद्व्याधेश्चापि बलक्षयः' इति। किन्तु जेज्जड़मते एषा व्याख्या न संगच्छते, यतो ज्वरितोहितमित्यादेरनन्तरमेव हितविधाय-कमहितप्रतिषेधकम् 'सततं विषमं वापि' इत्यादि 'वर्जयेच्च समासतः' इत्यन्तं ग्रन्थं जेज्जड़ः पठति, तन्मध्ये च गुर्वभिष्यन्दीत्यादिग्रन्थोऽ-प्यस्ति, ततो गुर्वभिष्यन्दीत्यादिवाक्यस्याहितविधायकत्वव्याख्याने प्रकरणमसङ्गतं स्यात्। यथा चन्द्रिकाकारेणापि 'ज्वरितस्य मन्दा-ग्नेर्गुर्वन्नापाकेऽजीर्णम् अभिष्यन्दिनः स्रोतोरोधकत्वेन ज्वरवृद्धिः' इत्यादि व्याख्यातम्। एवञ्च गुर्वभिष्यन्दीत्यादि ग्रन्थोऽप्यहितप्रतिषे-धकपरतया ऋजुमार्गेणैव व्याख्येयः। ज्वरितो हितमश्नीयादित्या-द्यपि हितविधायकतया एव व्याख्येयम्। अहितस्य रोगवर्द्धकत्वेन सर्वत्र निषेधात्, उक्तरीत्या गुर्वभिष्यन्दीत्यादि ग्रन्थविरोधाच्चेति॥३१॥

गतम् । कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥ ३३ ॥
ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु । श्लेष्मक्षये विवृद्धोष्मा बलवाननलस्तदा ॥ ३४ ॥ गुर्वभिष्यन्द्यकालं च ज्वरो नाद्यात् कथञ्चन । न हि तस्याहितं भुक्तमायुषे वा सुखाय वा ॥ ३५ ॥ लङ्घनं स्वेदनं कालो यवाग्वस्ति-

---

इदानीं बलवदुपद्रवत्वेनारुचेः प्रतीकारमाह अरुचावित्यादि योगान्तरमाह भक्तमित्यादि ॥ ३२ ॥

अथ हितमेव यदि सततोपयोगादनभिमतरसादियोगाद्वा रुचिविषयो न स्यात्, तदा किं कार्य्यम्? इत्याह सात्म्यादित्यादि । सात्म्यादिति सततोपयोगात्, सततोपयोगाद्धि स्वाद्वन्नमपि अप्रियं भवतीत्यनुभवसिद्धम् अस्वादुत्व स्वत एवाप्रियं स्वादुरभीष्टो रसः । तैस्तैः कल्पनाविधिभिरिति स्वरसकल्कादिसूदशास्त्रोक्तविधानैः पुनःप्रियत्वं गमयेत् ॥ ३३ ॥

अन्नकालमाह ज्वरितमित्यादि । वाभटस्य । दिनान्त इत्यपराह्णे, सुश्रुतेऽप्युक्तं 'सर्वज्वरेषु सप्राह्ण-मात्रावल्लोजनं हितम् । दिनापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम्' इति । ज्वरितमित्यादि वाक्यानन्तरं वाभट वचनं यथा 'यथोचितेऽथवा काले देशसात्म्यानुरोधतः । भागल्पवह्निर्भुञ्जानो नह्यजीर्णेन पीड्यते' इति । तेन यस्य पुरुषस्य य उचित आहारकालः, तस्मिन्नेव तं भोजयेत् । यथोचिते हि काले देश सात्म्यानुरोधतः प्रायः क्षुधाबोधो भवति तदतिक्रमे च क्षुधापगमो भवति, तेन तस्य दिनान्तापेक्षा न कर्त्तव्येत्याह प्रागित्यादि । अल्पवह्निरिति काय स्नेर्वह्निर्निःसरणात् ज्वरितोऽल्पवह्निरेव भवति । देशसात्म्यानुरोधात् अल्पवह्निरपि प्रागेव पूर्वाह्णेऽपि भुञ्जानोऽजीर्णेन न पीड्यते न बाध्यते इत्यर्थः ॥ ३४ ॥

नन्वरुचावपि सत्यां हितमेव भोक्तव्यं, नाहितमित्युक्तम्, अतस्तत् किमहितं यन्न भोक्तव्यम्? इत्याहगुर्वित्यादि । सुश्रुतस्य । गुरु पिष्ट-

क्तको रसः । पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥ २६ ॥ आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः । मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम् ॥ २७ ॥ पाचनं शमनीयं वा कषायं पाययेत्तु तम् । ज्वरितं षडहेऽतीते लघ्वन्-

---

कादि, अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदजनकम् अम्लिकादि । नाद्यात् न खादेत् । तथा अकाले अप्राप्ते अतीते च काले हितमपि नाद्यात् । कथञ्चन कदाचिदपि । अत्र हेतुर्नष्टीत्यादि ॥ २५ ॥

इदानीं लङ्घनमेवादाविति यदुक्तं तस्य पाचनतां दर्शयन्, प्रसङ्गात् स्वेदादीनामपि पाचनतामाह लङ्घनमित्यादि । काल इत्यष्टाहः । तिक्तकरसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः, स्वतन्त्रभेषजप्रयोगस्य तरुणे निषेधात् । उक्तञ्च 'भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्' इति । अविपक्वानामित्युक्त्वापि यत् तरुणज्वर इत्युक्तं, तदष्टाहादूर्द्ध्वमतरुणे ज्वरे अपक्वेषु दोषेषु पाचनकषायस्य प्राधान्यमावेदयति, न तु लङ्घनादीनाम् । किंवा अविपक्वपदश्रवणादष्टाहादूर्द्ध्वमपि, सामत्वानुवृत्तिर्भवतीति सूचनार्थम् । अत एवाष्टाहादूर्द्ध्वमपि आमपाचनार्थं पाचनं शमनीयं वेत्यादि वक्ष्यति ॥ २६ ॥

ननु ज्वरस्य तरुणता कियन्तं कालं तिष्ठति ? इत्याह आसप्तरात्रमित्यादि । सप्तरात्रं व्याप्य, आङयमभिविधौ न मर्यादायां, अष्टाहस्य निरामज्वरकालत्वेनोक्तत्वात् । मध्यन्द्वादशरात्रमिति पाठः साधीयान्, न तु मध्यञ्चतुर्दशाहन्त्विति, जतूकर्णे 'जीर्णस्त्रयोदशदिवसे' इत्युक्तत्वात् । अत उत्तरमिति द्वादशाहानन्तरं त्रयोदशदिवसमारभ्य, पुराणमिति जीर्णज्वरमाहुः । यत्तु 'त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः । प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते' इति तन्मतान्तरं तदतिजीर्णाभिप्रायेण बोध्यं । यद्यपि तरुणज्वर एवात्र प्रकृतस्तथापि मध्यपुराणयोरत्राभिधानमेकवाक्यनिबद्धत्वात् ॥ २७ ॥

ननु सप्ताहं व्याप्य तरुणता तत्र लङ्घनादिकमेवोक्तं लङ्घनान्तरञ्च किं कर्त्तव्यमित्याह पाचनमित्यादि । एतच्च विकल्पद्वयं योग-

प्रतिभोजितम् ॥ ३८ ॥ सप्ताहात् परतोऽस्तब्धे सामे स्यात्

तथा यथाक्रममामदोषपक्वदोषविषयं ज्ञेयम्। तेन पाचनं सामस्य, निरामस्य शमनमिति ज्ञेयं। षडहेऽतीते इति ज्वरोत्पाददिनमारभ्य षडहेऽतिक्रान्ते सप्तमेऽहनि लघ्वन्नप्रतिभोजितं ज्वरितम् अर्थादष्टमेऽहनि पाचनं शमनीयं वा पाययेदिति योजना एवञ्च अष्टाहो निरामज्वरलक्षणमिति पूर्ववाक्येन तथा 'निःसप्तता निरामज्वरलक्षणम्' इति खरनादवाक्येन तथा 'सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्' इति सुश्रुतवाक्येन तथा 'सप्ताहादौषधं केचित्' इति वाभटवचनेन सहैकवाक्यता उपपन्ना भवति। अन्ये पुनरमुमेवार्थं प्रकारान्तरेणोक्तन्ति षडहे अतीते इति ज्वरोत्पाददिनं परित्यज्य गणना कार्य्या वस्तिदिनपरिहारेण परिहारगणनावत्, तेन षडहे अतीते इत्यस्य सप्तमे अतीते इत्येवार्थो भवति। भट्टारहरिचन्द्रेणापि सप्तमे दिने कषायपानं यद्व्याख्यातं तदप्ययमभिप्राय उन्नेयः। अन्यथा सुश्रुतादिविरोधो दुष्परिहर इति। चन्द्रिकाकारेणोक्तं 'अचिराग दिनचतुष्टयवत् ज्वरस्य सप्ताहं सामताकालः, तत्र न पाचनं न वा शमनं न शोधनम्' इति। यत्तु पेयाद्यनन्तरं हारीतेनोक्तं 'एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि। पिबेत् कषायसंयोगान् ज्वरघ्नान् साध्वसाधितान्' इति, तथा 'इति षड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः। ततः परं पाचनीयं शमनं वाज्वरे हितम्' इति खरनादवचनञ्च पूर्वोक्तरीत्या अष्टाहप्रतिपादकमेव ज्ञेयं। अथवा पैत्तिकज्वराभिप्रायेण तद्वचनद्वयं व्याख्येयं। यतः सुश्रुते 'सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्' इत्याद्यभिधाय 'पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि भेषजं दोषपाचकः, इत्युक्तं। वाभटेनापि 'मृदुज्वरो लघुर्देहश्चलिताश्चमला यदा। अचिरज्वरितस्यापि भेषज्यं योजयेत्तदा' इति यदुक्तं, तदपि सुश्रुतसंवादात् पित्तज्वरपरमेव ज्ञेयम्। एतद्वचनद्वयं सप्ताहादर्वागपि पाचनकषायदानप्रतिपादकमतुक्त-

सामतायामेव संयमः। अद्भुततायान्तु भेषजदानस्य वक्त्रदपायजनकत्वात्। अत एवाह वाभटः 'सप्ताहादौषधं केचिदाहुरन्ये दशाहतः। केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्वणे न तु। तीव्रज्वरपरीतस्य दोषवेगोदयो यतः। दोषेऽथवातिनिचिते तन्द्रास्तैमित्यकारिणि। अपच्यमानं भैषज्यं भूयो जनयति ज्वरम्' इति। अपैत्तिकज्वरे तु वातजादौ सप्ताहादर्वाक् पाचनमपि न देयमेव। सप्ताहानन्तरमपि यदि सम्यग्दोषपाकलक्षणानि ज्वरमार्दवलघुत्वादीनि न भवन्ति तदा पाचनम्, अन्यथा तु शमनं देयम्। एतदभिप्रायेणैव 'मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च। पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्' इति सुश्रुतवचनं ज्वरमार्दवादौ दोषपाकलक्षणे सञ्जाते सत्येव भैषज्यस्य देयतां बोधयति, तत्र च सप्ताहानन्तरमपि नियमो नास्तीति वाच्यम्। सप्तरात्रात् परं केचिदित्यादिवचनैः सप्ताहा नन्तरमेव भेषजदानस्य बोधितत्वात्, तेन सप्ताहादर्वाक् पाचनं शमनञ्च न देयमिति स्थितं, व्याख्यानान्तरन्तु 'ज्वरे पेयाः कषायाश्च', इत्यादि व्याख्यानावसर एव व्याख्येयं। ननु सप्तरात्रादूर्द्धं ज्वरस्य निरामत्वात् किमर्थं तत्र पाचनं दीयते यदुक्तं 'अष्टाहो निरामज्वरलक्षणम्' इति। सत्यमष्टाहे यदि न निरामत्वं तदा लक्षणमेव न स्यात् सामनिराम साधारणत्वात्। असाधारणधर्मोहि लक्षणं भवति। अत्राहुः द्विविधा हि सामता, एका दोषस्य तरुणत्वरूपा, तरुणत्वञ्च सप्ताहमात्रं। तदुक्तं पुष्कलावते 'आमसप्तरात्रं तरुणम्' इत्यादि। द्वितीया तु रसस्य, सुखवैरस्यतृष्णारोचकादिरूपा। तत्र प्रथमा अष्टाहादपैति, अत्र हरिचन्द्रेण हेतुरप्युक्तः 'सप्तानां धातुनां धात्वग्निना सप्ताहेनामपाकात् अष्टाहेनैव नैराम्यम्' इति। उक्तञ्च 'सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तोज्वरः प्रायोऽष्टमेऽहनि' इति। द्वितीया पुनः सप्तहात् परतोऽपि कदाचिद्दोषबाहुल्यादग्निमान्द्याच्चानुवर्त्तते। उक्तञ्च 'स्रोतसां नामवाम्लानां ज्वरः प्रायः कफाधिकः। परिपाकं न सप्ताहेनापि याति कदूष्मणा' इति। अतस्तत्र पाचनमुचितमेव। अत एवाह सुश्रुतः 'बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे। लङ्घनाम्बुयवा-

पाचनं ज्वरे। निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥ ३९ ॥ लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः। तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता। क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः। आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम्। भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ४० ॥ मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च। पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ४१ ॥ सर्वज्वरेषु।

---

गूभि यदा दोषो न पच्यते। तदा तं मुखवैरस्यतृष्णारोचकनाशनैः। कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्' इति ॥ ३८ ॥

इदानीं सप्ताहानन्तरमेव यस्यामवस्थायां पाचनं शमनञ्च देयं तदाह सप्ताहादित्यादि। अस्तब्धे सामे इति लालाप्रसेक इत्यादि वक्ष्यमाणस्य रससामतालक्षणस्य निवृत्तौ सत्यां प्राप्तलघुभावे मधुभागवापलेपन्यायेन स्थितस्य कोष्ठावलेपकामभागस्य पाकार्थं पाचनं देयम्। निरामे शमनमिति पाचनेन कोष्ठावलेपकस्यामभागस्य पाकात् सम्यङ्‌निरामत्वे सतीत्यर्थः। सम्यङ्‌निरामता च दशरात्रात् परमेव दोषाम-तारसामतयोः सर्वथा निवृत्त्या प्रायशो भवतीति।' अतएव 'दशरात्रात् परं केचिद्दातव्यमिति निश्चिता' इति सुश्रुतेनोक्तं। किंवा यत्र दोषाणामनतिप्रबलत्वात् सप्ताहेनैव रससामतापि निवर्त्तते तत्र सप्ताहानन्तरमपि शमनादि देयं। स्तब्धे सामे नौषधमाचरेत्' इति लालाप्रसेकादिरससामतालक्षणानां सत्त्वादप्राप्तलघुत्वे सप्ताहानन्तरमपि पाचनं शमनञ्च न देयमित्यर्थः ॥ ३९ ॥

रससामतालक्षणमाह लालाप्रसेक इत्यादि। हृदया-शुद्धिः हृद्‌गौरवं। न दद्यादित्यत्र हेतुमाह भेषजमित्यादि ॥ ४० ॥

पाकलक्षणमाह मृदावित्यादिसूत्रस्य। मृदौ मन्दीभूते, मान्द्यञ्च ज्वरस्यामरसस्य पाकात् स्रोतसि शुद्धे पुनः कोष्ठगते चाग्निधि भवति

नागरं देवकाष्ठञ्च धन्याकं वृहतीद्वयम् । दद्यात् पाचनकं पूर्वं ज्वरितायज्वरापहम ॥ ४२ ॥

पीताम्बुर्लङ्घितः चीणोऽजीर्णी भुक्तः पिपासितः । न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥ ४३ ॥ वीर्य्याधिकं भवति भेषजमन्नहीनं हन्यात् तदामयमसंशयमाशु चैव । तद्बालवृद्धयुवतीमृदुभिश्च पीतं ग्लानिं परां नयति चाशु

---

प्रबलेषु प्रतिबन्धकस्यामरसस्य व्यपगमात् अविवद्धेषु मलेषु वातपित्तकफशकृदादिषु । पक्वमिति निरामं । दोषमित्यनेन दुष्टिकारकत्वात् शकृदप्युच्यत इत्याहुः । देयन्तदौषधमिति अल्पदोषे अतल्वसामतायां पाचनं, सर्वथा निरामत्वे तु शमनं, शोधनं यथावस्थं देयम् । एतदनन्तरन्तु अन्यदपि पक्वलक्षणम् एकीयमतेन सुश्रुतेनोक्तं यथा 'दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम्' इति ज्वरारम्भकाले यो दोषस्वभावः संप्राप्तिरूपः तस्यान्यथात्वादेकेषां मते पक्वलक्षणमिति । अन्ये तु प्रथमा प्रकृतिः आमरसंमूर्च्छितानां ज्वरजननसमर्थानां स्वकार्यस्य ज्वरतीव्रत्व देहगुरुत्वमलविबन्धादेरुत्पादः ततो विपर्य्ययो वैकृत्यं । प्रथमा प्रकृतिस्त्याम एव । यदुक्तं 'प्रथमां दोषदुष्टिञ्च केचिदामं प्रचक्षते' इति ॥४१॥

इदानीं सर्वज्वरसाधनार्थं पाचनकषायमाह नागरमित्यादि । भेलस्य । योगोऽयं द्रव्यगुणपर्य्यालोचनया वातकफजे इति भट्टः, व्याधिप्रत्यनीकतया तु पित्तजे हिततमस्याभ्युपगमस्य सर्वज्वरविषयत्वं श्रेयमित्याह सर्वज्वरेष्विति, अतएव तन्त्रापि एतत्प्रभृतियोगान्ते पठ्यते 'सर्वज्वरेषु पठन्ते यथादोषबलं प्रति' इति ॥ ४२ ॥

तैर्भेषजं न पेयं तानाह पीताम्बुरित्यादि । भुक्त इति कर्त्तरि क्तः, अथशब्दः समुच्चये निपातस्यानेकार्थत्वात्, तेनेतरत् शमनञ्च न पिबेदित्यर्थः ॥ ४३ ॥

परिणामप्रयुक्तभेषजगुणमाह वीर्य्याधिकमित्यादि । भोजनसमबक्रियामात्रौषधापेक्षया वीर्य्योत्कृष्टमित्यर्थः । अन्नहीनमिति हेतु-

बलक्षयश्च ॥ ४४ ॥ अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा-सुमनस्कता । लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ ४५ ॥ क्लमो दाहाङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा । अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ ४६ ॥ औषधशेषे भुक्तं पीतञ्च तथौषधं सशेषेऽन्ने । न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ४७ ॥ शीघ्रं विपाकमुपयाति बलं न हिंस्यात् अन्नावृतं न च मुहुर्वदनान्निरेति । प्राग्भुक्त-सेवितमथौषधमेतदेव दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ ४८ ॥ मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ।

---

गर्भविशेषणं यतोऽन्नहीनभेषजमावरकदोषाभावादखिलमेव स्रोतः प्रतिपद्यते कोष्ठञ्च सम्यगभावयति । अन्नहीन इति पाठान्तरे कोष्ठ इति शेषः ॥ ४४ ॥

भेषजपाकलक्षणमाह अनुलोमोऽनिलःस्वास्थ्यमित्यादि ॥ ४५ ॥

भेषजस्यासम्यक्पाकलक्षणमाह क्लम इत्यादि ॥ ४६ ॥

भेषजाजीर्णे भोजने अन्नाजीर्णेऽपि भेषजोपयोगे दोषमाह औषधशेष इत्यादि । भुक्तं भोजनं, एतच्चाभ्यवहारोपलक्षणं, तेन लेह्यापानयोरपि ग्रहणं, भुक्तमित्यस्य सम्बन्धे न करोति गदोपशममित्यन्तर्भावितोऽयमर्थो ज्ञेयः, यतः प्रस्तुतत्वादौषधमेव गदोपशमकं युक्तं, तेनायमर्थः, भेषजाजीर्णे भोजनमौषधमेव गदोपशमं न कारयतीत्यर्थः । पीतमित्यन्तः परिमार्जनाभिप्रायेणोक्तं, तेन लेह्यादीनामपि ग्रहणं । सशेषेऽन्ने इत्येव पाठः, अन्यथा छन्दोभङ्गः स्यात् ॥ ४७ ॥

भोजनसमयोपयुज्यमानस्यौषधस्य विषयविशेषे गुणमाह शीघ्रमित्यादि । शीघ्रपाकिता बुभुक्षितस्य प्रबलजठरानलसम्बन्धादित्यभिसन्धिः । प्राग्भुक्तसेवितमिति भक्तात् पूर्वमव्यवहितकाले सेवितम् ॥ ४८ ॥

व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत्। उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे। जघन्यस्य पलार्द्धेन स्नेह-क्वाथौषधेषु च॥ ४९॥ कर्षादौ तु पलं यावद्दद्यात् षोड़-शिकं जलम्। ततस्तु कुड़वं यावत्तोयमष्टगुणं भवेत्। क्वाथ्य-द्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम्॥ ५०॥ द्वात्रिंश-

---

तद्भेषजं किं परिमाणमित्याह मात्राया इत्यादि। अवस्थान-मिति नैयत्यम्, अतएव चरकेणाप्युक्तं 'मात्रा खलु व्याधिवलापेक्षिणी' इति। तर्हि मन्दबुद्धेरनध्यवसायः स्यात्? इत्यतः क्वाथ्यस्य मानं प्रव-क्तुं स्नेहस्याप्याह उत्तमस्येत्यादि। स्नेहक्वाथ्यौषधेष्विति स्नेह-रूपाणि क्वाथ्यरूपाणि चौषधानि तेषु किंवा औषधं स्वरसगुड़ादि ४९ क्वाथ्यस्य तावत् पलमानं तच्च कियता जलेन क्वथनीयमतस्तन्मानमाह कर्षादावित्यादि। अग्निवेशस्य। क्वाथविषयेयं परिभाषा, पलं याव-दित्येकपलं। षोड़शिकं जलमिति षोड़शकर्षादिरूपम्, अतएव कर्षा-दिमानक्वाथ्यापेक्षया दीयमानस्य षोड़शगुणजलस्य वस्तुगत्या कुड़वादि-मानत्वेऽपि न द्वैगुण्यं जलमानस्यापि कर्षादिरूपतया निर्दिष्टत्वात्। उक्तं हि 'रक्तिकादिषु मानेषु यावन्न कुड़वो भवेत्। शुष्कद्रवार्द्र-योश्चापि तुल्यं मानं प्रकीर्त्तितम्' इति। रक्तिकादिष्विति रक्तिका-दिरूपतया निर्दिष्टेष्वित्यर्थः। तत इति एकपलादूर्द्धं पलद्वयमारभ्य कुड़वपर्य्यन्तमित्यर्थः। अत्र पलं यावदित्यन्तस्यैव वचनस्य पेयक्वाथ-विषयता; ततस्तु कुड़वं यावदित्यादि तु सम्पूर्णश्लोकानुरोधादेवोक्तम्, अतएव पलं यावदित्यस्य पेयक्वाथविषयत्वं दृढ़यन् पादावशिष्टत्वञ्च बोधयन् कथान्तरोक्तवचनमुपन्यस्यति क्वाथ्यद्रव्यपले कुर्य्यादित्यादि। प्रस्थार्द्धमिति द्रवद्वैगुण्यात् षोड़शपलानि अतएवोक्तमन्यत्र 'क्वाथ्य-द्रव्यपले वारि द्विरष्टगुणमिष्यते। चतुर्भागावशिष्टञ्च पेयं पलचतुष्ट-यम्' इति, द्विरष्टगुणमिति षोड़शगुणमित्यर्थः। एतेन पले क्वाथ्ये दीयमानस्यापि षोड़शगुणजलस्य पादावशिष्टताकथनेन कर्षादौ दीय-मानस्य षोड़शगुणजलस्य पादावशिष्टता कार्य्येति सूचयति। उक्त-

माषकैर्माषश्चरकस्य तु तैः पलम् । अष्टचत्वारिंशता स्यात् सुश्रुतस्य तु माषकः । द्वादशभिर्धान्यमाषैश्चतुःष्ट्या तु तैः पलम । एतच्च तुलितं पञ्चरक्तिमाषात्मकं पलम् । चरकार्द्धपलोन्मानं चरके दशरक्तिकैः माषैः पलं चतुःषष्ट्या यद्भवेत् तत्तथेरितम् । तस्मात् पलं चतुःषष्ट्या माषकैर्दशरक्तिकैः । चरकानुमतं वैद्यैश्चिकित्सासूपयुज्यते ॥ ५१

---

ह्यान्यत्र 'द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोड़शिकं जलम् । पादावशिष्टं कर्त्तव्यमेषः क्वाथविधिः स्मृतः' इति ॥ ५० ॥

इदानीं क्वाथस्य पलत्रिकर्षादिकमित्यादि यदुक्तं तत् सर्वमकिञ्चित्करं यतो रक्तिकादिज्ञानाधीनं माषकज्ञानं, माषकज्ञानाधीनञ्च कर्षपलादिज्ञानं तदेव मूलमनिर्णीतम्, अतो माषकादिमानं व्यवस्थापयितुं परिभाषामाह द्वात्रिंशन्माषकैरित्यादि । द्वात्रिंशद्धान्यमाषकैरित्यर्थः । तेन द्वात्रिंशता व्रीहिमाषैः साधारणैर्माषकः, तैश्च माषकैरष्टचत्वारिंशता चरकमते पलं स्यादिति योज्यं, सुश्रुतमते पुनर्व्रीहिमाषैर्द्वादशभिर्माषकः तैर्माषकैश्चतुःषष्ट्या सुश्रुतमते पलमित्यर्थः इदानीं सुश्रुतचरकमते यावतीभीरक्तिभिर्माषको भवति तदाह एतच्चेत्यादि । एतदिति द्वादशधान्यमाषकतैश्चतुःषष्ट्या माषकैः सुश्रुतेन यत् पलमुक्तं तत् रक्तिकाभिस्तुलितं सत् पञ्चरक्तिमाषात्मकं भूत्वा चरकार्द्धपलोन्मानं भवतीत्यर्थः । एतदेव विशदयति चरके दशरक्तिकैरित्यादि। यतश्चरके द्वात्रिंशन्माषकजायकतैरष्टचत्वारिंशन्माषकैः यत्पलमीरितमुक्तम् तद्दशरक्तिकैश्चतुःषष्ट्या माषकैस्तुलितं सत्तथा तावन्मानमेव भवेत्, यच्चतुर्विंशत्या माषकजायैर्दशरक्तिकास्तुल्या भवन्ति ततश्च दशरक्तिकमानाश्चतुःषष्टिमाषकाश्चतुर्विंशतिमाषकजायैर्गुणिताः सन्तः षट्त्रिंशदधिकपञ्चदशशतमाषकजाया भवन्ति एवं चरकमतेऽपि द्वात्रिंशन्माषकजायप्रमाणा येऽष्टचत्वारिंशन्माषकास्ते द्वात्रिंशता गुणिताः सन्तः षट्त्रिंशदधिकपञ्चदशशतमाषकजायाः स्युरिति दशरक्तिकमाषकतपल-

वातज्वरे। बिल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे। पाचनं पिप्पलीमूलगुडूचीविश्वजोऽथवा॥ किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः। सस्थिराकलसीविश्वैः क्वाथो वातज्वरापहः॥ रास्नावृषादनीदारु सरलं सैलवालुकम्। कषायः शर्कराक्षौद्रयुक्तो वातज्वरापहः॥ ५२॥ प्रक्षेपः

---

मानेन सह द्वात्रिंशन्माषककलायाणामाषमानकृतपलमानस्य तुल्यता। सुश्रुतमते पुनर्द्वादशमाषककलाया माषकः, ते चतुःषष्टिपलमित्युक्तम्। ते चतुःषष्टिमाषका द्वादशमाषकलायगुणिताः सन्तोऽष्टषष्ठ्यधिकसप्तशतमाषकलाया भवन्तीति चरकोक्तपलमानादर्द्धेन सुश्रुतोक्तपलमानमिति। इदानीं चरकसुश्रुतोक्तमानयोर्मध्ये चरकोक्तमानमेव व्यवहारोपयोगिकमित्याह तथापीत्यादि। तस्माच्चरकोक्तमानमेव वैद्यैश्चिकित्सासूपयुज्यते, तस्माच्चरकोक्तैश्चतुःषष्ट्यामाषकैरेकं पलं तदेव व्यवहारसिद्धमिति शेषः॥ ५१॥

पाचनयोगद्वयमाह बिल्वादीत्यादि। बिल्वादिपञ्चमूलं महत्पञ्चमूलम्। अवचारणाप्यनेन क्रियते। पिप्पलीमूलेत्यादिकन्तु क्वाथविषयमेवेति, क्वाथार्थोक्तपाचनयोगेन गणदोषैरवचारणा क्रियते, न पुनर्गणरूपेण, अवचारणायोगेऽपि गणरूपेणैव कषायेऽपि क्रियते। तेन धान्यपिप्पल्यादिना क्वाथार्थविधिर्निर्दिष्टः। केचित्तु क्वाथार्थोक्तपाचनयोगेनागणरूपेणापि अवचारणमाहुः। किरातेत्यादि। किरातं चिरायितेति व्याख्यातम्, अब्दो मुस्तकम्, अमृता गुडूची, उदीच्यं वालकम्, स्थिरा शालपर्णी, कलसी पृश्निपर्णी, विश्वः शुण्ठी, विश्वस्थाने बिल्वस्य क्वचित् पाठः। 'योगवाहः परं वायुः' इति पित्तयुते पाचनोऽयं योज्य इति निश्चलः। रास्नेत्यादि। वृषादनी वन्दा, एलवालुकं स्वनामख्यातं, हारीतोऽयं योगः, किन्तु तत्रोत्तरार्द्धमन्यथा पठ्यते, 'कोष्णं सगुडसर्पिष्कं पिबेद्वातज्वरापहम्' इति एवं चन्द्राटेऽपि। शर्कराक्षौद्रपाठस्तु बहुसंग्रहपुस्तकेष्वेवास्ति, अत

पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः। परिभाषामिमांमन्ये प्रक्षेपेऽप्युचिरे यथा। कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः। द्रवशुक्त्या स लेढ़व्यः पातव्यश्च चतुर्द्रवः। मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत् ॥ ५३ ॥ विल्वादिपञ्चमूली च गुडूच्यामलके तथा। कुस्तुम्बुरुसमो ह्येष कषायो

---

स्यापैक्यापि भवितव्यम्। अतः पित्तश्लेष्मयुते तत्प्रक्षेपो बोध्यः। अयं योगो गुड़मात्र प्रक्षेपादपि रक्तिगुल्मेन पठ्यते ॥ ५२ ॥

क्षौद्रशर्करयोर्मानार्थं परिभाषामाह प्रक्षेप इत्यादि। क्वाथ्यात् क्वथनीयद्रव्यात् रास्नादेः उत्तमगुरुत्वापेक्षया पलात् पादिकः कर्ष इत्यर्थः एवं मध्यमाधमापेक्षया यथायथं ज्ञेयं। स्नेहे कल्कसमो मत इति 'कल्कस्तु स्नेहपादिकः' इत्युक्तेः कल्कसमः पादिकः इत्यर्थः। इमामिति वक्ष्यमाणाम्। कर्ष इत्यादावपि क्षौद्रादीनां मात्रा चूर्णवदित्यतिदेशेन कर्ष एवार्थः। अत एकार्थत्वादनुमतैव। एवं 'सितोपलागुड़क्षारसामान्यांशप्रकल्पना' इति वचनस्यापि 'प्रक्षेपः पादिकः क्वाथ्यात्' इति वचनेन सहैकवाक्यता ज्ञेया। तथाहि सितोपलादिकमत्रोपलक्षणं तेन मध्वादिकमपि ज्ञेयम्। सामान्यस्तुल्योंसिद्धं पलत्रिकर्षार्द्धपलरूपं यत् क्वाथ्यद्रव्यमानं तस्यांशेन चतुर्भागरूपेण प्रकल्पना येषां ते तथा। तेनापि क्वाथ्यात् पादिक एव प्रक्षेपो ज्ञेयः। समानैषां प्रकल्पनेति पाठपक्षेऽपि समाना चूर्णसमाना कर्ष इत्यर्थः। तेन 'मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्' इत्यनेन सहैकवाक्यता बोध्या। यत्र क्वाथप्रधानता तत्र प्रक्षेपःपादिक इत्यादि परिभाषा एवं यत्र चूर्णापेक्षोद्रवः तत्र कर्षश्चूर्णस्य कल्कस्येति परिभाषा। द्रवशुक्त्या स लेढ़व्य इति, स लेढ़व्यस्तदा द्रवशुक्त्या द्रवार्द्धपलेन इत्यर्थः। पातव्यस्तदा चतुर्द्रवः चतुर्गुणद्रवः। इतवैद्यव्यवहारस्तु पञ्चप्रस्थप्रक्षेपेति ॥ ५३ ॥

विल्वादीत्यादि। कुस्तुम्बुरु धनीयकम्। सम इति समभागकृतः

वातिकेज्वरे। पिप्पली शारिवाद्राचाशतपुष्पाहरेणुभिः। कृतः कषायः सगुड़ो हन्यात् श्वसनजं ज्वरम्। गुड़ूची शारिवा द्राचा शतपुष्पा पुनर्नवा। सगुडोऽयं कषायः स्याद्वातज्वरविनाशनः। द्राचागुड़ूचीकाश्मर्य्यत्रायमाणाः सशारिवाः। निष्क्वाथ्य सगुड़ं क्वाथं पिवेद्वातज्वरापहम्। शतावरीगुड़ूचीभ्यां स्वरसो यन्त्रपीड़ितः। गुड़प्रगाढ़ः शमयेत् सद्योऽनिलकृतं ज्वरम् ॥ ५४ ॥

---

कषायः इत्यर्थः, एतेन 'भागेऽप्यनुक्ते समता विधेया' इति परिभाषार्थः सूचितः। किम्बा शमनात्वाद्यादिः तेन नायं पाचनयोगः, किन्तर्हि शमन इत्यर्थः। चन्द्राटेऽपि शमनाधिकारेऽयं योगः पठितः। अत्र शमनलक्षणं यथा 'न शोधयति यद्दोषान् समान्नोदीरयत्यपि। समीकरोति च क्रुद्धान् तत् संशमनमुच्यते'। इति न शोधयति यद्दोषानिति दुष्टान् दोषान् न देहान्निःसारयति, एतेन शोधनं व्यवच्छिनत्ति। समान्नोदीरयत्यपीति अदुष्टानतिवृद्धा न विमार्गगान् करोति अनेन पाचनं व्यवच्छिनत्ति पाचनं हि दोषान् विमार्गीकुर्वन् पचति यथा अग्निः स्थाल्यं जलतण्डुलादीन् विमार्गीकुर्वन्नेव पचति, न कोपयतीति क्वचित् पाठः, स च न सङ्गतः, नोदीरयतीत्यनेन पौनरुक्त्यात् शोधनव्यवच्छेदाय पदान्तरं मृग्यम्। पिप्पलीत्यादि। सुश्रुतस्य। यत्र शारिवैका पठ्यते तत्रानन्तमूलमेव, एवमन्यत्रापि ज्ञेयम्। श्वसनजमिति वातजम्। पिप्पलीशारिवेत्यादिकमारभ्य वातज्वरे ये वाच्या स्ते शमनयोगा एव बोध्याः यस्मात् सुश्रुते 'अतः संशमनीयानि कषायाणि निबोध मे' इत्यभिधाय एते योगा उक्ताः। गुड़ूचीत्यादि। तन्त्रान्तरे गुड़ूचीस्थाने पिप्पली पठ्यते। द्राचेत्यादि। सुश्रुतस्य। काश्मर्यं गाम्भारीफलम्। शतावरीत्यादि। अनयोः स्वरसः सम एव ग्राह्यः ॥ ५४ ॥

पित्तज्वरे। कलिङ्गं कट्फलं मुस्तं पाठा तिक्तकरोहिणी। पक्कं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥ मधूदं पाचनं पैत्ते तिक्ताब्देन्द्रयवैः कृतम ॥ ५५ ॥ लोध्रोत्पलामृता-पद्मशारिवाणां सशर्करः। क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ ५६ ॥ पटोलयवधान्यकाथो मधुना मधुरी-कृतः। तीव्रपित्तज्वरामर्दी पानात्तृड्दाहनाशनः ॥ ५७ ॥ दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम्। जलं पिबेच्छर्करयावगाढं तृषास्रपित्तज्वरदाहयुक्तः ॥ ५८ ॥ त्रायमाणा च मधुकं पिप्पलीमूलमेव च। किराततिक्तकं मुस्तं मधूकं सविभीतकम। सशर्करं पीतमेतत् पित्त-ज्वरविनाशनम ॥ ५९ ॥ मृद्वीका मधुकं निम्बं कटुका

---

पैत्तिकज्वरे पाचनयोगमाह कलिङ्गमित्यादि। कलिङ्गम् इन्द्र-यवः पाठा आकनादी, तिक्तकः पटोलः सक्षौद्रमित्यादौ तिक्ता कटुकी ॥ ५५ ॥

लोध्रोत्पलेत्यादि। उत्पलं नीलोत्पलं, पद्मञ्च पद्मपुष्पं। 'गुडू-ची-शारिवालोध्र कमलोत्पलशर्कराः' इत्यायुर्वेदसारदर्शनात्। एक एवायं योगः सुश्रुते तु योगद्वयं पठ्यते, 'गुडूची पद्मलोध्राणां शारि-वोत्पलयोस्तथा। शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः' इति। किम्बा एतद्वचनसंवादात् सुश्रुतेऽप्येकयोगो व्याख्येयः। पर्पटोद्भव इत्य-त्रापि सशर्कर इति योज्यम् ॥ ५६ ॥

पटोलेत्यादि स्पष्टम् ॥ ५७ ॥

दुरालभेत्यादि। शर्करात्रप्रक्षेपविधिनैव, अन्ये त्ववगाढमिति वचनात् सम्यङ् माधुर्य्यापादिका शर्करा देयेत्याहुः ॥ ५८ ॥

त्रायमाणेत्यादि। त्रायमाणा बलोबालता इति मधूकं यष्टिमधु, मधूकं मधुपुष्पं पित्तहन्तृत्वात् ॥ ५९ ॥

रोहिणी समा। अवश्यायस्थितं पाक्यमेतत् पित्तज्वरापहम् ॥ ६० ॥ एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः। किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥ ६१ ॥ विश्वाम्बुपर्पटोशीरघनचन्दनसाधितम्। दद्यात् सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ ६२ ॥ पर्पटामृतधात्रीणां क्वाथः पित्तज्वरापहः। द्राक्षारग्वधयोर्वापि काश्मर्य्यस्याथवा पुनः ॥ ६३ ॥ द्राक्षाभयापर्पटकाब्दतिक्ताक्वाथं सशम्याकफलं विदध्यात्। प्रलापमूर्च्छाभ्रमदाहशोषतृष्णान्विते

---

सद्वीकेत्यादि। 'मृद्वीका द्राक्षा' कटुकारोहिणी कटुरोहिणी, अवश्यायस्थितं शिशिरस्थितं, न तु शीतकषायमत आह पाक्यमिति। तेन पाकं कृत्वा शिशिरे स्थापयेत् न तु 'दद्यादापोथितात् तोये' इत्यादि शीतकषायविधिना ॥ ६० ॥

एक इत्यादि। चन्दनं रक्तचन्दनं, नागरं कटुकमपि न पित्ते विरुध्यते मधुरपाकित्वात् ॥ ६१ ॥

विश्वेत्यादौ अम्बु बालकं, घनं मुस्तं ॥ ६२ ॥

पर्पटेत्यादौ अमृता गुडूची क्वाथ्यत्वात् ह्रस्वः। द्राक्षेत्यादि। सुस्तरम्। आरग्वधः शोनालुः, अस्य च चरके फलिनीवर्गे, सुश्रुते फलवर्गे पाठात् अन्तःपरिमार्जने फलं, बहिःपरिमार्जने कुष्ठादौ पत्रं ग्रहयम्, तेनात्र फलमेव, एवं काश्मर्या अपि फलमेव। अत्र द्राक्षारग्वधयोरापीत्येको योगः। काश्मर्य्यस्याथवेति द्वितीयः। इदञ्च योगद्वयं 'गुडूच्यपद्मलोध्राणां शारिवोत्पलयोस्तथा। शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः' इत्यस्यानन्तरं सुश्रुते पठ्यते, तेनात्र योगद्वये शर्करामधुरः क्वाथः इत्यनुवर्त्य टीकाकारैः शर्कराप्रक्षेपोऽविधेय इति व्याख्यातम् ॥ ६३ ॥

द्राक्षेत्यादि। ख्यातमसितप्रभस्य शम्याकः शोनालुः तस्य मज्जाभागः

पित्तभवे ज्वरे तु ॥ ६४ ॥ व्युषितं धन्याकजलं प्रातःपीतं सशर्करं पुंसाम् । अन्तर्दाहं शमयत्यचिरात् दूरप्ररूढ़मपि ॥ ६५ ॥ पित्तज्वरेण तप्तस्य क्रियां शीतां समाचरेत् ॥ ६६ ॥ विदारी दाड़िमं लोध्रं दधित्थं बीजपूरकम् । एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः ॥ ६७ ॥ घृतभृष्टाम्लपिष्टा चधात्रीलेपाच्च दाहनुत् । अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् । वदरीपल्लवोत्थेन फेणेनारिष्टकस्य वा ॥ ६८॥

---

प्रक्षेप इतिकेचित्, अयं पक्षः प्रचारी । अन्ये तु तत् फलैः सह मिलित्वा क्वाथ इत्याहुः ॥ ६४ ॥

व्युषितमित्यादि । धन्याकक्वाथ एव पर्य्युषितः कार्य्यः इति केचित्, अन्ये तु 'द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः समुदाहृतः । षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः । आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्' इति शास्त्रयुक्त्या शीतकषायमित्याहुः । वृद्धवैद्यास्तु भेषजार्द्धपले जलपलद्वयेन शीतकषायं कुर्वन्ति ॥ ६५ ॥

पित्तज्वरेण तप्तस्येत्यादि । तप्तस्येत्यनेन वक्ष्यमाणप्रदेहाद्या शीतलक्रिया जीर्णज्वर एव कर्त्तव्येति बोधयति । अतएवोक्तं सुश्रुते "परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च । स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः । कषायगुरुभक्ष्याणि क्रोधादीनि तथैव च । सार्द्रान्नि च भोज्यानि वर्जयेत्तरुणज्वरी' ॥ ६६ ॥

विदारीत्यादौ दधित्थं कपित्थफलं; दाड़िमस्यापि फलं, बीजपूरकस्य केशरं ॥ ६७ ॥

घृतेत्यादौ धात्री आमलकी, आदौ अम्लकाञ्जिकपिष्टा पश्चान्मनाग्घृतभृष्टेत्यर्थः । अम्लपिष्टैरित्यादौ अम्लं काञ्जिकं, पलाशतरुजैः पलाशनवपल्लवैः दिहेत् लिम्पेत् वदरीपल्लवोत्थेनेत्यादि । अत्रापि वद-

कालेयचन्दनानन्तायष्टीवदरकाञ्जिकैः। सघृतैः स्याच्छि-रोलेपस्तृष्णादाहार्त्तिशान्तये॥ ६९॥ उत्तानसुप्तस्य गभीर-ताम्रकांस्यादिपात्रं प्रणिधाय नाभौ। तत्राम्बुधारा बहुला पतन्ती निहन्ति दाहं त्वरितं सुशीता॥ ७०॥ पीतकाञ्जिकवस्त्रावगुण्ठनं दाहनाशनम्॥ ७१॥ जिह्वा-तालुगलक्लोमशोषे मूर्ध्नि तु दापयेत्। केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम्।॥ ७२॥

कफज्वरे। मातुलुङ्गशिफाविश्वब्राह्मीग्रन्थिकसम्भवम्। कफज्वरेऽम्बु सक्षारं पाचनं वा कणादिकम्॥७३॥ पिप्पली पिप्पलीमूलचव्यचित्रकनागरम्। मरिचैलाजमोदेन्द्रपाठारे-णुकजीरकम्। भार्गीमहानिम्बफलं हिङ्गुरोहिणि सर्षपम्। विडङ्गातिविषे मूर्वा चेत्ययं कीर्त्तितो गणः। पिप्पल्यादिः

---

रोपद्रवं काञ्जिकेन पिङ्गाप्रचुरकाञ्जिकेन गोलयित्वा मन्थानदण्डेन प्रमथ्य फेणग्रहणं कर्त्तव्यम्। एवं निम्बपत्रस्येत्याहुः॥ ६८॥

कालेयेत्यादौ कालेयं कालेयकाष्ठं, अनन्ता अनन्तमूलं, वदरं वदरफलं। सघृतैरिति घृतमत्र शतधौतं प्रयच्छन्ति वृद्धाः॥ ६९

उत्तानेत्यादि सर्वथैव कफसम्बन्धं विना यथा गात्रे अम्बुकणा न पतति, तथैव कार्य्यं॥ ७०॥

पीतेत्यादि। परन्तु मथ्यगालोड़यित्वा क्रियते॥ ७१

जिह्वेत्यादि। सुश्रुतस्य। लेपोऽयं; क्लोम पिपासास्थानं, मूर्ध्नि शिरस्तालुमध्ये॥ ७२॥

मातुलुङ्गेत्यादि। शिफा मूलं, ब्राह्मी ब्राह्मीशाकं, ग्रन्थिकं पिप्पलीमूलं, सक्षारमिति क्वाथविशेषणमेव, न तु कणादिकमित्यस्य, यतस्तन्त्रान्तरे पिप्पल्यादिकन्तु पाचनं कफजे ज्वर इत्युक्तं। न तु यवक्षार प्रक्षेप इति॥ ७३॥

कफहरः प्रतिश्यायारोचकज्वरान्। निहन्याद्दीपनो गुल्म-शूलघ्नश्चामपाचनः ॥ ७४ ॥ कटुकं चित्रकं निम्बं हरिद्रातिविषे वचा। कुष्ठमिन्द्रयवं मूर्वां पटोलञ्चापि साधितम्। पिबेन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे ॥ ७५ ॥ निम्ब-विश्वामृतादारुशटीभूनिम्बपौष्करम्। पिप्पल्यौ बृहतीचेति क्राथो हन्ति कफज्वरम् ॥ ७६ ॥ सिन्धुवारदलक्काथः सोषणः कफजे ज्वरे। जङ्घयोश्च बले जीर्णे कर्णे वापिहिते पिबेत् ॥ ७७ ॥ आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः। सर्वज्वरकफातङ्कभेदी दीपनपाचनः ॥ ७८ ॥ त्रिफला

---

[illegible] सुश्रुतोक्तपिप्पल्यादिगणः अथ तमेव गणं निर्दि-शति । [illegible] ॥ ७४ ॥

कटुकमित्यादि । [illegible] । सुश्रुते 'हरिद्रा चित्रकं निम्बमुशीरातिविषे वचा' इति दर्शनात् कटुकस्थाने उशीरमिति निश्चलः पठति । कटुकेत्यादि वचान्त एको योगः, कुष्ठादिपटोलान्तो द्वितीयः, अतएव वृन्दे [illegible] परित्यज्य कुष्ठमित्यादि द्वितीयार्द्धमेव पठ्यते । [illegible] कुसुमाञ्जलौ व्याख्यातवान् । पटोलमिति पटोलपत्र, 'पटोल[illegible]' इति वचनात् । साधितमित्यनन्तरं कषायमिति शेषः । मरिचमत्र [illegible] प्रचुरं प्रक्षेप्यं तीक्ष्ण[illegible]वीर्यत्वादिति चक्रः ॥ ७५ ॥

निम्बेत्यादि । पौष्करं पुष्करमूलं, तदभावे कुष्ठं, एवं सर्वत्र । बृहती कण्टकारी ॥ ७६ ॥

सिन्धुवारेत्यादि । आयुर्वेदसारस्य । सोषणमिति सपिप्पलीकं अतएव कणाढ्य इति पठ्यते, अन्ये तु उषणशब्देन मरिचं व्याख्या-नयन्ति व्यवहरन्ति च ॥ ७७ ॥

आमलकीत्यादि स्पष्टं ॥ ७८ ॥

पटोलवासाच्छिन्नरुहातिक्तरोहिणी षड्ग्रन्था। मधुना श्लेष्मसमुत्थे दशमूली वासकस्य वा क्वाथः॥ ७९॥ मुस्तं वत्सकबीजानि त्रिफला कटुरोहिणी। परूषकाणि च क्वाथः कफज्वरविनाशनः॥ ८०॥ चातुर्भद्रावलेहिका। कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह। कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्॥ ८१॥ कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः। द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः॥ ८२॥ ऊर्द्ध्वजत्रुगरोगघ्नी सायं स्यादवलेहिका। अधोरोगहरी या तु सा पूर्वभोजनान्मता॥ ८३॥ क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः। प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते॥ ८४॥

संसर्गजेषु। संसृष्टदोषेषु हितं संसृष्टमथ पाचनम्॥ ८५॥

---

त्रिफलेत्यादौ छिन्नरुहा गुडूची। तिक्तरोहिणी कटुरोहिणी, षड्ग्रन्था वचा, अयं योगो दशमूलीवासककाथसाहचर्यात् काथ एव, दशमूलीवासकाभ्यां मिलिताभ्यां काथः। अत्रापि मधु प्रक्षिपन्ति॥ ७९॥

मुस्तमित्यादि। सुश्रुतस्य। वत्सकः कुटजः॥ ८०॥

कट्फलमित्यादि कट्फलं स्वनामख्यातं शृङ्गी कर्कटकशृङ्गी॥ ८१॥

कर्ष इत्यादि परिभाषा व्याख्याता पूर्वमेव, किन्तु इदं कर्षमानं उत्तमपुरुषमपेक्ष्य कथितं, तेन मध्यमजघन्यापेक्षया कर्षमानादपकर्षो ज्ञेयः। व्यवहारस्तु द्विवैसूर्णमाषकैरिति॥ ८२॥

अस्योपयोगार्थं समयमाह ऊर्द्ध्वेत्यादि॥ ८३॥

क्षौद्रोपकुल्येत्यादौ उपकुल्या पिप्पली॥ ८४॥

द्वन्द्वजानां चिकित्सामाह संसृष्टमित्यादि। संसृष्टं मिलितं वातहरादिभिः॥ ८५॥

नवाङ्गः। विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः। कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥ ८६ ॥

त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः। शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ८७ ॥ किराततिक्तममृता द्राक्षामामलकीशटीम्। निष्क्वाथ्य पित्तानिलजे क्वाथन्तं सगुड़ं पिबेत् ॥ ८८ ॥ निदिग्धिकाबलारास्नात्रायमाणा-मृतायुतैः। मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥८९॥ गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम्। वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥ ९० ॥ मधुकं शारिवे द्राक्षा-मधूकं चन्दनोत्पलम्। काश्मरी पद्मकं लोध्रं त्रिफलापद्म-केशरम्। परूषकं मृणालञ्च न्यसेदुत्तमवारिणि। मधुलाज-

---

विश्वामृतेत्यादौ अमृतागुडूची पञ्चमूली स्वल्पपञ्चमूली ॥ ८६ ॥

त्रिफलेत्यादौ शाल्मलीवृक्षस्य मूलं। राजवृक्षस्य शोणालुवृक्षस्य फलं अन्तःपरिमार्जनत्वादिति प्रागेवोक्तं अटरूषको वासकः। ८७ ॥

किराततिक्तमित्यादि। सुश्रुतस्य। अमृता गुड़ूची ॥ ८८ ॥

निदिग्धिकेत्यादौ निदिग्धिका कण्टकारी। मसूरविदलैरिति व्रीहिमसूरविदलैरिति वकुलः। अन्ये तु मसूरविदलं श्यामलतामाहुः. यद्यप्यस्याः पर्य्याये मसूरविदला पठ्यते, तथापि लिङ्गमशिष्टं लोका-श्रयत्वात् इति लिङ्गे अनादरः। अस्याश्चद्रव्यगुणे ज्वरहन्तृत्वमस्ति, व्यवहारस्तुक्वचिदनया क्वचिद्व्रीहिमसूरेणेति ॥ ८९ ॥

पञ्चभद्रस्य पित्तकफहन्तृत्वमपि बोध्यं, यदाह हारीतः, 'किरातं पर्पटं मुस्तं गुडूची विश्वभेषजम्। पित्तश्लेष्मज्वरे कुर्य्यात् पाचनं ज्वर-नाशनम्' इति ॥ ९० ॥

मधुकमित्यादौ द्वे शारिवे श्यामलतानन्तमूले, मधुकं मधुपुष्पम्, उत्पलं नीलोत्पलं, काश्मरी, गाम्भारी, अस्याः फलम् इहोपदे-

सितायुक्तं तस्योतमूषितं निशि। वातपित्तज्वरं दाह-तृष्णामूर्च्छावमिभ्रमान्। शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः॥ ८१॥

पटोलादिः। पटोलं चन्दनं मूर्वा तिक्ता पाठामृता-गणः। पित्तश्लेष्मारुचिच्छर्दिज्वरकण्डुविषापहः॥८२॥

गुडूच्यादिः। गुडूची निम्बधन्याकं पद्मकं चन्दनानि च। एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः। हृल्ला-सारोचकच्छर्दिपिपासादाहनाशनः॥ ८३॥

चातुर्भद्रकपाठासप्तकौ। किरातं नागरं मुस्तं गुडू-चीञ्च कफाधिके। पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्॥ ८४॥

कण्टकार्य्यादिः। कण्टकार्य्यमृताभार्गीनागरेन्द्रयवा-सकम्। भूनिम्बञ्चन्दनं मुस्तं पटोलं कटुरोहिणी।

---

यात्। पद्मस्य केशरं किञ्जल्कं, मृणालमुशीरं, उत्तमवारिणि तण्डु-लोदके। एतत् सर्वं शीतकषायविधिना गृहीत्वा पेयं॥ ८१॥

पित्तकफज्वरचिकित्सामाह पटोलमित्यादि। सुश्रुतस्य। गणो-क्तत्वात् क्वाथकल्कादिकल्पनास्य बोध्या॥ ८२॥

गुडूच्यादौ पद्मकं पद्मकाष्ठं। यत्र पद्ममित्यस्ति तत्र प्रायः पद्मकेशरमेव गृह्यते। अत्र अत्यन्तदाहपिपासायां वृद्धाः शीतीकृत्य मधु प्रक्षिपन्ति। तच्च बहुधा दृष्टफलं॥ ८३॥

किरातमित्यादि 'पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्' इति किरातादिपाठादिभिः सह मिलित्वा पिबेत्, अतः पाठासप्तकत्वं। मृणालमुशीरं। पित्ताधिक इत्यत्र कफ इति शेषः। अतएवोक्तं 'भूनिम्बघन गुडूची शुण्ठ्यम्बुवासक भार्ग्यभयापाठा' इति॥ ८४॥

कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्। दाहतृष्णारुचि-च्छर्दिकासहृत्पार्श्वशूलनुत् ॥ ८५ ॥

सपत्रपुष्पवासाया रसः क्षौद्रसितायुतः। कफपित्त-ज्वरं हन्ति सास्रपित्तं सकामलम्। पटोलं पिचुमर्दश्च त्रिफला मधुकं बला। साधितोऽयं कषायः स्यात्पित्त-श्लेष्मोद्भवे ज्वरे ॥ ८६ ॥

अमृताष्टकः। गुडूचीन्द्रयवारिष्टपटोलं कटुरोहिणी। नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम्। अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः। हृल्लासारोचकच्छर्दि तृष्णादाह-विनाशनः ॥ ८७ ॥

पटोलयवधन्याकं मधुकामलकचन्दनम्। पैत्तिके श्लेष्म-पित्तोत्थे ज्वरे तृट्छर्दिदाहनुत्। क्षुद्रादिः। क्षुद्रामृताभ्यां सह नागरेण सपौष्करञ्चैव किराततिक्तम्। पिबेत् कषाय-न्त्विह पञ्चतिक्तं ज्वरं निहन्त्यष्टविधं समग्रम् ॥ ८८ ॥

सशर्करामक्षमात्रां कटुकामुष्णवारिणा। पीत्वा ज्वरं

---

कण्टकार्य्यादौ भार्गी वामनहाटी, इन्द्र इन्द्रयवः, यवासकं दुरालभा। एष योगः पित्तोत्तरे कफ इति केचित् ॥ ८५ ॥

सपत्रेत्यादि। रसः स्वरसः तस्य [illegible] अर्द्धपलं प्रायेणोप-युज्यते। सितामधुनोस्तु प्रत्येकं चतुर्माषकं, इत्र [illegible] इति पटोल-मित्यादौ पिचुमर्दो निम्बः ॥ ८६ ॥

अमृताष्टके अरिष्टो निम्बः ॥ ८७ ॥

पटोलेत्यादि स्पष्टं। क्षुद्रेत्यादि क्षुद्रा [illegible], नागरस्य कटुत्वेऽपि कतिपयोगच्छन्तीति न्यायात [illegible] ॥ ८८ ॥

सशर्करामित्यादि। सुस्पष्टम्। [illegible] [illegible] कटुरोहिण्योः

जयेज्जन्तुः कफपित्तसमुद्भवम्। दीपनं कफविच्छेदि वातपित्तानुलोमनम्। ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः। ॥ ९९ ॥

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्म्मितान्। स्रोतसां मार्द्दवं कृत्वा नीत्वा पावकमाशयम्। हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति। खर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः। शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ १०० ॥

---

मिलित्वा समभागेन क्वाथः। वैद्यप्रसारकेऽपि समभाग एवोक्तः। चक्रस्तु शर्करायाः उपसर्जनत्वात् कटुकाया द्वादशमाषकाः सितायाश्चत्वार इति तन्न, आयुर्वेदसारे 'सितां कटुकया युक्तां पीत्वा चोष्णेन वारिणा। जीर्णज्वरं जयेच्छीघ्रं कफपित्तकृतं ज्वरम्' इत्यत्र सिताया एव प्राधान्येन निर्देशात्, तस्मात् 'भागेऽप्यनुक्ते समता विधेया' इति वचनात् समभागतैव युक्ता दीपनमित्यादि। अत्र धन्याकस्य दशमाषकाः पटोलस्य दशमाषकाः पटोलस्य तु षण्माषका इति केचित्, तन्न, समभागबाधकाभावात्। शृतं क्वाथः, व्यवहारस्तु व्यञ्जनेनैव ॥ ९९ ॥

वातकफज्वरचिकित्सामाह कफवातेत्यादि रूक्षनिर्म्मितेत्यादि रूक्षनिर्म्मितानिति करीषब्बुषपाषाणवालुनिर्म्मितान्। यद्यपि वातस्य स्निग्धरूक्ष एव स्वेदो युक्तः, यदुक्तं 'स्वेदोऽनिले स्निग्धरूक्षो वातश्लेष्मणि शस्यते' इति, तथापि आमाशयगतस्यैव दोषस्य ज्वरारम्भकत्वात् वातेऽपि रूक्ष एव स्वेद उक्तः। उक्तं हि 'आमाशयगते वाते रूक्षपूर्वः प्रशस्यते'। तमेव रूक्षस्वेदमाह खर्पर इत्यादि। स्विद्यते अनेनेति स्वेदः, वालुका एव स्वेदः, वालुकास्वेदः, तेन खर्परभृष्टेत्यादि विशेषणं सङ्गच्छते। वालुकाप्रकर इत्यपि पाठः ॥ १०० ॥

मुस्तनागरभूनिम्बं त्रयमेतत् त्रिकार्षिकम् । कफ-
वातामशमनं पाचनं ज्वरनाशनम् ॥ १०१ ॥

पञ्चकोलः । पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम् ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः । ॥ १०२ ॥

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनं । वात-
श्लेषविकारघ्नं प्लीहज्वरविनाशनम् ॥ १०३ ॥ आरग्व-
धादिः । आरग्वधग्रन्थिकमुस्ततिक्ताहरीतकीभिः क्वथितः
कषायः । सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपा
चनश्च ॥ १०४ ॥

क्षुद्रादिः । क्षुद्रामृतानागरपुष्कराह्वयैः कृतः कषायः
कफमारुताधिके । सश्वासकासारुचिपार्श्वरुक्करे ज्वरे
त्रिदोषप्रभवे च शस्यते ॥ १०५ ॥

दशमूलीरसः पेयः कणायुक्तः कफानिले । अविपा-

---

मुस्तेत्यादौ प्रत्येकं कर्षः ॥ १०१ ॥

पिप्पलीत्यादि योगोऽयचादग्गया क्वाथनापि क्रियते, प्रत्येकं कोल-
प्रमाणयोगादस्य पञ्चकोल इति संज्ञा तथा ॥ १०२ ॥

पिप्पलीभिः शृतमित्यादि । पिप्पल्यास्तीक्ष्णवीर्य्यत्वात् क्वाथा-
न्तरवत् अस्य अर्द्धपलादिमानेन क्वाथो न युज्यते, तेन कर्षमेकमल्पं वा
गृहीत्वा कषायः कार्य्यः । प्रबलेऽग्नौ श्लेष्मणि वाते च योज्यः । वृद्धास्तु
क्वाथेन व्यवहरन्ति, अष्टमाषकं गृहीत्वा षडङ्गवदर्द्धं शृतं आमावस्था-
यामपि कुर्व्वन्ति ॥ १०३ ॥

आरग्वधेत्यादि । आरग्वधः शोणालु फलं, ग्रन्थिकं पिप्पलीमूलं,
तिक्ता कटुकी, दीपनपाचनश्चेत्यत्र, 'दीपनभेदनोऽसौ' इत्यपि पाठः १०४

क्षुद्रेत्यादि । क्षुद्रा कण्टकारी ॥ १०५ ॥

केऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ १०६ ॥ मुस्तं पर्पटकः शुण्ठी गुडूची सदुरालभा। कफवातारुचिच्छर्दिदाहशोषज्वरापहः ॥ १०७ ॥ दारुपर्पटभार्गीब्दवचाधान्यकट्फलैः। साभयाविश्वपूतीकैः क्वाथो हिङ्गुमधूत्कटः ॥ कफवातज्वरे पीतो हिक्काश्वासगलग्रहान्। कासशोषप्रसेकांश्च हन्यात् तरुमिवाशनिः। मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्। माषिकं हिङ्गुसिन्धूत्थज्वरघ्नाद्यास्तु शाणिकाः ॥ १०८ ॥ मातुलुङ्गफलकेशरो घृतः सिन्धुजन्ममरिचान्वितो मुखे। हन्ति वातकफरोगमास्यगं शोषमाशु जड़तामरोचकम् ॥ १०९ ॥

लङ्घनं वालुकास्वेदो सन्निपाते नस्यं निष्ठीवनन्तथा। अवलेहोऽञ्जनञ्चैव प्राक्प्रयोज्यं त्रिदोषजे ॥११०॥ सन्निपातज्वरे पूर्वं कुर्य्यादामकफापहम्। पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ ॥ १११ ॥ त्रिरात्रं पञ्चरात्रं

---

दशमूलीत्यादौ। रसः क्वाथः। अविपाके दोषाणामीषत्पाके, तेन पाचनत्वमस्य ॥ १०६ ॥

मुस्तमित्यादि। क्वाथेन ॥ १०७ ॥

दार्व्वित्यादि। पूतिको नाटाकरञ्जः इति निश्चलः। किन्तु भूतीक इति पाठो बहुपुस्तकेषु दृश्यते, स च टीकया न व्याख्यातः। भूतीकश्च यमानी। हिङ्गुक्षौद्रयोः प्रक्षेपार्थं परिभाषामाह मात्रेत्यादि। चूर्णवदिति कर्ष इत्यर्थः। उत्तमस्यपलं मात्रेति पक्षे इयं मात्रा ज्ञेया, माषिकं हिङ्गिति छेदः। आद्यशब्देन सैन्धव सौवर्च्चल मरिचादयः ॥ १०८ ॥

मातुलुङ्गेत्यादि। सिन्धुजन्म सैन्धवम् ॥ १०९ ॥

सन्निपातज्वरचिकित्सामाह लङ्घनमित्यादि। यद्यपि सन्निपातज्वरस्त्रिदोषारब्धः, तथापि आमाशयस्य कफस्थानत्वात्, स्थानित्वेन च कफ

वा दशरात्रमथापि वा लङ्घनं सन्निपातेषु कुर्य्या-
दारोग्यदर्शनात्। दोषाणामेव सा शक्तिर्लङ्घने या सहि-
ष्णुता। न हि दोषचये कश्चित् सहते लङ्घनादिकम्॥१२॥

---

एव बली, अतस्तत्प्रत्यनीकचिकित्सा प्रथमतो विधेया। अतः कफप्रत्य-
नीकमेव लङ्घनादिकं प्रथमं कर्त्तव्यम् इत्याह लङ्घनमित्यादि। अत-
एवोक्तमन्यत्र 'श्लेष्मनिग्रहमेवादौ कुर्य्याद्व्याधौ त्रिदोषजे' इति यत्
पुनस्तन्त्रान्तरे 'शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु। दुर्निवारतमं
तद्धि ज्वरार्त्तेषु विशेषतः'। तथा 'वातस्थानु जयेत् पित्तं पित्तस्थानु-
जयेत् कफम्। त्रयाणां वा जयेत् पूर्व्वं यो भवेत् बलवत्तमः' इत्युक्तं,
तत् पुनरवस्थाविशेषे बोध्यम्। तथाहि सामज्वरे कफमेवादितः प्रति-
कुर्य्यात्, आमपाकान्ते पित्तमेवादौ, चिरजे मारुतमेवादाविति।
अत्रार्थे तन्त्रान्तरं 'ज्वरे त्रिदोषजे सामे शमयेत् कफमादितः। पाका-
न्तमागते पित्तं चिरजे विषमेऽनिलम्' इति। अन्ये पुनः 'वातस्थानु
जयेत् पित्तम्' इत्यादिश्लोकमतीसारविषयतया वर्णयन्ति। ननु वाता-
दीनां विभिन्नसञ्चयप्रकोपादीनां युगपदुपस्थानाभावात् कथं सञ्चय
सान्निपातिकव्याध्यारम्भकत्वम्? अथ मन्यते त्रिदोषकरनिदानवशेन
प्रकोपादेर्षां युगपदुपस्थितिरिति, तदपि न मनोरमम्, यतस्तथाविध-
निदानोपसेवनेऽपि दोषाणां विपरीतैर्गुणैः परस्परोपघातात् युगपत्-
प्रकोपस्य अनुपपत्तेः। अत्रोच्यते न खलु दोषाणां निखिल एव गुणो-
विपरीतः, समानस्यापि कतिपयगुणस्य सद्भावात् समानेन हि गुणेन
दोषाणामन्योन्यप्रकोपस्यापि सम्भवात्। तथाहि रौक्ष्य लाघवाद्यै-
र्वायुस्तैजसं पित्तं प्रकोपयति, पित्तमप्येवमेव वायुम्, वायुरपि
शैत्यात् कफम्, कफोऽपि तथा वायुम्, पित्तस्य द्रवत्वेन कफम्, कफो-
ऽपि तथा पित्तमिति, गणसाम्यं। न वाच्यम् विपरीतस्तु गुणो भूयान्
अल्पं समानगुणमभिभूय प्रशमयत्येव, कुतो न करोत्येव, यतो दूष्या-
मेषया त्रिदोषकरद्रव्यप्रभावाच्च दोषगुणा दूषयन्ति परं न शमयन्तीति।
इदमेवाह 'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहज-

आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम्। आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः। तेनास्य हृदयात् श्लेष्मा मन्यापार्श्वशिरोगलात्। लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते। पर्व्वभेदोज्वरो मूर्च्छानिद्राकासगलामयाः। मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति। सकृद्द्वित्रिचतुः कुर्य्यात् दृष्ट्वा दोषबलाबलम्। एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम्॥ ११३॥ मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम्। अन्यद्वा सिद्धिविहितं तीक्ष्णं नस्यं प्रयोजयेत्। तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते। शिरोहृदयकण्ठास्यपार्श्वरुक् चोपशाम्यति॥ ११४॥ मधूकसारादिः। मधूकसारसिन्धूत्थवचोषणकणाः समाः। श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात् संज्ञाप्रबोधनम्।

---

सात्म्यात्वात घोरं विषमज्वरमिव' इति। अस्यार्थस्तु अस्मदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयः॥ ११०॥ १११॥

लङ्घनं सूचयित्वा दोषभेदेन तदवधिमाह त्रिरात्रमित्यादि। त्रिरात्रं लङ्घनविधिविकल्पो यथाक्रममल्पवणवातादपेक्षया ज्ञेयः। कर्य्यादारोग्य दर्शनादित्यभिधानं समदृढदोषत्वयापेक्षया बलसम्पत्तौ च ज्ञेयम् एतावन्तं कालं कथं लङ्घनं कर्त्तुं शक्यमित्याशङ्क्याह दोषाणामित्यादि। 'लङ्घनादिकम्' इत्यत्र आदिशब्दात् वालुकास्वेदादीनामपि ग्रहणम् ११२॥

निष्ठीवनमाह आर्द्रकेत्यादि। आर्द्रकस्वरसमुष्णं कृत्वा सैन्धवादिचूर्णमनुरूपं दत्त्वा निष्ठीवनमुपदिशन्ति वृद्धाः॥ ११३॥

नस्यमाह मातुलुङ्गेत्यादि। लवणत्रयं सैन्धव-सौवर्च्चल-विड्म्। सिद्धिविहितमिति। अस्य योगस्य भालुकितन्त्रोक्तत्वात् भालुकितन्त्रस्यैव सिद्धिस्थाने ज्ञेयम्॥ ११४॥

सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च। वस्तमूत्रेण पिष्टानि नस्यं तन्द्रीनिवारणम्। शिरीषवीजगोमूत्रकृष्णामरिचसैन्धवैः। अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः॥ ११६॥ अष्टाङ्गावलेहिका॥ कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी। श्लक्ष्णचूर्णीकृतञ्चैतन्मधुना सह लेहयेत्। एषाऽवलेहिका हन्ति सन्निपातं सुदारुणम्। हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति। ऊर्द्धगश्लेष्महरणी उष्णे स्वेदादिकर्म्मणि। विरोध्युष्णे मधु त्यक्त्वा कार्य्येऽप्याद्रकजे रसैः॥ ११७॥

---

मधूकसारेत्यादि मधूकफलविशेषस्तत्सारः फलास्थि, कणयं मरिचम्, अन्यथा कोष्णं च॥ ११५॥

सैन्धवमित्यादौ श्वेतमरिचं शोभाञ्जनवीजम्। अञ्जनमाह शिरीषेत्यादि शिला मनःशिला। सरसोनेत्यादिविशेषणात्.एको योगः, पृथक्पाठात् पृथग्योगोऽपि बोध्यः। वृद्धकाश्यपेऽप्युदसारे 'शूकाख्यबीजवासूत्र·कणा मरीच·सैन्धवैः। शिला-वचा रसोनैर्वा अञ्जनं स्यात् स्यात्·प्रबोधनम्'॥ ११६॥

अवलेहमाह कट्फलेत्यादि यासो दुरालभा। कारवीकृष्णजीरकं सन्निपाते स्वेदस्य सर्वदा हितत्वेन अग्निसम्बन्धसमुद्भूतं देहस्य उष्णत्वं, मधु च उष्णे विरुद्धते, अतस्तत्र मधु त्यक्त्वा आर्द्रकस्वरसेनावलेहः कार्य्य इत्याह ऊर्द्ध्व इत्यादि। एकमुष्णे इति पदं स्वेदादि विशेषणम् अपरञ्चोपपत्त्यर्थं। यस्मात् उष्णविरोधि मधु ततो मधु त्यक्त्वा इत्यर्थः। ननु, 'क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्वस्यां शान्तवेगायां न क्रिया सङ्करो हितः' इत्यनेन सुश्रुते क्रियासङ्करो निषिद्धः, तत् कथं नस्यनिष्ठीवनादीनां युगपदेव सन्निपातज्वरे

पञ्चमुष्टिः। यवकोलकुलत्थानां मुद्गामलकशुण्ठयोः। एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले। पञ्चमुष्टिक इत्येष कासे वातपित्तकफापहः। शस्यते गुल्मशूले च श्वासे क्षये ज्वरे। ॥ ११८ ॥

---

विधानम्? अत्रोच्यते, क्रियासङ्करो ह्यनेकक्रियामेलकः, तस्य च दूषकत्वं न सङ्करत्वमात्रेण, किन्तर्हि अतिमात्रत्वेन अग्निमान्द्यजनकतया तथा परस्परगुणविरोधादुभयोरपि निष्फलतया च। एतद्दोषद्वयमन्तः परिमार्जन एव सम्भवति, न पुनर्वहिःपरिमार्जने नस्यनिर्वापणादौ। एतदभिसन्धाय तन्त्रेऽपि समाधानमुक्तवान् यथा 'क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते। भिन्नरूपतया यास्तु ताः कुर्वन्ति न दूषणम्' इति। तुल्यरूपताचात्रान्तःपरिमार्जनत्वेनैव ज्ञेया। तेनायमर्थः एकस्मिन् अन्तःपरिमार्जने उपयुक्ते यद्यपरमन्तःपरिमार्जनमुपयुज्यते, तेनैव क्रियासाङ्कर्य्यस्य उक्तरीत्या दूषकत्वम्, न वहिःपरि-मार्जने नस्यादाविति। कषायादिसेवनोपयोगान्तरं पुनरवलेहादिदाने च यद्यपि क्रियासाङ्कर्य्यदोषो भवत्येव, तथापि काथ्याङ्गतया न विरोधः। तदङ्गताचानादिवद्व्यवहारात् दोषानुपलम्भाच्च बोध्यं। किम्वा क्रियासाङ्कर्य्यस्य दोषस्याल्पतया कण्ठरोधादिवलवदपायप्रशमकतया च निषिद्ध-मप्यवलेहादिक-मवस्थाविशेषे अङ्गीक्रियते। यथा पीतविषे वालादौ वमनम्। अन्ये तु कल्पनया तुल्यरूपतां व्याख्याय कषायावलेहयो र्युग-पदुपयोगेऽपि कल्पनाभेदान्न साङ्कर्य्यमित्याहुः। तन्न, सुश्रुते अग्निमान्द्यादिहेतुत्वेन क्रियासङ्करमात्रस्यैव दोषत्वमुक्तम्। अत तुल्यरूपता तुल्यरूपता वेति विशेषो नास्ति। केवलं तन्त्रेनैव कषायनस्यादीनां सन्निपाते युगपदुपयुज्यमानानामविरोधार्थम्, क्रियाभिस्तुल्यरूपाभिरिति वचनं निवद्धम्। तस्मात् क्रियाद्वयं कल्पनया तुल्यरूप-मतुल्यरूपं वा भवतु; उभयथाप्यतिमात्रादिनाग्निमान्द्यादिहेतुतयानिषिद्धमेव। तेनाभिन्नकल्पनात्मकेऽपि भेषजद्वये युगपदुपयुक्ते अतिमात्रत्वादिना अग्निमान्द्यादिहेतुत्वं

चातुर्भद्रकपञ्चमूलकं। पञ्चमूलीकिराताद्यिगणो योऽयमस्ति दोषजे पित्तोत्कटे च मधुना कणया च कफोत्कटे ११९।

दशमूलं। विल्वश्योनाकगाम्भारी पाटलागणिकारिकाः। दीपनं कफवातघ्नं पञ्चमूलमिदं महत्। शालपर्णीपृश्निपर्णी वृहतीद्वयगोक्षुरम। वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम्। उभयं दशमूलन्तु सन्निपातज्वरापहम्। कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते। पिप्पलीचूर्णसंयुक्तं मोहज्वरविनाशनम्॥ १२०॥

---

द्रूपकतावोजस्यैवेति। तस्मात् अन्तःपरिमार्ज्जने त्वेनैव तुल्यरूपत्वम्, वाह्यःपरिमार्ज्जने च भिन्नरूपत्वं व्याख्याय कषायनस्याञ्जनादिषु क्रियासाङ्कर्य्यदोषत्वं परिहरणीयम् ११८॥

यवेत्यादि। प्रत्येकं यवादीनां [illegible] ननु पलं द्रव्यबाहुल्यात्। अयमेव पक्षः प्रचारी। एतेन द्रव्यभाहुल्य सम्मुदितानामेषां मिलित्वा पलमात्रं पचेदित्यर्थः। [illegible] पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पलमानत्वेऽपि न दोष इत्याह। अत्रैव योगस्य धान्यशुण्ठीयोगात् सप्तमुष्टिक इत्यपि नाम यदुक्तं 'यव कोल कुलत्थैश्च मुद्ग मूलकशुण्ठकैः। धन्याक [illegible] स्यात् सप्तमुष्टिकः' ११८॥

पञ्चमूलीत्यादि। वातपित्तोक्तनवाङ्गयोग एवायम्। अत्र पुनर्मधुयोगात् पित्तोल्वणत्रिदोषहन्तृत्वं पिप्पलीयोगाच्च कफोल्वणत्रिदोषहन्तृत्वमस्य ज्ञेयम्। अत्र कनीयसाऽपि पञ्चमूल्या व्यवहारः। अन्ये पुनः सम्प्रोक्षणे महतीं पञ्चमूलीं [illegible]ः ११९॥

दशमूलस्य उक्तत्वादुक्तव्याख्या[illegible]नुरोधाच्च पञ्चमूलद्वयमाह विल्वेत्यादि। महातरुसम्भव त्वात् विल्वादि पञ्चमूलस्य महत्वं, स्वल्पतरुसम्भवत्वाच्च शालपर्ण्यादीनामल्पत्वं ज्ञेयम्। सुश्रुते तु गोक्षुरस्थाने

चतुर्दशाङ्ग:। चिरज्वरे वातकफोल्वणे वा त्रिदोषजे वा दशमूलमिश्र:। किराततिक्तादिगण: प्रयोज्य: शुद्ध्यर्थिने वा त्रिवृताविमिश्र: ॥ १२१ ॥

वातश्लेष्महराष्टादशाङ्ग:। दशमूली शटी शृङ्गी पौष्करं सदुरालभम्। भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी। अष्टादशाङ्ग इत्येष सन्निपातज्वरापह:। कासहृद्ग्रहपार्श्वार्त्तिश्वासहिक्कावमीहर:। ॥ १२२ ॥

पित्तश्लेष्महराष्टादशाङ्गम्। भूनिम्बदारुदशमूलमहौषधाब्दतिक्तेन्द्रवीजधनिकेभकणाकषाय:। तन्द्रीप्रलापकसनारुचिदाहमोहश्वासादियुक्तमखिलं ज्वरमाशु हन्ति ॥ १२३ ॥

मुस्तादिर्गण:। मुस्तपर्पटकोशीरदेवदारुमहौषधम्। त्रिफलाधन्वयासश्च नीली कम्पिल्लकं त्रिवृत्। किराततिक्तकं पाठा बला कटुकरोहिणी। मधुकं पिप्पलीमूलं मुस्तादिर्गण उच्यते। अष्टादशाङ्गमुदितमेतद्वा सन्निपात

---

एरण्डमूलं मन्यते, चरके तु गोक्षुर इति। तेन सुश्रुतप्रयोगेषु एरण्डमूलेनैव चरकादिप्रयोगेषु गोक्षुरेणैव व्यवहार इति याज्ञिहोता-द्यवयेरण्डमूलेनैवेति १२० ॥

चिरज्वर इत्यादि। वातकफोल्वण इत्युभयत्रापि संवध्यते। शुद्ध्यर्थिने वा त्रिवृताविमिश्र इति मलविवन्धे सति शोधनार्थं त्रिवृत्-त्रिवृच्चूर्णमाषकाणां प्रक्षेप इत्यर्थ:॥ १२१ ॥

दशमूलीत्यादि सष्टम् ॥ १२२ ॥

भूनिम्बेत्यादौ इन्द्रवीजं इन्द्रजव: ॥ १२३ ॥

नुत। पित्तान्तरे सन्निपाते हितश्चोक्तं मनीषिभिः। मन्यास्तम्भे उरोघाते उरःपार्श्वशिरोग्रहे॥ १२४॥

शट्यादिगणः। शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा। गुडूची नागरं पाठा किरातं कटुरोहिणी। एष शट्यादिको वर्गः सन्निपातज्वरापहः। कासहृद्ग्रहपार्श्वार्त्तिश्वासे तन्द्रासु शस्यते॥ १२५॥

बृहत्यादिः। बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा। वत्सकस्य च बीजानि पटोलं कटुरोहिणी। बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः। कासादिषु च सर्वेषु देयः सोपद्रवेषु च॥ १२६॥

भार्ग्यादिः। भार्गीं पुष्करमूलञ्च रास्नां बिल्वं यमानिकाम्। नागरं दशमूलञ्च पिप्पलीं चाप्सु साधयेत् सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम्। कासाश्वासाग्निमान्द्यत्वं तन्द्रीञ्च विनिवर्त्तयेत्॥ १२७॥

मुस्तेत्यादौ नीला नीलवृक्षा, कम्पिल्लकं गुण्डारोचनी। वत्सास्थाने वचेति न, पाठः आयुर्वेदसारादौ वत्सापाठात्॥ १२४॥

शटीत्यादौ किरातस्थाने केचित् पटोलं पठन्ति, तन्नहारीत-जतूकर्ण-चन्द्राटादिदेष्वेव, किरातस्यैव पाठादिति॥ १२५॥

बृहत्यादिरित्यादौ कासादिष्वित्यत्र आदिशब्द ग्रहणात् श्वासाद्युक्त-हृद्ग्रहादीनां ग्रहणम्। चरकेऽपि शट्याद्यनन्तरमस्य योगस्य पाठात्॥ १२६॥

भार्गीमित्यादि। भेलस्य। बिल्वं बिल्वमूलं योगिकमस्तस्मकत्वात् दशमूलञ्चेति पाठपक्षेऽपि भागद्वयं तस्य ग्राह्यं, किन्तु भेले "नागरञ्च मृणालञ्च पिप्पली च" इति पाठो दृश्यते। एवं चन्द्राटेऽपि, घनकभागस्तस्येति युक्तम्॥ १२७॥

द्विपञ्चमूलीपङ्गन्ध्या-विश्वकट्फलवचोदयं। कफवातज्वरः क्वाथः सन्निपातहरः परः।

कारवीपुष्करैरण्डत्रायन्तीनागरामृताः। दशमूलीशटीशृङ्गीयासभार्गीपुनर्नवा। तुल्यामूत्रेण निष्क्वाथ्य पीताः स्रोतोविशोधनाः। अभिन्यासज्वरं घोरमाशुघ्नन्ति समुद्धतम्। १२९ ॥

मातुलुङ्गाश्मभिद्बिल्वव्याघ्रीपाठोरुबूकजः। क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्॥ १३० ॥

निद्रोपेतमभिन्यासं क्षीणं विद्याद्धतौजसम्॥ १३१ ॥

कण्ठरोधकफश्वासहिक्कासंन्यासपीड़ितः। मातुलुङ्गार्द्रकरसं दशमूल्यम्भसा पिबेत्॥ १३२ ॥

---

द्विपञ्चमूलीत्यादौ। द्विपञ्चमूली, पङ्गन्ध्या वचा, कट्फलवचोद्वयं कानागरकड़ करानिमेदात् मतान्वेतपुष्पमदाह्वा॥ १२८ ॥

सन्निपातज्वरभेदस्याभिन्यासस्य चिकित्सामाह कारवीत्यादि। कारवी कृष्णजीरकम्, त्रायन्ती त्रायमाणा, मूत्रेण गोमूत्रेण॥ १२९॥

मातुलुङ्गेत्यादौ। अश्मभित् पाषाणभेदी, बिल्वस्य मूलं लवणं सैन्धवं, मूत्रं गोमूत्रम्। गोमूत्रसैन्धवे प्रक्षिप्य क्वाथः पेयः। गतप्रयोगदर्शनात् गोमूत्रेण क्वाथः प्रक्षेपस्तु लवणमित्येके॥ १३० ॥

रुग्विनिश्चये अभिन्यासलक्षणस्य अनुक्तत्वात् तल्लक्षणमिहैवाह निद्रोपेतमित्यादि। सन्निपातज्वरमेव निद्रोपेतमभिन्यासं विद्यात्। क्षीणं विद्याद्धतौजसमिति क्षीणमिति क्षीणधातुगतम्। अभिन्यासज्वरमेवं सन्निपातज्वरमेव क्षीणधातुगतं हतौजसं विद्यात् उक्तं सुश्रुते "अभिन्यासन्तु तत्प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः" इति॥ १३१ ॥

व्योषाब्दत्रिफलातिक्ता-पटोलारिष्टवासकैः। स भूनिम्बामृतायासै स्त्रिदोषज्वरनुज्जलम्। त्रिवृद्विशालात्रिफला-कटुकारग्वधैः कृतः। सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः॥ १३३॥

स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः। घर्षेज्जिह्वां जड़ां सिन्धुत्र्यूषणैः साम्लवेतसैः। उच्छुष्कां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया। लेपयेत् सघृतश्चास्य सन्निपातात्मके ज्वरे। काकजङ्घाजटा निद्रां जनयेच्छिरसि स्थिता। सन्निपाते प्रकम्पन्तं प्रलपन्तं न बृंहयेत्। तृष्णादाहाभिभूतेऽपि न दद्याच्छीतलं जलम्॥ १३४॥

* सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः संजायते तेन कश्चिदेव प्रमुच्यते। रक्तावसेचनैः पूर्वं सर्पिः पानैश्च तं जयेत्। प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः॥ १३५॥

---

कण्ठरोधेत्यादौ दशमूलक्वाथमेव मातुलुङ्गार्द्रकरसे प्रक्षिप्य पिबेदित्यर्थः॥ १३२॥

व्योषेत्यादौ अरिष्टो निम्बः, तस्य त्वक्, जलं क्वाथः। त्रिवृदित्यादौ विशाला गोरक्षकर्कटी, यवक्षारः प्रक्षेप्यः॥ १३३॥

स्वेदोद्गमेत्यादि सन्निपातात्मकेज्वर इत्यन्तं स्पष्टम्। काकजङ्घा इत्यादौ जटामूलम्। सन्निपातेत्यादि स्पष्टम्॥ १३४॥

सन्निपातज्वरस्यान्ते शेषे, सन्निपातज्वरे वा गते इत्यर्थः। रक्ता-

---

* ननु सन्निपातज्वरस्यान्ते इत्यादिना कर्णमूलशोथस्य तादृशज्वरोपद्रवत्वं स्वीकृतं "ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो व

गैरिकं पांशुजं शुण्ठीवचाकट्फलकाञ्जिकैः। कर्णशोथहरो लेपःसन्निपातज्वरे भृशम्। कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः। सुखोष्णैर्लेपनं कार्य्यं कर्णमूले मुहुर्मुहुः॥ १३६॥

निदिग्धिकादिः। निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्। जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु। इन्त्यूर्द्धगामयं प्रायः सायन्तेनोपयुज्यते॥ १३७॥

---

वसेचनैरितिवक्तृवचनात् रक्तावसेचनं नैरन्तर्य्येण बोध्यम्। जतूकर्णे "शश्वद्रक्तस्य मोक्षणम्" इत्युक्तत्वात्। सर्पिरत्र पञ्चतिक्त त्रिफलाघृतादि। चकारात् वातकफघ्नलेहोऽपि बोध्यः। यदुक्तं तत्रैव "लेहाश्च कफवातघ्नाः कार्य्याः सकवड्ग्रहाः। त्रिफलाघृतपानं वा बलं ज्ञात्वा समाचरेत्" इति॥ १३५॥

कुलत्थेति स्पष्टं दशमूलेनापि सुखोष्णेन लेपमुपदिशन्ति॥ १३६॥

जीर्णज्वरचिकित्सामाह निदिग्धिकेत्यादि। निदिग्धिका कण्टकारी, वातकफे क्रियते; पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु प्रक्षिपन्ति

---

ज्वरान्ते कर्णमूलशोथः क्रमादसाध्यं स्यात् कृच्छ्रसाध्यं सुखेन साध्यं प्रवदन्ति तज्ज्ञाः" इति तन्त्रान्तर वचनेन ज्वरान्ते तादृशशोथस्य सुखसाध्यत्वं स्वीकृतं तथा च वचनद्वय विरोधोदुष्परिहारः अत्र समाधनं सन्निपातज्वरस्यान्ते इत्यत्रान्तशब्दस्य मध्यार्थकत्वेन विरोधभङ्ग इति कश्चित् अन्ये तु उत्सर्गापवादभेदेन वचनद्वय सङ्गतिरित्याहुः। नव्यास्तु सन्निपातज्वरस्यान्ते इत्यस्यान्यविधमेवार्थं वर्णयन्ति तथाहि सन्निपातज्वररोगे यदि कर्णमूले कश्चित् शोथो जायते तेन शोथेन कश्चित् मुच्यते व्याधित इति भेदः।

पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः । जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा । कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत् । जीर्णज्वरेऽग्निसादे च शस्यते गुडपिप्पली ॥ १३८ ॥

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी । १
पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी । २
निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ । ३ किराततिक्तममृता चन्दनं विश्वभेषजम् । ४ गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः । कषायाः शमयन्त्याशु पञ्चपञ्चविधान् ज्वरान् । सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् । १३९ ।

---

वृद्धाः । पिप्पलीचूर्णस्य माषकद्वयं प्रक्षेप्यं प्रचारादिति कश्चित् । पुराणप्रतिश्यायेऽप्ययं योगो दृष्टफलः अस्यैव योगस्य सोपपत्तिकं वैद्यव्यवहारसिद्धमुपयोगकालमाह वृन्दोत्यादि । किन्तु विन्दुसारे प्रातःसमयोऽप्युक्तः । यथा "श्वासकासविनाशाय मन्दाग्नेर्दीपनाय च । अजरेच्च निहत्यं प्रातरुत्थाय तंपिबेत्" इति । तथा वृन्दोऽप्याह "नक्ताक्षिज्वरेसाय-मन्यत्र प्रातरिष्यते" इति ॥ १३९ ॥

पिप्पल्यादौ छिन्नरुहा गुडूची, पञ्चमूली च महती । योगद्वयेऽपि पिप्पलीचूर्णप्रक्षेपः । पित्तानुबन्धे मधु उपदिशन्ति वृद्धाः । एतच्च योगद्वयं प्रायः सायमुपयुज्यते । कासेत्यादौ गुडपिप्पल्योः प्रत्येकं माषकद्वयेन व्यवहरन्ति वृद्धाः ॥ १३८ ॥

विषमज्वरचिकित्सामाह कलिङ्गकाइत्यादि । वाभटस्य । एते पञ्चयोगाः पञ्चसु सन्ततसततान्येद्युष्क-तृतीयकचतुर्थकेषु, यथासंख्यं देयाः । चक्रे तु सर्वएव योगाः सर्वत्र इत्याहुः । तत्र यथासंख्यमेव युक्तं सततोद्देशेन पटोलादियोगस्य, तथा निम्बादेरन्येद्युष्कोद्देशेन,

गुड़प्रगाढ़ां त्रिफलां पिबेद्वा विषमार्द्दितः। दीर्घपत्रक-कर्णाख्यनेवं खदिरसंयुतम्। ताम्बूलैस्तद्दिने भुक्तं प्रातर्विषमनाशनम्। गुडूचीमुस्तधात्रीणां कषायं वा समाचिकम्॥१५०॥ मुस्तकादिः। मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः। पीतः सकणाचूर्णःसमधुर्विषमज्वरं हन्ति॥

महौषधामृतामुस्तचन्दनोशीरधान्यकैः। क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः। वासाधात्रीस्थिरादारुपथ्यानागरसाधितः। सितामधुयुतः क्वाथश्चातुर्थकनिवारणः। मधुना सर्व्वज्वरनुच्छेफालीदलजो रसः। अजाजीगुड़संयुक्ता विषमज्वरनाशिनी। अग्निसादं जयेत् सम्यक् वातरोगांश्च नाशयेत्। रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्त्तः। विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः। प्रातःप्रातः ससर्पिर्वा रसोन-

---

गुडूच्यादेश्च चतुर्थकोल्लेखेन चारपाणौ दृष्टत्वात्। सन्ततसतताद्येद्युस्तृतीयकचतुर्थकानिति पाठस्तु वाभटे चरके नास्ति वृन्देऽपि नास्ति। तेनायमर्द्धश्लोकः संग्रहे केनापि प्रमादात् लिखितः॥ १३९॥

गुड़प्रगाढ़ामित्यादि। सुश्रुतस्य। त्रिफलामित्यत्र क्वथितामिति शेषइति डल्वणः। गुड़ोऽत्र प्रक्षेप्यः। दीर्घपत्रकेत्यादि। कर्णाख्यं काणा खोड़ इति ख्यातं। तस्य विशेषणं दीर्घपत्रेति। नेत्रं मूलं, तदपि शुष्कदेशजातं ग्राह्यमुपदिशन्ति वृद्धाः। गुडूचीत्यादि। सुश्रुतस्य। अयं योगो यद्यपि पूर्व्वं चतुर्थके पठितः, तथापि मधुयोगात् विषमज्वरमात्रहन्तृत्वमप्यस्यबोध्यम्। डल्वणस्तु यद्यपि योगोऽयं विषमज्वरे पठितः, तथापि समानतन्त्रोक्तत्वात् विषमज्वरविशेषे चतुर्थकएवायं बोध्य इत्याह॥ १४०॥

मुपयोजयेत्। पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः। षट्पलं वा पिबेत् सर्पिः पथ्यां वा मधुना लिहेत्। पयस्तैलं घृतञ्चैव विदारीक्षुरसं मधु। संमूर्च्छ्य पाययेदेतत् विषमज्वरनाशनम। पिप्पलीशर्कराक्षौद्रं घृतं क्षीरं यथाबलम्। खजेन मथितं पेयं विषमज्वरनाशनम्। पयसा वृषदंशस्य शकृद्वेगागमे पिबेत। वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ १४१॥ निलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम्। पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः॥ १४२॥ सुरां समण्डां पानार्थे भक्षार्थे चरणायुधान्। तित्तिरींश्च मयूरांश्च प्रयुञ्ज्याद्विषमज्वरे। १४३। अङ्कोटजस्रहस्तेष

---

रसादि-महौषधादौ स्पष्टो। वासादौ वासास्थाने चन्द्राटे पाठा पठ्यते, व्यवहारस्तु वासयैव! स्थिरा शालपर्णी। पथ्याहरीतकी मधुनेत्यादौ सर्वज्वरनुत् विषमाविषमज्वरनुत्। अजाजीत्यादौ अनागन्धं कृष्णजीरकमिति चक्रः। सितजीरकमित्यन्ये। रसोनकल्कमित्यादि भक्तात् पूर्वं कर्त्तव्यं, यदाह चरकः "रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम्" इति। प्रातरित्यादि पिप्पल्यादियोगौ सौश्रुतौ। षट्पलं सर्पिरत्रैव वक्ष्यमाणम्। पयइत्यादौ दुग्धं शृतं बोध्यम्। विदारीक्षुरसमिति इक्षुरसस्थाने स्वरस इति न पाठः, उक्तं हि हारीते- "विदारीक्षुरसः सर्पिर्मधु तैलशृतं पयः। पिबेच्चातुर्थकश्वासकासवातज्वरापहम्" इति। अन्ये तु विदारीस्वरसौ विषमज्वरमात्रे, चातुर्थे इक्षुरसात् योगान्तरमाहुः। पिप्पलीत्यादौ दुग्धं शृतं बोध्यम्। पयसेत्यादौ वृषदंशोविडालः। वृषस्यापि शकृदित्यर्थः॥ १४१॥

विषमज्वरे विरेकार्थमाह निलिनीत्यादि। निलिनी नीलवृक्षा। आगमने आगमनदिवसे। सुरामित्यादि—चरकस्य स्पष्टम्। अङ्कोटजटाङ्कोरी। सैन्धवमित्यादि। चरकस्य। अञ्जनयन्ते: अभ्यञ्जनेऽपि

दलेन सुकृतां पिबेत्। पेयां घृतप्लुतांजन्तुश्चातुर्थकहरीं वाहम् ॥ १४४ ॥ सैन्धवं पिप्पलीनाञ्च तण्डुला समनःशिलाः नेत्राञ्जणं तैलपिष्टं विषमज्वरनाशनम्। व्याघ्रीवसा हिङ्गुसमा नस्यं तद्वत् ससैन्धवा ॥१४५॥ कृष्णाम्बरदृढ़ा वद्धगुग्गुलूलूकपुच्छजः। धूपश्चातुर्थकं हन्ति तमः सूर्य्य इवोदितः ॥ १४६ ॥ शिरीषपुष्पस्वरसो रजनीद्वयसंयुतः। नस्यं सर्पिःसमायोगाच्चातुर्थक ज्वरं जयेत्। नस्यं चातुर्थकं हन्ति रसोवागस्त्यपत्रजः ॥ १४७ ॥ ॥ १४८ ॥ अष्टाङ्गधूपः। पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी। सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम्।

अपराजितोधुपः। पुरध्यामवचासर्जनिम्बार्कागुरुदारुभिः। सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥ १४९॥

वैड़ालं वा शकृद्योज्यं वेपमानस्य धूपने ॥ १५० ॥ अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः। वद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम्। काकजङ्घा वला श्यामा ब्रह्मदण्डी कृताञ्जलिः। पृश्निपर्णी त्वपा-

---

वर्त्तते, तच्चिराबाय नेत्रपदम्। व्याघ्रीत्यादौ स्त्रीलिङ्गनिर्द्देशात् लिङ्गमेव प्रयोजकं नतु जातिः। कृष्णाम्बरेत्यादौ चम्बरस्य कृष्णत्वं भृङ्गराजस्वरसादिभिः। उलूकः पेचकः। नस्यमाह शिरीषेत्यादि रजनीद्वयचुर्णं सर्पिश्च प्रक्षेप्यम्। नस्यमित्यादौ अगस्त्यपत्रं वकुपुष्पेन पत्रम् ॥ १४—१७४

पलङ्कयेत्यादौ पलङ्कषा गुग्गलुः ॥ १४८ ॥

पुरेत्यादौ पुरोगुग्गलुः, ध्यामं गन्धतृणम् ॥ १४९ ॥

वैड़ालमित्यादि स्पष्टम्। अपामार्गस्य जटा मूलं पुष्ये पादं दत्त्वा

मार्गस्तथा भृङ्गरजोऽष्टमः। एषामन्यतमं मूलं पुष्ये-णोद्धृत्य यत्नतः। रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत्। मूलं जयन्त्याः शिरसा धृतं सर्व्वज्वरापहम्॥ १५१॥ कर्म्म साधारणं जह्यात् तृतीयकचतुर्थकौ। आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे॥ १५२॥ गङ्गाया उत्तरे कूले अपुत्र-

---

बन्धः कार्य्य इत्याहुः बन्धनविधिरायुर्वेदसारे यथा "अपामार्गस्य मूलञ्च सप्तगन्थाविताननः। बध्नीयाद्वामहस्तेन सर्व्वज्वरविमोचणम्।" काकजङ्घेत्यादौ काकजङ्घा खनामख्याता, श्यामा वृद्धदारकः, ब्रह्म-दण्डी ब्रह्मयष्टिका, कृताञ्जलिः लाजालिया। मूलमित्यादौ जयन्त्याः श्वेताया इत्याहुः, भूजयन्त्या इत्यन्ये॥ १५०॥ १५१॥

भूतानुबन्धिनो तृतीयकचतुर्थकयोश्चिकित्सामाह कर्म्मेत्यादि। दैव-व्यपाश्रयं बलिमङ्गलादि, युक्तिव्यपाश्रयञ्च कषायादि, एतदुभयमपि चिकित्सितं साधारणशब्देनाभोच्यते। जह्यादिति अन्तर्भूतण्यर्थमि-दम्, तेनसाधारणं चिकित्सितं तृतीयकचतुर्थकौ कर्म्मरूपौ जह्यात् त्याजयेत् निराकुर्य्यादित्यर्थः। ननु ज्वरान्तरे सर्व्वत्र युक्तिव्यपाश्रयं कषायादिकमेवोपदिष्टं, न दैवव्यपाश्रयम्, अत्र पुनः किमर्थं दैव-व्यपाश्रयमपि वर्त्तव्यत्वेन उपदिश्यते इत्याह आगन्तुरित्यादि। आगन्तुर्भूतादिः। विषमज्वरशब्देन तृतीयक चतुर्थकावेवाभिमतौ। तृतीयकचतुर्थकशब्देनात्र तद्विपर्य्ययस्यापि ग्रहणम्। अन्ये तु यद्य-प्यागन्तुरनुबन्धो हि इत्यादिवचनबलाद्विषमज्वरमात्र एव दैवव्यपाश्रयं कर्म्म कर्त्तव्यमित्यायाति, तथापि तृतीयकचतुर्थकाविति यदुक्तं तद्विशे-षार्थम्। तेन तृतीयक चतुर्थकयोः प्रायेण भूतानुबन्धजन्यत्वात्तयोरेव विशेषेण दैवव्यपाश्रयं कर्म्म कर्त्तव्यमित्याहुः। अन्ये तु साधारणश-ब्देन दोषमात्रसाधारणं युक्तिव्यपाश्रयमात्रं कर्म्मोच्यते। जह्यादि-त्यस्य त्यजनीयमर्थः, तेन तृतीयक चतुर्थके युक्तिव्यापाश्रयमात्रं न कार्य्यं,

स्तापघ्नो मतः। तस्मै तिलोदकं दद्यात् मुच्यत्यैकाहिको ज्वरः। एतन्मन्त्रेण चाश्वत्थपत्रहस्तः प्रतर्पयेत् ॥ १५३ ॥ सोमं सानुचरं देवं समातृगणमीश्वरम्। पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्। विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्। स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ १५४॥ ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः। रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम्। निर्द्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम्। न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत्। यावल्लघुत्वादशनं दद्यान्मांसरसेन तु ॥ १५५ ॥ मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः।

---

किन्तूभयमपि कार्य्यम्। एवञ्चागन्तुरनुबन्धो दोषादि द्वितीयार्थमपि सङ्गच्छत इत्याहुः ॥ १५२ ॥

गङ्गाया इत्यादि। एकहंसायाः पुष्करिण्या अकाकवदिते पानीयं नूतनघटेन नेतव्यम्, उदिते च रवौ पालिदिने तर्पणं कार्य्यम्। अत्र कुशा यवाः कुसुमानि च चतुस्त्रिंशमाषभक्तादिना वलिसंत्युपदिशन्ति वृद्धाः। अस्य मन्त्रस्य केचिदाद्यश्लोकं पठन्ति यथा "वङ्ग वङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। वाराणस्याञ्च यदवृत्तं तत्र स्मरसि हे ज्वर इति। सोममित्युमया सहितम्, अनुचरैर्नन्द्यादिभिश्च सहितम्। विष्णुमित्यादि। नामसहस्रेण महाभारताद्युक्तेन ॥ १५३॥ १५४ ॥

इदानीं घृतप्रयोगान् विवक्षुः घृतस्य कालं विषयञ्चाह ज्वराः कषायैरित्यादि। अत्र कषायैरित्यसमासनिर्द्देशेन व्यस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिःपानं कर्त्तव्यमिति दर्शयति। वमनैरित्यनेन अवस्थाविधेयवमनप्रयोगान् सर्पिःषड्ङ्गपूर्वभाविनो दर्शयति, लङ्घनैरित्यनेन च लङ्घनं स्वेदनं काल इत्याद्युक्ता लङ्घनसमानफलाः स्वेदादयोऽपि गृह्यन्ते। रूक्षस्येति वचनेन कषायादि प्रयोगे सत्यपि यद्यपि

कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चवर्त्तकान् । गुरुष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः । लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत् । भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित् ॥१५६॥ पिप्पल्याद्यं घृतम् । पिप्पल्यश्चन्दनं मुस्त-मुशीरं कटुरोहिणी । कलिङ्गकास्तामलकी सारिवातिविषे स्थिरा । द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका । सिद्धमेतैर्घृतं सद्यो ज्वरं जीर्णमपोहति । क्षयं कासं शिरःशूलं

---

सामानुबन्धत्वात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति, तत्र सर्पिर्न दातव्यमिति दर्शयति । भिषग्जितं चिकित्सितम् । दशाहादूर्द्ध्वं हि घृतपानावस्था चरकेणोक्ता, इदानीं तदपवादमाह निर्द्दशाहमपीत्यादि । निर्गतो दशाहान्निर्द्दशाहः । अलङ्घितमिति असञ्जातलङ्घितफलम् ; इयञ्चावस्था प्रबलसामदोषारब्धत्वात् ज्वरस्य, तथा असम्यगुपचाराच्च भवतीति ज्ञेयम् । यावल्लघुत्वादिति च्छेदः । लघुत्वे तु जाते कफोत्तरता अलङ्घितता चापयाति तेन तदा सर्पिःपानमनुज्ञातं कर्त्तव्यमित्यर्थः यावदिति यावल्लघुत्वात् लघुत्वपर्य्यन्तं शमनैरुपाचरेत् लघुत्वे सति सर्पिःपानं अथवा यावत् तावत् नित्ययोगीत्वात् लघुत्वात् यावत् पर्य्यन्तं शमनैरुपाचरेत् तावत् मांसरसेन । अथान्ये तु निर्द्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि मांसरसेन देयमित्याहुः अशनं दद्यान्मांसरसेनेति । ननु किमर्थमेतादृशमशनं कफविरुद्धमपि कफप्रधानावस्थायां दीयते ? सत्यं मांसरसस्य बलजनकत्वात्, बलस्य च दोषनिग्रहसमर्थत्वात्, अतएवोक्तं तत्रैव "बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत्" इति । पिप्पल्यादीनित्यादि—शब्दात् कपिञ्जलादीनां ग्रहणम् । मात्राविकल्पज्ञ इति, विकल्पो विशिष्टकल्पना संस्कार इत्यर्थः । मात्रायां विकल्पश्चेत्यर्थः । तेन तावती मात्रा कर्त्तव्या, तादृशः संस्कारः कार्य्यः, यथा लघुत्वानुष्णत्वे भवत इत्यर्थः ॥ १५५।१५६ ॥

पार्श्वशूलं हलीमकम्। अङ्गाभितापमग्निञ्च विषमं सन्नि-यच्छति। पिप्पल्याद्यमिदं क्वापि तत्त्वे चौरेण पच्यते॥१५७॥

---

सर्पिःपानावस्थां प्रतिपाद्यसर्पींष्याह पिप्पल्य इत्यादि।—कलिङ्गक इन्द्रयवः, तामलकी भूम्यामलकी, सारिवा अनन्तमूलम्, विशं विल्वशलाटुः द्राक्षादिफलसाहचर्य्यात्। अत्र यद्यपि घृतस्य मानं नोक्तं, तथापि वृद्धवैद्यव्यवहारात् प्रस्थमात्रं गृह्यते, अतएवोक्तम् "अनिर्द्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते। अनुक्ते क्वाथ्यमाने तु पात्रमेकं प्रशस्यते"। अन्ये पक्तव्यघृतस्य मानानिर्द्देशे अव्यवस्थितमानमेवेच्छातः पक्तव्यमिति। यत्र तु प्रस्थादिमाननिर्द्देशं करोति, तत्र तावन्मानेनैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम्। तथा हि वातव्याध्यादौ भूरिस्नेहे साध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति। तथा पपौण्डरीकाद्यनस्ये योगितया स्नेहस्य कुडवमानमेवोक्तम्। कुष्ठोक्ततिक्तषट्पलादौ तु अल्पाल्पघृतसन्निधानेन तथैव पकस्य घृतस्य कार्य्यकर्तृत्वं भवतीति भेषजप्रभावदर्शी महर्षिर्वोधयति। तत्र यदि कुष्ठस्य दीर्घरोगतया भूयसा तिक्तषट्पलेन प्रयोजनं, तदा पुनः पुनः षट्पलमानं घृतं पक्तव्यं "यथा कुर्व्वन्ति स उपाय" इति वचनात्। एवं पानीयकल्याणागस्त्यहरीतक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम्। तस्माद् याहच्छिकमाचार्य्यस्य क्वचिन्मानाभिधान-मनभिधानञ्च क्वचिदिति। अत्र क्वचित् पुस्तके हलीमकमिति पाठः क्वचिद्रोचकमिति पाठद्वयमपि न प्रत्येयणीयम्। यतः सुश्रुते "जीर्णज्वर-शिरःशूलगुल्मोदरहलीमकान्" इति दृश्यते। वाभटे च "पिप्पलीन्द्रयवधावनितिक्तासारिवामलकतामलकीभिः। विल्वमुस्तहिमपानिनिसैव्यैः द्राक्षयातिविषयास्थिरया च। घृतमाशु निहन्ति साधितं ज्वरमग्निं विषमं हलीमकम्। अरुचिं भ्रशतापमंसयोर्वमथुं पार्श्वरुजं क्षयम्" इति दृश्यते। तस्मात् पाठद्वयमेव युक्तम्॥१५७॥

यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ। तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना। एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम्। ॥ १५८ ॥ जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्। तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्। अनुक्ते द्रवकार्य्ये तु सर्वत्र सलिलं मतम् ॥ १५९ ॥ घृततैलगुडादींश्च नैकाहादवतारयेत्। व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः। स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्। वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत्। शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा। गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्। घृतस्यैव विपक्कस्य जानीयात् कुशलो भिषक्। फेनातिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥ १६० ॥ क्षीरषट्पलकं घृतं पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा

---

अत्र केचित् "कल्कक्वाथविनिर्द्देशे गणात्तस्मात् समाचरेत्" इति सुश्रुतवचनात् पिप्पल्यादीनां कल्कत्वं कषायत्वञ्चेच्छन्ति। अन्ये तु कल्कत्वमेव ब्रुवते। अत्र एतत्संशयनिरासार्थं परिभाषामाह यत्रेत्यादि—अधिकरणेनेत्यधिकारितया, तेन यत्रैवाचार्य्येण गणत्वमधिकृतं, तत्रैव विदारिगन्धादिगणादौ कल्ककषायकल्पना। यत्र त्वधिकृतगणत्वं नास्ति, तत्र कल्ककल्पनैव। एतेन सुश्रुतोक्ता "कल्ककषायविनिर्द्देशे" इत्यादिका परिभाषा अधिकृतगणविषयैव, न तु भेषजमात्रविषया इति। ननु माभूदुभयकल्पना अनियमेन कदाचित् कल्ककल्पना कदाचित् क्वाथकल्पना कथं न स्यात्? इति चेन्नोक्तं, कषायकल्पनायां द्रव्यं न साक्षात् प्रधानभूतं स्नेहसाधने व्यवह्रियते। कल्कस्तु साक्षादेव स्नेहसम्बद्धः पच्यते इति कल्कस्य प्रधान्यात् तथा हि भेद्यस्य तादात्म्येत्याह एतद्वाक्यबलेनेत्यादि। १५८ ॥

समम्। सर्पिःप्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत्। अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्। द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्॥ १६१॥

दशमूलषट्पलकं घृतम्। दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः। सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः। वातपित्तकफव्याधीन् प्लीहानं चापि पाण्डुताम्॥१६२॥

---

जलस्नेहेत्यादौ जलशब्दो द्रवमात्रोपलक्षकः ॥५८।१६०॥

पञ्चकोलेत्यादौ पयसा सममित्यत्र समशब्दस्य तुल्यार्थतास्वीकारेण स्नेहसमं क्षीरम्; त्रिगुणञ्च जलमर्शोधिकारोक्तषट्पलघृतसंवादात्। तद्यथा "सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके। समक्षीरं घृतं प्रस्थं ज्वरार्शःप्लीहगुल्मनुत्" इति। "क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित्। चतुर्गुणं जलं तत्र वीर्य्याधानार्थमावपेत्" परिभाषेयमनार्ष्येति कृत्वा कैश्चिन्नाद्रियते। अन्ये तु क्षीरादिसाधनविषयेयमित्याहुः। चक्रस्तु सममित्यस्य सहार्थतामभिप्रेत्याह "अत्रे"त्यादि। एतच्चान्ये दूषयन्ति यतः सुश्रुतोक्तोदरचिकित्सिते "षट्पलकेऽस्मिन् घृतप्रस्थं तुल्यक्षीरम्" इति पठ्यते। चरकेऽप्युक्तं गुल्मे "घृतप्रस्थं विपाचयेत् क्षीरप्रस्थेन" इति। व्यवहारस्तु क्वचित् त्रिगुणोदकेन, क्वचिच्चतुर्गुणोदकेनेति॥ १६१॥

दशमूलीत्यादौ रसः क्वाथः। सोऽत्रोच्यते क्वाथश्चतुर्गुणः, क्षीरन्तु स्नेहसमम्। दधिक्वाथ्याश्चतुर्गुणं वारीत्यादि परिभाषार्थमनादृत्य वृद्धा क्षीरावशेषमेव पाकं व्याचष्टे। चक्रस्त्वाह यत्र क्वाथः क्षीरेण सह स्नेहाच्चतुर्गुणो द्रवः कार्य्यः, अतः स्नेहपादे चतुर्गुण एव द्रवत्वमभिज्ञः। "स्नेहात् तोयं चतुर्गुणम्" इत्यत्र तोयस्य द्रवोपलक्षणत्वात्। अतः क्वाथोऽत्र त्रिगुणः क्षीरञ्च स्नेहसममिति। पञ्चकोल

क्वाथ्याच्चतुर्गुणं वारिपादस्थं स्याच्चतुर्गुणं । स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः । चतुर्गुणं त्वष्टगुणं द्रवद्वैगुण्यतो भवेत् ॥ १६३ ॥ पञ्चप्रभृति यत्र

---

यत्र चाराः प्रत्यकं पलिकाः पूर्वोक्तषट्पलकवाद्वचार्थ्यात् षट्पलत्वानुपपत्तेरिति ॥ १६२ ॥

इदानीं क्वाथार्थं परिभाषामाह क्वाथ्यादित्यादि । स्नेहसमं क्षीरमिति यत्र द्रवान्तरमस्ति तत्रेदं केवलक्षीरे तु तोयमेव चतुर्गुणद्रवेणौत्सर्गिकत्वात् इति गयादासचक्रौ । अन्ये तु यत्रैव केवलं क्षीरं, तत्रैव स्नेहसमं क्षीरं, जलन्तु चतुर्गुणं, क्षीरदध्यारणालेक्षु-त्यादिवचनादित्याहुः । द्रवद्वैगुण्यतो भवेदिति यद्यपि "शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम् । द्विगुणन्तु द्रवेष्विष्टं सद्य एवोद्धृतेषु च" इति वचनात् द्रवमात्र एव द्वैगुण्यमायाति, तथापि सुनिषण्णकचाङ्गेरीघृते षोडशपलरूपस्य द्रवप्रस्थस्य द्वैगुण्येन द्वात्रिंशत्पलरूपत्वे द्रवत्वेन सिद्धे यदयमाचार्य्यः "त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः इति करोति, तेन द्वैगुण्याभिधायकपरिभाषा व्यभिचारः क्वचिदस्तीति ज्ञापयति । अतएव रक्तिकादौ त्रिपलपर्य्यन्ते कुडवपूर्वमाने द्रवार्द्रयो द्वैगुण्यं न कार्य्यम् । यदाह गोपुररक्षितः "रक्तिकादिषु मानेषु यावन्न कुडवोभवेत् । शुष्कद्रवार्द्रयोश्चापि तुल्यं मानं प्रकीर्त्तितम् इति, तथा यत्कर्णं ऽप्युक्तम् चार्द्रानाञ्च द्रवानाञ्च द्विगुणाः कुडवादयः । एवञ्च कुडवादिमानयोच्यस्यापि यत्र पलोल्लेखेन मानं तत्रापि न द्वैगुण्यं विधेयं, तेन "रास्नासहस्रनिर्य्यूहे तैलद्रोणं विपाचयेत् इत्यादिषु पलोल्लेखेन जलं गन्धमानं न द्विगुणं भवति । क्वचित्तु पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यैकवाक्यतया पलोल्लेखागतद्रवेऽपि कुडवादिविवक्षां कृत्वा द्वैगुण्यं विधेयम् । यथा ज्वरक्षीणचिकित्सिते "मधुकाम्रफल द्राक्षाप्रस्थक्वाथ" इत्यादिना चरके यः प्रयोग उक्तः, स जतूकर्णे "द्राक्षाया मधूकाद्धप्रस्थक्वाथः" इत्यादिना

स्युर्द्राविंशे स्नेहसम्विधौ। तत्स्नेहसमान्याहुरर्वाक् च
स्याच्चतुर्गुणम्। वासाद्यघृतम्। वासां गुडूचीं त्रिफलां
त्रायमाणां यवासकम्। पक्त्वा तेन कषायेण पयसा
द्विगुणेन च। पिप्पलीमूलमृद्वीका चन्दनोत्पलनागरैः।
कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम्॥ १६४॥

---

ऽन्येन पठितः। तेन जतूकर्णे मधूकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्वै-
गुण्यमेव जलस्य भवति। तत्प्रत्ययाच्चेहापि मधूकाष्टपलोल्लेखवि-
हितेऽपि क्वाथे कुड़वद्वयविवक्षया कृतद्वैगुण्यमेव जलं देयम्।
एवमन्यदनुसरणीयम्। अत्र केचित् कुड़वस्यापि द्वैगुण्यं नेच्छन्ति,
यदि हि द्विगुणः कुड़वः स्यात्, तदा क्वाथाच्चतुर्गुणमित्यादि
कल्कस्य स्नेहपादिक इति परिभाषा सर्वतन्त्रसिद्धा वाधिता स्यादिति,
यतः सुश्रुते "स्नेहकुड़वे साध्ये भेषजपलं कल्कमिष्ट" इत्युक्तम्,
तथा च कृष्णात्रेयेणाप्युक्तं "स्नेहपाकविधौ यत्र प्रमाणं नोदितं
क्वचित्। स्नेहस्य कुड़वं तत्र पचेत् कल्कपलेन तु" इति। अत्र
हि यदि कुड़वश्चतुःपलरूपः स्यात्; तदैव कल्कपलस्य स्नेहपादिकत्वं
घटते। अष्टपलरूपत्वे कल्कपलस्य स्नेहापेक्षया अष्टभागत्वमेव
स्यादिति। एतच्च नातिसाधु, यतः सुश्रुत एव "स्नेहकुड़वे साध्ये
क्वाथद्रव्यप्रस्थो विधेय," इत्युक्तम्। तत्र कुड़वेनैव यदि स्नेहपलच-
तुष्टयं गृह्यते, तदा चतुःपलस्नेहे षोड़शपल क्वाथपरिमाणं स्यात्।
न च तथा व्यवहरति, क्वाथषोड़शपलं हि अष्टपल एव स्नेहे गृह्यते,
तस्मादसाधकमेतत् कुड़वाद्द्वैगुण्यस्येति द्वैगुण्यं कुड़वे युक्तम्।
अगस्त्यहरीतक्यां मधुनः कुड़वं यच्चरकेणोक्तं तन्त्रान्तरे "मधुनश्च
पलाष्टकम्" इति पठ्यते, तथा तन्त्रान्तरे "त्रायमाणा चतुःपलं पक्त्वा
दशकेऽम्भसि शोषिते। कुड़वं कुड़वान् सर्पिःक्षीरधात्रीरसान्पचेत्"
इत्युक्तम्। तत्र यदि चतुःपलं कुड़वः स्यात्। तदा चरकोक्तत्रायमाणा

एतेन सह विरोधः स्यात्। तथाहि 'अत्ते दशगुणे साध्यं क्वाथमाम्ल चतुःपलम्' इत्यादि यावत् "रससामलकानान्तु क्षीरस्य घृतस्य च। पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत्। तथान्यत्राप्युक्तम्। 'आर्द्र-द्रव्यद्रवद्रव्यपलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्कोण कुड़वः समुदाहृतः"। इति। अस्मात् कुडवे द्वैगुण्यं साधु, यत्तु अष्टपलेऽपि स्नेहे कल्कस्य पलमानत्वं तत्स्वरससाध्यस्नेहाभिप्रायेण वा ज्ञेयम्। यदुक्तं "स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात्। कल्कस्य योज-येदंशं चतुर्थं षष्ठमष्टमम् तथा "शनस्य कोविदारस्य कर्बुदारस्य शाल्मलेः। कल्काद्यत्वात् पुष्पकल्कं प्रशंसन्ति चतुःपलम्' इति। अत्र स्नेहप्रस्थापेक्षया चतुःपलं कल्कं स्नेहाष्टमभाग एव भवती-त्यादि विशेषवचनेन कल्कस्य स्नेहपादिक इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति। अलम-तिप्रसङ्गेन सर्वथाष्टद्रव्यव्यवहारानुमतमेवमस्माभिरनुसरणीयमस्माभिरिति संक्षेपः। विस्तरः पुनरस्मदीयचरकतत्त्वप्रदीपिकायामेव गवेषणीय इति॥ ६२॥

पञ्चप्रसृतीत्यादिपरिभाषार्थं पुनर्वासाद्यघृतव्याख्यावसर एवं व्यक्ती-करिष्यामः। वासामित्यादि। यवासकं दुरालभा। अत्र चकाराद्-वासारिक्वाथोऽपि घृताद्द्विगुण इत्याहुः। युक्तञ्चैतत्, यतः स्नेह-पाके चतुर्गुणमेव द्रवमुक्तमिष्टम्" स्नेहात्तोयं चतुर्गुणं' इति वचनात्। तोय शब्दोऽपि तत्र द्रवमात्रोपलक्षक इति। अत्र द्वाभ्या-मपि चातुर्गुण्यमित्यादि परिभाषयैव क्षीरकषाययोः प्रत्येकं द्वैगुण्ये सिद्धे चकारोऽयं क्वाथचातुर्गुण्यार्थ इति केचित्। अन्ये तु परि-भाषावशात् यद्यपि क्षीरं कषायश्च द्विगुण एव लभ्यते, तथापि स्पष्टार्थं क्षीरद्वैगुण्याभिधानमित्याहुः। तत्र, क्षीरस्य हि मानानुक्तौ क्वाथाच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः" इति वचनात् क्षीरस्य द्रवान्तरसान्निध्येऽपि स्नेहसमत्वमेव स्यात्। ततः कषायभागत्रयं क्षीरभागश्चैक इति कृत्वा द्वाभ्यामपि चातुर्गुण्यमिति परिभाषार्थोऽप्यनुष्ठितो भवति।

गुडूच्यादि घृतानि। गुडूच्याः क्काथकल्काभ्यां त्रिफलाया वृषस्य च। मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः॥ १६५॥

---

तस्मात् कर्त्तव्यं क्षीरद्वैगुण्याभिधानम्। अन्ये तु द्वाभ्यामपि चातुर्गुण्यमिति परिभाषायां प्रत्येकमेव द्रवेण चातुर्गुण्यमिच्छन्ति। तत्र स्नेह कषायस्य चातुर्गुण्यं क्षीरस्य द्वैगुण्यमेव "पयसा द्विगुणेन च" इति वचनात्। तत्र एकेनापि चातुर्गुण्यं, द्वाभ्यामपि चातुर्गुण्यम्, त्रिभिरपि चातुर्गुण्यं चतुर्भिः समभिति वचनेन चतुर्भिः स्नेहसमता भिधानेन स्नेहाच्चातुर्गुण्यमेव द्रवस्योक्तम्। अतो द्वाभ्यां त्रिभिरपि तथा चातुर्गुण्यं कार्य्यम्। यथा स्नेहचातुर्गुण्यं स्यात् तथा च मिलित्वैव चातुर्गुण्यं सिध्यति न प्रत्येकमित्यर्थः। किञ्च यदि प्रत्येकं चातुर्गुण्यं विवक्षितं स्यात्तदा द्वयोस्त्रयाणां चातुर्गुण्यमिति कुर्य्यात्। तृतीया निर्द्देशेन हि साहित्यं सूचयता मिलितयोरेव चातुर्गुण्यं प्रतीयत इति। अतएवैतत्परिभाषास्वरसात् "पञ्च प्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्वाक् स्याच्च चतुर्गुणम्। इति-मिलित्वैव चातुर्गुण्यम् अन्यथा एतद्वचनयोर्विरोधोदुष्परिहरः स्यात्। अन्ये तु "अर्व्वाक् स्याच्च चतुर्गुणम्" इति प्रत्येकमेव चातुर्गुण्यम्। अन्यथा यत्र यत्र स्नेहपाके चत्वारि द्रवाणि सन्ति तत्र यदि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्यं स्यात् तदा स्नेहसामान्याहुरेतावतापि द्रवचतुष्टस्य मिलित्वा चातुर्गुण्ये सिद्धे, अर्वाक् स्याच्चतुर्गुणमिति वचनं तावदेकद्वित्रिद्रवविषये चरितार्थमेव यत्र वा द्रवचतुष्टयविषये अचरितार्थमित्युच्यते तावतापि न वस्तुक्षतिः। यस्मादेकेनापि चातुर्गुण्यमित्यादि चतुर्भिः समभित्यनया परिभाषया द्रवचतुष्टयविषये तावन्मिलित्वा चातुर्गुण्यं सिद्धमेव। तदिदानीं प्रत्येकं स्नेहसमत्वेन साध्यताम्, अर्व्वाक् चातु चतुर्गुणमिति वचनेन साध्यतामिति। अन्ये पुनरत्र-

ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम्। षडहे षडहे देयं कालं वीक्ष्यामयस्य च ॥ १६६ ॥ जीर्णज्वरे

---

ष्वेवानुपपत्त्या चतुः प्रभृतीनि पठन्ति। श्रीकण्ठोऽपि गुडूच्यधिकारे परिभाषायामस्यां चतुःप्रभृतीति पाठमेव स्वीकृतवान् ॥ १६४ ॥

गुडूच्या इत्यादि। वाभटस्य। गुडूच्यादीनां पञ्चानां पृथक् पृथक् क्वाथकल्काभ्यां सिद्धानि पञ्चघृतानि ॥ १६५ ॥

अत्र पेयादिकं यदिष्टोक्तं तद्व्याध्यवस्थाकालविशेषापेक्षमिति प्रतिपादयन् क्षीरादिकमभिधातुं पीठिकां रचयति ज्वरे पेया इत्यादि। अत्र पेया कषाय-सर्पिः-क्षीर-विरेचनानामुत्सर्गविधया ज्वराहादारभ्य षडहे यथाक्रमं देयत्वमुच्यते। तेन वमितं लङ्घितं काले यवागूभिरुपाचरेदित्यादिविशेषवचनात् लङ्घितादेः षडहातिक्रमेऽपि यत् पेयादिदानमुक्तं तत्र विरोधमावहति, सामान्यविधेर्विशेषविधिना बाधनस्य सर्वत्रैवानुमतत्वात्। ननु पेयादिप्रयोगे "यावज्ज्वरमृदुभावात् षडहं वा विचक्षणः" इत्यादिना षडहं यावत् यवागूर्देयेति चरकेणोक्तं, तथा अत्रापि षडहे पेयादानमुक्तम्, तदयं षडहः किं ज्वरोत्पाददिनं गृहीत्वा भवतु लङ्घनविषयदिनं हित्वा वा? नाद्यः, अनशनरूपलङ्घनवैयर्थ्यात्। लङ्घनं ह्याद्य एवोपक्रमः: यदुक्तं "ज्वरे लङ्घनमेवादौ" इति। नापि द्वितीयः, ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितं ज्वरदिनादारभ्याष्टमे पाचनं शमनीयं वा पाययेदित्युक्तत्वात् ज्वरदिनस्य क्रोडीकृत्यैवाष्टाहः, यदुक्तं "अष्टाहोनिरामज्वरलक्षणम्" इति। अत्राहुः ज्वरोत्पाददिनं गृहीत्वैवाष्टाहः प्रत्येतव्यः। "यावज्ज्वरमृदुभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाददिनमारभ्यैव षडहःपर्यन्तं पेयाप्रयोग उच्यते। पेया हि ज्वरे प्राधान्येन दोषपाचनार्थं क्रियते। यदुक्तं लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तकोरसः। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे" इति। न तु यस्मिन् षडहे पेया, तस्मिन्नेव षडहे लङ्घनादिक-

प्नोति। लङ्घनादिभिर्निरवकाशतया पेया षड्ङ्ग निर्विषयत्वमिति वाच्यम्, तस्य वातज्वरविषयत्वात्। वातज्वरोऽलङ्घनीयः। यदुक्तं "ऋते ज्वरात् चयानिलभयक्रोधकामशोकश्रमोद्भवात्" इति तेनालङ्घनीये वातज्वरे पेया सततमेव षड्ङ्गं व्याप्नोति। एक-द्वित्रिदिनं लङ्घिते पेया न दोषपाचनार्थं क्रियते। क्रियतेऽपि ज्वरे पञ्चचतुस्त्रिदिनं यावत् पेयादिक्रमेणेति नातो निर्विषयत्वम्? पेया-षड्ङ्गस्य यत्र तु दोषाणामतिमात्रतया सन्निपातज्वरे या लङ्घनमेव षड्हात्यतिक्रमेणापि क्रियते। तत्र प्रादेशिक विधौ पेयायाः षड्ा-त्नियम औत्सर्गिकः प्रवर्त्तते। ननु पेया दोषपाचनार्थं क्रियते, तर्हि अतिलङ्घिते पेया कथं क्रियते? लङ्घनेनैव दोषपाकसिद्धत्वात्। नैवम्, अतिलङ्घिते पेया न दोषपाचनार्थं क्रियते किन्तर्हि लङ्घनजनित-क्षीणाग्निसन्धुक्षणाय। तत्राग्निसन्धुक्षणे जाते पुनरौषधपानमेव भवति। ज्वरे पेया कषायाश्चेत्यादावपि समानकार्याणां लङ्घनादीना-मुपलक्षणभूता पेया। यतः पेया यत्र प्रतिषिद्धा मद्योत्थे ज्वरादौ तर्पणक्रमेणापि षड्होग्राह्यः। तत्र प्रथमषड्हे उत्सर्गितलङ्घनादि-पाचनं कार्यमिति पेया षडहे देयेति वचनेनोच्यते, कषायषडहेऽपि ज्वरोत्पादात् सप्तमदिनं परित्यज्याष्टमाहमारभ्यैव ज्ञेया। सप्तमे ज्वरस्य तरुणत्वेन कषायदाननिषेधात्, यत्तु हारीते लङ्घनोष्णो-दकमुस्तादिषडङ्गशृतजलपानीयपान-पेयाविधानान्तरमुक्तम् 'एतां क्रियां प्रयुञ्जीत षड्ात्रं सप्तमेऽहनि। पिबेत् कषायसंयोगान् ज्वर-घ्नान् साधुसाधितान्' इति, तथा खरनादेनापि 'लङ्घितालङ्घितं तस्मात् वमितं वा ज्वरार्दितम्। तस्मात्सप्ताहादतस्त्वाभिरादौ ज्वर-मुपाचरेत्' इति यवागूभिर्यथादोषमित्यादि तर्पणादिक्रममभिधायो-क्तम् 'इति षड्ात्रिकः प्रोक्तो नवज्वरहितो विधिः। ततः परं पाचनीयं शमनं वा ज्वरे हितम्' इति, तदपि प्रागुक्तरीत्या अष्टाह एव कषायपानविधायकमिति प्रागेव प्रतिपादितम्। वस्तुतस्तु सप्तमाष्टमाहकषायपानाविधायकानां वचनानामदूरान्तरत्वात् एव न परस्परविरोध इत्युक्तम्। एतन्मतेऽप्यनुक्तमपि मानतायां सप्तर्जादिन यत्र

कफेक्षीणे क्षीरं स्यादमृतोपमम्। तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥१६७॥ कासाच्छ्वासात् शिरःशूलात् पार्श्वशूलात् सपीनसात्। मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥१६८॥ द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥१६९॥ त्रिकण्टकबलाविल्वगुडनागरसाधितम्। वर्च्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः। वृश्चीरविल्ववर्षाभूपयसा॰दकमेव च। पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम् ॥१७०॥ शीतं वोष्णं ज्वरे क्षीरं यथास्वैरौषधैर्युतम्। एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके ॥१७१॥ ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध-

---

कषायपानम्। उक्तनवामतायान्तु अष्टमेऽहनि इति व्यवस्था। तेनैतस्मिन् व्याख्याने हारीतवचनादवचनं यथाश्रुतमेव सङ्गच्छते। तथा ज्वरे पेयाः कषायास्त्वित्यादिनापि पेयाषड्हानन्तरमेव सप्तमे दिने यत् कषायपानमुक्तं, तदप्यनुक्तनवामताभिप्रायेणेति न विरोधमावहति। कालं वीक्ष्यामयस्येति ज्वरलक्षणस्यामयस्यावस्थारूपं कालं वीक्ष्य षडहे यथाक्रमं पयादि देयमित्यर्थः ॥ १६६ ॥

क्षीरपानावस्थामाह जीर्णज्वरे इत्यादि। कफे क्षीण इति, कफक्षयात् वातपित्तोत्तरतायां क्षीरममृतायत इत्यर्थः। यदुक्तं 'दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम्। बद्धप्रच्युतदोषं वा निरामं पयसा जयेत्' इति ॥ १६७ ॥

कासादित्यादौ पञ्चमूली स्वल्पा वातपित्तघ्नत्वात्। क्षीर॰साधनपरिभाषामाह द्रव्यादित्यादि। त्रिकण्टकेत्यादौ गुडः प्रक्षेप्यः, गुडपाकस्य निष्प्रयोजनत्वादित्याहुः। वृश्चीरेत्यादौ वृश्चीरः श्वेतपुनर्नवा, वर्षाभूः रक्तपुनर्नवेति। अत्रोदकक्षीरौषधनां पूर्ववदेव मानम् ॥ १६८-१७० ॥

श्वाधश्च बुद्धिमान् । दद्यात् संशोधनं काले कल्पे यदुपदे-
क्ष्यते ॥१७२॥ मदनं १ पिप्पलीभिर्वा २ कलिङ्गै ३ र्मधुकेन
वा । युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये । आरग्वधं ४
वा पयसा ५ मृद्वीकानां रसेन वा । त्रिवृतां ६ त्रायमाणां ७
वा पयसा ज्वरितः पिबेत् ॥१७३॥ ज्वरक्षीणस्य न हितं वमनं
न विरेचनं । कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् । पक्वाशयगते
दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ १७४ ॥ गौरवे शिरसः शूले
विबद्धेष्विन्द्रियेषु च । जीर्णज्वरे रुचिकरं दद्याच्छीर्ष-
विरेचनम् ॥ ४७ ॥ अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सानु-
वासनान् । विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे
भिषक् । तैराशुप्रशमंयाति बहिर्मार्गगतोज्वरः । लभन्ते
सुखमङ्गानि बलं वर्णश्च वर्द्धते॥१७६॥ षट्कट्वरं तैलं । सुवर्चि-

---

शीतं वेत्यादौ विकल्प इच्छाविशेषकृतः किंवा वाते उष्णं पित्ते शीतमिति । एरण्डेत्यादि । अत्र बिल्वफलसिद्धं दुग्धमपि बोध्यं चरकोक्तत्वात् । गुदे कर्त्तनवत्पीडा परिकर्त्तिका ॥ १७१ ॥

संशोधनावस्थामाह ज्वरिभ्य इत्यादि । बहुदोषेभ्य इति अल्पदोषेषु संशोधननिषेधार्थमुक्तम् । काल इति यथोक्तवमनविरेचन योग्यज्वरावस्थायाम् । कल्प इति कल्पस्थाने ग्रन्थे यदुपदेक्ष्यते तद्देयम् । वमन-योगत्रयमाह मदनमित्यादि । मदनं पिप्पलीयुक्तं कफे । कलिङ्गम् इन्द्रयवः तद्युक्तं पित्तकफे, यष्टिमधुयुक्तन्तु दाहप्राय इत्याहुः । चतुरो विरेचनयोगानाह आरग्वधमित्यादि । अत्र चरके वाभटे च त्रिवृतास्थाने त्रिफलापाठो दृश्यते, टीकाकारैश्च त्रिफलैव व्याख्यायते । ज्वरक्षीणस्येत्यादि स्पष्टम् । सिद्धिषु सिद्धिस्थानोक्ताध्यायेषु ॥ १७२-१७४ ॥

कानागरकुष्ठमूर्व्वालाचाग्निशालोहितयष्टिकाभिः। तैलं ज्वरे षड्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुत् स्यात्। दधनः ससारकस्यात्र तक्रं * कट्वरमिष्यते। घृतवत्तैलपाकोऽपि तैले फेनोऽधिकः परः॥ १७७॥

अङ्गारकतैलम्। मूर्व्वालाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी। बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी। आरणालाढ़केनैव तैलप्रस्थं विपाचयेत्। तैलमङ्गारकं नाम सर्व्वज्वरविमोक्षणम्॥ १७८॥

लाक्षादितैलं। लाक्षाहरिद्रामञ्जिष्ठा कल्कैस्तैलं विपाचयेत्। षड्गुणेनारणालेन दाहशीतज्वरापहम्॥ १७९॥

---

नस्यावस्थामाह शौरव इत्यादि। विबद्धेष्विति स्वविषयप्रवृद्धेष्वर्थः। जीर्णज्वरेऽभ्यङ्गादीनाह अभ्यङ्गानित्यादि। विभज्येति शीतोष्णसहितज्वर विभागेनेत्यर्थः। तेन उष्णार्त्ते जीर्णज्वरे शीतद्रव्यकृताः प्रदेहादयः, शीतार्त्ते तु उष्णद्रव्यकृता देया इत्यर्थः। बहिर्मार्गं त्वगादिः। उक्तं हि "शाखा रक्तादयो धातवस्त्वक् च बाह्योरोगमार्गः" इति॥ १७५॥ १७६॥

सुवर्च्चिकेत्यादि। सुवर्च्चिका स्वर्जिकाक्षारः, लोहितयष्टिका मञ्जिष्ठा, शुश्रुतवृद्धवाग्भटादिष्वुक्तत्वसंवादात्। अन्ये तु लोहितं चन्दनम्, यष्टिका मञ्जिष्ठाविदेहव्यवहारादिदित्याहुः व्यवहारस्तु पूर्व्वव्याख्ययैव। शीतविदाह इन्नृ तस्य योगस्य अचिन्त्यशक्तित्वात् तैलपाके विशेषं स्मारयति घृतवदित्यादि॥ १७७॥

मूर्व्वेत्यादि। इन्द्रवारुणी गोरक्षकर्कटी, अङ्गारको मङ्गलः, तत्कृतत्वादङ्गारकसंज्ञा॥ १७८॥

लाक्षादितैलं स्पष्टम्। अत्रापि दाहशीतहरत्वं प्रभावात्॥ १७९॥

---

* कट्वरमिहेष्यते वा पाठान्तरम्।

यवचूर्णाद्धकुड़वं मञ्जिष्ठार्द्धपलेन तु। तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत्। ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत्। सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्द्दितम्। ज्वरदाहापहं लेपात् सद्योवातास्रदाहनुत्॥ १८०॥ चन्दनाद्यमगुर्व्वाद्यं तैलं चरककीर्त्तितम्। तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ १८१॥ अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः। क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया। औषधीगन्धविषजो विषपीतप्रबाधनम्। जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा। अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत्। दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ। क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च। आश्वासेनेष्टलाभेन वायोः प्रशमनेन च। हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः। कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः। याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः। भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः। जयेत् भूताभिषङ्गोत्थं मनःशान्त्यैश्च मानसम्॥ १८२॥ व्यायामञ्च व्यवायञ्च

---

द्विपलेनेति न पाठः सुश्रुतचन्द्रटादौ अर्द्धपलेनेति पाठात्। प्रदेहमाह सर्ज्जेत्यादि। सर्ज्जो धूनकः कलकः, काञ्जिकं चतुर्गुणम्, सिद्धं पक्वम्। ततः शीताम्बुमर्द्दितम् शीतलजलेन तैलं संमर्द्द्य गाढ़ाभ्यङ्गः कार्य्यः। नारायणतैलं वातव्याधौ वक्ष्यमाणम्॥ १८०॥ ॥ १८१॥

अभिघातेत्यादि न स्यात् न भवेत् शाम्यतीत्यर्थः। क्षतानामित्यु-

पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः । जयन्त्याममतीसारं सज्वरं समहौषधाः ॥ नागरातिविषामुस्तभूनिम्बामृतकल्कैः । सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥२॥

ह्रीवेरादिः । ह्रीवेरातिविषामुस्तबिल्वधान्यकनागरैः । पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् । सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥ ३ ॥

गुडूच्यादिः । गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दवालकैः । पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः । कषायः शीतलः पेयो ज्वरातीसारशान्तये । हृल्लासारोचकच्छर्दिपिपासादाहनाशनः ॥ ४ ॥

उशीरादिः । उशीरं वालकं मुस्तं धन्याकं विश्वभेषजम् । समङ्गाधातकी लोध्रं बिल्वं दीपनपाचनम् । हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् । सशोणितमतिसारं सज्वरं वाथ विज्वरम् । ५ ।

---

योज्यः । तेनाऽत्राम्लामपीत्यर्थः फलति । साम्लामिति ईषदम्लाम् । अम्लत्वञ्च दाडिमरसादिना । एतच्चाम्लसात्म्यं प्रति ज्ञेयम् पृश्निपर्ण्यादि सुश्रुते तस्मिन् योगे वालकमपि दृश्यते, यथा "पृश्निपर्णीबला-बिल्व-धान्यकोत्पल-वालकैः । सनागरैः पिबेत् पेयां साधितामुदरामयी" ॥ १ ॥

पाठेत्यादि प्रयोगः क्वाथेन । नागरेत्यादौ कल्क इन्द्रयवः सिद्धसारे "किराभूनिम्बशुण्ठ्यब्दकलिङ्गातिविषाकृतः" इत्युक्तत्वात् ॥ २ ॥

ह्रीवेरादिर्नाम्ना प्रणीत इति वृद्धाः । योगोऽयमवचारणयापि । बिल्वं बिल्वशलाटुकम् सम्भवत्वात्, एवं वक्ष्यमाणेषु ॥ ३ ॥

गुडूच्यादौ [illegible]फलं, मधुरात् पाचनत्वाच्च । अयं योगः पित्तश्लेष्मणो[illegible]ज्वरे ॥ ४ ॥

पञ्चमूल्यादिः। पञ्चमूलीवलाबिल्वगुडूचीमुस्तनागरैः। पाठाभूनिम्बह्रीवेरकुटजत्वक्फलैः शृतम्। हन्ति सर्वानतीसारान् ज्वरदोषं वमिन्तथा। सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम्॥ ६॥

कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम्। ज्वरातीसारसन्तापं नाशयेद्विकल्पतः। वत्सकस्य फलं दारु रोहिणी गजपिप्पली। श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका। द्वावप्येतौ सिद्धयोगौ श्लोकार्द्धेनाभिभाषितौ। ज्वरातीसारशमनौ विशेषाद्दाहनाशनौ। नागरामृतभूनिम्बबिल्ववालकवत्सकैः। समस्तातिविषोशीरैर्ज्वरातिसारहृज्जलम्। मुस्तकबिल्वातिविषापाठाभूनिम्बवत्सकैः क्वाथः। मकरन्दगर्भयुक्तो ज्वरातिसारौ जयेद्घोरौ। घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीविश्वैः। सेन्द्रयवैः कृतमम्भः सातीसारं ज्वरं जयति॥ ७॥

कलिङ्गाद्यागुडिका। कलिङ्गबिल्वजम्ब्वाम्रकपित्थं सरसाञ्जनम्। लाक्षाहरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम्।

---

उशीरेत्यादि। यद्यपि समङ्गाशब्देन मञ्जिष्ठाप्युच्यते तथापि वराहक्रान्तयैव व्यवहरन्ति वृद्धाः॥ ५॥

पञ्चमूल्यादौ यद्यपि "पञ्चमूलीति सामान्यात् योज्या पित्ते कनीयसी। महती पञ्चमूलीति वातश्लेष्माधिके तथा" इति वृन्देनोक्तम्, तथापि स्वल्पपञ्चमूल्यैव व्यवहरन्ति वृद्धाः॥ ६॥

कलिङ्गेत्यादि यथाभिधानं योगद्वयं चिरलेखरे दृष्टाः। नागरामृतभूनिम्बेत्यादि जयतीत्यन्तं स्पष्टम्॥ ७॥

रोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम् । पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् । छायाशुष्कान् पिबेत्क्षौद्रं ज्वरातिसारशान्तये । रक्तप्रसादनाश्चैते शूलातीसारनाशनाः ॥ ८ ॥

उत्पलं दाड़िमत्वक् च पद्मकेशरमेव च । पिबेत्तण्डुलतोयेन ज्वरातीसारनाशनम् ॥ ९ ॥ व्योषाद्यं चूर्णम्—व्योषं वत्सकबीजञ्च निम्बभूनिम्बमार्कवम् । चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम् । श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचम् । सर्वमेकत्र संयुज्य प्रपिबेत्तण्डुलाम्बुना । सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहि भेषजम् । तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् । कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च । प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत् ॥ १० ॥

दशमूलीकषायेण विश्वमक्षसमं पिबेत् । ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे * ॥ ११ ॥ किराताब्दामृताविश्व-

कलिङ्गेत्यादौ हारीतचन्द्राटसंवादात् कलिङ्गस्थाने कटुकं पठान्ति कटुकञ्च श्योनाकः । जम्बाम्रफलयोरस्थि ग्राह्यम् । हरिद्रे इति हरिद्राद्वयम् । तण्डुलोदकञ्च "अन्नमष्टगुणं दत्वा पलं कण्डितनण्डुलात् । भावयित्वा ततो ग्राह्यं तण्डुलोदककर्मणि" इत्यनेन ग्राह्यम् । शुकनासिका वर्मकारवटकः ॥ ८ ॥

उत्पलेत्यादौ । दाड़िमफलस्य त्वक्, "फलं स्याद्दाड़िमादीनाम्" इति वचनात् । एवमन्यत्रापि बोध्यम् । अन्ये दाड़िमत्वचमाहुः । पद्मस्य केशरः किञ्जल्कम । रक्ते पित्तोत्तरे शोणोऽयमित्याहुः ॥ ९ ॥

व्योषादौ तत्तुल्यां वत्सकत्वचमिति मिलितव्योषादिचूर्णतुल्याम् ॥ १० ॥

* पित्तश्लेष्मातिसारघ्नं हन्ति पाठा कलिङ्गकं । सरिवेन समायुक्तं शोथातिसारनाशनं । इत्यतिरिक्तः पाठः ।

चन्दनोदीच्यवत्सकैः। ग्रंथातिसारशमनं विशेषाज्ज्वरनाशनम् ॥ १२ ॥

इति ज्वरातीसारचिकित्सा।

---

दशमूलीत्यादि। अत्र प्रक्षेप्यस्य शुण्ठीचूर्णस्य यत् कर्षमानत्वमुक्तं, तत् क्वाथ्यस्य दशमूलस्य पलद्वयात्मकमानापेक्षया, तेन मध्यमाद्यमानानुसारेण शुण्ठी चूर्णस्य ह्रासोऽपि बोध्यः। तेनात्र प्रक्षेपः पादिकः क्वाथ्यादित्येव परिभाषा प्रवर्त्तते। न तु पातव्यश्च चतुर्द्रव इति वचनात् विश्वचूर्णापेक्षया दशमूली क्वाथश्चतुर्गुणः कार्य्यः। यतः विश्वचूर्णापेक्षया दशमूलस्य पाचनदीपनत्वेन यौगिकत्वात् प्राधान्यम्। अपि च क्वाथकरणं हि क्वाथ्यमानापेक्षम्। क्वाथ्यमानञ्च उत्तमपुरुषापेक्षम्। अतस्तत्र पलत्रिकर्षार्द्धपलमानस्तत्सर्गतो व्यवस्थितमस्त्येव, तदपेक्षस्य च क्वाथ्यस्य उत्तमपुरुषाद्यपेक्षया व्याधिनिवृत्त्यै प्रयुज्यमानस्य न्यूनत्वकरणे भेषजस्याल्पमात्रत्वदोषात् व्याधिनिवृत्तिरेव न स्यादिति विपक्षे दोषदर्शनात् यथावस्थितचतुर्भागावशिष्टक्वाथप्रयोगाच्च क्वाथस्यैव प्रधानता। ततश्च यदि पातव्यश्च चतुर्द्रव इत्यनुसारात् विश्वचूर्णापेक्षया दशमूलीक्वाथश्चतुर्गुणो गृह्यते तदा प्रधानस्य क्वाथस्य न्यूनता स्यात्, चतुर्भागावशिष्टक्वाथानुसारेण वा यदि चतुर्भागं चूर्णं गृह्यते, तदा चूर्णबाहुल्यं स्यादिति। तेन यत्र क्वाथेन चूर्णपानं तत्र प्रक्षेपः पादिकः क्वाथ्यादित्यस्यैव विषयः, न तु पातव्यश्च चतुर्द्रव इत्यस्येति सिद्धः। एवमन्यत्रापि क्वाथेन चूर्णस्य कल्कस्य वा पाने क्वाथस्य प्राधान्यमनुमन्तव्यम्। अतएव वृषकादिचूर्णे हन्ट्रोऽप्याह "क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता। प्रवर्त्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः" इति। चूर्णापेक्षी चूर्णमानापेक्षीत्यर्थः ॥ ११ ॥

किरातेत्यादि स्पष्टम् ॥ १२ ॥

# अथातीसारचिकित्सा ।

---

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः । अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १ ॥ मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले । विनातिद्रवसंघातशैत्य-श्लेष्मप्रदूषणात् ॥ २ ॥ शकृद्दुर्गन्धि साटोपविष्टम्भार्त्तिप्रसेकिनः । विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति ॥ ३ ॥

ज्वरोपद्रवस्यातीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह आमेत्यादि । सुश्रुतस्य । क्रिया चिकित्सा ॥१॥

आमपक्वलक्षणमाह मज्जतीत्यादि । चरकस्य । आमेति आमान्विता विट् जले मज्जति । गुरुत्वादिति आमाश्रितगुरुत्वात् । पक्वेति निरामा, प्लवते निरामत्वेन लघुत्वादित्यर्थः । द्वयोरप्यामपक्वलक्षणयोरपवादमाह विनातिद्रवेत्यादि । अतिद्रवत्वात् आमापि प्लवते, तथा अतिसंघातात् अतिकाठिन्यात् पक्वापि मज्जति, तथा शैत्यसंहति-श्लेष्मप्रदूषणात् कफसम्बन्धकृतगौरवेण पक्वापि मज्जति । शैत्यस्थाने श्वैत्यपाठे श्वेतवर्णता एतेनातिद्रवत्वादिकं विना मज्जनप्लवने साम-निरामलक्षणतया ज्ञेये इत्यर्थः ॥ २ ॥

सामत्वनिरामत्वयोः सम्यग्ज्ञानार्थमपरमपि लक्षणमाह शकृदित्यादि । आटोपविष्टम्भावेशार्त्ती तत्सहितम् । किं वा आर्त्तिः शूलम्, आटोपो रुजापूर्वक उदरक्षोभः, विष्टम्भः सतोदशूलमलाप्रवृत्तिः, प्रसेकिनः कफप्रसेकिनः किंवा प्रसेकः स्तोकस्तोकमलसरणम् कफात् पक्वञ्च मज्जतीत्यस्य तन्त्रान्तरीयवचनत्वान्न पौनरुक्त्यमाशङ्कनीयम् । इह तु सम्पूर्णश्लोकानुरोधात् पठितम् ॥ २ ॥

आमे विलङ्घनं शस्तं-मादौ पाचनमेव च । कार्य्यं चान-शनस्यान्ते प्रद्रवं लघुभोजनम् ॥ ४ ॥ लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः । समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च ॥ ५ ॥ ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा। मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे । युक्तेऽन्न-काले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ॥ ६ ॥ ओषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः । वस्त्र प्रस्रुतमण्डः पेया च मसूरयूषश्च ॥ ७॥ गुर्व्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्य्ययात् । शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥८॥

आम इत्यादि । प्रद्रवमिति प्रशब्द इव, प्रशब्दश्चात्र शास्त्रवि-हितत्वेन ज्ञेयः । तेनाविहितद्रवान्ननिषेधार्थं, विहितलाजमण्डा-दिविधानार्थञ्च प्रशब्दोपादानं ज्ञेयम् । अतः "वर्ज्जयेद्द्विदलं शूली कुष्ठी मांसं क्षयी स्त्रियम् । द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी ।" इत्यादि वचनेन सहात्र न विरोधः । अन्ये तु प्रगतद्रवमिति व्याख्याय विरोधं परिहरन्ति । अपरे तु निपातस्यानेकार्थत्वात् प्रशब्दस्य ईष-दर्थतां व्याख्यानयन्ति । अन्ये तु केवलद्रवस्यैव निषेधो न तु लाज-मण्डादेरित्याहुः ॥ ४ ॥

लङ्घनपाचनयोर्मध्ये लङ्घनस्य प्राधान्यमाह लङ्घनमित्यादि स्पष्टम् ॥ ५ ॥

ह्रीवेरेत्यादियोगत्रयं षडङ्गविधिना अर्द्धशृतं बोध्यम् । उदीच्यं बालकम् ॥ ६ ॥

प्रद्रवं लघुभोजनमिति यदुक्तं तदेव दर्शयति औषधसिद्धेत्यादि । औषधं वक्ष्यमाणशालपर्ण्यादि-धान्यपञ्चकादिकम् । पेया चेति पेया च वस्त्रप्रस्रुतेत्यर्थः । अतएवोक्तम् "वस्त्रस्रुता यवागूर्य्याऽप्रस्रुतश्चाप्रभ-क्तम्" इति ॥ ७ ॥

बृहच्छालपर्ण्यादिः-शालपर्णी पृश्निपर्णी बृहती कण्टकारिका । बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् । एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥९॥ स्वल्पशालपर्ण्यादिः

शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता । दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् । ॥१०॥ यवागूमुपभुञ्जानो नतु व्यञ्जनमाचरेत् । शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः । धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा । आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् । वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः । धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत् । आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥११॥

---

गुर्वीत्यादि । अत्युग्रं खरा कठिना शक्ता पिण्डिका गुर्वीत्यात्, सैव विपर्ययादिति मृद्वी सा लघ्वी भवति । अवलेहिका अवलेहयोग्या पिण्डी ॥ ८ ॥

बृहच्छालपर्ण्यादौ बिल्वानि बिल्वशलाटवः संग्राहित्वात् । यदुक्तं "कफानिलहरं ताक्ष्णं स्निग्धं संग्राहिदीपनम् । कटुतिक्तकषायोष्णं बिल्वमामस्य दाहकृतम्" इति । एवं सर्वत्र स्तम्भनयोगे बोध्यम् । कश्चित्तु बिल्वस्य मूलं ज्ञेयम्, "बिल्वमूल मरुत्श्लेष्मच्छर्दिघ्नं न तु पित्तकृत्" इति गणपाठात् । आहारसंयोग इति आहारस्य संयोजने संस्कार इति यावत् । सर्वातिसारिणामिति आमपच्यमानपक्वातिसारिणां, प्रत्येकद्वन्द्वसर्वश्पातातिसारिणां वा ॥ ९ ॥

स्वल्पशालपर्ण्यादि । वाभटस्य ॥ १० ॥

यवाग्वोऽम्ला इति अम्ला अम्लविपाकाः । धान्यपञ्चकेत्यादि सुगमम् । वातपित्ते पञ्चमूल्या । इति स्वल्पपञ्चमूल्या । आभ्यामिति धान्योदीच्याभ्याम् ॥ ११ ॥

दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः । अतिसाराय कल्पन्ते भूयस्तान् संप्रवर्त्तयेत् ॥ १२ ॥ न तु संग्रहणं दद्यात् पूर्वमामातिसारिणे । दोषा ह्यादौ बध्यमाना जनयन्त्यामयान् बहून् ॥ शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् । दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ॥ १३ ॥ क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः । आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥ १४ ॥ स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते । अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ १५ ॥ धान्य-

---

दोषा इत्यादि । सन्निचिता इति सञ्चयं प्राप्ताः । विदग्धशब्देनात्रविपक्वाहारंविना चतुर्विधमप्याम विदग्ध-विष्टब्ध-रसशेषरूपमजीर्णमुच्यते । मूर्च्छिता इति वर्द्धिताः । संप्रवर्त्तयेदिति स्वयं प्रवर्त्तमानदोषस्य उपेक्षया प्रवर्त्तनं कारयेत् । उक्तं हि "तेषूपेक्षैव भेषजम्" इति तथा स्तोकं स्तोकं विबद्धं वा विरेचनयोगेन प्रवर्त्तयेत् । अतएव वक्ष्यति स्तोकं स्तोकं विबद्धं वेत्यादि ॥ १२ ॥

न तु संग्रहणमित्यादौ पूर्वमिति विशेषणेनोत्तरकालमामातिसारिणेऽपि अतिनिस्रुतबहुदोषतया क्षीणधातवे संग्रहणं देयमिति दर्शयति । अतएव वक्ष्यति क्षीणधातुबलार्त्तस्येति । अन्ये तु पूर्वं संग्रहणं न देयमिति वचनेन प्रथमं नमस्कृत्याशालमल-कुटजत्वगादिसंग्रहणं न देयमिति बोधयति । सुखोष्णेत्यादि तु पाचनं पाहनञ्च यत्, पूर्वमपि देयमेवेत्याहुः ॥ १३ ॥

अवस्थायामामेऽपि संग्रहणं देयमित्याह क्षीणेत्यादि । पाचनादिति केवलपाचनात्, पाचनस्तम्भनन्तु हितमेव ॥ १४ ॥

विरेचनावस्थामाह स्तोकमित्यादि । सुखं तस्य । अभयापिप्पलीकल्कस्य सुखोष्णता कदुष्णयोगेन ज्ञेया ॥ १५ ॥

पञ्चकम्—धान्यकं नागरं मुस्तं वालकं विल्वमेव च। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥ १६ ॥

धान्यचतुष्कम्—इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः ॥ १७ ॥

पिप्पलीं नागरं धान्यं भूतिकञ्चाभयां वचाम्। ह्रीवेरभद्रमुस्तानि विल्वं नागरधान्यकम्। पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका। तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम्। कफे पित्ते च वाते च क्रमादेताः प्रकीर्त्तिताः। संज्ञा प्रमथ्या ज्ञातव्या योगे पाचनदीपने ॥ १८ ॥ त्र्यूषणातिविषाहिङ्गुवला-

धान्यकमित्यादि। अयं योगः सामपित्ते बोध्यः। यदुक्तमायुर्वेदसारे "बिल्वविश्वघनोदीच्यधान्यकैः क्वथितं जलम्। सामपित्तातिसारघ्नं दीपनं धान्यपञ्चकम्"। धान्यपञ्चकं यदुक्तं तत् शुण्ठीव्यतिरेकेण कर्त्तव्यमित्येतदर्थमाह इदं धान्यचतुष्कं स्यादित्यादि। भोजेऽप्युक्तम् "धान्यकं वालकं मुस्तं विल्वं पित्ते प्रयोजितम्। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम्" इति। तथान्यत्राप्युक्तम् "धान्यकं वालकं मुस्तं विल्वं पित्ते तु दीपनम्। आमशूलविबन्धघ्नं पाचनं नागरान्वितम्" इति ॥ १६ ॥ १७ ॥

पिप्पलीत्यादि प्रमथ्यात्रयं चरकस्य। अत्र भूतिकं यमानी, भद्रमुस्तं मुस्तकमेव, समङ्गा वराहक्रान्ता। एतास्तिस्रः प्रमथ्या यथाक्रमं कफपित्तवातेष्विति चरकटीकाकृतो व्याचक्षते। अतस्तमेवार्थं चक्रोऽप्याह कफे पित्तादि। यद्यपि ह्रीवेरमित्यादि द्वितीयो योगो धान्यपञ्चकमेव, तथापि तस्यैव प्रमथ्यासंज्ञाविधानार्थं पुनश्चरकवाक्यं लिखितम्। न च वाच्यं प्रमथ्यामध्यपठितं ह्रीवेरादि वास्तु किं धान्यपञ्चकयोगस्य पृथक्कथनेन? अतश्च,

टकपत्रविल्वह्रीवेरम्। जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात्॥ ॥१८॥ कल्कालवालं सुदृढं पिष्टैरामलकैर्भिषक्। आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम्। नदीवेगोपमं घोरमतीसारं निरोधयेत्॥२९॥ किरातितिक्तकं मुस्तं वत्सकं सरसाञ्जनम्। पित्तातिसाररोगघ्नं सक्षौद्रं वेदनापहम्॥३०॥ पलं वत्सकबीजस्य श्रपयित्वा जलं पिबेत्। यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम्॥३१॥ मधुकं कट्फलं लोध्रं दाड़िमस्य फलत्वचम्। पित्तातिसारे मध्वाक्तं

---

पारिशेष्यात्, कषायस्य वा योग्यत्वादित्याहुः। अन्यतमेनेति काञ्जिकजलादीनामन्यतमेन। क्वाथपक्षे तक्रादौ अर्द्धं जलं देयम्॥२७॥

कच्छटेत्यादौ। कच्छटादीनां चतुर्णां पलम्। नागरान्तैरष्टाभिः कषायः। कल्केत्यादि स्पष्टम्॥२८॥२९॥

किराततिक्तकमित्यादि। अत्र तण्डुलोदकमपि बोध्यम्। तेन एषां चूर्णं मधुसहिततण्डुलोदकेन पिबेदित्यर्थः। तदाह वाभटः "किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्। कटङ्कटेरी ह्रीवेरं विल्वमध्यं दुरालभा। तिलामोचरसौ लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पं दाड़िमस्य त्वगुत्पलम्। अर्द्धश्लोकैः स्मृता: योगाः सक्षौद्रास्तण्डुलाम्बुना" इति। चरकोऽप्युक्तम् "किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः। बिल्वं दारुहरिद्रात्वक् ह्रीवेरं सदुरालभम्।

प्राशयेत् तण्डुलाम्बुना ॥ ३२ ॥ कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम् । सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ३३ ॥ कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत् । अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ३४ ॥ बिल्वचूताम्थिनिर्यूहः पीतः सक्षौद्रशर्करः । निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ३५ ॥ पटोलयवधान्याकक्वाथः पेयः सुशीतलः । शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ३६ ॥ प्रियङ्गुवञ्जनमुस्ताख्यं पाययेत्तु यथाबलम् । तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३७ ॥ कलिङ्गकवचामुस्तं दारु सातिविषं समम् । कल्कं तण्डुलतोयेन पिबेत् पित्तानिलामयी ॥३८॥ कुटजं दाडिमं मुस्तं धातकीबिल्ववालकम् । लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् । सामे सशूले रक्तेऽपि पिच्छास्रावेषु शस्यते । कुटजादिरिति ख्यातः सर्वातिसारनाशनः ॥ ३९ ॥ समङ्गातिविषा मुस्तं विश्वं ह्रीवेरधातकी । कुटजत्वक्फलं बिल्वं क्वाथः सर्वातिसारनुत् ॥ ४० ॥ दलाद्यः स्वरसः पेयो हिज्जलस्य समाक्षिकः । जयत्यामसतीसारं क्वाथो वा कुटजत्वचः ॥ ४१ ॥

---

पक्वमित्यादि । वाभटस्य । रसाशी जाङ्गलमांसरसेन भुञ्जानः । मधूकमित्यादि । चूर्णविधया योगोऽयम् । कुटजेत्यादौ हरिद्राद्वयं, पर्णिनीद्वयं शालपर्णी पृश्निपर्ण्यौ । क्वाथेनायं योगः । कुटजत्वगित्यादि योगत्रयं स्पष्टम् । बिल्वेत्यादि ख्यातम् । पटोलेत्यादि ख्यातम् । प्रियङ्ग्वित्यादौ अञ्जनं रसाञ्जनं, चूर्णविधया योगोऽयम् ॥ ३१–३७ ॥

सौवर्चलाभयाः। पीतोष्णेनाम्भसा हन्यादामातीसार-मुद्धतम् ॥ १९ ॥ अथवा पिप्पलीमूलपिप्पलीद्वयचित्र-कान्। सौवर्चलवचाव्योषहिङ्गुप्रतिविषाभयाः। पिबेत् श्लेष्मातिसारार्त्तश्चूर्णितांस्तोष्णवारिणा ॥ २० ॥ हरि-द्रादिं वचादिं वा पिबेदामेषु बुद्धिमान्। खड्यूषयवा-गूषु पिप्पल्यादिं प्रयोजयेत् ॥ २१ ॥ तक्रं कपित्थचाङ्गे-रीमरिचाजाजिचित्रकैः। सुपक्वः खड्यूषोऽयमयं काम्ब-लिकोऽपरः। दध्यम्लोलवणस्नेहतिलमाषसमन्वितः ॥२२॥

---

कसंज्ञया हि शास्त्रव्यवहारः कर्त्तव्यो यथा धान्यपञ्चकसं-सिद्ध इत्यादि। तथा शुण्ठोरहितस्य तस्यैव धान्यचतुष्कसंज्ञयापि, अतएतद्विशेषकथनार्थमेव तस्य पृथक्कथनमिति ज्ञेयम्। संज्ञा प्रमथ्या इत्यादि। प्रमथ्याशब्दो हि वृद्धपरम्परया पाचनदीपन कषाये वैद्यशास्त्रे परिभाषितः श्रूयते। यथा विडङ्गकषायः शेख-रिककषायशब्देन वैद्यैरुच्यते इति ॥ १८ ॥

लङ्घनेत्यादौ लङ्घनादीनां चर्णम्। अथवेत्यादि—चित्रकान्त एको योगः। सौवर्चलेत्यादौ प्रतिविषा अतिविषा। हरिद्रादिव-चादिगणौ सौश्रुतौ। यदाह "हरिद्रा दारुहरिद्रा कलशी कुट-जबीजानि मधुकञ्चेति"। वचामुस्तातिविषाभयाभद्रदारुनागर-ञ्चेति"। खड्यूषेत्यादिपिप्पल्यादिरपि सौश्रुतो गणो ज्वराधिकारे एकैवोक्तः॥ १९ ॥ २१ ॥

खड्यूषमाह तक्रमित्यादि। अयन्तु यूषः "कर्षार्द्धं वा कणा-शुण्ठ्योः कल्कद्रव्यस्य वा पलं" इत्यादिना बोध्यः। तेन तीक्ष्णवी-र्य्याणां मरिचाजाजीचित्रकाणामल्पमानत्वं, कपित्थचाङ्गेर्य्योस्तु मध्य-वीर्य्यत्वात् बहुमानत्वम्, तक्रस्य तु प्रस्थमानत्वं कल्पनीयम्। यूषयो-गित्वाच्च मुद्गोऽपि देयः। तस्यैव दध्यादियोगात् काम्बलिकसंज्ञामाह दध्यम्ल इत्यादि। दध्यम्लेति दध्ना अम्लीकृतः॥ २२ ॥

अङ्कोठवटकः ।

सदार्व्यङ्कोठपाठानां मूलं त्वक् कुटजस्य च ।
शाल्मली शालनिर्य्यासधातकीलोध्रदाडिमम् ॥
पिष्ट्वाक्षसम्मितान् कृत्वा वटकांस्तण्डुलाम्बुना ।
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः ॥
पिबेदत्ययमापन्नो विड्विसर्गस्य मानवः ।
अङ्कोठवटको नाम्ना सर्व्वातीसारनाशनः ॥ ४७ ॥
पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥ ४८ ॥

---

इति । "कल्को दृषदि पेषितः" इति हि कल्कलक्षणम् । अतः कल्कशब्देन चूर्णस्यापि ग्रहणम् । द्रव्यादिति चतुर्भागावशिष्टात् । अतः क्वाथपल चतुष्टये दत्तस्य शरावचतुष्टयजलस्य पादशेषात् एकपले क्वाथे अतिविषा-चूर्णपलद्वयमित्यर्थः । लेहाकारीकृतक्वाथापेक्षया पादिकमिति तु न व्याख्येयम् । द्रवात् पादिकः क्वाथ इत्युक्तेः । तत्रापि लेहाकारात् द्रवा-दिति व्याख्याने कष्टकल्पना स्यात् । अतिविषायुक्त इति घनीभूतक्वाथस्य विशेषणम् तेन क्वाथे घनीभूते अतिविषाचूर्णप्रक्षेप इत्यर्थः । वृद्धवैद्यास्तु मधुनापि लेहं कारयन्ति सायंसमयेऽपि ॥ ४६ ॥

सदार्व्वीत्यादौ दार्व्वी दारुहरिद्रा, अङ्कोठ अङ्कोड़ इति ख्यात-स्तरुः । तस्य मूलमेव उक्तं हि हारीते "मूलं चाङ्कोटमूलस्य पाठां दार्व्वीञ्च नृमताम् । पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्" इत्यादि ॥ ४७ ॥

पयसीत्यादि । चरकस्य । नागरमत्र शुण्ठी न तु मुस्ता. रक्तति-सारे "अजाक्षीरक्रोड़ीघनजलोत्पलैः" इति जतूकर्णसंवादात् । क्रोड़ी पृश्निपर्णी । अतएव पृश्निपर्ण्यन्त एकयोगः । अन्ये तु पृश्निपर्ण्या च साधितेति पृथक्पाठः । पृश्निपर्णीक्वाथेन साधित इत्यर्थः । तेनार्द्धोद-कछागदुग्धं पृश्निपर्णीक्वाथेन मिलित्वा पाकः कार्य्यः । उक्तं हि वाभटे "पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः । पेया रक्तातिसारघ्नी पृश्निपर्णीरसान्विता" इति श्रूयते ॥ ४८ ॥

रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम् ।
धातकी शृङ्गवेरञ्च प्रपिबेत् तण्डुलाम्बुना ॥
क्षौद्रेण युक्तं नुदति रक्तातीसारमुल्वणम् ।
मन्दं दीपयते चाग्निं शूलञ्चापि निवर्त्तयेत् ॥ ४९ ॥
विड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम् ।
मरिचेन समायुक्तं शोथातिसारनाशनम् ॥ ५० ॥

वत्सकादिः ।

सवत्सकः सातिविषः सबिल्वः ।
सोदीच्य मुस्तश्च कृतः कषायः ॥
सामे सशूले सहशोणिते च ।
चिरप्रवृत्तेऽपि हितोऽतिसारे ॥ ५१ ॥

कषायो मधुना पीतस्त्वचो दाड़िमवत्सकात् ।
सद्यो जयेदतीसारं सरक्तं दुर्निवारकम् ॥ ५२ ॥

---

रसाञ्जनमित्यादि ।—अत्र कुटजस्य फलं त्वक् च । सुश्रुतेऽप्युक्तम् "रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा । धातकीं नागरञ्चैव पाययेत्तण्डुलाम्बुना । सशूलं रक्तजं हन्ति योगो मधुसमन्वितः" इति ॥ ४९ ॥

विड़ङ्गेत्यादि ।—अत्र मरिचस्य प्रक्षेप्यत्वमित्याहुः । वत्सकादौ वत्सकः कुटजः तस्य त्वगिति चन्द्रकलाटीकाकारः वैद्यप्रसारकश्च । अन्ये तु "बिल्वशक्रयवाम्भोद-बालकातिविषाकृतः । कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम्" इति सुश्रुतसंवादात् फलमेवेत्याहुः । किन्तु प्रायो व्यवहारस्त्वचा, फलेनापि ज्वरे रक्तप्राबल्ये च । यदुक्तं "कुटजः कफवातास्रक् त्वग्दोषार्शोऽतिसारजित् । तद्बीजं रक्तपित्तातीसार-ज्वरहरं हिमम्" इति ॥ ५० ५१ ॥

कषाय इत्यादौ—दाड़िमात् कोमलत्वक् । गुड़ेनेत्यादि ।—अत्र

गुडेन खादयेद्बिल्वं रक्तातिसारनाशनम् ।
आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ ५३ ॥
बिल्वाब्दधातकीपाठाशुण्ठीमोचरसाः समाः ।
पीता रुन्धन्त्यतीसारं गुडतक्रेण दुर्जयम् ॥ ५४ ॥
शल्लकी बदरी जम्बू प्रियालाम्रार्जुनत्वचः ।
पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः ॥ ५५ ॥
जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत् ।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ।
तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ॥ ५६ ॥
बिल्वं छागपयःसिद्धं सितामोचरसान्वितम् ।
कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥ ५७ ॥
उदेहाम्बुना तण्डुलीयं पीतञ्च ससितामधु ।
पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत् ।
रक्तातिसारी पीत्वा वा तया सिद्धं घृतं नरः ॥ ५८ ॥

---

गुडबिल्वयोः समभागः । बिल्वमत्र बिल्वशलाटुः, तच्च पाकोचितमग्निस्विन्न-
मत्रापि । एतत् कोष्ठगतजलकल्पानुपेयम् ॥ ५३ ॥

बिल्वाब्देत्यादि । गुडेन मधुरीकृतं तक्रं गुडतक्रम् । [illegible]
तक्रेण [illegible] ॥ ५४ ॥

शल्लकीत्यादि । [illegible] । जम्ब्वाम्रेत्यादि
स्वरस [illegible] मधुनोऽपि मात्रा [illegible], मात्रा चोद्र-
[illegible] ॥ ५५ । ५६ ॥

बिल्वं छागपयःसिद्धमित्यादि । बिल्वशलाटुस्वेदनयोगेन छा-
गदुग्धेन सिद्धेन पाचयित्वा [illegible] ततः सितादिना संयोज्य
देयम् । अत्र बिल्वशलाटुमाषकाष्टकं, सितया एकमाषकः, मोचरस-
कलिङ्गयोश्च मिलित्वा माषकम् इति वृद्धव्यवहारः । आजदुग्धघृत-
[illegible] अनुपेयम् ॥ ५७ ॥

कुटजस्य पलं ग्राह्यमष्टभागजले शृतम् ।
तत्रैव विपचेद्भूयो दाड़िमोदकसंयुतम् ।
यावज्जैव लसीकाभं शृतं तमुपकल्पयेत् ।
तस्यार्द्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ।
अदम्यमरणीयोऽपि त्वयोर्य्याति न गोचरम् ।
क्वाथतुल्यं दाड़िमाम्बु भागावुभौ समं यतः ॥ ५९ ॥
कल्कस्तिलानां कृष्णानां शर्कराभागसंयुतः ।
छागेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ६० ॥
गुदपाके प्रपाके वा पटोलमधुकाम्बुना ।
सेकादिकं प्रशंसन्ति छागेन पयसापि वा ।
गुदभ्रंशे प्रकर्त्तव्या चिकित्सा तत्प्रकीर्त्तिता ॥ ६१ ॥

---

ज्येष्ठाम्बुनेत्यादावपि रक्तातिसारनाशनमिति योज्यम् ज्येष्ठाम्बु तण्डुलाम्बु । तरतूलीयकस्य लङ्कामरीचस्य मूलम् । पीत्वेत्यादिचरकस्य वातपित्तोक्तं दोषगोष्ठ्यामिति वदन्ति । पयसा पीत्वेत्यन्वयः । क्षीरभुक् क्षीरेण भुञ्जानः । तत्रेति शतावर्य्या कल्कस्वरसरूपतया घृतं पीत्वेत्यर्थः ॥ ५८ ॥

कुटजस्य पलमित्यादि ।—एतत्क्वाथद्वयं मिश्रीकृत्य तावत् पक्तव्यं, यावत्तद्घनीभावं स्यात्, ततोऽष्टमाषकं गृहीत्वा तक्रकर्षद्वयेन सह पातव्यमित्यर्थः ॥ ५९ ॥

कल्कस्तिलानामित्यादि । शर्कराभागसंयुत इति शर्करायाः भागस्तुल्यांशः, तेन संयुत इत्यर्थः । तेन शर्करायास्तुल्यो भागः एकस्मिन्निति । उक्तं हि चरके "कृष्णतिलान् शर्करापञ्चभागिकान् छागीपयसा" इति । एवं चरके वाग्भटेऽपि । यथा "कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः" इति शर्कराभागसंख्या पञ्चको भागस्तिलकल्कस्येत्यर्थः ॥ ६० ॥

गुदपाक इत्यादि ।—पटोलमधुकाम्बुनेत्युद्धृतेन । सेकादिविल्वे

अवेदनं सुसम्पक्वं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ६२ ॥

कुटजपुटपाकः ।

स्निग्धं घनं कुटजवल्कमजन्तुजग्धं,
मादाय तत्क्षणमतीव च पोथयित्वा ।
जम्बूपलाशपुटतण्डुलतोयसिक्तं
बद्धं कुशेन च वहिर्घनपङ्कलिप्तम् ॥
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा ।
क्षौद्रेण युक्तमतिसारवते प्रदद्यात् ॥
कृष्णात्रिपुत्रमतपूजित एष योगः ।
सर्व्वातिसारहरणे स्वयमेव राजा ॥
स्वरसस्य गुरुत्वेन पुटपाकपलं पिवेत् ।
पुटपाकस्य पाकोऽयं वहिरारक्तवर्णता ॥ ६३ ॥

कुटज पुटपाकः ।

त्वक्पिण्डं दीर्घवृन्तस्य काश्मरीपत्रवेष्टितम् ।
मृदावलिप्तं सुकृतमङ्गारेष्ववकलयेत ।

त्वादिशब्दात् प्रलेपादिपरः । चिकित्सा तत्प्रकीर्त्तितेति गुदभ्रंशचिकि-
त्सा, सा च क्षुद्ररोगे वाच्या ॥ ६१ ॥

पुटपाकयोग्यावस्थामाह अवेदनमित्यादि । सुश्रुतस्य । अवेदन-
मशूलमल्पशूलं वा । उक्तं तन्त्रे नानावर्णमित्यनेन सान्निपातिकोऽति-
सारः पुटपाकस्य विषय इति दर्शितमित्याह ॥ ६२ ॥

स्निग्धमित्यादि । अजन्तुजग्धमिति न क्रिमिभिर्भक्षितम् । पोथ-
यित्वा कोट्टयित्वा । जम्बुपलाशनिर्म्मितपुटं तण्डुलतोयेन सिक्तमित्यर्थः ।
योगोऽयं कृष्णात्रेयोक्त इत्याह ॥ ६३ ॥

त्वक्पिण्डमित्यादि । कस्यचित् तन्त्रस्य । त्वचः पिण्डरूपकल्कम् ।
दीर्घवृन्तः श्योनाकः । काश्मरी गाम्भारी । सुकृतमिति कुशवेष्टनेन

छिन्नमुद्धृत्य निष्पीड्य रसमादाय यत्नतः।
शीतीकृतं मधुयुतं पाययेदुदरामये॥ ६४॥

कुटजलेहः।

शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत्।
क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत्॥
सौवर्च्चलयवक्षारविड़सैन्धवपिप्पली।
धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम्॥
लिह्याद्बदरमात्रं तत् शीतं क्षौद्रेण संयुतम्।
पक्वापक्वमतीसारं नानावर्णं सवेदनम्।
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम्॥ ६५॥

कुटजाष्टकः।

तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत।
तस्मिन् सुपूते पलसम्मितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन॥

---

सुष्ठु बद्धमित्यर्थः। अवकूलयेत् अङ्गारैराच्छादयेत्। कूल आवरणे इत्यस्य रूपम्। दहेदित्यन्ये। उदरामय प्रकरणादतिसारे सुश्रुते पुनरयं योगोऽन्यथा पठ्यते, यथा "त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेशरसंयुतम्। काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण तं दृढम्"। शेषं तुल्यमेवेति। श्योनाकस्य त्वचं पद्मकेशरञ्च समभागं कृत्वा संपिष्य, तं पिण्डं गाम्भारीपत्रपद्मपत्रयोः पुटे निक्षिप्य, सूत्रेणावेष्ट्य मृत्तिकया चावलिप्य निर्धूमखदिराङ्गारेषु पुटपाकविधिना पक्त्वा रसो ग्राह्य इति व्याख्यानयन्ति टीकाकृतः। अत्र श्योनाकपुटपाके वाग्भटसंवादात् मधुस्थाने शर्कराप्रक्षेपोऽपि बोध्यः॥ ६४॥

शतमित्यादि। अर्मणो द्रोणः। लेहमिति लेहाकारं यथा भवति तथा पचेत्। पलद्वयमिति मिलित्वा। आसन्नपाके चूर्णप्रक्षेपः। यवक्षारस्थाने गुड़क्षारपाठो न प्रसिद्धः। बदरमात्रमित्यष्टमाषकम्। माषचतुष्टयेन व्यवहारः। क्षौद्रयुक्तमित्युपयोगकाले अनुरूपं मधु दत्त्वा उपयोज्यम्॥ ६५॥

पाठां समङ्गातिविषां समुस्तां बिल्वञ्च पुष्पाणि च धातकीनाम्।
प्रक्षिप्य भूयो विपचेत्तु तावद्दर्व्याः प्रलेपः स्वरसस्तु यावत्॥
पीतस्त्वसौ कालविदा जलेन मण्डेन वाजापयसाथवापि।
निहन्ति सर्वं त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा॥
दोषं ग्रहण्या विविधञ्च रक्तं शूलं तथार्शांसि सशोणितानि॥
असृग्दरञ्चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम्।
तुला द्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता॥ ६६॥

षडङ्गघृतम्।

वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी।
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम्॥ ६७॥

---

तुलामित्यादि। तुलाद्रव्ये जलद्रोण इति वक्ष्यति। रसश्च पादावशिष्ट एवोत्तरार्थं सिद्धः। पलसम्मितानीति प्रत्येकं, द्रव्यप्रधानत्वान्निर्देशस्य। समङ्गा वराहक्रान्ता। शाल्मलेनेति शाल्मलीवेष्टकेन। अत्र कश्चित् चूर्णं दत्त्वैव पाकः "प्रक्षिप्य भूयो विपचेत्" इति वचनादित्याहुः। अन्ये तु तस्मिन् स्रुते भूयः पचेत्, ततो मनाक् दर्वीप्रलेपनावस्थायां शाल्मलीवेष्टकादिचूर्णं प्रक्षिप्य ततो रसः पीत इति योज्यम् एतेन "प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य योगतः" इत्यपि वचनमनुसृतं भवतीत्याहुः। स्वरसस्थानेनैवेति। जलेनेति शीतलजलेनाग्निमान्द्ये, मण्डेन यकृद्दुष्टौ छागीदुग्धेन रक्ते॥ ६६॥

षडङ्गघृते दार्व्याश्च त्वच उत्तमा इति पाठे दार्व्यास्त्वचश्चाद्या ग्राह्या उत्तमगुणवत्त्वात्। तस्य दुर्लभत्वात् अत्र वाद्यमेव गृह्यते। षड्भिरिति पदं षडाद्यानां द्रव्याणां निर्धारणम्। एभिः कल्कैश्चतुर्गुणमेव जलम् देयम्। इदन्तु षडङ्गघृतं कुटजत्वचा समाङ्गं भवति, तदुक्तं वैद्यप्रदीपे "मण्डेन पेयं तत्सर्पिः समाङ्गं कुटजत्वचा" इति॥ ६७॥

## क्षीरिद्रुमाद्यं घृतम्।

क्षीरिद्रुमाभीरुरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं रक्तातिसारं शमयत्युदीर्णम्॥६८॥
जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागन्तद्भेषजैः सिद्धं देयं वा वारिसाधितम्॥ ६९॥
बालबिल्वं गुडं तैलं पिप्पलीविश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके॥ ७०॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम्॥ ७१॥
कल्कः स्याद् बालबिल्वानां तिलकल्कश्च तत्समः।
दध्नः सराम्लं स्नेहाढ्यः खड़ो हन्यात् प्रवाहिकाम्॥ ७२॥
बिल्वोषणं गुडं लोध्रं तैलं लिह्यात् प्रवाहणे॥ ७३॥

---

क्षीरिद्रुमेत्यादौ।—क्षीरिणो द्रुमाः वटोडुम्बरादयः। एषामन्यतमस्य समुदितस्य वा क्वाथः। शतावरीरसश्च घृतापेक्षया मिलित्वा त्रिगुणः। कल्कोऽप्येषामेव। पयश्च स्नेहसमम्। घृतमपेक्ष्य च सितायाः अर्द्धं षोड़शपलमित्यर्थः। मधुनोऽपि घृतमपेक्ष्यैव पादिकत्वं ज्ञेयम्॥६८॥

क्षीरपानविषयमाह जीर्णे इत्यादि।—तद्भेषजैरिति अतिसारहृद्भेषजैः। देयं वा वारिसाधितमिति केवलेन त्रिगुणेन जलेन साधितमित्यर्थः। उक्तं हि सुश्रुते "यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम् चिरोत्थितेषु तत् पेयमपां भागैस्त्रिभिः शृतम्॥ ६९॥

बालबिल्वमित्यादि।—चरकस्य। वाते प्रतिहत इति विबद्धवाते।
पयसेत्यादि।—दुग्ध पल १, पिप्पली माष ४, अथवा मरिचचूर्ण माष २, एवं व्यवहरन्ति। सविबन्धायां प्रवाहिकायामयं योगः॥ ७०—७१॥

कल्कः स्यादित्यादि।—चरकस्य। अत्र स्नेहाढ्यता तिल-दधिसरयोगात्। खड़ इत्यस्यैव योगस्य संज्ञा ( चरके खड़स्थाने सद्य इति

दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीड़ितस्तु ।
सुतप्तकुप्यक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥ ७४ ॥
दीप्ताग्निर्निष्पुरीषो यः सार्य्यते फेनिलं शकृत् ।
स पिबेत् फाणितं शुण्ठीदधितैलपयोघृतम् ॥ ७५ ॥
शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ।
छर्द्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातिसारिणं त्यजेत् ।
बहुमेही नरो यस्तु भिन्नविट्को न जीवति ॥ ७६ ॥
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम् ।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत् ॥ ७७ ॥

---

पाठान्तरम् विल्वोपणेत्यादौ विल्वं विल्वशलाटुः, ऊषणं मरिचम् ।
यदुक्तं "विल्वपेषीं गुड़ं लोध्रं तैलं मरिचयोजितम्" इति । तैलेन स्नेहः ॥ ७२ ॥ ७३ ॥

दध्नेत्यादि ।— सुश्रुतस्य । ससारेण अनुद्धृतनवनीतेन । निःसारकः प्रवाहिका, यदाह पराशरः "निर्वाहयेत् सफेनञ्च पुरीषं यो मुहुर्मुहुः । प्रवाहिकेति सा ख्याता कैश्चिन्निःसारकश्च सः" इति । सुतप्तकुप्यक्वथितेनेति अत्यन्ततप्तसुवर्णरजतताम्रलोहप्रक्षेपात् क्वथितेन । अन्ये तु अघटितं रूप्यादि कुप्यमाचक्षते । केचित्तु कुप्यस्थाने कूर्पं पठन्ति, व्याचक्षते च कूर्पः पाषाणभेदो दक्षिणापथे ख्यातः शङ्खनाभ्याकृतिरिति ॥ ७४ ॥

दीप्ताग्निरिति । सुश्रुतस्य । एतत् सर्व्वमालोड्य पेयम् ॥ ७५ ॥

## इत्यतिसारचिकित्सा ।



# अथ ग्रहणी चिकित्सा।



ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत्॥१॥
शरीरानुगते सामे रसे लङ्घनपाचनम्।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम्।
दद्यात् पेयादिलघ्वन्नं पुनर्योगांश्च दीपकान्॥२॥
कपित्थविल्वचाङ्गेरीतक्रदाडिमसाधिता।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी॥३॥

---

ग्रहण्यतीसारयोः परस्परं कार्य्यकारणभावसम्बन्धोऽस्तीति अनन्तरं ग्रहणीचिकित्सितमुच्यते। ग्रहणीमाश्रितमित्यादि।—वाभटस्य। ग्रहणी अग्न्याधाननाड़ी, तदुक्तं "अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" इति। अजीर्णवदुपाचरेदिति, आमाद्यजीर्णेषु यथा वमनाद्युपचारो दीपनपाचनञ्चौषधम्, तथेत्यर्थः। अतीसारोक्तविधिनेति लङ्घनलघ्वन्नपाचनादिना॥१॥

शरीरानुगत इत्यादि।—चरकस्य। शरीरानुगते शरीरव्यापके। सामे रसे इति आमशब्दोऽत्र भावप्रधानः, तेन आमतासहितेऽपक्व इत्यर्थः। रसइत्याहाररसे। विशुद्धामाशयायेति—वमन विरेचन-लङ्घनैः शामायोग्यया निर्हृतामदोषाय॥२॥

कपित्थेत्यादि।—चरकस्य। कपित्थविल्वयोः फलम्, दाड़िमफलस्य तु त्वक्, अन्ये तु फलमेवेत्याहुः। कपित्थादीनां चतुर्णां षड्द्रव्यत्वेन मिलित्वा पलं कल्कः, तक्रञ्च द्रवस्थाने, तच्च तावत् देयम् यावता यवागूः सिध्यति। वृद्धवैद्यास्तु अत्यम्लगुरुत्वभिया तक्रजलाभ्यां तुल्याभ्यां पाकमिच्छन्ति। ग्राहिणीत्यन्ता एका यवागूः, एषा च वातकफे। सवाते पाञ्चमूलिकीति द्वितीया, वातातिसारे स्वल्पपञ्चमूलसिद्धा यवागूरिति शेषः; "भृष्टाद्यैर्वातजेऽतीसारे" इति जतूकर्णसंवादात्॥३॥

ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात्।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपनम्।
कषायोष्णविकाशित्वाद्रौक्ष्याच्चैव कफे हितम्।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत्॥४॥
शुण्ठीं समुस्तातिविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम्।
मन्दानलत्वे सततामतायामामानुबन्धे ग्रहणीगदे च॥ ५ ॥
धान्यकातिविषो दीच्यमानीमुस्तनागरम्।
बलाद्विपर्णीबिल्वञ्च दद्याद्दीपनपाचनम्॥ ६॥

---

तक्रस्य ग्रहणीदोषघ्नत्वं दीपनत्वयहितत्वञ्च सहेतुकमाह ग्रहणीदोषिणामित्यादि।—दीपनं ग्राहि लाघवादिति पथ्यत्वे हेतुः। मधुरपाकित्वान्न च पित्तप्रकोपनमिति अम्लत्वात् पित्तप्रकोपने प्राप्ते, मधुरपाकितया पित्तं न प्रकोपयति, चकारात्वापि पित्तं शमयतीति चाकूतम्, अभिप्रायः किंवा "सर्व्वमेवान्नं प्रायोह्यस्य विदह्यते" इति उक्ते विदाहजनकं यदस्ति, तदपि तक्रप्रयोगे विदाहकन्न भवति, मधुरपाकित्वात्तक्रस्य। न तु जाताम्लत्वेन पित्तप्रकोपनिषेधार्थमयं ग्रन्थः; सद्यस्कोपयोगेन पित्तकारिणोऽम्लरसस्याभावात्। अम्लस्य न प्रयोगं विदाहित्वादेव, अतएवाह सद्यस्कमविदाहीति सद्योमथितमेव तक्रं पच्यमानावस्थायां विदाहकन्न भवति। किञ्चित्कालस्थितं पुनरम्लत्वाद्विदाहि भवत्येव। यत्तु स्वाद्वम्लसान्द्रत्वादित्यनेन अम्लरसत्वमुक्तं तदम्लानुरसतया ज्ञेयमित्याहुः। विकाशित्वादिति दोषवृतस्रोतोविशोधकत्वादित्यर्थः। रौक्ष्यादित्यत्र वैशद्यादित्यपि पाठान्तरम्, पैच्छिल्यरहितत्वादित्यर्थः। एतच्च बलिनो जीर्णावस्थायां ग्रहण्यां देयमित्याहुः॥४॥

शुण्ठीमित्यादि।—सततामतायामिति सर्व्वदा आमकोष्ठतायाम्। आमानुबन्धइति आमे प्रवर्त्तमाने इत्याहुः। ग्रहणीगदविशेषणतया पुनरामानुबद्धइति इति क्वचित् पाठो दृश्यते। धान्यकेत्यादियोगः क्वाथेन॥ ५-६॥

## चित्रकगुडिका।

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषहिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत्॥
गुडिका मातुलुङ्गस्य दाडिमाम्लरसेन वा।
कृता विपाचयत्यामं दीपयत्याशु चानलम्॥
सौवर्च्चलं सैन्धवञ्च विडमौद्भिदमेव च।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत्॥ ७॥
श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति॥ ८॥
जम्बूदाडिमशृङ्गाटपाठाकञ्चटपल्लवैः।
पक्वं पर्य्युषितं बालबिल्वं सगुडनागरम्।
हन्ति सर्व्वानतीसारान् ग्रहणीमतिदुस्तराम्॥ ९॥
नागरातिविषामुस्तक्वाथः स्यादामपाचनः।
चूर्णं हिङ्ग्वष्टकं वातग्रहण्यान्तु घृतानि च॥ १०॥

---

चित्रकमित्यादि।—चरकस्य। अत्र कपिञ्जलाधिकरणन्यायात् केचिल्लवणत्रयमिच्छन्ति, तन्न पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलञ्च। त्र्योषञ्च हिङ्गुगुडिका बीजपूररसे कृता। कोलदाडिमतोये वा परं पाचनदीपनी इति वाभटवचनात्। अतएव चक्रोऽप्याह सौवर्च्चलमित्यादि। औद्भिदं शाम्बरिलवणम्, उत्कारिकेत्यन्ये। सामुद्रं करकचम्। गुडिकेयमार्द्रकरसेनापि बोध्या वायुर्व्वेदसारदर्शनात् ॥ ७॥

श्रीफलेत्यादि।—नागरचूर्णं कटुत्वमात्रकृत्। सगुड इति समगुडः। अयं योगो वाते इत्याहुः॥ ८॥

जम्ब्वित्यादि। एषां पल्लवैरास्तरणं कृत्वा चतुर्गुणञ्च जलं दत्त्वा बालबिल्वमुत्स्वेद्य पर्य्युषितं कार्य्यम्। सगुडनागरमिति बिल्वसमो गुडः, नागरचूर्णन्तु कटुत्वमात्रकारकम्। रक्ते तु नागरं न देयम्। तत्स्वेदनतोयजलमनुपेयमित्याहुर्वृद्धाः। नागरेत्यादि स्पष्टम्। हिङ्ग्वष्टकमग्निमान्द्ये वक्ष्यमाणम्॥ ९॥ १०॥

### नागराद्यं चूर्णम्।

नागरातिविषामुस्तं धातकीं सरसाञ्जनम्।
वत्सकत्वक्फलं बिल्वं पाठां कटुकरोहिणीम्॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम्।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम्॥
शीतकषायमानेन तण्डुलोदककल्पना।
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम्॥ ११॥

### भूनिम्बाद्यं चूर्णम्।

भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान्।
द्वौ चित्रकांशौ वत्सत्वग्भागान् षोडश चूर्णयेत्॥
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत्।
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत्।
गुडयोगात् गुडाम्बु स्यात् गुडवर्णरसान्वितम्॥ १२॥

---

नागराद्यचूर्णे सक्षौद्रमिति मधुप्रक्षेपयुक्तम्। कृष्णात्रेयः पुनर्वसुः। तण्डुलाम्बुनेत्यादि।—तण्डुलाम्बुना तण्डुलधावनाम्बुना। तच्च तण्डुलाम्बु कथं कर्त्तव्यमिति जिज्ञासायां स्वमतं वृन्दमतञ्चोपन्यस्यति शीतकषायमानेनेत्यादि।—शीतकषायविधानञ्च "क्षुण्णमुष्णाम्भसि न्यस्य शीतमाहुर्निशास्थितम्कम्" इति। जलमत्र तण्डुलमपेक्ष्य षड्गुणं ग्राह्यम्। उक्तं हि "षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः" इति। वृन्दमतमाह केऽपीत्यादि। अन्ये तु द्विगुणमम्बु तण्डुलेन समं चिरं स्थितं तण्डुलाम्बु वदन्ति। अपरे तु अनियततण्डुलमनियतजलेन प्रक्षाल्य जलं गृह्णन्ति॥ ११॥

भूनिम्बेत्यादि—द्वौ चित्रकांशौ वत्सत्वग्भागान् षोडशेति प्रथमभागापेक्षया द्विभागषोडशभागपरिग्रहः। गुडयुक्तं शीताम्बु गुडः

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥
समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च।
मातुलुङ्गाभयारास्नाशटीमरिचनागरम् ॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ॥
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ॥ १३ ॥
भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
स क्षारः सर्पिषा पेयो भोज्ये वाप्यवचारितः।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ॥ १४ ॥
सर्व्वजायां ग्रहण्यां तु सामान्यो विधिरिष्यते ॥ १५ ॥

---

शीताम्बु, गुडश्चात्र गुडत्वर्त्तमामाधुर्य्यापत्तिजनको देयइत्याह गुड-योगादित्यादि। वैद्यप्रसारके तु सर्व्वरोगसमीगुडः शीतलजलेन च पानमित्युक्तम्। व्यवहारस्तु पूर्व्ववदेव। पैत्तिकग्रहण्यामम्लपित्तचि-कित्सितमपि बोध्यम्। तदुक्तं वैद्यप्रदीपे "अम्लपित्तहितं यच्च पा-नभोजनभेषजम्। पैत्तिके ग्रहणीदोषे तत्सर्व्वमुपकल्पयेत् इति ॥ १२ ॥

ग्रहण्यामित्यादि स्पष्टम्।—समूलामित्यादि। मातुलुङ्गस्यात्र मज्जम् एतैरिति पिप्पलीमूलादिभिः कल्करूपैः ॥ १३ ॥

भल्लातकमित्यादि।—चरकस्य। गोपुरीषाग्निनेति अचिन्त्यप्रभा-वात् संयोगसंस्कारजशक्तेर्नामिति। स क्षार इति भल्लातकादीनामन्त-र्धूमदाहात् यः क्षारः स एव सर्पिषा पीत इत्यर्थः, भोज्ये व्यञ्जने वा स क्षारो देयः ॥ १४ ॥

सर्व्वजायामित्यादि।—सामान्यो विधिरिति प्रत्येकदोषोक्तचिकित्-सामेलकेन त्रिदोषग्रहण्यां चिकित्सा कार्य्येत्यर्थः ॥ १५ ॥

चूर्णं मरिचमहौषधकुटजत्वगभवं क्रमाद्द्विगुणम्।
गुड़मिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम्॥ १६।

पाठाद्यं चूर्णम्।

पाठाबिल्वानलव्योषजम्बुदाड़िमधातकी।
कटुकातिविषामुस्तादार्व्वीभूनिम्बवत्सकैः॥
सर्व्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना।
सक्षौद्रञ्च पिवेच्छर्द्दिज्वरातिसारशूलवान्॥
तृड्दाहग्रहणीदोषारोचकानलसादजित्॥ १७॥

कपित्थाष्टकचूर्णं।

यमानीपिप्पलीमूलचतुर्जातकनागरैः।
मरिचाग्निजलाजाजीधान्यसौवर्च्चलैः समैः॥

---

चूर्णमित्यादि।— गुड़मिश्रतक्रेणालोड्य पीतमित्यर्थः। पाठादि-चूर्णे जम्बु फलास्थि, एतत्साहचर्य्यात् दाड़िमफलस्यापि बीजम्। वत्सक इन्द्रयवः॥ १६। १७॥

यमानीत्यादि। अयं योगो वाभटे अतीसारचिकित्सिते लिखितः। अग्निश्चित्रकः। जलं वालकम्। समैरिति समभागैः। एतच्च सर्वार्द्धम्। त्रिगुणैरिति एकभागापेक्षया वृक्षाम्लादीनां पञ्चानां प्रत्येकं त्रिगुणत्वम्। षड्गुणसितैः कपित्थाष्टगुणैः कृत इति सिताकपित्थयोरपि षड्गुणाष्टगुणत्वं [illegible] गुणापेक्षयैव एतैः कृतचूर्णं इति योज्यम्। [illegible] वाभटटीकायां षड्गुणसितैरिति पदं वृक्षाम्लादित्रिगुणपदं व्याख्याय मिलितवृक्षाम्लादिद्रव्यषट्कापेक्षया सितायाः षड्गुणत्वमाह। [illegible] सति सिताभागानां शतमष्टाधिकं भवति। अन्ये तु षड्गुणसिते कपित्थाष्टगुणे इति पठन्ति, व्याख्यानयन्ति च [illegible] कपित्थस्याष्टगुणत्वम् अष्टगुणकपित्थापेक्षया च सितायाः षड्गुणत्वमिति, तथा सति सितायाः अष्टचत्वारिंशद्भागा भवन्तीति। अपरे तु षड्गुणसितैः कपित्थ अष्टगुणीकृत इति पूर्वविशेषणं कृत्वा समुदितचूर्णा-

वृक्षाम्लधातकीकृष्णाविल्वदाड़िमतिन्दुकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः॥
चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान्।
कासं श्वासारुचिं हिक्कां कपित्थाष्टमिदं जयेत्॥ १८॥

दाड़िमाष्टकः।

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्।
यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकम्॥
पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतः।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः॥ १९॥

वार्त्ताकु गुड़िका।

चतुःपलं सुधाकाण्डात् त्रिपलं लवणत्रयात्।
वार्त्ताकुकुड़वश्चार्कादष्टौ द्वे चित्रकात् पले॥
दग्ध्वा रसेन वार्त्ताकोर्गुड़िका भोजनोत्तरा।

---

भिन्नया सिताकपित्थयोः षड्गुणाष्टगुणत्वमित्याहुः। एतन्मतद्वयमपि न व्यवहारसिद्धं शर्कराकपित्थयोरतिबहुत्वादिति। तस्मादेकभागापेक्षयैव षड्गुणाष्टगुणत्वमिति कपित्थभागाधिक्यादस्य कपित्थाष्टक इति संज्ञा ॥ १८ ॥

कर्षोन्मितेति।— वाभटस्य। तुगाक्षीरी वंशलोचना, चातुर्जातं त्वगेलापत्रकेशरम्। द्विकार्षिकमिति प्रत्येकम् निर्देशस्य द्रव्यप्रधानत्वात्। एवं यमान्यादिकमपि प्रत्येकं पलांशिकम्। ग्रन्थिकं पिप्पलीमूलम् दाड़िमश्चात्र फलम् "दाड़िमादीनाम्" इत्युक्तेः। एवमन्यत्रापि। चकारात् सितया अपि अष्टौ पलानि ॥ १९ ॥

चतुःपलमित्यादि।— वाभटस्य। त्रिपलं लवणत्रयादिति मिलित्वा निर्देशस्य मानप्रधानत्वात्। त्रिफला लवणानि चेति ये पठन्ति ते त्रिफलालवणैर्मिलित्वा चतुःपलं वदन्ति पूर्वोक्तचतुःपलमित्यस्यापि सम्बन्धात्। लवणान्यविशेषात् पञ्चेत्याहुः। वार्त्ताकुकुड़व इति

भुक्ताभुक्तं पचन्त्यग्निं कासश्वासार्शसां हिताः ।
विसूचिकाप्रतिश्यायहृद्रोगघ्नाश्च ता हिताः ॥ २० ॥

अष्टपलं घृतम् ।

त्र्यूषणत्रिफलाकल्के विल्वमात्रे गुड़ात् पले ।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥
मसूरस्य कषायेण विल्वगर्भं पचेद्घृतम् ।
हन्ति कुष्ठामयान् सर्व्वान् ग्रहणीपाण्डुकामलाः ॥
केवलं ब्रीहिमांसस्य काथो व्युष्टस्तु दोषलः ॥ २१ ॥

---

शुष्कवार्त्ताकुफलचतुष्टयं व्यवहारात् । अर्कादिति अर्कमूलात् । दग्ध्वा रसेन वार्त्ताकोरिति अन्तर्धूमं दग्ध्वा चारीकृत्य वार्त्ताकुरसेन गुड़िकाः कार्य्या इत्यर्थः । दग्ध्वाग्नि वार्त्ताकुरस इति च पाठः । भोजनोत्तरा इति भोजनमुत्तरं पश्चात्कालीनं यासां तथा । किंवा भोजनादुत्तराः भुक्ता भुक्तं पचन्तीत्यत्र भुक्तं भुक्तमित्यपि पाठः ॥ २० ॥

त्र्यूषणेत्यादौ ।—विल्वमात्र इति षड्भिर्म्मिलित्वा पलमात्रे कल्क[illegible]ादिकत्वात् । चतुर्गुणजलेनाष्टपलघृतस्यात्र पाकः । इत्यमेव फलदानक्षमत्वमस्य भवतीति महर्षिवचनादनुमीयते । मात्रामिति अग्निबलानुरूपपरिमाणाम् । मसूरस्येत्यादि ।—मसूरस्य काथोऽत्यन्तशिथिलपोट्टलकं बद्धा कार्य्यः । एवं माषकुलत्थादीनामपि । विल्वगर्भमिति विल्वशलाटुकल्कम् । घृतमत्र प्रस्थमानमेव । ब्रीहिमांसकाथस्य तदहःकार्य्यतार्थमाह केवलेत्यादि ।—जन्तवः छागादिमांसम् । केवलमिति पाठे केवलं सन्ततं यथा स्यात्तथा व्युष्टो रात्रिव्युषितो दोषलः, यावता कालेन व्यष्टीभवति स एव दोषल इत्यर्थः । केवलब्रीहिजन्तवः पाठे तु द्रव्यान्तरसंयुक्तब्रीह्यादिकाथस्य न दोषलत्वमित्याहुः । तत्तु न व्यवहारसिद्धम्, अतएव वृन्दे "ब्रीहिमांसयूषयोः काथं व्युषितं दोषलं मतम्" इत्येवोक्तम् । व्युष्टेति यद्विशिष्टस्तु व्युष्टादिभ्योऽनिष्टिसूचक[illegible]ात् ॥ २१ ॥

शुण्ठीघृतम् ।

विश्वौषधस्य गर्भेण दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीमामतामयम् ॥
घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ २१ ॥

चित्रकघृतम् ।

चित्रकक्वाथकल्काभ्यां ग्रहणीघ्नं शृतं हविः ।
गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥
बिल्वाग्निचव्यार्द्रकशृङ्गवेरक्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थशोथाग्निमान्द्यारुचिनुद् वरि-
ष्ठम् ॥ २२ ॥

चाङ्गेरीघृतम् ।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका ॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम् ।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥

---

विश्वौषधस्येत्यादि ।— ग्रहणीमामतामयमिति ग्रहणीमाडाश्रितो यः सामतारूप आमयो रोगस्तमित्यर्थः । घृतमित्यादौ जलं चतुर्गुणम् ॥ २१ ॥

बिल्वाग्नीत्यादौ ।— आर्द्रकेति शृङ्गवेरविशेषणम्, तेन शुष्कस्य शुण्ठीरूपस्य निरासः । बिल्वादीनां क्वाथस्त्रिगुणः, चतुर्गुण इत्येके । छागक्षीरं घृतसमम् ॥ २२ ॥

नागरमित्यादि ।— अत्र हस्तिपिप्पली चवी, जतूकर्णसंवादात् । तद्यथा "दधिधान्यबिल्वपाठायमानिकापञ्चकोलगोक्षुरकैः । चाङ्गेरीस्वरसे सर्पिर्गुदजिःहन्तिमरुतार्त्तिनुत् पार्श्वे" इति । द्रव्यावल्यामपि हस्तिपिप्पली चवीपर्य्यायत्वेन दृश्यते "चविका कोलवल्ली च हस्तिपिप्प-

अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहं घृतमेतद् व्यपोहति ॥ २४ ॥

मरिचाद्यं घृतम्।

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा।
भल्लातकं यमानी च विडङ्गं हस्तिपिप्पली ॥
हिङ्गु सौवर्च्चलं चैव विड़सैन्धववचव्यथ।
सामुद्रं सयवक्षारं चित्रको वचया सह।
एतैरर्द्धपलैर्भागैर्घृतप्रस्थं विपाचयेत्॥
दशमूलीरसे सिद्धं पयसा द्विगुणेन च।
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम्॥
विष्टम्भमामं दौर्ब्बल्यं प्लीहानमपकर्षति।
कासं श्वासं क्षयञ्चैव दुर्नाम सभगन्दरम्॥
कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान्।
तान् सर्व्वान् नाशयत्याशु शुष्कं दार्व्वनलो यथा॥ २५॥

महाषट्पलकं घृतम्।

सौवर्च्चलं पञ्चकोलं सैन्धवं हवुषां वचाम्।
अजमोदां यवक्षारं हिङ्गु जीरकमौद्भिदम्॥

---

लभ्यते" इति। बिल्वस्थाने विषाणिकोऽपि जतूकर्णसंवादादेव न भवति। चाङ्गेरीस्वरसोऽप्यत्र चतुर्गुणः। चतुर्गुणेन दध्ना चेत्यत्र बहुवचनार्थत्वात, अन्यत्र दशसारेऽपि "चतुर्गुणेन दध्ना च चाङ्गेरीस्वरसेन च" इत्युक्तम्। अन्ये तु स्वरसे क्षीरवद्विधिः" इति वचनात् चाङ्गेरीस्वरसश्च द्विगुणम् इत्याहुः। व्यवहारस्तु पूर्वव्याख्ययैव ॥ २४ ॥

मरिचाद्यघृते विड़सैन्धवचवीति समाहारद्वन्द्वः। किंवा विड़सैन्धवयुक्ता चवीति मध्यपदलोपी समासः। द्विगुणेन चेति चकाराद्दशमूलीक्वाथोऽपि द्विगुणः। अन्ये तु दशमूलीरसश्चतुर्गुण इत्याहुः। व्यवहारस्तु पूर्ववदेव ॥ २५ ॥

कृष्णाजाजी सभूतीकं कल्कीकृत्य पलार्द्धकम् ।
आर्द्रकस्य रसं चुक्रं क्षीरं मस्त्वम्लकाञ्जिकम् ॥
दशमूलकषायेण घृतप्रस्थं विपाचयेत् ।
भक्तेन सह दातव्यं निर्भक्तं वा विचक्षणैः ॥
क्रिमिप्लीहोदराजीर्णज्वरकुष्ठप्रवाहिकाम् ।
वातरोगान् कफव्याधीन् हन्याच्छूलमरोचकम् ॥
पाण्डुरोगं क्षयं कासं दौर्बल्यं ग्रहणीगदम् ।
महाषट्पलकं नाम दृष्टमिन्द्राग्निनिर्यया ॥ २६ ॥

स्वल्पचुक्रम् ।

यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ।
द्विगुणं गुड़मध्वारनालमस्तु क्रमादिह ॥ २७ ॥

---

सौवर्च्चलेत्यादौ पञ्चानां मिलित्वार्द्धपलम्, कल्कस्य षट्पलरूपत्वात् । हवुषा स्वनामख्याता, कृष्णाजाजी कृष्णजीरकम्, भूतीकं यमानी सौवर्च्चलादीनां प्रत्येकमर्द्धपलम् । अत्र यवेति न पाठः । किन्तर्हि विड़मित्येव चन्द्राटादौ दृष्टत्वात् । आर्द्रकस्वरसादीनां पञ्चानां द्रवाणां प्रत्येकं स्नेहसमत्वं "पञ्च प्रभृति यत्र स्युः" इत्युक्तेः ॥ २६ ॥

स्वल्पचुक्रमाह यदित्यादि ।—मस्त्वादीत्यस्य विशेषणं सगुड़ेत्यादि । आदिशब्दाद्दधि तक्रञ्च, मस्तुस्थाने यत्, तदपि मस्तुसमं ग्राह्यमिति । अन्ये त्वादिभूतं मस्तु प्रथमोद्दिष्टं मस्त्वित्याहुः । त्रिरात्रस्थमिति ग्रीष्माभिप्रायेण, वर्षादिषु पुनर्वक्ष्यमाणबृहच्चुक्रवद्वस्थापनकालव्यवस्था । अम्लत्वं यावद्वा भवतीति ॥ २७ ॥

बृहच्चुक्रमाह प्रस्थमित्यादि —तुषजलादिति सतुषयवकृतसन्धानात्, तदभावे काञ्जिकात् । अम्लत इति तुषजलस्य दध्नश्च विशेषणम् अम्लमूलकं काञ्जिकाधःस्थितमूलकमित्याहुर्वृद्धाः । मानिके इति

## बृहच्चुक्रम्।

प्रस्थं तण्डुलतोयतस्तुषजलात् प्रस्थत्रयं चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलकपलान्यष्टौ गुडान्मानिके।
मान्यौ शोधितशृङ्गवेरशकलात् द्वे सिन्धुजाज्योः पले
द्वे कृष्णोषणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढे॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन् वासरान् स्थापयेत्।
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे।
षट् शीतेऽष्टदिनान्यतः परमिदं विस्राव्य सञ्चूर्णयेत्
चातुर्जातपलेन संहितमिदं शुक्तञ्च चुक्रञ्च तत्।
हन्याद्वातकफामदोषजनितान्नानाविधानामयान्
दुर्नामानिलगुल्मशूलजठरान् वह्न्यानलं दीपयेत्॥ २८॥

## तक्रारिष्टम्।

यमान्यामलकं पथ्या मरिचं त्रिपलांशकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्॥
तक्रं कंसासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम्॥ २९॥

---

मानिकाद्वयम्. मानिका पलान्यष्टौ, तेन षोडशपलमित्यर्थः। शोधितशृङ्गवेरशकलादिति निस्त्वगार्द्रकखण्डात्। द्वे कृष्णोषणयोरिति कणा मरिचम्। तोयधरात्यये चेति चकारादत्रापि त्रीन् वासरान् स्थापयेत्। शीत इत्यनेन हेमन्तशिशिरयोरेव ग्रहणम्। विस्राव्येति वस्त्रपूतं कृत्वा। चातुर्जातपलेन मिलित्वा पलमात्रेण। संचूर्णयेत् अवचूर्णनं कारयेदिति॥ २८॥

तक्रारिष्टे त्रिपलांशकं तथा पलांशानीत्यपि प्रत्येकं ज्ञेयम्। तक्रस्य कंसे आढके आसुतं कृतसन्धानम्। जातमिति अम्लरसतया जातम्॥ २९॥

## आयामकाञ्जिकम्।

चाटस्य दद्याद् यवशक्तुकानां पृथक् पृथक् त्वाढ़कसम्मितञ्च।
मध्यप्रमाणानि च मूलकानि दद्याच्चतुःषष्टि सुकल्कितानि॥
द्रोणेऽम्भसः शाव्य घटे सुधौते दद्यादिदं भेषजजातयुक्तम्।
क्षारद्वयं तुम्बुरुवस्तगन्धाधनीयकं स्याद्विडसैन्धवञ्च॥
सौवर्च्चलं हिङ्गुशिवाटिकाञ्च चव्यञ्च दद्याद् द्विपलप्रमाणम्।
इमानि चान्यानि पलोन्मितानि विजर्जरीकृत्य घटे क्षिपेच्च॥
कृष्णामजाजीमुपकुञ्चिकाञ्च तथासुरीं कारविचित्रकञ्च।
पक्षस्थितोऽयं बलवर्णदेहवयः करोतीव बलप्रदश्च॥
कान् जीवयामीति यतः प्रवृत्तस्तत् काञ्जिकेति प्रवदन्ति तज्ज्ञाः। आयामकालाज्जरयेच्च भक्तमायामकेति प्रवदन्ति चैनम्॥
दकोदरं गुल्ममथ प्लिहानं हृद्रोगमानाहमरोचकञ्च।
मन्दाग्नितां कोष्ठगतञ्च शूलमर्शोविकारान् सभगन्दरांश्च॥
वातामयानाशु निहन्ति सर्व्वान् संसेव्यमानं विविधान्नरा-णाम्॥ २०॥

---

आयामकाञ्जिके चाटस्येति निस्तुषदरदलितयवमण्डस्य, तथा यवशक्तुकानाञ्च पृथक् पृथगाढ़कसम्मितमित्याढ़कप्रमाणम्। सम्मित-मिति भावे क्तः। चतुःषष्टीत्याकृतिमानेन। सुकल्कितानीति खण्डखण्डी-कृतानि। शाव्येत्याप्लाव्य। तुम्बुरु वनिगद्रव्यम्, वस्तगन्धा फोकाक्षी, शिवाटिका वंशपत्री (हिङ्गुपत्री), कृष्णा पिप्पली, उपकुञ्चिका स्थूल-कृष्णजीरकः, आसुरी राजिका, कारवि सुगन्धिसूक्ष्मकृष्णजीरकम्। आयामकालादिति यामः प्रहररूपः कालः, तमवधीकृत्य॥ २०॥

प्रस्थत्रयेणेत्यादि।—अयं योगः सुश्रुते कासप्रतिषेधे पठितः। अत्र पञ्चकं पिप्पलीमूलम्, अजमोदा यमानी अन्तःपरिमार्ज्जनत्वात्। अतो यमान्या भागद्वयम्। अग्निश्चित्रकः। पलप्रमाणैरिति प्रत्ये-

### कल्याणगुड़ः ।

प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य ।
चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णाहपुषाजमोदैः ॥
विड़ङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् ॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ।
अनेन सर्व्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः ॥
शाम्यन्ति चायं चिरमन्थराग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं कल्याणको नाम गुड़ः प्रदिष्टः ॥ तैले मनाग् भर्ज्जयन्ति त्रिवृतं चिकित्सकाः ।
मतोक्तमानसाधर्म्म्यात् त्रिसुगन्धं पलं पृथक् ॥३१॥

---

कम्। त्रिवृच्चूर्णं तैले मनाग्भर्ज्जनीयम्। भर्ज्जनेन च तस्य मन्ददोषत्वादतिविरेचकत्वं न भवति। अक्षफलप्रमाणं कर्षम्, व्यवहारस्तु चतुःपञ्चमाषकैरिति। त्रिसुगन्धि त्वगेलापत्रकम्। त्रिवृच्चूर्णसहित ... तैले गुड़मामलकीरसगोलितं प्रदाय पाकः, सिद्धे च लेहे ग्रन्थिकादिचूर्णप्रक्षेप इति व्यवहारो वैद्यानाम्। मतोक्तमानसाधर्म्म्यादिति ग्रन्थिकादिचूर्णस्य प्रत्येकं पलमानयुक्तम्, तत्साहचर्य्यादित्यर्थः ॥ ३१ ॥

कुष्माण्डकानामित्यादि।— कदाचिदपि सम्यक्पक्वानाम्, सम्यक्पाकश्च संवत्सरातीतत्वेनैव भवतीति। ईदृशस्य कुष्माण्डस्य खण्डखण्डीकृतस्य त्यक्तबीजमध्यवल्कलस्य तथाकृतास्तरणस्य किञ्चित् पानीयं दत्त्वा ... निष्पीड्य गलितरसस्य पिष्टस्यातपे किञ्चिच्छुष्कस्य पलशतं ग्राह्यम्. ततस्तस्य घृतशरावचतुष्टये तैलस्य चाष्टपले भर्ज्जनं कार्य्यम्। तत आमलकरसस्य द्वादशशरावेण पञ्चाशद्गुड़पलान्यालोड्य, ततः पूत्वा भर्ज्जितकुष्माण्डादिकमेकीकृत्य पक्तव्यम्। ततो गुड़पाकविधया अवतारिते पिप्पल्यादिचूर्णस्य प्रक्षेप इत्यर्थः। भक्षणमात्रा च प्रायः कर्षार्द्धेनोक्ता ॥ ३२ ॥

कुष्माण्डगुड़कल्याणकम् ।

कुष्माण्डकानां रूढ़ानां सुस्विन्नं निष्कुलत्वचाम् ।
सर्पिःप्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत् ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
धान्यकानि विड़ङ्गानि यमानी मरिचानि च ॥
त्रिफला चाजमोदा च कलिङ्गाजाजीसैन्धवम् ।
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत् ।
तैलस्य च पलान्यष्टौ गुड़पञ्चाशदेव तु ।
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु ॥
यदा दार्वीप्रलेपस्तु तदैनमवतारयेत् ।
यथाशक्ति गुड़ान् कुर्य्यात् कर्षकर्षार्द्धमानकान् ॥
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान् ।
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ॥
ज्वरमानाहहृद्रोगगुल्मोदरविसूचिकाः ।
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम् ॥
वातशोणितवीसर्पान् दद्रुचर्म्महलीमकान् ।
कफपित्तानिलान् सर्व्वान् प्ररूढ़ांश्च व्यपोहति ।
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ॥
तेषां वृष्यञ्च बल्यञ्च वयःस्थापनमेव च ।
गुड़कल्याणकं नाम बन्ध्यानां गर्भदं परम् ॥ २२ ॥

रसपर्पटिका ।

याम्लपित्ते विधातव्या गुड़िका च क्षुधावती ।
तत्र प्रोक्तविधाशुद्धौ समानौ रसगन्धकौ ॥

---

सिद्धफलां रसपर्पटीमाह याम्लेत्यादि ।—तत्रेति तत्र क्षुधावत्यां या विधा यो रसगन्धकगुड़िकाकारो वक्तव्यः तेन शुद्धावित्यर्थः । तत्र

ततो नैपालताम्रादि पिधाय सुकरालितम् ।
पांशुना पूरयेदूर्द्ध्वं सर्व्वां स्थालीं ततोऽनलः ॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
ताम्री ताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका ॥
त्र्यूषणस्य च रक्त्येका विडङ्गस्य च तन्मधु ।
घृतेनालोड्य लेढव्यं प्रथमे दिवसे ततः ॥
रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु ।
स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवर्ज्जितः ॥

---

ताम्रयोगमाह स्थाल्यामित्यादि ।—अत्रापि रसगन्धकौ कुधा- ज्ञीगुड्कोक्तविधया शोधितौ ग्राह्यौ । सुकरालितमिति पिष्टभक्त- सिक्थयन्त्रेण नीरन्ध्रं लेपितमित्यर्थः । पांशुना बालुकया । नालिकां घटीमेकां यावदनलज्वाला स्थाल्या देयेत्यर्थः । त्रिफलाया मिलिता चूर्णरक्तिका, एवं त्रिकटोरपि । सर्व्वमिदं चूर्णं विडङ्गान्तं मधुघृताभ्या- मालोड्य लेह्यः विडङ्गरक्तिका पुनः स्थिरा, न न्यूनाधिकतेत्यर्थः । यदा पुनः कोष्ठविबन्धाध्मानादिषु विरेकोऽपेक्षितो भवति, तदैव परं विडङ्गस्य रक्त्यूर्द्ध्वं ग्राह्यमित्यर्थः । अस्य च पाको यथा - शोधितौ रसगन्धकौ मा १. एतद्द्वयं कज्जलीकृत्य दृढ़नूतनपातिलिकायां स्थाप्यम् । तदुपरि तण्डुलीयशाकमूलचूर्णस्य माषकद्वयमङ्गुलीद्वयेन गृहीत्वा देयम् । अनन्तरमेतत् सर्व्वं कण्टकवेधयोग्येन नैपालताम्र- पञ्चगमानेन कृतताम्रपात्र्या अम्बरीषरसभावितया ढक्कनीयम् । ढक्कित्वा पिष्टभक्तमृत्तिकया ताम्रिकाया रन्ध्रलेपनं कार्य्यम् । ततः स्थालीमध्य- स्थितायां ताम्रिकाया उपरि तां स्थालीं बालुकया पूरयित्वा, तदधो घटिका यावत् ज्वाला देया । एवं कृता ताम्रात् रक्ती १. मिलितत्रिफला- चूर्णरक्ती १. तथा मिलितत्रिकटुचूर्णरक्ती १, विडङ्गचूर्णरक्ती १. एतत् सर्व्वं घृतमधुभ्यामालोड्य लेह्यम् । शीतलजलमनुपेयम् । प्रथमदिने एवं द्वादशदिनपर्य्यन्तं रक्तीमेकां कृत्वा वृद्धिः । ह्रासक्रमोऽपि एवमेव ज्ञेयम् । रसगन्धकलक्षणञ्च योगरत्नाकरे यथा—"मुक्ताफलसमं स्निग्धं घनं

तदा विड़ङ्गत्वधिकं दद्याद्रक्तिद्वयं पुनः ।
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ॥

ग्रहणीमम्लपित्तञ्च क्षयं शूलञ्च सर्व्वदा ।
ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः ॥ ३४ ॥

---

निष्पठलं गुरु । चपलं चपलं शस्तं वदन्ति भिषजांवराः" । चपलमिति रसं द्वितीयं चपलमिति चञ्चलम् । "शुकपिच्छसमच्छायो नवनीतसन-प्रभः । मसृणः कठिनः स्निग्धः श्रेष्ठो गन्धक उच्यते ।" घृतमांसरसादीनां चात्राहारविधिर्बोध्यः ॥ ३४ ॥

इति ग्रहणीचिकित्सा ।



# अथार्शश्चिकित्सा ।



दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्निसाध्यत्वादाद्य उच्यते ॥ १ ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥ २ ॥
शुष्कार्शसां प्रलेपादिक्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥ ३ ॥
स्नुक्क्षीरं रजनीयुक्तं लेपाद् दुर्नामनाशनम् ।
कोषातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥ ४ ॥
अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जोवस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ५ ॥
अर्शोघ्नी गुदगा वर्त्तिर्गुडघोषाफलोद्भवा ।
ज्योतिष्मिकामूलकल्केन लेपोरक्तार्शसां हितः ॥ ६ ॥
तुम्बीवीजं सौद्भिदन्तु काञ्जीपिष्टं गुडीत्रयम् ।
अर्शोहरं गुदस्थं स्यादृधि माहिषमश्नतः ॥ ७ ॥

---

"पूर्व्वोक्तसङ्गत्यैव ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते दुर्नाम्नामित्यादि।—आद्य इति भेषजोपायः। विस्तरेण वक्ष्यमाणां चिकित्सां सारोद्धारेणाह यद्वायोरित्यादि।— चरकस्य। अर्शसैरित्यर्शोरोगयुक्तैः। शुष्कार्शसामित्यादि।—आदिशब्दात् स्वेदादीनां ग्रहणम् ॥१—३॥

लेपादीनाह स्नुक्क्षीरमित्यादि।—स्नुहीक्षीरेण (१) हरिद्राचूर्णमार्द्रं कृत्वा लेपः। उक्तं हि वाभटे "स्नुक्क्षीरार्द्रनिशालेपः" इति। कोषातकी घोषकः। अर्केत्यादौ।—करञ्जस्य त्वक्, सुधाक्षीरमित्यत्र सुधाकाण्डमत्रके वाभटे च दृश्यते। वर्त्तिः फलवर्त्तिः। गुडं जलेन द्रवीकृत्य घोषफलचूर्णं प्रक्षिप्य पक्त्वा वर्त्तिः कार्य्या। ज्योतिष्मिका घोषकः। औद्भिदमुत्कारिकालवणं पांशुलवणं वा ॥ ४—७॥

महारोगेऽपि प्रदेशस्य पथ्या कोषातकीरजः ।
कफेन लेपतो हन्ति लिङ्गवर्तिं न संशयः ॥ ८ ॥
अपामार्गाङ्घ्रिजः क्षारो हरितालेन संयुतः ।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम् ॥ ९ ॥
वातातीसारवद्भिन्नवर्चसोऽर्शांस्युपाचरेत् ।
उदावर्त्तविधानेन गाढविट्कानि चासकृत् ॥ १० ॥
विड्विबन्धे हितं तक्रं यमानीविड्संयुतम् ।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम् ॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ॥ ११ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ १२ ॥
पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा ।
गुदजान्नाशयत्याशु योजिता सगुडाभया ॥ १३ ॥
सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥ १४ ॥

---

[illegible]

[illegible]

तिलारुष्करयोगश्च भक्षयेदग्निवर्द्धनम्।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम्॥ १५॥
तिलभल्लातकं पथ्या गुडश्चेति समांशिकम्।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम्॥ १६॥
गोमूत्रव्यूषितां दद्यात् सगुडां वा हरीतकीम्।
पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत्॥ १७॥
मृत्तिकालिप्तं शौरणं कन्दं पक्त्वाग्नौ पुटपाकवत्।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये॥ १८॥
स्विन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन।
तद्घृतभृष्टं युक्तं गुडेनातृप्तितोऽश्नन्ति॥
पिबन्ति च तक्रं नूनं तस्माच्च वातिदृढगुदजानि।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण॥ १९॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम्॥ २०॥

---

[illegible] एकोयोगः। वा शब्दः पूर्व्वयोगापेक्षया, चरके हि "सगुडा-[illegible] [illegible]येत् पौर्व्वभक्तिकीम्" इत्यभिधाय तदनन्तरमयं योग [illegible] भिन्नयोगत्वेन न पौनरुक्त्यं स्यादिति। एतेन गोमूत्रव्यूषि-[illegible] पुनरपि [illegible]गुड़हरीतक्यभिहितेति [illegible] योगद्वय[illegible] [illegible]त्वात् इति। पञ्चकोलयुक्त-[illegible]॥ १२—१७॥

[illegible] वाभटः। शौरणं कन्दमिति वन्यसूरणानु-[illegible] [illegible]पीत्यर्थः। स्विन्नमिति-[illegible] पङ्कगोम[illegible]तिहारयरि[illegible]नेन उत्स्वेद्य [illegible] भक्षयेदिति; असितानामित्यादि।— [illegible] पश्चा[illegible]वारि खादत इति [illegible]॥ १८—२०॥

## दन्त्यरिष्टम्।

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत्॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत्।
रसे चतुर्थशेषे तु पूतशीते प्रदापयेत्॥
तुलां गुडस्य तत्तिष्ठेन्मासार्द्धं घृतभाजने।
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते॥
ग्रहणीपाण्डुरोगघ्नं वातवर्च्चोऽनुलोमनम्।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः॥
पात्रेऽरिष्टादिसन्धानं धातकीलोध्रलेपिते॥ २१॥

## प्राणदा गुड़िका।

सनागराष्करवृद्धदारकं गुड़ेन योमोदकमत्त्युदारकम्।
अशेषदुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम्।
चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड़ः॥ २२॥

---

दन्तीत्यादि।—चरकस्य। अत्र उभयोरितिवचनबलात् पञ्चमूलयोः प्रत्येकं भागा ग्राह्याः, त्रिपलं त्रिफलाया इत्यत्र तु निर्देशस्य मानप्रधानत्वात् मिलितत्रिफलाया एव पलत्रयं ग्राह्यम्। मासार्द्धमिति तन्त्रान्तरे तु मासमित्युक्तं यथा "त्रिफलादशमूलाग्निनिकुम्भानां पलं पलम्। वारिद्रोणे स्थितः पादशेषोगुड़तुलायुतः। आज्यभाण्डे स्थितोमासं दन्त्यरिष्टो निषेवितः" इति, उभयमपि प्रमाणं स्मृतिद्वैधवत्॥ २१॥

सनागरेत्यादि।—अरुष्करं भल्लातकम्। वृद्धमित्यत्र आत्मानमिति शेषः। उदारकमिति महाफलम्। अस्य योगस्य चतःसमसंज्ञामाह भव्यदत्तः। तन्मते समेनैव गुड़ेन किञ्चिज्जलं दत्त्वाग्नौ विपक्वेन मोदकविधानम्। चक्रस्तु मोदकत्वात् गुड़स्य द्वैगुण्यमाह। अन्ये तु मोदके द्विगुणोगुड़ इति कस्यचित् अभियुक्तस्य वाक्यमनार्षमिति कृत्वा नाद्रियन्ते, उक्तरीत्या समेनापि गुड़ेन मोदकत्वोपपत्तेरिति॥ २२॥

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च।
पिप्पल्याः कुड़वार्द्धञ्च चव्यायाः पलमेव च।
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात्।
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वङ्मृणालयोः।
गुड़ात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत्।
अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता।
पूर्व्वं भक्ष्या तु पश्चात्तु भोजनस्य यथाबलम्।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत् तथा।
हन्यादर्शांसि सर्व्वाणि सहजान्यस्रजानि च।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च।
पानात्यये मूत्रकृच्छ्रे वातरोगगलग्रहे।
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च।
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा।
श्वासकासपरीतानामेषा स्यादमृतोपमा।

---

त्रिपलमित्यादि।—चतुर्थं मरिचस्येति पलमेकमित्यर्थः। केशरस्य नागकेशरस्य। त्वङ्मृणालयोरिति त्वक् गुड़त्वक्, मृणालमुशीरम्, अनयोर्म्मिलित्वा कर्षः। पूर्व्वं भक्ष्या तु पश्चाच्च भोजनस्येति भोजनस्य पूर्व्वं भोजनाव्यवहितपूर्व्वकाले गुड़िका भक्ष्या, पश्चाच्च मद्यादिकं पिबेदिति योज्यम्। नतु मण्डुरादिवत् भोजनस्य पूर्व्वपश्चाद्भावेन भक्ष्येति कल्पनीयम्. अर्शांसि कांचिदप्यस्य त्रिधेरहष्टत्वा‸। मद्यं वातकफेऽनुपेयम्, मांसरसो वाते, पित्ते क्षीरं, मुद्गयूषः कफे, तोयमुष्णं वातकफे, एवमन्यत्राप्यनुपानभेदो दोषभेदेन कल्पनीयः। वाभटे पुनरयं योगो ग्रहणीचिकित्सिते पठ्यते, तत्र चतुर्जातकमुशीरञ्च प्रत्येकं कर्षमानमुक्तं यथा "तालीशपत्रमरिचचव्यानान्तु पलं पलम्। कृष्णातन्मूलयोर्द्धे द्वे पले शुण्ठीपलत्रयम्। चतुर्जातमुशीरञ्च कार्षिकं सूक्ष्मचूर्णि-

कात्यायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥ २४॥

माणिभद्रमोदकः।

विडङ्गसारामलकाभयानां पलं पलं स्यात् त्रिवृतात्रयञ्च।
गुडस्य षड्द्वादशभागयुक्ता मासेन त्रिंशद् गुडिका विधेयाः।
निवारणो यक्षवरेण सृष्टः समाणिभद्रः किल शाक्यभिक्षवे।
अयं हि कासक्षयकुष्ठनाशनो भगन्दरप्लीहजलोदरार्शसाम्।
यथेष्टचेष्टान्नविहारसेवी अनेन वृद्धस्तरुणो भवेच्च ॥ २५॥

स्वल्पशूरणमोदकः।

मरिचमहौषधचित्रकस्य शूरणभागा यथोत्तरं द्विगुणाः।
सर्व्वसमो गुडभागः सेव्योऽयं मोदकः प्रसिद्धगुणः।
ज्वलनं ज्वलयति जठरमुन्मूलयति शूलगुल्मगदान्।
निःशेषयति श्लीपदमर्शांसि नाशयत्याशु ॥ २६॥

वृहच्छूरणमोदकः।

शूरणषोडशभागा वह्नेरष्टौ महौषधस्यातः।
अर्द्धेन भागयुक्तिर्मरिचस्य च ततोऽपि चार्द्धेन।

---

कन्दस्तु द्विगुण इति षोड़शपलः द्विगुणेनः गुड़ेनेति समुदितचूर्णापेक्षया। अक्षसम्मितानिति कर्षसम्मितान् व्यवहारस्तु पञ्चमाषकैरिति ॥ २४ ॥

विड़ङ्गसारेत्यादौ त्रिवृतात्रयमिति त्रिवृतायाः पलत्रयम्, गुड़स्य च षट्पलानि द्वादशभागयुक्ता इति द्वादशपलरूपांशभागेन युक्ताः कृताः। मासेनेति मासेनोपयोक्तव्यमिति शेषः। अयमर्थः, द्वादशपलानि विभज्य मासेनोपयोक्तव्यम्। त्रिंशद्गुड़िकाः समभागेन कार्य्या इति तेन एकैकगुड़िका षड्रक्तिकाधिकनवमाषकोपेतकर्षमाना भवति। कर्ष १, माष ९, रति ६। व्यवहारस्तु दशभिरष्टाभिर्वा माषकैरिति। निवारण इत्यत्र गुदजानामिति शेषः। देश इत्यन्ये। स्वल्पशूरणमोदकः ॥ २५ ॥ २६ ॥

त्रिफला कणा समूला ताम्रीशास्त्ककरक्रिमिघ्नानाम् ।
भागा महौषधसमा दहनांशा तालमूली च ।
भागः शूरणतुलोप्रदातव्यो वृद्धदारकस्यापि ।
भल्लैले मरिचांशे सर्व्वाण्येकत्र सञ्चूर्ण्य ।
द्विगुणेन गुड़ेन युतः सेव्योऽयं मोदकः प्रकामघनैः ॥
गुरुदृष्यभोज्यरहितैश्चितरेषूपद्रवं कुर्य्यात् ।
भस्मकमनेन जनितं पूर्व्वमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि येन तौ महाशनौ जातौ ।
अग्निबलवृद्धिहेतुर्न केवलं शूरणो महावीर्य्यः ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेषः ।
श्वयथुश्लीपदजिद् ग्रहणीमपि कफवातसम्भूताम् ।
न शयति वलीपलितं मेधां कुरुते रसत्वञ्च ।
हिक्काश्वासकासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानमुग्राथोग्रं हन्ति च रसायनं पुंसाम् ॥ २७ ॥

शूरणपिण्डी ।

चूर्णीकृताः षोड़श शूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्द्वौ मरिचस्य चैको गुड़ेन दुर्नामजयाय पिण्डी ॥

---

शूरणषोड़शभागा इत्यादौ त्रिफलाकणासमूलाताम्रीशास्त्ककर-क्रिमिघ्नानां भागा महौषधसमा इति त्रिफलादीनां प्रत्येकं महौषधसम भागा, त्रिफलायाश्च प्रत्येकाम् । कणा समूला इति पिप्पल्याः फलं मूल-ञ्चेत्यर्थः । समूला इत्यत्र स्त्रियाः पुम्बद्भाषितपुंस्कादनूङ इत्यादिना पुम्बद्भावो नोद्भावनीयः । तस्योत्तरपदे स्त्रीप्रत्ययान्ते परतो विधानात् । विशेषणत्वादस्य पूर्व्वनिपातोऽपि नोद्भावनीयः, विवक्षावशादस्यैव विशेष्यता । दहनांशकः भल्लैले मरिचांश प्रत्येकं, भल्लं गुड़त्वक् । गुरुदृष्यभोज्यरहितैश्चितरेष्विति प्रकामघनप्रतियोगितया दरिद्रेषु उप-द्रवमिति व्याख्यातम् ॥ २८ ॥

चूर्णीकृता इत्यादि ।—वाभटस्य । मोदकवदिति द्विगुण इत्यर्थः ॥२८॥

पिण्डतां गुडो मोदकवत् पिण्डत्वापत्तिकारकः ॥ २८ ॥

व्योषाद्यं चूर्णम्

व्योषाग्निरुष्करविडङ्गतिलाभयानाम्
चूर्णं गुडेन सहितन्तु सदोपयोज्यम् ।
दुर्नामकुष्ठगरशोथशकृद्विबन्धा-
नग्नेर्जयत्यबलतां क्रिमिपाण्डुताञ्च ॥ २९ ॥

समशर्कं चूर्णम् ।

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु ॥ ३० ॥

लवणोत्तमाद्यं चूर्णम् ।

लवणोत्तमवह्निकलिङ्गयवान्
चिरबिल्वमहापिचुमर्द्दयुतान् ।

---

व्योषाग्नीत्यादि ।—अत्र गुड़स्यैकभागत्वं चूर्णयोगत्वात् इति । किन्त्वयं योगे विभीतकामलकयोगात् गुड़िकयापि क्रियते यदाह वा-भटः "गुड़व्योषवरारेणुतिलारुष्करचित्रकैः । अर्शांसि हन्ति गुड़िका त्वग्विकारांश्च शोभिता इति । २९ ॥

शुण्ठीत्यादि ।—नागं नागकेशरचूर्णम्, दलं तेजपत्रम् । क्रमविवर्द्धितमूर्द्धमन्त्यादिति अन्तस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकद्वित्र्यादिक्रमेण वर्द्धितमित्यर्थः । समसितमिति—मिलितसर्वचूर्णसमशर्करम्, श्वसनमिति श्वासः ॥ ३० ॥

लवणोत्तममित्यादि ।—वाभटस्य । लवणोत्तमं सैन्धवं, वह्निश्चित्रकः, कलिङ्गयव इन्द्रयवः । चिरबिल्वः करञ्जः तस्य मूलम्, यत्पुनरस्य सुश्रुते फलग्रहणमुक्तं तच्छोधने ज्ञेयम् । महापिचुमर्द्दः पर्व्वतनिम्बः,

पिब सप्तदिनं मथितालुलितान्
यदि मर्द्दितुमिच्छसि पायुरुहान् ॥ ३१ ॥

नागार्ज्जुनप्रयोगः ।

त्रिफला पञ्चलवणं कुष्ठं कटुकरोहिणी ।
देवदारुविडङ्गानि पिचुमर्द्द फलानि च ॥
बला चातिबला चैव हरिद्रे द्वे सुवर्च्चला ।
एतत् सम्भृतसम्भारं करञ्जत्वग्रसेन च ॥
पिष्ट्वा च गुड़िकां कृत्वा बदरास्थिसमां बुधः ।
एकैकां तां समुद्धृत्य रोगे रोगे पृथक् पृथक् ॥
उष्णेन वारिणा पीता शान्तिमग्निं प्रदीपयेत् ।
अर्शांसि हन्ति तक्रेण गुल्ममम्लेन निर्हरेत् ॥
जन्तुदष्टन्तु तोयेन त्वग्दोषं खदिराम्बुना ।
मूत्रकृच्छ्रन्तु तोयेन हृद्रोगं तैलसंयुता ॥
इन्द्रस्वरससंयुक्ता सर्व्वज्वरविनाशिनी ।
मातुलुङ्गरसेनाथ सद्यः शूलहरी स्मृता ॥
कपित्थतिन्दुकानान्तु रसेन सह मिश्रिता ।
विषाणि हन्ति सर्व्वाणि पानाशनप्रयोगतः ॥
गोमूत्रद्रवसंयुक्ता हन्यात् कुष्ठानि सर्व्वशः ।

---

निम्बसहचरपल्लवयोरित्यत्र, यासायनीति लोकख्याता। ग्रामनिम्ब ... पर्व्वतमवहेन पर्व्वतनिम्ब इत्याङुरन्तो, अस्य त्वग ग्राह्या. मथितालुलितान् इति तक्रेणालोड़ितान् ॥ ३१ ॥

त्रिफलेत्यादौ अतिबला श्वेतबला. सुवर्च्चला सूर्य्यावर्त्त । सम्भृतसम्भारमिति पाठः । संहत्य सम्भारमिति पाठेऽपि सम्भारं त्रिफलाद्यौषधजातं संहृत्य मेलयित्वा करञ्जत्वग्रसेन पिष्टेति योज्यम् । पृथक् पृथक् इत्यस्य पानाशनप्रयोगत इत्यनेन वक्ष्यमाणेन सम्बन्धः । तेन रोगे रोगे

लेहं पचेत्तु तं तावद् यावद्दर्व्वीप्रलेपनम् ।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान् ।
एलात्वङ्मरिचञ्चापि गजाह्वाञ्चापि षट्पलम् ॥
द्वात्रिंशतं पलान्येवं चूर्णं दत्त्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥
पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम् ।
जयेदर्शांसि सर्व्वाणि तथा सर्व्वोदराणि च ॥
दीपयेद् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति ।
अपीनसं प्रतिश्यायं माढ्यवातं तथैव च ॥
अयं सर्व्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामारिरयञ्चाशु दृष्टोवारसहस्रशः ॥
भवन्त्येनं प्रयुञ्जानाः शतवर्षं निरामयाः ।
आयुषो दैर्घ्यजननो बलीपलितनाशनः ॥
रसायनवरश्चैष मेधाजनन उत्तमः ।
गुडः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः ।
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते ॥
यदा दर्व्वीप्रलेपः स्याद् यद्वा तन्तुलीभवेत् ।
एष पाको गुडादीनां सर्व्वेषां परिकीर्त्तितम् ॥

---

कोष्णाम्बुमिति क्षीरादिकं ज्ञेयम् । न चात्र भल्लातकप्रवेशादुष्णजलं व्ययुक्तमिति शङ्कनीयम् । यतो भल्लातकस्नेह एव उष्णजलनिषेधो न भल्लातकयोगमात्रे । तथाचोक्तं "उष्णोदकानुपानन्तु स्नेहानामथ शस्यते । ऋते भल्लातकस्नेहात् तत्र तोयन्तु शीतलम्" इति । वृद्धास्तु शीततोयेन व्यवहरन्ति । तोयपूर्णे यदा पात्रे इत्यादि गुडपाकल-

सुखमर्द्दः सुखस्पर्शो गुड़ः पाकमुपागतः।
पीड़ितो भजते मुद्रां गन्धवर्णरसान्वितः॥ ३४॥

गुड़ भल्लातकम्।

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत्।
पादशेषे रसे तस्मिन् पचेद् गुड़तुलां भिषक्॥
भल्लातकसहस्रार्द्धं छित्वा तत्रैव दापयेत्।
सिद्धेऽस्मिंस्त्रिफलाव्योषयमानीमुस्तसैन्धवम्॥
कर्षांशसम्मितं दद्यात् त्वगेलापत्रकेशरम्।
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः॥
कुष्ठार्शःकामलामेहग्रहणीगुल्मपाण्डुताः।
हन्यात् प्लीहोदरं कासक्रिमिरोगभगन्दरान्॥
गुड़भल्लातको ह्येष श्रेष्ठश्चार्शोविकारिणाम्॥ ३५॥

गुडभल्लातकः।

दशमूलप्रभताभार्गीश्वदंष्ट्राचित्रकं शटी।
भल्लातकसहस्रञ्च पलांशं क्वाथयेद् बुधः॥
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत्।

---

च्वणम्। वृद्धास्तु तोयपूर्णपात्रोपरि कोमलकदलीपत्रं दत्त्वा गुड़स्य मुद्रापाकं निरूपयन्ति। न मज्जति न भवति पतितः। पात्राधोगतोऽपि न शीर्यते न विशीर्णतां याति॥ ३४॥

गुड़भल्लातके भल्लातकसहस्रे द्वे इति भल्लातक गुडकानां सहस्रद्वयम् एवं सर्वत्र फलानि कार्यानि इति। यथा सैन्धवाद्यतैले भल्लातकान्यपि विंशतिरिति। यत्र तु फलादिसङ्ख्यानियमस्तत्रैव व्यवहर्त्तव्यम्। यथा वाङ्गशालगुड़े "फलान्यष्टावक्षुरादिति"। एवं हरीतक्यादावपि ज्ञेयम्। भल्लातकसहस्रार्द्धं छित्त्वेति द्विधा कृत्वा गुड़सहितक्वाथएव पक्तव्यं हरीतकीवत्। त्रिफलादीनाञ्च प्रत्येकमेव कर्षमानम्॥ ३५॥

दत्त्वा गुड़तुलामेकां लेहीभूतं समुद्धरेत् ।
माक्षिकं पिप्पलीतैलमौरुबूकञ्च दापयेत् ॥
कुड़वं कुड़वञ्चात्र त्वगेलामरिचन्तथा ॥
अर्शःकासमुदावर्त्तं पाण्डुत्वं शोथमेव च ।
नाशयेद्वह्निसादञ्च गुड़भल्लातकः स्मृतः ॥ २६ ॥

चव्याद्यं घृतम् ।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ।
यमानीं पिप्पलीमूलमुभे च बिड़सैन्धवे ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति ॥ २७ ॥

---

द्वितीयगुड़भल्लातके पलांशमिति दशमूलादिभिः सम्बध्यते । भल्लातकसहस्रञ्च पूर्ववदाकृतिमानात् क्राथयेदिति पूर्वोक्तभल्लातकगुड़सम्वादात् अत्रापि जलद्रोणे किंवा क्वाथ्यद्रव्येभ्योऽष्टगुणे जले । माक्षिकं मधु, औरुबुकञ्च तैलमेरण्डतैलं एतच्च प्रथमतः क्षिप्त्वैव गुड़ः पक्तव्यः । सिद्धे मधुपिप्पलीचूर्णादि प्रक्षेप्यम् । एकः कुड़वशब्दो माक्षिकादिभिः सम्बध्यते । अपरश्च त्वगेलादिभिः । माक्षिकैरण्डतैलयोश्च द्रवत्वात् प्रत्येकमष्टौ पलानि । त्वगेलामरिचादीनान्तु कुड़वं मिलित्वेति केचित् प्रत्येकमित्यन्ये । एतदेव युक्तं द्रव्यप्रधानत्वात् निर्द्देशस्य । आयुर्वेदसारेऽप्युक्तम् "भल्लातकसहस्रं हि शटीदहनगोक्षुरान् । दशमूल्यमराभार्गीः पलांशाः संविपाच्य च । दत्त्वा गुड़तुलां तत्र लेहवत् साधु साधयेत् । पिप्पल्या मधुनः सिद्धे तैलस्यौरुबुकस्य च । प्रत्येकं कुड़वं दत्त्वा त्वगेलामरिचस्य च । मिश्रितं भक्षयेन्नित्यमर्शःकासोदरापहम्" इति अतएव आयुर्वेदसारसम्वादात् कुड़वार्द्धञ्च त्वगेलामरिचमिति पाठान्तरमपि प्रतिक्षेपणीयम् ॥ २६ ॥

व्योषाद्यं घृतम्।

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि।
साधितं पिबतः सर्पिः पतन्त्यर्शांस्यसंशयम्॥३८॥

उदकषट्पलं घृतम्।

सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके।
सक्षीरं घृतप्रस्थं ज्वरार्शःशोथकासनुत्॥३९॥

सिंहामृतं घृतम्।

पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृताशतम्।
अग्नित्रिफलाव्योषपूतिकत्वक्कलिङ्गकैः॥
सकाश्मर्य्यविडङ्गैस्तु सिद्धं दुर्नाममेहनुत्।
घृतं सिंहामृतं नाम बोधिसत्त्वेन भाषितम्॥४०॥

---

चव्यमित्यादि।—चरकस्य। कुस्तुम्बुरु धनीयकं जाते दध्नीति सुजाते। अत्र केचित् "स्वरसक्षीरमाङ्गल्ये पाको यत्रेरितः क्वचित्। चतुर्गुणं जलं तत्र वीर्य्याधानार्थमावपेत्" इत्याहुः। परिस्रावमिति गुदपरिस्रावम्। चव्याद्यं घृतम्। व्योषाद्यं घृतं तथा उदकषट्पलं घृतम्॥३७-३९॥

पचेदित्यादौ—कण्टकारीगुडूच्योर्मिलित्वा शतं निर्द्देशस्य मानप्रधानत्वात्। अन्ये तु द्वयमपृथक्त्वदर्शनात् प्रत्येकमेव शतमाहुः। चतुर्द्रोणे द्रोणविशेषः अतोऽत्र घृताढकं बोध्यम्। चतुर्गुणेन पाकस्योत्सर्गसिद्धत्वात्। अस्य पक्षे तु षोड़शगुणत्वमेव पाकस्य। अग्निरत्र चित्रकः। पूतीकस्य करञ्जस्य त्वक्। काश्मर्य्यं गाम्भारीफलम्। कल्कस्य तु स्नेहापेक्षया पादिकत्वमेव। बोधिसत्त्वेनेति योगिविशेषेण। अन्ये तु लोकनाथेनेत्याहुः॥४०॥

## पिप्पल्याद्यं तैलम्।

पिप्पली मधुकं विल्वं शताह्वां मदनं वचाम्।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम्।
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम्॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्ब्बल्यमानाहं वङ्‌क्षणाश्रयम्॥
पिच्छास्रावं गुदे शोथं वातवर्च्चोविनिग्रहम्।
उत्थानं बहुशश्चैव जयेत्तच्चानुवासनात्॥ ४१॥
रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक्।
दुष्टास्रे निगृहीते तु शूलानाहावसृग्गदाः॥
लाजैः पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा।
हन्त्यस्रस्रावं तथा वलापृश्निपर्णीभ्याम्॥

---

पिप्पल्यादितैले विल्वं विल्वशलाटुः पुष्कराख्यमिति पुष्कर-मूलं तदभावे कुष्ठमेव द्विगुणं ग्राह्यम्। अत्र द्रवान्तरस्यानिर्द्दिष्ट-त्वात् द्विगुणएव पाक इति केचित्। अन्ये तु चतुर्गुणपाकस्य उत्सर्गसिद्धत्वात् जलमप्यत्र द्विगुणमिच्छन्ति। अपरेतु "क्षीरदध्यारना-लैस्तु पाको यत्रेरितः क्वचित्। जलं चतुर्गुणं तत्र वीर्य्याधानार्थमाव-पेत्" इति वचनात् जलमपि चतुर्गुणमाचक्षते, युक्तञ्चैतत् यदाह वृद्धसु-श्रुतः "शटीपुष्करकृष्णाह्वा मदनामरदारुभिः। शताह्वाकुष्ठयष्ट्याह्वा वचाविल्वहुताशनैः। सुपिष्टं द्विगुणं क्षीरं तैलं तोयचतुर्गुणम्। पक्वा वस्तौ निधातव्यं मूढ़वातानुलोमनम् इति॥ ४॥॥

रक्तार्शसां चिकित्सामाह रक्तार्शसामित्यादि।—उपेक्षेत न तु स्तम्भ-येत्। निगृहीत इति स्तम्भिते। असृग्गदा इति वीसर्पादयः। लाजैः पेयेत्यादि।—चुक्रिका चाङ्गेरी, केशरं नागकेशरम्। तथा बलापृ-श्निपर्णीभ्यामिति द्वितीयोयोगः। तत्रेत्यनेन लाजैः पेयेत्यनुवर्त्तते। शक्रकाथ इत्यादि।—शक्रः कुटजः; उक्तं हि रत्नकोषे "इन्द्रकः शक्र-

शक्रक्वाथः सविश्वो वा किंवा बिल्वाशलाटवः ।
योज्या रक्तार्शसैस्तद्वत् ज्योत्स्निकामूललेपनम् ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासात् गुदजाः शाम्यन्ति रक्तवहाः ॥
समङ्गोत्पलमोचाह्वकिरीटतिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥ ४२ ॥

कुटजलेहः ।

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥

---

पर्यायो वत्सको गिरिमल्लिका" इति । तद्वल्कलक्वाथः, उक्तं चरके "कुटजत्वङ्निर्यूहः सनागरः स्निग्धो रक्तसंग्रहणः" इति । वाभटेऽप्युक्तं "सकफे प्रपिबेत् पाक्यं शुण्ठीकुटजवल्कजम्" इति । निश्चलस्तु इन्द्रयवक्वाथ इत्याह । सनागर इत्यत्र नागरः स च प्रक्षेपविधिनेति केचित् ; अन्ये तु उक्तवाभटवचनसम्वादात् शुण्ठीकुटजवल्कलयोः क्वाथ इत्याहुः । बिल्वशलाटव इत्यत्रापि सनागर इति योज्यम् । अन्ये तु केवलं बिल्वं पिष्ट्वा पेयमित्याहुः । ज्योत्स्निका कोषातकी घोषकभेदः । नवनीततिलाभ्यासादित्यादि ।—योगत्रयमेतत् । अत्र केशरं पद्मकेशरं रक्तस्तम्भनत्वात्, यदाह वाभटः "शर्कराम्भोजकिञ्जल्कसहितं सह वा तिलैः । अभ्यस्तं रक्तगुदजान् नवनीतं नियच्छति" इति, आधुनिकास्तु नागकेशरेण व्यवहरन्ति । दधिसरस्य मथितं तक्रं दधिसरमथितम्, उक्तं हि जतूकर्णे "नवनीतं तिलैर्युक्तं शर्करा केशरेण वा ; नवनीतं घृतं वाजं दध्नो वा खजितः सरः" इति । समङ्गेत्यादि ।—समङ्गा वराहक्रान्ता, उत्पलं नीलोत्पलम्, मोचकं शाल्मलीवेष्टकं, किरीटं पट्टिकालोध्रम्, एषां कल्कश्छागक्षीरेणालोड्य पेयः । उक्तं हि वाभटे "लोध्रं तिलं मोचरसं समङ्गां चन्दनोत्पलम् । पाययित्वाजदुग्धेन शालीनेव भोजयेत्" इति । अन्ये तु क्षीरपरिभाषया छागक्षीरं पक्त्वा पेयमित्याहुः ॥ ४२ ॥

वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम् ।
भल्लातकं विडङ्गानि त्रिकटु त्रिफलां तथा ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां बिल्वं प्रत्येकञ्च पलं पलम् ॥
त्रिंशत्पलानि गुड़स्य चूर्णीकृत्य निधापयेत् ।
मधुनः कुड़वं दद्याद् घृतस्य कुड़वन्तथा ॥
एष लेहः शमयति चार्शोरक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
ये च दुर्नामजा रोगा स्तान् सर्व्वान् नाशयत्यपि ।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥
ग्रहणीमार्द्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपानं घृतं दद्यात् मधु तक्रं जलं पयः ।
रोगानीकविनाशाय कौटजो लेह उच्यते ॥ ४२ ॥

कुटजरसक्रिया ।

कुटजत्वचो विपाच्यं शतपलमार्द्रं महेन्द्रसलिलेन ।
यावत् स्याद्रसं तद्द्रव्यं स रसस्ततो ग्राह्यः ॥
मोचरसः समङ्गा फलिनी पलांशिभिस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥

---

कुटजत्वक्पलमित्यत्र केचित् पलस्थाने फलमिति पठन्ति, तन्मते कुटजत्वक्फलयो र्मिलित्वैव पलशतम् । चन्द्र टेऽष्टभागावशिष्टमित्यत्र चतुर्भागावशिष्टमिति पठ्यते । अत्र घृतकुड़वं प्रथमं दत्त्वा लेहः पक्तव्यः, सिद्धे तस्मिन् भल्लातकादिचूर्णप्रक्षेपः । मधुनः कुड़वोऽष्टौ पलानि, घृतकुड़वोऽप्येवम् कुड़वद्वैगुण्यन्तु पूर्व्वमेव स्थापितमिति ॥ ४२ ॥

कुटजत्वच इत्यादि ।—अत्र पलशतं तुला, तेन "तुलाद्रव्ये जलद्रोणः" इति वचनात् द्रोणमात्रं जलं ग्राह्यम् । तच्च यावत् स्याद्रसमिति वचनाच्चतुर्भागावशिष्टं कार्य्यम् । उक्तं हि, "चतुर्भागजले प्रायो

पूतोत्क्वथितः सान्द्रः सरसो दार्व्वीप्रलेपनो ग्राह्यः ।
माता कालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥
छगलीपयसा युक्ता पेया मण्डेनाथवा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत ॥
रक्तमुद्ग्जातीसारं शूलं सासृग्गुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम् ॥ ४४ ॥

कुटजाद्यं घृतम् ।

कुटजफलवल्ककेशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूलरक्तार्शसां भिषजा ॥ ४५ ॥

सुनिषण्णकचाङ्गेरीघृतम् ।

अवाक्पुष्पी बला दार्व्वी पृश्निपर्णी त्रिकण्टकः ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥

---

द्रव्यं गतरसं भवेत्" इति । अन्ये तु तन्त्रान्तरीययोगान्तरे, "द्रोणेऽम्भसः पलशतं विपाच्य कुटजत्वचोऽष्टभागस्य" इत्यष्टभागावशिष्टदर्शनात्, अत्राप्यष्टभागावशेषः क्वाथोग्राह्य इत्याहुः । व्यवहारस्तु पूर्व्वैव । महेन्द्र सलिलमान्तरीक्षजलम् । तदभावे भूमिस्थजलं तदनुकारि ग्राह्यम् । यदुक्तं "किञ्चित्कषायानुरसं तनु लघु शीतं सुगन्धि सुरसञ्च । अनभिष्यन्दि च यत् तत्क्षितिस्थमैन्द्रवत् ज्ञेयम्" । फलिनी प्रियङ्गुः । दर्व्वीप्रलेपनो ग्राह्यः इति दर्व्वीप्रलेपावस्थायामवतारणीय इत्यर्थः । तेन रसक्रिया लेहरूपेव, वाभटेऽप्युक्तम् "पक्वावलेहं लीढ्वा च तद्यथाग्निबलं पिबेत्" इत्यादि । उभयभागमिति यद्यपि युगपदूर्द्ध्वाधः प्रवृत्तरक्तपित्तस्यासाध्यत्वम्, यथाप्युभयभागं हन्तीत्यस्य क्रमेणोर्द्ध्वमधोगञ्च हन्तीत्यर्थः । तत्राप्यधोगस्य याप्यत्वात्, तत् प्रतियापनमेव निहन्त्यादित्यस्यार्थोऽत्रेयः । अन्ये तु योगशक्तेरचिन्त्यत्वात् असाध्यमपि हन्तीत्यर्थः ॥ ४४ ॥

कुटजाद्यघृते कुटजस्य फलं वल्कलञ्च, वल्कशब्दो वल्कलवचनः कोषिन्तु वल्कलमिति पाठः । अत्र जलं चतुर्गुणमर्थवशात् ॥ ४५ ॥

कषाय एष पेष्यास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषे स्थिरा ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका ।
बिल्वं मोचरसं पाठा भागाः स्युः कार्षिकाः पृथक् ॥
चतुःप्रस्थशृतं प्रस्थं कषायमवतारयेत् ।
त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥
सुनिषण्णकचाङ्गेर्य्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्पिरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥
उत्थाने चातिबहुशः शोथशूलगुदामये ।
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि ॥

---

अवाक्पुष्पीत्यादि ।— अवाक्पुष्पी हेठयष्टी, एषाञ्चाष्टानां प्रत्येकं पलद्वयमिति मिलित्वा षोड़शपलं क्वाथ्यं भवति । तथा सुनिषण्णकचाङ्गेर्य्यो र्मिलित्वा प्रस्थद्वयं मानप्रधानत्वान्निर्द्दिष्टमस्य । वीरा क्षत्र क्षीरकाकोली । चतुःप्रस्थशृतं प्रस्थमित्यादि यद्यपि षोड़शपले क्वाथ्ये चतुःप्रस्थं जलमुत्सर्गसिद्धमेव तथा शेषेऽपि चतुर्थो भागः प्रस्थ एव भवति, तथापि यदेतच्चतुःप्रस्थशृतमित्यादि वचनं तत्क्वाथ्याच्चतुर्गुणं वारीत्यादि परिभाषायाः सूचकं ज्ञेयम् । तथा "त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः" इत्यपि वचनं द्रवद्वैगुण्यपरिभाषासूचकत्वेनैव ज्ञेयम् । एतदेव दृष्ट्वा दृढबलसंस्कारेऽपि द्रवद्वैगुण्यं मुक्तम् । किंवा परिभाषासिद्धमपि द्रवद्वैगुण्यं यदिह निर्द्दिशति, तद्द्रवद्वैगुण्यपरिभाषा क्वचिद्बाधितापि भवतीति सूचयति । तेन आढ़कप्रस्थादिकं गृहीत्वैव द्वैगुण्यं, न कुड़वादर्व्वाक् इत्यर्थः सिद्धो भवति ।

प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ४६ ॥

क्षारः ।

प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्व्वकम् ।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाचरेत् ॥
आढ़कन्त्वेकमादाय जलद्रोणे पचेद्भिषक् ।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥
शङ्खचूर्णस्य कुड़वं प्रक्षिप्य विपचेत् पुनः ।
शनैः शनैर्मृदग्नौ तु यावत् सान्द्रतनुर्भवेत् ॥
सर्जिकायवशूकाभ्यां शटीमरिचपिप्पली ।
वचा चातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥

---

अन्ये तु दार्ढ्यार्थंशयितशिष्यबुद्धिदृढ़ार्थमेतद्वचनमित्याहुः । त्रिंशत्-पलविशेषणतया तत्रापि द्विपलाधिकानीति नर्द्देशो युज्यते, तत्रापि प्रस्थविशेषणतया पुंलिङ्गस्य एकवचनस्य च निर्द्देशः समर्थनीयः । तत्स्थाने बहुश इति लोकमोकातिसरणे ॥ ४६ ॥

इदानीं क्षारपाकविधिमाह प्रशस्त इत्यादि । कालमुष्ककः कृष्णपुष्पो घण्टापाटलिः, स एव श्रेष्ठगुणः. यदाह निघण्टुकारः "श्वेतपुष्पः कृष्णपुष्पो रक्तपुष्पस्तथैव च । पीतोऽन्योऽपि वरस्तेषु कृष्णपुष्पः प्रकीर्त्तितः" इति । तस्य च काष्ठं तिलनालैर्दग्धा भस्म कर्त्तव्यम्, इत्येव सुश्रुता-भिधानात् । आढ़कमिति भस्मनश्चतुःषष्टिपलानि, जलद्रोण इति द्वैगुण्याच्चतुःषष्टिशरावे । अन्ये तु अत्र द्वैगुण्यं नेच्छन्ति, शङ्खचूर्णस्य कुड़वश्चतुःपलः षोड़शांशेनाकृतद्वैगुण्यदात् । परिस्राविततपादावशिष्ट-क्षारोदकाढ़कादिति चन्द्रिका । आगमप्रामाण्यासद्भद्वैगुण्यपक्षे तु द्वात्रिंशांशेनेति बोध्यम् । आयस इति लौहमये, एतच्च पात्रविशेषकथनं गुणोत्कर्षार्थम् "यथा कुर्व्वन्ति स उपायः" इत्युक्तेः । क्षार इति प्रतिसारणीयः क्षार इत्यर्थः; प्रतिसारणीयश्च भक्षणीय इत्यर्थः ॥ ४७ ॥

एषां चूर्णानि निक्षिप्य पृथक्त्वेनाष्टमाषकम् ।
दर्व्या संघट्टितश्चापि स्थापयेदायसे घटे ।
एष वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ॥४७॥

क्षारः ।

तोये कालकमुष्ककस्य विपचेद्भस्माढकं षड्गुणे
पात्रे लोहमये दृढे विपुलधीर्दर्व्या शनैर्घट्टयन् ।
दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेत्
यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतात् ॥
प्रायस्त्रिभागशिष्टः स्यात्स्वच्छः पैच्छिल्यरक्तता ।
संजायते तदास्राव्यं क्षाराम्भो ग्राह्यमिष्यते ॥

---

तोये कालकमुष्ककस्येति। षड्गुण इति षडाढके व्यवहारादत्र-तद्द्विगुणं, अत एव वृन्देनोक्तम् "द्वैगुण्यं नाढकेऽप्यत्र भागमात्रोपलक्षणात्" इति, एतच्चान्ये दूषयन्ति, आढकादिश्रुत्या द्रवे यद्द्वैगुण्यं सर्व्वागमसिद्धं तत् कथं बाधनीयं, नच क्वचित्तन्त्रे भागमात्रमुक्तम्, येन भागमात्रोपलक्षणमिति वाच्यं अतएव चक्रेणाप्यस्मादेव द्वैगुण्यार्थं न किमपि लिखितम्। दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेदिति त्रिभागशेषेणाच्छपिच्छिलत्वादिलक्षणोदये कल्कमपनीय छानयित्वा क्षाराम्बु ग्राह्यम्। ततः पुनः पचेत्। पश्चादासन्नपाके बहुशङ्खनाभिशकलानग्नौ दग्ध्वा तस्य चूर्णं तुर्य्यांशेत्यादि वक्ष्यमाणानुसारेण क्षिपेत्, अन्ये तु त्रिभागशेषे चतुर्भागावशेषे वा क्षारोदके वस्त्रपूते शङ्खचूर्णं दत्त्वा पुनः पक्तव्यं यथा नातिसान्द्रमतितरलञ्च स्यादित्याहुः। पूतावशेष इत्यत्र पूतचतुर्भागे इति क्वचित् पठन्ति, तन्मते चतुर्थांशावशेषे क्षारोदक इत्यर्थः। सम्यक् सिद्धक्षारलक्षणमाह यद्येरण्डजनालमित्यादि। एष इति पक्वः शीतः क्षारो यदि निस्त्वचमेरण्डनालं लेपेन वाक्शताच्छोटिकाशताद् दहति, तदा वरः श्रेष्ठ इत्यर्थः। पूतावशेष इत्युक्तं, तच्च कियदवशिष्टं स्थाप्यम् इत्याह प्रायस्त्रिभाग इत्यादि। आस्राव्येति

तुर्य्येणाष्टमकेन षोड़शभवेनांशेन संव्यूहिमो।
मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छङ्खकः॥
नातिसान्द्रो नातितनुः क्षारपाक उदाहृतः।
दुर्नामकादौ निर्द्दिष्टः क्षारोऽयं प्रतिसारणः॥
पानीयो वस्तु गुल्मादौ तं वारानेकविंशतिम्।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे॥ ४८॥

---

वस्त्रेण गालयित्वा। इदानीं प्रक्षेप्य शङ्खचूर्णस्य मानभेदेन प्रतिसारणीयक्षारस्य मृद्वादिभेदमाह तुर्य्येणेत्यादि।—क्षारोदकात् इयि त्रिभागावशिष्टक्षारोदकमपेक्ष्य शङ्खः शङ्खचूर्णं यदि तुर्य्येण चतुर्थांशेन विहितः प्रयुक्तो भवति, तदा संव्यूहिम इति मृदुक्षारो भवति, संव्यूहिम इति मृदुक्षारसंज्ञा। अष्टमकेनाष्टमांशेन यदि शङ्खचूर्णन्दीयते, तदा मध्यः क्षारः, षोड़शभवेनांशेन यदि शङ्खचूर्णं दीयते तदा श्रेष्ठः क्षार इत्यर्थः। यद्यपि संव्यूहिमे क्षारोदकाच्चतुर्थांशेन दीयमानं शङ्खचूर्णं मध्यश्रेष्ठक्षारे दीयमानशङ्खचूर्णापेक्षया प्रभूतमेव, तथापि क्षारस्य मृदुत्वमेव भवति शङ्खचूर्णेन क्षारोदकस्य तीक्ष्णतायाः अभिभूतत्वात्। पानीयक्षारे तु न शङ्खचूर्णयोग इति तस्य नैते भेदाः। प्रतिसारणीयक्षारपाकलक्षणं तथा तद्विषयञ्चाह नातिसान्द्रेत्यादि।—प्रतिसारण इति लक्षणप्रयोजकः। पातव्यक्षारोदकस्य विधानं विषयञ्चाह पानीय इत्यादि।—पानीयः इति पातव्यो यः क्षारः तं क्षारं षड्गुणे चतुर्गुणे वा जले पाकं विनैव एकविंशतिवारान् परिस्राव्य क्षारोदकं ग्राह्यम्। अन्ये तु चतुर्गुणे जले पक्त्वा चतुर्थांशावशिष्टं कृत्वा कल्कमपसार्य्य क्षारोदकं एकविंशतिवारान् परिस्रावयेदिति, न प्रतिसारणीयक्षारवत् अस्य पुनःपाक इति तत्पर्य्यायं इत्याहुः। विश्वामित्रोऽप्याह "पानाय भावनायाय परिस्राव्यं चतुर्गुणे। जले चाष्टावशिष्टे च क्षारात्तोयाप्यमिष्यते" इति पानाय स्रावणं क्षारोदकविधानम् तदर्थमित्यर्थः। पानीयक्षारमात्रा च पलत्रिपादार्द्धपलरूपा क्रमादुत्तममध्यमाधमबलानां यथा दृष्टा ॥ ४८ ॥

## क्षारसूत्रम्।

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः।
बन्धनात् सुदृढं सूत्रं छिनत्त्यर्शोभगन्दरम्॥ ४९॥
प्राग्दक्षिणं ततो वामं पृष्ठजं चाग्रजं क्रमात्।
पञ्चुतिक्तेन संस्नेह्य दहेत् क्षारेण वह्निना॥
वातजं श्लेष्मजं चार्शः क्षारेणास्रजपित्तजे।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत्॥
चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा।
पक्वजम्बूपमो वर्णः क्षारदग्धः प्रशस्यते॥ ५०॥
गोजीशेफालिकापत्रैरर्शः संलिख्य लेपयेत्।
क्षारेण वाक्शतं तिष्ठेत् यन्त्रद्वारं पिधाय च॥

---

क्षारसूत्रमाह भावितमित्यादि।—पुनः पुनरिति सप्ताहमित्यर्थः॥ ४९॥

प्राग्दक्षिणमित्यादि।—एतच्च क्रमोपदर्शनं मङ्गलार्थमस्मादिशिष्टपुरुषगम्यं वा एष च क्रमो यस्य चतुर्ष्वेव पार्श्वेष्वर्शांसि सन्ति तं प्रत्येव बोद्धः। यस्य पुनरेकतमपार्श्वे तस्य तदेव दहनीयम्, एष च क्रमः क्षारे क्षारसूत्रेऽग्नौ च। अग्रजमिति अण्डकोषसमीपस्थम्। अस्य च दाहो वृद्धवैद्यैर्न क्रियते षाण्ड्यभयात्। पञ्चुतिक्तेनेति पञ्चतिक्त घृतेन पानादिना स्नेहयित्वेत्यर्थः। क्षारेण वह्निना च उभयमेव श्लेष्मजं वातजञ्च दहेत्। रक्तजे पित्तजे पुनः क्षारेणैव दहेत्। क्षारो हि मृदुत्वेनोचितः यदाह सुश्रुतः "क्षारस्तु सर्वत्रैवाग्निप्रसिद्धो नदग्निः" इति। अन्यतरेणेति क्षारेण वह्निना वा। क्षारेण सम्यग्दग्धस्य लक्षणमाह पक्वेत्यादि। पक्वजम्बूपमः स्निग्धकृष्णवर्ण इत्यर्थः॥ ५०॥

प्रतिसारणीयक्षारो यथोपयुज्यते तदाह गोजीत्यादि। गोजी भाण्डीटकः। क्षारेण लेपयेदित्यन्वयः। लघ्वक्षरोच्चारणकालो वाक्, तासां शतं छोटीशतं वा। यन्त्रद्वारं गुदस्थितयन्त्रस्य द्वारं पिधाय कर्पटादिना ढक्कयित्वा। पक्वजम्बूफलोपमं सम्यग् दग्धे, हीनदग्धे तु

तच्चापनीय वीक्षेत पक्वजम्बूफलोपमम्।
यदि च स्यात् ततो भद्रं नोचेल्लिम्पेत्तथा पुनः॥
तत्तुषाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत्।
न निम्नं तालवर्णाभं वह्निदग्धं स्थिताङ्गजम्॥ ५१॥
निर्वाप्य मधुसर्पिर्भ्यां वह्निसंजातवेदनाम्।
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः॥
सामृतैः सर्पिषा युक्तैरालेपं कारयेत् भिषक्।
मुहुर्मुहुरुपवेश्यासौ तोयपूर्णे च भाजने॥
क्षारमुष्णाम्बुना पाय्यं विबन्धे मूत्रवर्चसोः।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा॥
नवान्नं माषतक्रादि देयं पाकाय जानता।
पिबेद्व्रणविशुद्ध्यर्थं वराक्काथं सगुग्गुलुम्॥

---

लोहितं भवति। यदाह वाग्भटः "पक्वजम्बूनिभं यत्तु सम्यग्दग्धं विपर्ययात्। ताम्राभं तोदकण्डूढ्यं तत् पुनर्दहेत्। अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादयः। गुदे विशेषाद्विण्मूत्रसंरोधो वातिवर्त्तनम्। बाह्यादिप्रशमनी शीता तत्र क्रिया हिता" इति। तुषाम्बु काञ्जिकम्। न निम्नमित्यादिना सम्यग् वह्निदग्धलक्षणम्। वह्निदग्धमिति वह्निना सम्यग् दग्धं न निम्नमित्यादिलक्षणयुक्तं भवतीत्यर्थः। तालवर्णाभमिति पक्वतालसमवर्णम्, तालवृन्ताभमिति पाठेऽपि पक्वतालवृन्तसमवर्णमित्यर्थः। स्थिताङ्गजमिति स्थितरक्तम्, एतच्च यदा कर्णिकाः दह्यते तदा ज्ञेयम्, दाहस्य शिरासङ्कोचत्वेन रक्तस्तम्भक इति॥ ५१॥

दाहानन्तरं यद्विधेयं तदाह निर्वाप्येत्यादि। सम्यग् दग्धेऽर्शःकोच्चर्यैः, तुगाक्षीरी वंशलोचना, तदभावे तालक्षीरी, प्लक्षः पर्कटी, तस्य त्वक्कल्कम्, अमृता गुडूची यद्यपि गुडूची पाकादुष्णवीर्या तथापि स्पर्शशीतैव यथा काञ्जिकमम्लमपि भक्षणात् पित्तकृत्, स्पर्शेन शीतमिति तथा पित्तहरं भवति, तेन गुडूच्या निर्वापणत्वं उचितमिति केनचिदुक्तम् तदप्यपास्तम्, किंवा उष्णवीर्याया अपि

जीर्णे शाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम् ।
रूढसर्व्वव्रणं वैद्यः क्षारं दत्त्वानुवासयेत् ॥
पिप्पल्याद्येन तैलेन भवेद्दीपनपाचनम् ॥ ५२ ॥

अग्निमुखं लौहम् ।

त्रिवृच्चित्रकनिर्गुण्डीस्नुहीमुण्डतिकाञ्जटाः ।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत् ॥
पलत्रयं विडङ्गस्य व्योषात् कर्षत्रयं पृथक् ।
त्रिफलायाः पञ्चपलं शिलाजतुपलं न्यसेत् ॥
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा ।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् ॥
पलैश्चतुर्व्विंशतिभि र्मधुशर्करयोर्युतम् ।
घनीभूते सुशीते च दापयेदवतारिते ॥

---

गुड़ूच्या दृश्यान्तरसंयोगमहिम्नैवात्र दाहशमकत्वं ज्ञेयम् । नोप्रसर्प इति कोषात् [illegible] दृष्टाङ्कुः । क्षारमुक्ताम्बुनेति, क्षारं [illegible] । [illegible] । क्षारं दत्त्वेति क्षारकर्म्म दत्त्वा क्षारप्रलेपानन्तरं पिप्पल्याद्येन तैलेनानुवासयेदित्यर्थः ॥ ५२ ॥

प्रसिद्धफलमग्निमुखलौहमाह त्रिवृच्चित्रकेत्यादि । अत्र मुण्डतिका मुण्डिरी, अञ्जटा भूम्यामलकी, अस्याः स्थाने जटेति पाठे त्रिवृदादीनां मूलमित्यर्थः । तथाच जलद्रोणे क्वाथश्चतुर्थभागावशिष्टः षोडशशरावक्षुपोऽयमितिवादेव सिद्धः, पृथगित्यनेन व्योषस्य प्रत्येकं त्रिकर्षमानत्वम्, त्रिफलायास्तु मिलित्वा पञ्च पलानि । एषाञ्च विडङ्गादिशिलाजत्वन्तचूर्णानां पाकावतारसमये प्रक्षेपः । दिव्यौषधिः स्वर्णमाक्षिकं मनःशिला वा शालिञ्चो काकनी वा अन्यत्र तु मनःशिलाहतस्येति पाठान्तरदर्शनान्मनःशिलेति युक्तम् । लौहमारकत्वात् सर्व्वाण्येतानि विरुद्धानि, वैकङ्कतहतस्य वेति राढायां

एतदग्निमुखं नाम दुर्नामान्तकरं परम् ।
मन्दमग्निं करोत्याशु कालाग्निसमतेजसम् ॥
पर्व्वता अपि जीर्य्यन्ति प्राशनादस्य देहिनः ।
गुरुवृष्यान्नपानानि पयोमांसरसो हितः ॥
दुर्नामपाण्डुश्वयथुकुष्ठप्लीहोदरापहम् ।
अकालपलितञ्चैतदामवातगुदामयम् ।
न स रोगोऽस्ति यञ्चापि न निहन्यादिदं क्षणात् ॥
करीरकाञ्जिकादीनि ककारादीनि वर्ज्जयेत् ।
खरत्वतोऽन्यथा लौहं देहात् किट्टञ्च दुर्ज्जरम् ॥ ५३ ॥

भल्लातकलौहम् ।

चित्रकं त्रिफलामुस्तं ग्रन्थिकं चविका मता ।
हस्तिपिप्पल्यपामार्गदण्डोत्पलकुठेरकाः ॥

---

वहिर्श्चाति ख्यातं वारेन्द्रादिषु वयकङ्कोलिरिति ख्यातम् । किन्तु खर्णमाक्षिकादिकं विना सम्यग् लौहमारणं न सिध्यति, अवश्य-तत्साहनद्वयसमुच्चयेनापि कर्त्तव्यम्, रुक्मलौहं कान्तव्यतिरिक्तं वज्रपाण्ड्यादिकृष्णलौहं तदुक्तं निर्घण्टौ ; "तीक्ष्णमयसमुत्तरापथ-पिण्डं रुक्मरुक्मकङ्गः कृष्णलौहनामानि" इत्वानुक्तस्यापि गव्य-घृतस्य चतुर्विंशतिपलानि पाकारम्भसमय एव शुद्धं [illegible]. घृतं विना कञ्चिदपि लौहस्य पाकादर्शनात्, अतएव क्वचित् पलञ्च-[illegible] पाठान्तरं केचित् पठन्ति मधुशर्करयो-श्चतुर्विंशतिपलानि मिलित्वा. शर्करा [illegible] पाके [illegible] मधुनः प्रक्षेपः, तत्र शर्करायाः द्वादश पलानि, मधुनो द्वादश-पलानि घृतस्य च चतुर्विंशतिपलानीति । भग्न[illegible]लौ-हानि ॥ ५३ ॥

भल्लातकलौहे [illegible] भल्लातकसहस्रं हे [illegible] । [illegible] जलद्रोणं । तीक्ष्णलौहस्येति वज्रपाण्ड्यादि-

एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्।
भल्लातकसहस्रे द्वे छित्वा तत्रैव दापयेत्॥
तेन पादावशेषेण लौहपात्रे पचेद्भिषक्।
तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुड़वद्वयम्॥
त्र्यूषणं त्रिफलावह्निसैन्धवं विडमौद्भिदम्।
सौवर्च्चलं विड़ङ्गानि पलिकांशानि कल्पयेत्॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च।
शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत्॥
सिद्धे शीते प्रदातव्यं मधुनः कुड़वद्वयम्।
प्राग्भोजनकाले च ततः खादेद्यथाबलम्॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्।
क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति॥
करोति शुक्रोपचयं वलीपलितनाशनम्।
रसायनमिदं श्रेष्ठं सर्व्वरोगहरं परम्॥ ५४॥

रसगुड़िका।

रसस्तुपादिकस्तुल्या विड़ङ्गमरिचाभ्रकाः।
गङ्गापालङ्कजरसे खल्वयित्वा पुनः पुनः।
रक्तिमात्रागुदार्शोघ्नी वह्नेरत्यर्थदीपनी॥ ५५॥

---

लौहस्य। गव्यघृतस्य कुड़वद्वयमिति द्विगुणत्वात् षोडशपलानि एवं मधुनोऽपि, सिद्धे च त्र्यूषणादीनां प्रक्षेपः, सर्व्वमपरमत्रूतसारवत्, चक्रामृतसारोक्तविधिना पुटितं यथा यात्रि प्रत्यनीकद्रव्यपुटितञ्च लौहं ग्राह्यं भक्षणादिविधिरपि तथैव॥ ५४॥

रसपादिका इति विड़ङ्गादीनामेकैकभागापेक्षया, तेन विड़ङ्गमरिचाभ्रकाणां प्रत्येकं त्रयोभागाः पारदस्यैकोभाग इत्यर्थः। शोधित पारद २ माषा मारिताभ्रचूर्णं विड़ङ्ग मरिच प्र ६ माषा। अन्यान्तरेऽपि रसभागापेक्षया विड़ङ्गमरिचाभ्रकाणां प्रत्येकं भागत्रय-

वेगावरोधस्त्रीपृष्ठयानमुत्कटकासनम् ।
यथास्वं दोषलं चान्नमर्शसः परिवर्जयेत् ॥ ५६ ॥

इत्यर्शश्चिकित्सा ।



## अथाग्निमान्द्याधिकारः ।

हिङ्ग्वष्टकं चूर्णम् ।

समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥
त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।

---

युक्तम् । गङ्गापानञ्चेति पानञ्चसहशयनं गङ्गापानञ्च, गाङ्गरात् इति ख्यातम् । पुनः पुनरिति सप्ताहमात्रं कृतं नियमद्दत्यर्थः । रक्ताम्भक-शोधनञ्च न, धात्वर्थत्वनिश्चयैव विधेयम् । पृष्ठयानं हस्त्यश्वादिपृष्ठेगम-नम् ॥ ५५ ॥ ५६ ॥

अर्शः कार्य्यत्वात्तदनन्तरमग्निमान्द्यादि चिकित्सामाह समस्येत्यादि । रक्षणमिति पालनम् । त्रिकटुकमित्यादि । वाभटेनायं योगो गुल्माधिकारे पठितः । अजमोदा यमानी एव । सर्वत्रान्तः-परिमार्ज्जने बहिः सम्मार्ज्जने पुनरजमोदैव, उक्तं हि "अन्तःसम्मा-र्ज्जने प्रायोऽजमोदाच यमानिका । बहिः सम्मार्ज्जने ज्ञेया चाजमोदा जमोदिकेति ॥ समधरणधृतानामिति धरणं तुला तया समं यथा

प्रथमं कवड़भुक्तं सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातरोगांश्च हन्यात्॥ १॥
समयवक्षूकमहौषधचूर्णं लीढं घृतेन गोसर्गे।
कुरुते क्षुधां सुखोदकं पीतं महौषधं वैकम्॥ २॥
अन्नमण्डं पिबेदुष्णं हिङ्गुसौवर्च्चलान्वितम्।
विषमोऽपि समस्तेन मन्दोदीप्येत पावकः॥
क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च।
ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥३
नारीक्षीरेण संयुक्तां पिबेदौडुम्बरीं त्वचम्।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये॥
यत्किञ्चिद्गुरु मेध्यञ्च श्लेष्मकारि च भेषजम्।
सर्व्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा॥ ४॥

---

स्यात्तया धृतानां, अन्येतु पलद्वयमांशोधरणं, समाश्च ते धरणधृता-श्चेति विग्रहं अष्टमोहिङ्गुभाग इति विवृद्धानां सप्तभागास्तदेकभा-गसमोहिङ्गुभाग इत्यर्थः वातरोगांश्च हन्तीत्यत्र वातगुल्मं च हन्तीति क्वचित् पाठः॥ १॥

समेत्यादौ।—यवक्षूको यवक्षारः। तिक्तौषधं वैकमिति वागब्दः पूर्व्वयोगापेक्षया इत्यर्थे वाशब्दो वा। गोसर्गे गोः सूर्य्यकिरणस्य सर्गे मोक्षे प्रातरित्यर्थः॥ २॥

अन्नमण्डमित्यादि।— अन्नस्य मण्डं मण्डोन्नम् इति केचित्। अन्येतु चतुर्दशगुणाम्बुसाधित एव मण्डोऽन्नमण्डशब्देनोच्यते अन्न-पदं सुरामण्डादिनिरासार्थमित्याहुः। यद्यपि माधवकरेण द्रव्य-गुणे सुतण्डुलेत्यादिवचनान्तरं क्षुद्बोधनेत्यादि पद्यं पठितं तथाप्यन्न-मण्डस्यापि मण्डत्वसामान्यादेतत् गुणाष्टकं ज्ञेयम्॥ ३॥

अत्यग्निचिकित्सामाह नारीक्षीरेणेत्यादि। उडुम्बरत्वचः कर्षः, पायसपक्षे तु उडुम्बरत्वचः पलं तण्डुलं नारीक्षीरञ्चानुरूपं दत्त्वा पायसः कार्य्यः। यत्किञ्चिदिति माहिषीदुग्धादि॥ ४॥

मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपातयेत् ॥ ५ ॥
विश्वाभयागुड़ूचीनां कषायेण षड़ूषणम् ।
पिबेत् श्लेष्मणि मन्देऽग्नौ त्वक्पत्रसुरभीकृतम् ।
पञ्चकोलं समरिचं षड़ूषणमुदाहृतम् ॥ ६ ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ७ ॥
सिन्धूत्थपथ्यमगधोद्भव वह्निचूर्णम्
उष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यशितमात्रमिह क्षणेन ॥ ८ ॥

---

मुहुर्मुहुरित्यादि ।— तथाजीर्णेऽपि मुहुर्मुहुर्भोज्यमस्योपकल्पयेत् यथा निरिन्धनोऽग्निः, अन्तरमित्यवकाशं लब्ध्वा एनमातुरं न विपातयेत्, धातुपाकादिति भावः । उक्तं हि आहारमग्निः पचति दोषानाहारवर्ज्जितः । धातून् क्षीणेषु दोषेषु जीवितं धातुसंक्षये ॥ ५ ॥

विश्वाभयेत्यादौ ।— त्वक् गुडत्वक्, त्वक्पत्रे सुरभिकारके देये । पञ्चकोलं समरिचं षड़ूषणमिति, तदुक्तं मरिचं पिप्पली शुण्ठी त्र्यूषणं समुदाहृतम् । पिप्पलीमूलसंयुक्तं चतुरूषणमुच्यते । साग्नि पञ्चोषणं द्वैतत् सचव्यन्तु षड़ूषणमिति । एतच्च षड़ूषणं प्रमन्दविषमे देयम् ॥ ६ ॥

हरीतकीत्यादि । भक्ष्यमाणा । योगत्रयमेतत्, नागरेण कफे, गुड़ेन, पित्ते, सैन्धवेन दोषत्रयेऽपि विशेषाद्वातकफे ॥ ७ ॥

सिन्धूत्थेत्यादौ । पथ्या हरीतकी, ह्रस्वत्वमिह छान्दसत्वात् । मगधोद्भवा पिप्पली, अत्रापि पूर्ववद्ध्रस्वत्वम् । वरं प्रकृष्टं अधिकमिति यावत् मांससहितमन्नमधिकमित्यर्थः । केचिदिह सैन्धवादीनां मानभेदादेकाधिप्रसिद्धं द्विगुणक्रमतो वर्णयन्ति, अपरे तु समभागेनेति ॥ ८ ॥

सिन्धूत्थहिङ्गु त्रिफला यमानी-
व्योषैर्गुडांशैर्गुडिकान् प्रकुर्य्यात्।
तैर्भक्षितैस्तृप्तिमवाप्नुवन्वा
भुञ्जीत मन्दाग्निरपि प्रभूतम्॥ ९॥
विडङ्गभल्लातकचित्रकामृताः
सनागरास्तुल्यगुडेन सर्पिषा।
लिहन्ति ये मन्दकृशानवो नरा
भवन्ति ते वाडवतुल्यवह्नयः॥ १०॥
गुडेन शुण्ठीमथवोपकुल्यां
पथ्यां तृतीयामथ दाडिमं वा।

---

सिन्धूत्थेत्यादौ। गुडांशैरिति एकद्रव्यसमो गुडभागः, चादेशात् ग्रहण्यादिकेऽग्निसादे प्रभूतश्च गुडो बहुतरो न युक्त इत्याहुरेके। अन्ये तु सर्वचूर्णापेक्षया द्विगुणो गुडः तस्माद् गुडार्द्धं समुदितचूर्णं तेन गुडांशमिति, मोदके द्विगुणो गुड इति वचनमनुगृहीतं भवतीत्याहुः। तृप्तिमवाप्नुवन्निति मन्दाग्निरपि तावत् प्रभूतं भुङ्क्ते यावत्तृप्तिमवाप्नोति। अनाप्नुवन्निति पाठे पुनरत्यग्नित्वात् प्रभूतभोजनेऽपि न तृप्तिं लभते इत्यर्थः॥ ९॥

विडङ्गेत्यादौ तुल्यगुडेनेत्यत्र तुल्यशब्दस्तात्पर्यं, तेनैकभागतुल्यो गुडः तेन घृतेनैव लिहन्तीति व्याख्यानयन्त्येके। अन्ये तु तुल्यगुडेनेति पदं सर्पिर्विशेषणं वर्णयित्वा समुदितचूर्णापेक्षया द्विगुणेन मिलित्वा गुडसर्पिषा लिह इति व्याचक्षते. युक्तञ्चैतत् नागार्जुनोक्तवचनसम्वादात् तथा हि "सञ्चूर्णिता गुडसा विडङ्गभल्लातकनागरामृताः। ज्वलयन्ति जठराग्निं सघृतगुडसमेता लीढा" इति॥ १०॥

गुडेन शुण्ठीमित्यादि। पथ्यां तृतीयामिति समस्तमसमस्तञ्च। तत्र समस्तपक्षे गुडेनेति पदं तथा पथ्यां तृतीयामिति पदञ्च शुण्ठ्यादिषु प्रत्येकं योज्यं तेन गुडेन पथ्यां तृतीयां शुण्ठीमित्येको योगः। तथा गुडेन पथ्यातृतीयामुपकुल्यामिति द्वितीयः। तथा गुडेन पथ्यातृ-

आमेष्वजीर्णेषु गुदामयेषु
वर्च्चोविबन्धेषु च नित्यमद्यात् ॥ ११ ॥
भोजनाग्रे सदापथ्यं जिह्वाकण्ठ विशोधनम्।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ १२ ॥
कपित्थतक्रचाङ्गेरी मरिचाजाजीचित्रकैः।
कफवातहरो ग्राही खड़ोदीपनपाचनः ॥ १३ ॥

शार्द्दूलकाञ्जिकः।

पिप्पलीशृङ्गवेरञ्च देवदारु सचित्रकम्।
चविकां विल्वपेशीञ्चाजमोदाञ्च हरीतकीम् ॥
महौषधं यमानीञ्च धान्यकं मरिचन्तथा।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक ॥
एषशार्द्दूलकोनाम काञ्जिकोऽग्निबलप्रदः।
सिद्धार्थतैलसंभृष्टो दशरोगान् व्यपोहति ॥

---

तीयं दाड़िममिति, लिङ्गपरिणामेन योज्यमिति। योगत्रयं यथा संख्यमामाजीर्णादिषु रोगेषु योज्यम्। यत्तु गुड़शुण्ठी भक्षणं गुड़पिप्पलीभक्षणञ्च तदस्मिन् व्याख्याने प्रयोगान्तरमेव। पथ्यां तृतीयामित्यसमस्तपाठे यत्तु गुड़ेनेति पदं शुण्ठ्यादिषु चतुर्षु प्रत्येकं योज्यं तेन चत्वारो योगा यथाक्रमामादिषु चतुर्षु योज्याः। चास्मिन् पक्षे तृतीयादिपदं व्यवच्छेदार्थं ज्ञेयम् ॥ ११ ॥

भोजनाग्रे इत्यादि स्पष्टम् ॥ १२ ॥

कपित्थेत्यादौ। कफवातहर इत्येव पाठः न तु कफपित्तहर इति, द्रव्यगुणपर्य्यालोचनया कपित्थादीनां वातकफहन्तृत्वात्। खड़ इति यूषविशेषस्य परिभाषिकी संज्ञा, अस्य विधानञ्चातीसाराधिकारण्वोक्तम् ॥ १३ ॥

पिप्पलीत्यादौ। बिल्वपेशी बिल्वशलाटुः, शृङ्गवेरम् आर्द्रकं पाकार्थं भागत्रय कटुतैले सन्तापनम्, हिङ्गुजीरकयोश्च प्रक्षेप इत्युपदि-

कासं श्वासमतीसारं पाण्डुरोगं सकामलम्।
आमञ्च गुल्मशूलञ्च वातगुल्मं सवेदनम्॥
अर्शांसि श्वयथुश्चैव भुक्ते पीते च सात्मतः।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्॥ १४॥

अग्निमुखं चूर्णम्।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम्॥
यमानिका पञ्चगुणा षड्गुणा च हरीतकी।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत्॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया।
पिवेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरन्तथा।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम्॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम्।
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम्।
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते॥ १५॥

पानीयभक्तगुडिका।

त्र्यंशोऽर्द्धभागिकस्तुल्याद्विड्ङ्गमरिचाभ्रकाः।
भक्तोदकेन संमर्द्य कुर्य्याद्गुञ्जासमां गुडीम्॥

---

शंसि इत्यादि। सात्मतोऽभ्यासादित्यर्थः। क्षीरपाकविधानेनेति द्रव्यादष्टगुणं क्षीरमित्यादि परिभाषया, अतएवोक्तमन्यत्र क्षीरमस्त्वारनालानां नास्ति पाकोऽम्बुना विना। सम्यक्पाको न गच्छेत्तु तस्मात्तोयं चतुर्गुणमिति॥ १४॥

हिङ्गुभाग इत्यादौ।—द्विगुणेत्याद्यभागापेक्षया एवं त्रिगुणेति। प्रसन्नया सानिकद्धवाते, दध्नेति शुष्कवाते, मस्तुनेति [illegible] [illegible]वाते, सुरया कफवाते [illegible]

भक्तोदकानुपानैका सेव्या वह्निप्रदीपनी ।
वार्य्यन्न भोजनञ्चात्र प्रयोगे सात्म्यमिष्यते ॥ १६ ॥

बृहदग्निमुखं चूर्णम् ।

द्वौ क्षारौ चित्रकं पाठा करञ्जलवणानि च ।
सूक्ष्मैला पत्रकं भार्गी क्रिमिघ्नं हिङ्गुपौष्करम् ॥
शटी दार्व्वी त्रिवृन्मुस्तं वचा सेन्द्रयवा तथा ।
धात्रीजीरकवृक्षाम्लं श्रेयसी चोपकुञ्चिका ॥
अम्लवेतसमम्लीका यमानी सुरदारु च ।
अभयातिविषा श्यामा हवुषारग्वधं समम् ॥
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लौहकिट्टञ्च तप्तं गोमूत्रसेचितम् ॥
समभागानि सर्व्वाणि सूक्ष्मचूर्णानि कारयेत् ।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥

---

पानीयभक्तगुडिकायां रसोऽर्द्धभागिक इत्येकभागापेक्षया, केचि-दत्र रसस्य कर्षमितत्वात् रसस्यार्द्धं गन्धकं नियमन्ति विडङ्गादीनां प्र-त्येकं रसापेक्षया द्विगुणो भागः। [illegible] काचोदकगुडिकायान्तु विडङ्गादीनां रसापेक्षया प्रत्येकं त्रिगुणो भाग इति भेदः। भक्तोद-केनेत्यन्नभक्तपानीयेन ॥ १६ ॥

बृहदग्निमुखे । करञ्जं [illegible] फलम्, [illegible] कोविदार-[illegible] फलमिच्छन्ति यत्तु तस्य फलं [illegible] तच्च [illegible] । लवणानि, पञ्चलवणानि, वृक्षाम्लं [illegible], श्रेयसी गजपि-प्पली [illegible] श्रेयस्यां [illegible] । उपकुञ्चिका [illegible] कृष्णजीरकं [illegible] सर्व्वत्राग्निदीपन-योगे [illegible] पुनरम्लिका चाङ्गेरी [illegible] हवुषा [illegible], आरग्वधं [illegible] फलम् तिलमुष्कनाल [illegible] क्षारत्वात्,

दिनत्रयञ्च शुक्तेन चार्द्रकस्वरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥
उपयुक्तविधानेन नाशयत्यचिराद्गदान् ।
अजीर्णकमथो गुल्मान् प्लीहानं गुदजानि च ॥
उदराण्यन्त्रवृद्धिञ्च चाष्ठीलां वातशोणितम् ।
प्रणुदत्युल्वणान् रोगान् नष्टवह्निञ्च दीपयेत् ॥
समरुव्यञ्जनोपेतं भक्तं दत्त्वा सभाजने ।
दापयेदस्य चूर्णस्य बिड़ालपदमात्रकम् ॥
गोदोहमात्रात्तत् सर्व्वं द्रवीभवति सोष्मकम् ॥ १७ ॥

भास्करलवणम् ।

पिप्पलीपिप्पलीमूलं धन्याकं कृष्णजीरकम् ।
सैन्धवञ्च बिड़ञ्चैव पत्रं तालीशकेशरम् ॥
एषां द्विपलिकान् भागान् पञ्च सौवर्च्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम् ।
दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात् ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम् ।
लवणं भास्करं नाम भास्करेण विनिर्म्मितम् ॥

---

शुष्कान् [illegible], लौहपात्रं मण्डूरं [illegible] पुराणं ग्राह्यम् । जेज्ज-
[illegible] पृथगेव पाकं [illegible] मण्डूरादिति । तप्तं गोमूत्रे सेचितमिति, [illegible] कृत्वा सप्तधा गोमूत्रे निर्व्वापितमित्यर्थः । एवं सर्व्वत्र म-
ण्डूर[illegible] [illegible] विशेषेण, तदभावे काञ्जि-
केन, [illegible]न्यत्रापि बोध्यम् । गोदोहमात्रात्तु गोदोहन मात्र [illegible]
॥ १७ ॥

भास्करलवणे ।— केशरं नागकेशरम् पञ्चसौवर्च्चलस्येति पञ्चपलानि सौवर्च्चलस्येत्यर्थः । त्वगेले चार्द्धभागिके इति पलापेक्षया तेन त्वगे-

जगतस्तु हितार्थाय वातश्लेष्मामयापहम्।
वातगुल्मं निहन्त्येतद्वातश्लेष्मकृतानि यानि च॥
तक्रमस्तुरासीधुशुक्तकाञ्जिकयोजितम्।
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च॥
मन्दाग्नेरश्नतः शक्तो भवेदाशु विपावकः।
अर्शांसि ग्रहणीदोष कुष्ठामय भगन्दरान्॥
हृद्रोगमामदोषांश्च विविधानुदरस्थितान्।
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन्॥
विशेषतः शर्करादीन् रोगान्नानाविधां स्तथा।
पाण्डुरोगांश्च विविधान्नाशयत्यशनिर्यथा॥ १८॥

अग्निघृतम्।

पिप्पली पिप्पलीमूलं चित्रकोहस्तिपिप्पली।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च॥
द्वौ क्षारौ हपुषा चैव दद्यादर्द्धपलोन्मितान्।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते॥
अर्शसां नाशनं श्रेष्ठं तथागुल्मोदरापहम्।
ग्रन्थ्यर्वुदापचीकास कफमेदोऽनिलानपि॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम्।
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः।
सर्व्वांस्तान्नाशयत्याशु सूर्य्यस्तमइवोदितः॥ १९॥

---

तयोः प्रत्येकमर्द्धपलमित्यर्थः। पञ्चाढकमिति पलताञ्जोगादिद्रव्ययोगात्, न पुनरपरचानुज्ञात प्रक्षेपेण॥ १८॥

स्वल्पाग्निघृतं स्पष्टम्॥ १९॥

मस्तुषट्पलकं घृतम्।

पलिकैः पञ्चकोलैस्तु घृतं मस्तु चतुर्गुणम्।
सक्षारैः सिद्धमल्पाग्निं कफगुल्मं विनाशयेत्॥२०॥

वृहदग्निघृतम्।

भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत्।
अष्टभागावशेषञ्च कषायमवतारयेत्॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत्।
त्रिवृतां पिप्पलीमूलं चित्रकं हस्तिपिप्पली॥
हिङ्गुव्याजमोदा च पञ्चैव लवणानि च।
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान्॥
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसन्तथा॥
तत्सर्व्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते॥
अर्शसां नाशनं श्रेष्ठं [illegible]वातानु[illegible]मन[illegible]।
कफवातोद्भवे गुल्मे श्[illegible]च दकोदरे॥
शोथं पाण्ड्वामयं कास[illegible]णीं श्वासमेव च।
एतान् विनाशयत्याशु [illegible]र्भक्तम दशोदितः॥२१॥

[illegible]गुडः।

द्वे पञ्चमूले त्रिफलामर्क[illegible]ं शतावरीम्।
दन्तीं चित्र[illegible]स्फोतां [illegible]पाठां सुधां शटीम्॥

---

मस्तुषट्पलके घृतस्य प्रस्थः, "अनिर्द्दिष्टप्रमाणानां स्नेहानां प्रस्थइष्यते" इत्युक्तेः॥२०॥

वृहदग्निघृते।— भल्लातकसहस्रार्द्धमित्याकृतिमानात्, शोभाञ्जनरसः शोभाञ्जनस्य मूलत्वक्स्वरसः॥२१॥

वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ २४ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥२५॥

विदह्यते यस्य च भुक्तमात्रं
दह्येत हृत्कोष्ठगलञ्च यस्य ।
द्राक्षासितामाक्षिक संप्रयुक्तां
लीढ्वाभयां वै स सुखं लभेत ॥ २६ ॥
हरीतकी धान्यतुषोदसिद्धा
सपिप्पलीसैन्धवहिङ्गुयुक्ता ।
सोद्गारधूमं भृशमप्यजीर्णं
विजित्य सद्यो जनयेत् क्षुधाञ्च ॥ २७ ॥

---

अग्निमान्द्याजीर्णयोः परस्परकारणत्वादग्निमान्द्यप्रकरण एवाजीर्णचिकित्सामाह वचेत्यादि वचालवणकल्कयुक्तेनोष्णोदकेन किम्वा वचया अङ्गुष्ठितेनोष्णोदकेन सलवणेन वमनम् ॥ २४ ॥

विदग्धाजीर्णचिकित्सामाह अन्नमित्यादि सुश्रुतस्य शीताम्बुना परिपाकमुपैति यदुक्तं तदेवोपपादयति तद्ध्यस्येति, हिशब्दो हेतौ तदिति शीताम्बु, अस्याजीर्णिनः पित्तं निहन्तीत्यन्वयः । आक्लेदिभावादिति द्रवत्वात् ॥ २५ ॥

विदह्यत इत्यादि सुश्रुतस्य । भुक्तमात्रमिति मात्रशब्दः कार्त्स्न्ये, भुक्तसाकल्ये मात्राशब्दो वर्त्तते । किम्वा भुक्तमात्रमिति भोजनानन्तरम् । अन्नं विदग्धं हि नरस्य शीघ्रमित्यादि वाक्यं तथा विदह्यते यस्य तु भुक्तमात्रमित्यादि वाक्यं तथा भवेदजीर्णं प्रति यस्य शङ्का इत्यादि वक्ष्यमाणन्तु सौश्रुतवचनमनार्षम् अजीर्णे भोजननिषेधस्य स्वयमेव सुश्रुतेनोक्तत्वात्, लङ्घनाद्युपदेशाच्च, तत्र तत्र केनाप्यवैद्येन प्रकल्पितं योगत्रयमिदमित्याह जेज्जटः । अपरे तु प्रचाराद्भूरिपाठदर्शनाच्च योगत्रयमेतदार्षं मन्यन्त एव, किन्तु स्वल्पाजीर्णे बोध्यमेतत्, प्रभूताजीर्णे तु भोजनसम्बन्धं न कुर्य्यात्, अल्पाजीर्णे तु औषधं सेव्यमिति ॥ २६ ॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ।
दिवास्वप्नं प्रकुर्व्वीत सर्व्वाजीर्णप्रणाशनम् ॥ ३० ॥
धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥ ३१ ॥
पथ्यापिप्पलीसंयुक्तं चूर्णं सौवर्च्चलं पिबेत् ।
मस्तुनोष्णोदकेनापि बुद्ध्वा दोषगतिं भिषक् ॥
चतुर्व्विधमजीर्णञ्च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥ ३२ ॥
भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
पूर्व्वं स शुण्ठीमभयामशङ्कः
संप्राश्य भुञ्जीत हितं हिताशी ॥ ३३ ॥

---

[illegible] कार्य्यः, [illegible] [illegible] प्रातः [illegible]। [illegible]। [illegible] भुक्ता [illegible] नसेवेत् [illegible] ॥ २९ ॥

आलिप्येत्यादि [illegible] ॥ ३० ॥

धान्यनागरेत्यादि ।—[illegible] तेनेत्यादि. [illegible] धान्यनागर- [illegible] नागरन्तु [illegible]। यत्तु धान्यशुण्ठ्योः [illegible] वैद्य [illegible] शुण्ठ्यः [illegible] ॥ ३१ ॥

पथ्येत्यादि । [illegible] ॥ ३२ ॥

भवेदजीर्णमित्यादि । [illegible] वाक्यम्। [illegible] दोषः तेन [illegible] भोजनं [illegible]। पूर्व्वमिति [illegible] यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत् [illegible] भोजनकाले [illegible] शुण्ठीं शुण्ठी-

किञ्चिदामेन मन्दाग्निरभयागुड़नागरम् ।
अद्यात् तक्रेण भुञ्जीत युक्तेनान्नं षड़ूषणैः ॥ २४ ॥
विसूचिकायां वमितं विरिक्तं सुलङ्घितं वा मनुजं विदित्वा ।
पेयादिभिर्दीपनपाचनैश्च सम्यक् क्षुधार्त्तं समुपक्रमेच्च ॥ २५ ॥
कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम् ।
विसूच्यां मर्द्दनं कोष्णं खल्लीशूलनिवारणम् ॥ २६ ॥
करञ्जनिम्बाग्निशिखरीगुडूच्यर्जुनवत्सकैः ।
पीतः कषायो वमनात् घोरां हन्ति विसूचिकाम् ॥ २७ ॥

व्योषं करञ्जस्य फलं हरिद्रे
मूलं समावाप्य च मातुलुङ्ग्याः ।

कल्पिता अभयां प्राश्य भुञ्जीतेति योजना, न तु पूर्व्वं संप्राश्य भुञ्जीतेति योज्यं, संप्राश्येत्यनेनैव पूर्व्वकालस्य लब्धत्वादिति ॥ २३ ॥

किञ्चिदित्यादि ।—यद्यपि गुडेन शुण्ठीत्यादि वचनं पूर्व्वमुक्तं तथापि तक्रषड़ूषणसम्बन्धाद् योगान्तरमिवेतद्बोध्यम् ॥ २४ ॥

विसूचिकायामित्यादि ।— सुश्रुतस्य । पेयादीनान्तु दीपनपाचनत्वं धान्यपञ्चकादिसंस्कारात् ॥ २५ ॥

कुष्ठेत्यादि ।—आतुरस्य तात्कालिकी पीड़ामहती, सद्यश्च तैलं पक्तुमशक्यं अतः किञ्चिच्चुक्रं तैलञ्च दत्वा कुष्ठसैन्धवयोः कल्केन कदुष्णेन मर्द्दनं कार्य्यमित्याचक्षते वृद्धाः । तैलपाकपक्षे तु कुष्ठसैन्धवयोः कल्कः पादिकः, चुक्रघृततैलम् । खल्ली हस्तादौ शिरामोटनरूपा वेदना ॥ २६ ॥

करञ्जेत्यादि । करञ्जस्य फलं, शिखरी अपामार्गस्तस्य बीजं । अर्ज्जुनः श्वेतार्ज्जुन इत्युक्तः, तथा इन्दुटीकायां चन्द्रटेऽप्यर्ज्जुनक इति पठ्यते तस्मात् अर्जकस्थाने अर्ज्जुनेति प्रमादः पाठः । वत्सकः कुटजः । पीतः कषायो वमनादिति वमनार्थश्च कषायः क्वाथ्यद्रव्यं कुड़वं श्रपयित्वा जलाढ़के । अर्द्धभागावशेषञ्च वमनेष्ववचारयेदिति परिभाषया अर्द्धशृतः कार्य्यः । अर्द्धभागावशेषमित्यत्र चतुर्भागावशेष इति पाठो दृश्यते तच्च शिवदासेनानुमन्यते । वमनञ्चातीत्यं, वमनन्तु आमनिरासार्थं ॥ २७ ॥

छायाविशुष्का गुडिकाः कृतास्ता-
हन्युर्विसूचीं नयनाञ्जनेन ॥ ३८ ॥
गुडपुष्पसारशिखरितण्डुलगिरिकर्णिकाहरिद्राभिः ।
अञ्जनगुडिका विलयति विसूचिकां त्रिकटुसनाथा ॥ ३९ ॥
त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः ।
उद्वर्तनं खल्लीविसूचिकायां तैलं विपक्वञ्च तदर्थकारि ॥४०॥
पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते ।

छायेत्यादि सुश्रुतस्य मातलुङ्गो मधुकद्रुमः, विसूचीशब्देनात्र विसूचीजनितमूर्च्छाप्रमीलकाशिरोरोगादयो गृह्यन्ते, कारणे कार्योपचारात् । किम्वा अञ्जनप्रभावादेव विसूची हन्यते । इति सुश्रुतटीकाकृतो व्याचक्षते ॥ ३८ ॥

गुडपुष्पेत्यादि गुडपुष्पो मधुकद्रुमः, तस्य सारो रसः । शिखरितण्डुला अपामार्गबीजानि गिरिकर्णिका श्वेतापराजिता तस्या मूलं ग्राह्यम् । त्रिकटुकान्त एकोयोगः । विलयति शमयति ॥ ३९ ॥

त्वक्पत्रेत्यादि त्वक् गुडत्वक्, पत्रं तेजःपत्रं अम्लपिष्टैरिति काञ्जिकपिष्टैः । शताह्वा शलुफा इति ख्याता शताह्वैरित्यत्र जटाह्वैरित्यन्ये पठन्ति यथा रास्ना पत्रागुरु मांसीकुष्ठ शिग्रुत्वचोवचा । पिष्टमम्लेन तच्चूर्णं विसूच्यामङ्गमर्दनम् । इत्यत्र तु शतपुष्पी जटामांसीचेति द्वयमपि न दृश्यते यथा काष्ठञ्चागुरुपत्रञ्च रास्ना शिग्रुं त्वचा वचा । पिष्टमम्लेन यच्चूर्णं विसूच्यामङ्गमर्दनमिति, तैलं विपक्वञ्च तदर्थकारीति, त्वक्पत्रादिभिः कल्कीकृतैः काञ्जिकेन द्रवेण चतुर्गुणेन तैलं पक्वं खल्लीविसूचीकाघ्नं भवतीत्यर्थः ॥ ४० ॥

पिपासायामित्यादौ ।— अनुत्क्लेशे हृल्लासकाभिरा, ठिकरीतिलोके ख्याता इति निश्चलः, अन्येत्वनुत्क्लेश इत्यपहृताक्लिष्ट दोष इत्याहुः । लवङ्गाम्बु इतगोतं एवं जातिफलाम्बु, भद्रघनाद्यं च क्वथं भद्रघा भद्रमुस्तकं अत्रान्तरे रोगान्तरं दृष्टफलमत्वबोद्धव्यं आम्राय तद्दिग्दर्शको मातलुङ्ग फलत्वचं । पीत्वा भद्रघनक्वाथमनुत्क्लेशाद्विमुच्यते । पाण्डौर्दाह इति पाणिः युगदाहन्त मूर्च्छाशान्त्यर्थम्, कूर्चन्नर तन्-

# अथ क्रिमिरोगाधिकारः।



पारसीकयवानीकां पीतां पर्युषितवारिणा प्रातः।
गुडपूर्वां क्रिमिजातं कोष्ठगतं पातयत्याशु ॥ १ ॥
पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत्।
केवुकस्य रसं वापि पत्तूरस्याथवा रसम् ॥ २ ॥
लिह्यात् क्षौद्रेण वैडङ्गं चूर्णं क्रिमिविनाशनम् ॥ ३ ॥

मुस्ताखुपर्णीफलदारुशिग्रु
क्वाथः सकृष्णाक्रिमिशत्रुकल्कः।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्ति क्रिमिजांश्च रोगान् ॥ ४ ॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम्।
जग्ध्वा सौवीरकञ्चानुपिबेत् क्रिमिहरं परम् ॥ ५ ॥

---

अर्शोऽभि क्रिमिसम्बन्ध इत्यर्शोऽनन्तरं क्रिमिचिकित्सामाह पारसीकेत्यादि। पारसीक यमानी खोरासानीयमानीति ख्याता। गुडपूर्वामिति गुडः पूर्वो यस्याः सा, गुडं भक्षयित्वा भक्षयित्वं तथा मात्रया व्यवस्थेः। पेषणमपि पर्युषितवारिणेति ॥ १ ॥

पारिभद्रेत्यादि। — पारिभद्रकः मन्दारविशेषः। केवुकस्येति केवुकस्य केउताड़ा इति ख्यातस्य तस्य मूलस्वरसं ग्राह्यम्, एवं पत्तूरस्य पत्तूरः शालिञ्चः। क्षौद्रयुतमितिपदं केवुकरसे पत्तूररसेऽपि योज्यम् ॥ २॥

लिह्यादित्यादि स्पष्टम् ॥ ३ ॥

मुस्तेत्यादौ। – आखुपर्णी मूषिकपर्णी, दण्डी भेदोऽयं, फलशब्देनात्र त्रिफलाग्रहणं रविगुप्तवादात्। क्रिमिशत्रुर्विडङ्गसारः ॥ ४ ॥

आखुपर्णीदलैरित्यादि आखुपर्णी मूषिकपर्णी दण्डीभेदो वा मण्डूकपर्णीत्यन्ये, दलं कोमलदलं। यदाह वाग्भटः "आखुपर्णी किसलयैः सुपिष्टैः पिष्टमिश्रितैरिति" पिष्टकेनेति यवपिष्टकेन क्रिमिहृत्वादिति शास्त्रतात्पर्यतः। शालितण्डुलपिष्टकेनेति निश्चलः। आः

पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम्।
पिबेत्तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम्॥ ६॥
सुरसादिगणं वापि सर्व्वैर्वोपयोजयेत्॥ ७॥
विडङ्गसैन्धवक्षारकाम्पिल्लकहरीतकीः।
पिबेत्तक्रेण संदिग्ध्यः सर्व्वक्रिमिनिवृत्तये॥
विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी वसुवर्द्धिका॥ ८॥
पीतं विम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन्॥ ९॥
त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम्॥ १०॥

---

खुपर्णीपत्रस्य भागद्वयं पिष्टकस्य त्वेको भाग इत्याहुः। सौवीरं काञ्जिकं यद्यपि सुश्रुते वाभटे च क्षीराणि मांसानीत्यादिना क्रिमिमात्रस्यैव वर्ज्यं नयुक्तं तथापि विशेषवचनादत्र काञ्जिकानुपानमिति न विरोधः॥ ५॥

पलाशबीजमित्यादि।— पलाशबीजस्य स्वरसः, तद्बीजकल्को वा तक्रेणेति तण्डुलाम्बुनाप्ययं योगो ज्ञेयः। तदुक्तं सुश्रुते पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुनेति॥ ६॥

सुरसादिगणः सौश्रुतः सर्व्वैर्वेति स्वरसकषायकल्पनया॥ ७॥

विडङ्गसैन्धवेत्यादौ।— काम्पिल्लको गुण्डारोचनी। विडङ्गेत्यादि।— [illegible] तक्रसिद्धेति तक्रमात्रसिद्धेत्यर्थः [illegible] [illegible]। सुवर्चिका सर्जिका वा क्षारः तं दत्त्वा भक्षयेत्॥ ८॥

विम्बीघृतमिति विम्बीकल्कसिद्धं घृतं, [illegible]॥ ९॥

[illegible] नागदन्ती [illegible]। तदुक्तं [illegible]। [illegible] सर्पिः पानात् [illegible]॥ १०॥

विडङ्गघृतम्।

त्रिफलायास्त्रयः प्रस्था विडङ्गप्रस्थ एव च।
द्विपलं दशमूलञ्च लाभतः समुपाचयेत्॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत्फलं क्रिमिनाशनम्॥
विडङ्गघृतमेतच्च लेह्यं शर्करया सह।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान्॥११॥
रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः।
ताम्बूलपत्रजो वापि लेपो यूकाविनाशनः॥१२॥
विडङ्गगन्धशिलासिद्धं सुरभीजलेन कटुतैलम्।
आजन्म नयति नाशं लिख्यासहितास्तु यूकास्तु॥१३॥

इति क्रिमिरोगचिकित्सा।



## अथ पाण्डुरोगाधिकारः।

साध्यन्तु पाण्डामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्धमधश्च शुद्धम्॥१॥

---

त्रिफलादिस्पष्टं॥११॥

रसेन्द्रेणेति योगं यूकाघ्नम्॥१२॥

विडङ्गेत्यादौ।—शिला मनःशिलेति केचित्। अन्ये तु गन्धकशिला गन्धकपाषाणमेव वदन्ति। सुरभीजलं गोमूत्रं तच्च चतुर्गुणं ग्राह्यम्॥१३॥

पुरीषक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगमाह साध्यमित्यादि सुश्रुतस्य समीक्ष्येति अनुबन्धानुबन्धरूपं तद्दोषविशेषणं सम्यगुन्नलभ्य स्निग्धमेव नस्विन्नं, पाण्डुरोगे स्वेदनिषेधात्। स्नेहे घृतस्यैव प्रधानत्वात् घृतेनेव स्नेहनं उक्तं घृतञ्च भेषजसंस्कृतमेव देयं बहुगुणत्वात्। उक्तं हि चरके कल्याणकं पञ्चगव्यं महातिक्त-

सम्पादयेत् क्षौद्रघृतप्रगाढ़ै र्हरीतकीचूर्णमयैः प्रयोगैः ॥ २ ॥
पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेव चापि ।
विरेचनद्रव्यकृतान् पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥३॥
विधिः स्निग्धोऽत्र वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ ४ ॥

---

तथापि वा स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे इति । अन्ये तु कोमलेनैव घृतेनेत्याहुः । ऊर्द्ध्वमिति वमनेन, अधश्चेति विरेचनेन, यद्यपि पाण्डुरोगे वमनं निषिद्धं तथाप्ययं भैषिकं मगुलिखो नचापि पाण्डुदररोगपीडितमिति तथापि पीडितमिति वचनेन महद्भूपाण्डु-रोग विषयं तद्वचनं ज्ञेयम् । उपक्रमेतु कालन्तु दोषाद्यपेक्षया कफो-द्रेकावस्थायां मृदु वमनं ज्ञेयम् । यथाच हारीतः कालन्तु दोष प्रकृ-तिं शरीरं समीक्ष्य दद्याद्वमनं विधिज्ञ इति । सुश्रुतेप्युक्तम् एतेष्वजीर्णे व्यधिता वम्यायेव विशारदाः । नतीव चोल्वनकफास्ते च सुरसंयुका-न्बूमेति । विरेचनञ्च तीक्ष्णमेव तदुक्तं वाजस्यवीक्ष्याम्यनुलोमनानि कल्पोपदिष्टानि भिषग्विदध्यादिति ॥ १ ॥

इदानीं संशोधनानन्तरं कृतसंसर्जनक्रमस्य दोषविशेषशमनार्थ-माह सम्पादयेदिति ।—हरीतकी चूर्णाञ्च यैक्ष्णवाणैनंवारवादिभिर्ह-रीतकीचूर्णबहुलैरित्यर्थः । हरीतकीचूर्णयुतैरिति पाठान्तरम् ॥ २ ॥

रजनीविपक्वमिति । हरिद्राकल्ककाथाभ्यामिति चन्द्रिका । तन्न कल्कक्वाथकारणस्य गण विपक्वत्वात्, तस्मात् हरिद्राकल्कसिद्धमित्यन्ये । अन्ये तु दशमाणहरिद्राघृतमित्याहुः । त्रैफलमिति त्रिफलाक्वाथकल्क-सिद्धं, त्रिफलाद्यघृतं तथा पिचुमर्दाद्यादि कुष्ठोक्तम्, नेत्ररोगोक्तं वा ज्ञेयम् । तैल्वकमिति वातव्याध्युक्तम् । विरेचनद्रव्य क...मिति त्रिवृदादिद्रव्यकं-कृतं घृतम् इदं द्वि वाक्यं सौश्रुतम् । योगांश्च वैरेचनानि...िश्रुत-विरेचनाध्यायोक्तान् घृतेन पिबेदिति ॥ ३ ॥

दोषप्रत्यनीकचिकित्सामाह विधिरित्यादि मिश्रक इति द्वन्द्वजे

द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत् ॥ ५ ॥
कफपाण्डुस्तु गोमूत्रयुक्तां क्लिन्नां हरीतकीम् ॥ ६ ॥
नागरं लौहचूर्णं वा कृष्णां पथ्यामथाश्मजम्।
गुग्गुलुं वाथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥ ७ ॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा संपिबेन्नरः ॥
फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥ ८ ॥

---

द्विशर्करमिति त्रिवृच्चूर्णमेव द्विगुणशर्करं पलार्द्धमानं, तेन शर्करा कर्ष १ मा ५ रत्ति ४। त्रिवृच्चूर्णं माषा १० रत्ति ७ एवं मिलित्वा पलार्द्धमित्यर्थः, नतु त्रिवृच्चूर्णं पलार्द्धं द्विशर्करं पलमेकम्, एवं मिलित्वा सार्द्धं पलमेकं प्रत्यहोपयोगेऽस्या मात्राया अनार्हत्वात् ॥ ५ ॥

गोमूत्रक्लिन्नयुक्तामिति गोमूत्रेण क्लिन्नां पिष्टां तदनु गोमूत्रेण युक्तामालोड़िता पिबेदित्यर्थः, वृद्धवाग्भटस्वारस्यात्। अन्ये तु गोमूत्रेण क्लिन्नां मुहुःस्वेदितामित्याहुः। अन्ये तु चरके - वक्ष्यमाणयोगे क्षार-[illegible]नेति पठित्वा क्षारद्रवेण हरीतकीं पिबेदिति पूर्व्वेण योज-[illegible]रसस्वादात् पूर्व्व एव साधुः ॥ ६ ॥

[illegible]न्यादि नागरलौहचूर्णाभ्यामेको योगः, कृष्णापथ्याभ्यां द्वि[illegible]ःशिलाजतु, एतं योगः तृतीयः, गुग्गुलुमिति चतुर्थः गो[illegible] एवैव। लौहचूर्णञ्च जारितं पुटितञ्च ग्राह्यं तदभावे लौह[illegible] ग्राह्या, सा च त्रिफलाक्वाथैः पुट पाकेन संशोधनी[illegible], अत्र माषकमेकं शुण्ठीचूर्णञ्च माषकचतु-[illegible]। एवं पिप्पलीहरीतकीचूर्णं तथा शुद्धशिलाजतु माषा [illegible] गुग्गुलु माषा ८, सर्व्वत्रैव गोमूत्रेण पानम् ॥ ७ ॥

सप्तरात्रमित्यादि। [illegible] फलत्रिकमित्यादौ तिक्ता कटुकी ॥ ८ ॥

अयस्तिलत्र्यूषणकोलभागैः सर्व्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥९॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रशोधितम् ।
मधुसर्पिर्युतं चूर्णं सहतक्रेण योजयेत् ।
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम् ॥१०॥

नवायसं लौहम् ।

त्र्यूषणत्रिफलामुस्तविडङ्गचित्रकाः समाः ।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ।
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥११॥

---

अयस्तिलादौ ।—कोलं शुष्कबदरं ननु कर्षार्द्धं यदाह सुदान्तसेनः, अयः लौहमित्र व्योषैः समैर्माक्षिकधातुना । मधुना वटकान् कृत्वा जग्ध्वा तक्रं पिबेदनु इति । तिलोऽपि कृष्णः, माक्षिकधातुः स्वर्णमाक्षिकं तदपि शुद्धं ग्राह्यं, तच्छोधनञ्च लौह प्रदीपादौ बोध्यं अनुतक्र इति अनुपानम् ॥९॥

अयोमलमित्यादि ।—अयोमलं पुराणं मण्डूरं भूयो गोमूत्रशोधितमिति सप्तवारान् । मण्डूरचूर्णस्य माषकद्वयं त्रिधा विभज्य भोजनादिमध्यान्तेषु मधुसर्पिर्भ्यां लेह्यं पश्चादभ्यासक्रमेण माषकं वर्द्धयेत् । अनुपानमिह तक्रं दुग्धं वा ॥१०॥

त्र्यूषणेत्यादि ।—एकभागा एषां नवगुणं मण्डूरचूर्णं, आदौ रक्तिद्वयं घृतमधुभ्यां लौहपात्रे लौहमुषलिकया विमर्द्य लिह्यात्, रक्तिद्वयं क्रमात् वृद्धिः कार्य्या माषकद्वयं यावदिति व्यवहारः । वाभटे तु तक्राद्यनुपानमुक्तं यथा व्योषाग्नित्रिफलावेल्लमुस्तैस्तुल्यमयोरजः । चूर्णितं तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितमिति । एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम् ॥११॥

## योगराजः ।

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ।
माक्षिकस्य विशुद्धस्य लौहस्य रजसस्तथा ॥
अष्टौ भागाः सितायाश्च तत् सर्व्वं सूक्ष्मचूर्णितम् ।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ॥
उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना ।
दिने दिने प्रयोगेण जीर्णे भोज्यं यथेप्सितम् ॥
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान् ।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥
रसायनमिदं श्रेष्ठं सर्व्वरोगहरं परम् ।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥

---

त्रिफला इत्यादि ।—चरकस्य त्रिफलायास्त्रयो भागा इति मिलित्वा त्रयो भागाः, एवं त्रिकटुकस्यापि, त्रिद्रव्यस्य मानप्रधानत्वात् । चित्रकविडङ्गयोरपि प्रत्येकं पलं । शिलाजतुताम्रलौहचूर्णानां प्रत्येकं पञ्च पलानि, शर्करायाश्चाष्टौ पलानि, शिलाजतु च शिवागुटिकोक्तविधिना ग्राह्यं, रूप्यमलस्य चेति रूपस्यात्र ध्मायमानस्य यत् किट्टं निर्गच्छति तद्रूप्यमलं माक्षिकस्येति मारणपुटनादिना शुद्धस्य स्वर्णमाक्षिकस्य अन्ये तु पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य चेत्यत्र तथा रूप्यमलस्य इति पठन्ति । तेन रूप्यमलस्येति शिलाजतुविशेषणं, ततश्च रसायनाधिकारे राजतं कटुकं श्वेतमित्यादिना यदुक्तं शिलाजतु रूप्यमलत्वेनोक्तं तदिह गृह्यते इत्याहुः । एतत्तु न व्यवहरन्ति वृद्धाः । भानटे तु लौहस्थाने रूप्यं पठितं यथा ताप्याद्रिजतुरूप्यार्थमलाः पञ्च पलाः पृथक् । चित्रकत्रिफलाव्योषविडङ्गैः पलिकैः सह । शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुना प्लुता इति । तदत्र प्रयोगे भेदाद्यविरोधः उक्तं हि सुवर्णमथवा

कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ १२ ॥
विशाला कटुकामुस्तकुष्ठदारुकलिङ्गकाः ।
कर्षांशा द्विपिचुर्मूर्वा कर्षार्द्धा च घुनप्रिया ॥
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात्ततो मधु ।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत् ॥ १३ ॥
लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः ।
पिबेत् पाण्ड्वामयी शोथी ग्रहणीदोषपीड़ितः ॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा ।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥
रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत् ।
ततः प्रशमनीकार्य्या क्रिया वैद्येन जानता ॥ १४ ॥

---

कर्षं योगे यत्र न लभ्यते तत्र लौहेन कर्म्म स्यात् भिषक् कुर्य्याद्विचक्षण इति । पूर्व्वोक्तस्य वस्थापि शिलाजतु-लौहमलस्वर्णमाक्षिकलौहरजोभिश्चूर्णितैरेव इष्यते तेन तत्प्रकार वचनयोर्नविरोध इति । उडुम्बरः कर्षः, अजरकं अजीर्णं । वराग्निरित्यत्र नापुरुषः ॥ १२ ॥

विशालेत्यादि ।– विशाला गोरक्षकर्कटी. कर्षांशा च घुनप्रिया इत्यपपाठः किन्तु कर्षार्द्धांशेति । उक्तं हि चरके विशाला कटुकामुस्तकुष्ठदारुकलिङ्गकान् । कर्षोन्मितानद्विपिचुं कर्षार्द्धाञ्च प्रदापयेत् कर्षा मधुरसाद्वौ च सर्वं चूर्णं सुखाम्बुना मर्दितं तं रसं पूतं पीत्वा लिह्यात्तु माक्षिकमिति अतएव वचनबलात् कल्ककषायविधानमप्यत्र योगे बोध्यं तेन तच्चूर्णं सुखैः कदुष्णैरम्भोभिस्तत्तापेक्षया चतुर्गुणैर्मर्दित्वा वस्त्रपूतं कृत्वा पिबेत् अनन्तरञ्च मधु लिह्यादित्यर्थः ॥ १३ ॥

लौहपात्र इत्यादि अत्र जलं चतुर्गुणं बोध्यं पाकानुपपत्तेः । कल्याणघृतं पञ्चगव्यघृतञ्च उन्मादे वक्ष्यति, महातिक्तञ्च कुष्ठे, रेचनञ्च विरेचनत्वेन ॥ १४ ॥

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः॥
अञ्जनं कामलार्त्तस्य द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत्॥
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम्।

सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुड़ा च शुण्ठी॥

दार्वी सत्रिफला व्योष विड़ङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामला पाण्डुरोगवान्॥१५॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा।
चूर्णिताः कामली लिह्यात् गुड़क्षौद्रेण वाभयाम्॥
धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्कराः॥
लीढ्वा निवारयत्याशु कामलामुद्धतामपि॥१६॥
दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्व्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति॥१७॥

---

त्रिफलाया इत्यादि स्पष्टम्। अञ्जनमित्यादि अञ्जनं नेत्राञ्जनं द्रोणपुष्पी दण्डकलस इति केचित्। निशादिभिश्चूर्णाञ्जनं कार्य्यं तदुक्तं तन्त्रान्तरे निशागैरिकधात्रीणां चूर्णैर्वाञ्जनम् मतम्। एतच्च मध्वक्तशलाकया कार्य्यमित्याहुः। नस्यमित्यादौ। कर्कोटमूलमिति कर्कोटमूलरसः। जालिनी पीतघोषकः। सशर्करेत्यादि सुश्रुतस्य। त्रिभण्डी त्रिवृता, रेचनार्थमनुयोगः। गवाक्षी गोरक्षकर्कटी, श्वेतापराजिता इत्यन्ये, अत्रापि सशर्करेत्यादि योज्यमित्याह निश्चलः। कार्त्तिकस्तु सगुड़ा च शुण्ठीत्यत्र चकारं भिन्नक्रमं योजयित्वा शुण्ठी सगुड़ा इति व्याख्याय गवाक्षीमपि सगुड़ामाह। एवं सुश्रुतटीकायां डल्हनोऽपि व्याख्यातवान्। दार्व्वीत्यादि चरकस्य दार्व्यास्त्वक्॥१५॥

तुल्या इत्यादि। स्पष्टम्। धात्रीत्यादि। स्पष्टम्॥१६॥

दग्ध्वेत्यादि। सुश्रुतस्य। अक्ष इति विभीतकवृक्षः सुश्रुते बञ्जुः

पुनर्नवामण्डूरम्।

पुनर्नवात्रिवृच्छुण्ठीपिप्पलीमरिचानि च।
विड़ङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम्॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकन्तथा।
कुटजस्य फलं तिक्तापिप्पलीमूलमुस्तकम्॥
एतानि समभागानि मण्डूरं द्विगुणं ततः।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने॥
पाण्डुशोथोदरानाहशूलार्शःक्रिमिगुल्मनुत्॥ २१॥

मण्डूरवज्रवटकः।

पञ्चकोलं समरिचं देवदारुफलत्रिकम्।
विड़ङ्गं मुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः।
पक्त्वाष्टगुणे मूत्रे घनीभूते तदुद्धरेत्॥
ततोऽक्षमात्रान् गुड़िकान् पिबेत्तक्रेण तक्रभुक्।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम्॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा।
क्रिमिप्लीहानमुदरं गलरोगञ्च नाशयेत्।
मण्डूरवज्रनामायं रोगानीकविनाशनः॥ २२॥

---

इत्येव पाठो निश्चितः। अतो दीपिकायां मण्डूरापेक्षयैवाष्टगुणत्वं तेनायमेव पाठः प्रतिभातीति वदता स्वीकृतम्। गोमूत्रं सर्वं चूर्णत इति टीकेऽपि प्रति संस्कृत्य लिखितम्॥ २०॥

पुनर्नवामण्डूरे गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैवाभिहितत्वात् व्यवहाराच्च, अत्रापि द्वैगुण्यं न व्यवहरन्ति॥ २१॥

मण्डूरवज्रवटके, विड़ङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मित इति पञ्चकोलादिभागा विड़ङ्गमुस्तसहितास्त्रिपलसम्मिता इत्यर्थः। अत्रापि मण्डूरापेक्षयैवाष्टगुणत्वं मूत्रस्य, अद्वैगुण्यञ्च पूर्ववत्॥ २२॥

धात्र्यरिष्टः।

धात्रीफलसहस्रे द्वे पीडयित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुडवान्वितम्॥
शर्कराद्र्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः॥
कामलापाण्डुहृद्रोगवातासृक्विषमज्वरान्।
कासहिक्कारुचिश्वासानेषोऽरिष्टः प्रणाशयेत्॥ २३॥

द्राक्षाघृतम्।

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्डुर्त्तिज्वरमेहोदरापहः॥ २४॥

हरिद्राघृतम्।

हरिद्रात्रिफलानिम्बबलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥ २५॥

मूर्व्वाद्यं घृतम्।

मूर्व्वातिक्तानिशायासकृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्बपटोलाम्बुददारुभिः॥

---

धात्रीफलेत्यादि। चरकस्य। क्षौद्राष्टभाग इति क्षौद्रस्याष्टमोभागः, तेनामलकस्वरसस्य सप्तभाग इति सिध्यति, शर्कराद्र्धतुला पञ्चाशत् पलानि, अर्द्धपलेति लेखकदोषात् प्रमादः पाठः॥ २२॥

पुराणसर्पिष इति पुराणं दशवर्षस्थितं सर्पिः, जलमत्र चतुर्गुणमर्थात्। अन्ये तु पिष्ट्वा गोस्तनिकायास्तु पलान्यष्टौ समावपेत् पुराणसर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणमिति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः॥ २४॥

हरिद्रेत्यादौ क्षीरं चतुर्गुणम्॥ २५॥

मूर्व्वाद्यघृते वत्सकेन वत्सकफलं ग्राह्यम्॥ २६॥

अश्मभावैष्टं तमश्च' सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत्॥ २६॥

व्योषाद्यं घृतम्।

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवा।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैर्घृतं शृतम्।
सर्व्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान्॥ २७॥

इति पाण्डुरोगकामलाहलीमकचिकित्सा।



## अथ रक्तपित्ताधिकारः।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽश्नतश्च यत्।
तत्पाण्डुग्रहणीदोषप्लीहगुल्मज्वरादिकृत्॥
ऊर्द्ध्वं प्रवृत्तदोषस्य पूर्व्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम्॥

---

व्योषमित्यादि। वाभटस्तु बिल्वं [illegible] गजाहुः [illegible] प्रभृतिभिः कृतं पाद्यं वृश्चिकाली [illegible] ख्याता [illegible] चतुर्गुणं [illegible]। अन्यत्तु क्षीरं घृतसमं [illegible] चतुर्गुणमित्यादि। २७।

पाण्डुरोगवत् रक्तपित्तमपि [illegible] रक्तपित्ताधिकार [illegible] पाण्डुरोगानन्तरं रक्तपित्तमाह नोद्रिक्तमित्यादि। नोद्रिक्तमित्यादिना [illegible] कालात् [illegible] [illegible], [illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] [illegible] तत्पाण्ड्वित्यादि। [illegible] [illegible] [illegible]ः [illegible]। ऊर्द्ध्वं प्रवृत्तदोषस्य [illegible] [illegible]। [illegible] [illegible] दोष[illegible] [illegible] अपतर्पणं [illegible] चरके [illegible] [illegible] प्रायेण [illegible]

शालपर्ण्यादिना सिद्धा पेया पूर्वमभोजने ॥ ४ ॥
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ॥ ५ ॥
शालिषष्टिकनीवारकोरदूषप्रशातिकाः ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥
मसूरमुद्गचणकाः समुद्गाढकीफलाः ।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥
शाकं पटोलवेत्राग्रतण्डुलीयादिकं हितम् ।
मांसं लावकपोतादिशशैणहरिणादिकम् ।
विनाम्लशुण्ठीषड़ङ्गेन सिद्धं तोयञ्च दापयेत् ॥ ६ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवम्यमविरेच्यञ्च शमनैः समुपाचरेत् ॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेत्तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ७ ॥

---

शालपर्ण्यादिना सिद्धेति शालपर्ण्यादि स्वल्पपञ्चमूलं तथातिसारे उक्तौ ह्यौ च स्वल्पमहद्भेदात् एवं शालपर्ण्यादि त्रयमेव दोषाद्यपेक्षया देयं मित्याहुः । व्यवहारस्तु प्रायः स्वल्पपञ्चमूलेनेति ॥ ४ ॥

वमनमिति ।—मन्थोद्रवद्रव्यालोड़िताः शक्तवः ॥ ५ ॥

शाल्यादौ नीवार उड़िया, कोरदूषः कोद्रवः सचेह पुरातनो ग्राह्यः तेन कोरदूषस्य यद्रक्तपित्तहेतुत्वं चरके निदानस्थाने प्रोक्तं तदभिनवाभिप्रायेणेति केचित् । अन्ये तु निष्पावमाषपूपादि युक्तस्यैव कोरदूषस्य संयोगमहिम्ना रक्तपित्त हेतुत्वं निदाने प्रोक्तं केवलस्य तु कषाय मधुरलघुत्वात् रक्तपित्तहन्तृत्वमेवाहुः । प्रशातिका रक्तस्पूका, रक्त उड़िया इति ख्याता, सा जलमध्ये प्रायो भवति । प्रियङ्गुः कङ्गुः काङ्गनीति लोके । आढकी तुवरी । विनाम्लशुण्ठीत्यादि सुगमम् ॥ ६ ॥

निषिद्ध वमन विरेचनमाह क्षीणेत्यादि । शोषानुबन्धिनं यक्ष्मानुबन्धयुतम् शमन योगानाह वृषेत्यादि वृषस्य पत्राणि पुटपाकविधिना स्वेदयित्वा ततोरसोग्राह्यः । अन्यथा तत्पत्रस्वरसोदुष्प्राप्यो भवति । अत्र योगरत्नाकरे बोध्य मूलमाहुः । योगेयं मधुशर्कराद्य-

आटरूषकनिर्यूहे प्रियङ्गुमृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ८ ॥

वासाकषायोत्पलमृत्प्रियङ्गु-
लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिता क्षौद्रयुता निहन्यात्
पित्तासृगोवेगमुदीर्णमाशु ॥ ९ ॥

तालीशचूर्णसंयुक्तः पेयः क्षौद्रेण वासकस्वरसः ।
कफपित्ततमकश्वासस्वरभेदरक्तपित्तहरः ॥ १० ॥

आटरूषकमृद्वीकापथ्याक्वाथः सशर्करः ।
क्षौद्राढ्यः कासनश्वासरक्तपित्तनिबर्हणः ॥

---

विरेकेन तत्कृतकषायेणापि बोध्यः यदाह वाग्भटः पित्तासृक् शमयेत् पीतो निर्यासो वाटरूषजः शर्करामधुसंयुक्तः केवलो वामृतोऽपि वा ॥ ७ ॥

आटरूषकनिर्यूह इत्यादि। आटरूषो वासकः, मृत्तिका सौराष्ट्री तदभावे पङ्कपर्पटी, अञ्जनं रसाञ्जनं, क्षौद्रान्तोऽयं योगः। उक्तञ्च वाग्भटे वासारसेन फलिनीमृद्रसाञ्जनमाक्षिकं, पित्तासृक् शमयेत् पीतमिति। विनीय कल्कीकृत्य प्रक्षिप्येति वा। प्रियङ्ग्वादीनां मिलितानां कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषायत्नात्। उक्तं ह्यग्निवेशेन कर्षश्चूर्णस्य कल्कस्येत्यादि तथा क्षौद्रघृतादीनामित्यन्येत्वाहुः। चूर्णादीनां कर्षमानत्वं स्वतन्त्रप्रयोग एव भवति। यदि पुनरत्रोक्तपरिभाषानुसारेण प्रियङ्ग्वादीनां प्रत्येकं गृह्यते तदा भेषजभूयस्त्वं स्यात्, प्रियङ्ग्वादीनामल्पत्वं युक्तं भवति व्यवहारस्तु प्रियङ्ग्वादिकल्कक्षौद्रयोः प्रत्येकं चतुःपञ्चमाषकं प्रक्षेप इति ॥ ८ ॥

वासाकषाय इत्यादि।— सुश्रुतस्य। उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः। निश्चलस्तु सितामधुनोः प्रत्येकं शाणः, उत्पलादीनां मिलित्वा शाण इत्याह ॥ ९ ॥

तालीशेत्यादि।—अत्र वासकस्वरसस्य पलं, तालीशचूर्णस्य माषकद्वयं मधुमाषचतुष्टयमिति व्यवहरन्ति ॥ १० ॥

आटरूषकेत्यादि चरकस्यायं योगो नार्ष इति केचित्, तन्मते

पक्वोदुम्बरकाश्मर्य्यपथ्या खर्ज्जूरगोस्तनाः।
मधुना घ्नन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक् ॥
अट्रूषाखोटकत्वग्र सविन्दहितयुक्तो द्विगुणितः घृतः।
भुनिम्बकल्क ऊर्द्ध्वगपित्तास्रकामश्वासघ्नः ॥ १४ ॥
खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः।
पुष्पचूर्णान्तु मधुना लीढ्वा चारोग्यमश्नुते ॥ १५ ॥
अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ १६ ॥
वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत्।

---

पक्वोदुम्बरेत्यादि। उदुम्बरादीनां फलानि पक्वानि, ततश्चैषां चूर्णानि मधुना लेहः। काश्मर्यं गाम्भारीफलं खर्ज्जूरं पिण्डखर्ज्जूरं गोस्तना द्राक्षा। मधुनेत्यत्र हैवादयाप्रौ अनार्त्तत्वे वा. तत्र शार्करं मधु रक्तपित्तहरं चरकादिकुसुमसम्भवत्वात् पाक्षिकत्वादिः। नासायष्ट मतभिन्नेऽपि पक्वोदुम्बरफलं मधुना गुडेन च दृश्यते उक्तं हि टीकाकारेण "उदुम्बराणि पक्वानि गुडेन मधुनापि वा। उपयुक्तानि निघ्नन्ति नासा-रक्तं तथा प्रवर्त्तितं।" अट्रूषेत्यादि अट्रूषकः ॥ १४ ॥

खदिरस्येत्यादि। चरकस्य। चरकेऽत्र पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुदिति पाठः, टीकाकारोऽपि चूर्णानि तस्य रक्तपित्तनुदिति विशेषणं नोपपद्यत इतिकृत्वा पुनः पठितमित्याह। संग्रहकारैश्च पुष्पचूर्णानि मधुना लीढ्वा चारोग्यमश्नुते इति प्रति संस्कृत्य लिखितम्। अत्र तु पुष्पचूर्णं लेह्यमतः। यमतत्र नत्वेत निर्दिष्टमिति वृन्दटीकायां, किन्तु चरकटीकाकारैर्न्याख्यातोऽयमर्थः ॥ १५ ॥

अभयेत्यादि। अयं योगो यद्यपि पक्वोदुम्बरकाश्मर्य्यात्यादि योगमध्ये पठित एव तथापि फलाविशेषकथनार्थमिह पुनरुक्तम् ॥ १६ ॥

वासकस्वरसेत्यादि कृष्णा च वासकस्वरसे भावितेति योज्यं, भावनाच सप्ताहं उक्तं हि चन्द्रटे दिवादिवातपे शुष्कं रात्रौ रात्रौ च

भावनायां द्रवोद्देशः सम्यगार्द्रत्वकारकः ॥१७॥

एलादिगुडिका ।

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा ।
सिता मधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः ॥
सञ्चूर्ण्य मधुनायुक्ता गुडिकाः कारयेद्भिषक् ।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्द्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुडिका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥१८॥
लोहगन्धिनि निश्वासे उद्गारे रक्तगन्धिनि ।
पृथ्वीकां शाणमात्रान्तु खादेद्द्विगुणशर्कराम् ॥
नासाप्रवृत्तरुधिरं घृतभृष्टं सुलोपिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्द्धि प्रलेपनैः ॥
घ्राणप्रवृत्ते जलमेव देयं सशर्करं नासिकया पयो वा

---

वासयेत् शुष्कं चार्द्रीकृतं द्रव्यं समानां भावनाविधिः । द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् । तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधाविति ॥१७॥

एलेत्यादि त्वक्क्षीरी. चर...त्यः । अर्द्धाक्षा इति प्रत्येकं कर्षार्द्धमानाः । एवं सितादयश्च प्रत्येकं पलोन्मिताः । यक्त्याद्यि । यावता मधुना गुडिका भवति तावन्मानं मधु देयम् । आढ्यवातं वातरक्तं ...न्ये ॥१८॥

पृथ्वीकां शाणमात्रामिति पृथ्वीका कृष्णजीरकं न तु स्थूलैला, ... । शाणो माषचतुष्टयं, कृष्णजीरकस्य तीक्ष्णत्वे उष्णत्वेऽपि द्विगुणशर्करायोगात् प्रभावाद्वा पित्तहन्तृत्वम् । ... आमलकं घृते भृष्ट्वा काञ्जिके पिष्ट्वा शिरसि लेपो देयः । घ्राणप्रवृत्ते इत्यादि ... । जलादयः सशर्करा पञ्चनस्ययोगा इति गद-

द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हितं वा॥
रसः दाडिमपुष्पोत्थो रसो दूर्व्वाभवोऽथ वा।
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुत रक्तजित्॥ १९॥
मेढ्रगेऽतिप्रवृत्ते तु वस्तिरुत्तरसंज्ञितः।
शृतं चीरं पिबेद्वापि पञ्चमूलात्तृणाह्वयात्॥ २०॥

दूर्व्वाद्यं घृतम्।

दूर्व्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका।
सिताशीतमुशीरञ्च मुस्तं चन्दनपद्मकम्॥

---

दासः। तथा उक्तोऽपि घ्राणप्रवृत्ते सशर्करं पानीयं, पयोऽपि सशर्करं तथा द्राक्षा रसमपि सशर्करं नासिकाया पिबेत्। तथा क्षीरघृतं क्षीर-मन्थनोद्भूत घृतं तच्च सशर्करं नासिकया पिबेत् एवं इक्षुरसमपि नासि-कया पिबेत्। वृन्दटीकान्यास्तु केवल द्राक्षारसं सद्यं चेक्षुरसञ्च च तस्य [illegible] यदाह चरकः द्राक्षारसश्चैव रसश्च न [illegible] क्षीरस्य दूर्व्वारसस्य चैव [illegible] येति पठित्वा। नासापुटयोरिति विवृतवान्। केचित्तु मूर्द्धि केचि-न्तो मूर्द्धिं इति पठनमुद्धृत्य अत्र मूर्द्धि जलं देयमित्यर्थमाहुः। तत्र नासाप्रवृत्ते रुधिरमित्यादि चरकवचनं, घ्राणप्रवृत्ते इत्यादि सौश्रुतं तस्मात् दुरान्वयः। हितमेतत्त्व हिममेवेति पठोऽपि स्मेयः। नस्यमित्यादि चत्वारो योगाः चरकेऽप्युक्तं द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्व्वास्वरसस्य एव यवास मल्लानि पलाण्डु मल्लं नस्यमेक दाडिम पुष्पोत्थैर्वेति। एवं वाभटे प्रयुक्तं। केचित्तु रसो दाडिम पुष्पो दूर्व्वारस समन्वित इति तन्त्रान्तर प्रदर्शनादत्रापि दूर्व्वारस दाडिमरसयोरेक एव योग इत्याहुः॥ १९॥

मेढ्रग इत्यादि। तृणाह्वया पञ्चमूल्येति।— तृणाह्व मन्थ्या यदुक्तं सुश्रुते कुश काश शरेक्षु दर्भाः इति। अत दर्भा उलु-घासः। स [illegible] शरेक्षु काश दर्भानां शालीनां मूलमेव च, इति। उभयत्रापि ग्राह्यम्॥ २०॥

विपचेत् कार्षिकैरेतैः सर्पिरानं सुखाग्निना।
तण्डुलाम्बुत्वनाक्षीरं दत्वा चैव चतुर्गुणम्॥
तत्पानं वमतो रक्तं नावनं नासिकागते।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत्॥
चक्षुःस्राविणि रक्ते तु पूरयेत्तेन चक्षुषी।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्म सुयोजयेत्॥
रोमकूपप्रवृत्तेषु तदभ्यङ्गे प्रयोजयेत्॥ २१॥

शतावरीघृतम्।

शतावरीदाडिमतिन्तिड़ीकं काकोलीमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत्क्षीरचतुर्गुणं ज्ञः॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्यात्॥ २२॥

वृहच्छतावरीघृतम्।

शतावरीक्षुण्णानां रसप्रस्थद्वयं मतम्।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत्॥
जीवकर्षभकौ मेदा महामेदा तथैव च।
काकोली क्षीरकाकोली मृद्वीका मधुकन्तथा॥

---

दुग्धाष्टेन शीतश्वेतचन्दनमिति वृन्दः। अन्ये तु रक्तचन्दनमित्याहुः। तयोरुभयोरेव रक्तपित्तादौ शीतसंयुक्तत्वेनोक्तत्वात्। व्यवहारस्तु प्रायः श्वेतचन्दने नेति। तण्डुलाम्बु त्वनाक्षीरञ्च प्रत्येकं चतुर्गुणं दत्वा चैवेति चरकादित्याहुः॥ २१॥

शतावरीत्यादि।—चरकस्य। केचिदत्र दाड़िमफलं, चौन्तपर्णमित्याहुः। तिन्तिड़ीकं महार्द्रकं, काकोलीयुक्ते मेदे काकोलीमेदे, मध्यपदलोपी समासः, किम्वा काकोली शब्दः, प्रथमैकवचनान्त स्त्रीलिङ्ग शब्दः मेदे इति मेदाद्वयं, तन्त्रान्तरप्रमाणात् उक्तञ्च काकोली मधुकं मेदे तिन्तिड़ीकं सदाड़िमं शतावरी विदारीञ्च बीजपूरजटान्विता पिष्टा वतञ्च तोये पक्वमाज्यं ज्वरापहमिति॥ २२॥

मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम्।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक्॥
रक्तपित्तविकारेषु वातरक्तगदेषु च।
क्षीणशुक्रेषु दातव्यं वाजीकरणमुत्तमम्॥
योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम्॥
एतान् रोगान्निहन्त्याशु छिन्नाभ्राणीव मारुतः।
शतावरी सर्पिरिदं बलवर्णाग्निवर्द्धनम्॥
स्नेहपादः स्मृतः कल्कः कल्कान्मधुशर्करे।
इति वाक्यबलात् स्नेहे प्रक्षेप्यं पादिकं भवेत्॥ २३॥

वासाघृतम्।

वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः।
प्रदाय कल्कं विपचेद् घृतं तत्
सक्षौद्रमाश्वेव निहन्ति रक्तम्॥

---

बृहत्शतावरीघृते शर्करामधुसंयुतमिति सिद्धे शीते मधुशर्करयोर्म्मिलित्वा पादिकः प्रक्षेपः स्नेहपादः स्मृतः कल्क इत्यादि॥ २३॥

वासामित्यादि। — चरकस्य। अत्रार्द्राया विधानाभावात् क्वाथविधानेन कषायम्। निष्काद्रां पचेत् नतासां द्विगुणो भवेदितिवचनात्। अष्टगुणं जलं दत्वा चतुर्भागः कषायः कार्यः। उक्तं हि वाग्भटे वासामूलतुलां पिष्टं चतुर्द्रोणेऽम्भसि पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत्। तत् पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितमित्यादि। अत्र वासापुष्पकल्कः, अतः पत्रेऽपि पलचतुष्टयम्। गणस्य कोविदारस्य पुष्पस्येति पत्रमानं परिभाषावचनात्। अत्रानिर्दिष्टद्रवमानत्वात् स्नेहस्य द्रवस्य पञ्च पलानि। आगमोक्तं, एभिः द्रवमानानां स्नेहानां प्रस्थ इष्यत इति। यत्पुनः स्नेहपाकविधौ यत्र प्रमाणं नोदितं क्वचित् स्नेहस्य कुडवं तत्र पचेत् कल्कादीन्यपि परिभाषया स्नेहकुडव पाका-

शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काढ्यत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥ २४ ॥

कामदेवघृतम् ।

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च ।
शतावरी विदारी च शालपर्णी बला तथा ॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ।
काश्मरीफलमेतत्तु माषबीजं तथैव च ॥
पृथग्दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ।
बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा ॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः ।
पृथक्कर्षसमञ्चैव शर्करायाः पलद्वयम् ॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् ।
हलीमकं तथा शोषं वर्णभेदं स्वरक्षयम् ॥

---

मिथाभिवतु नस्वप्रियं ज्ञेयम् । सक्षौद्रमिति कल्कयन्मधु गर्कंदेति दधनेन घृतात् पादि ... ज्ञेयम् । अन्ये तु कल्कभक्तमधुशर्करेत्यभि-देयत्वात् कल्कस्या॰ चतुःपलता॰ मधुनोऽपि चतुःपलत्व माहुः । अत्र केचिच्चरके वासकं ... पित्त अवज्ञ मूलं गुल्मं पक्तनुशीहनदांश्च हलीति फलपञ्चं पठन्ति । वाभटेप्युक्तं पित्तगुल्मयक्ष्मकासाश्वहृद्ग्र-हकामला. तिमिर ज्वर वीसर्पस्वरभेदांश्च नाशयेत् ॥ २४ ॥

अश्वगन्धेत्यादौ तदर्द्धमिति गोक्षुरस्य पञ्चाशत् पलानि, शता-वर्यादीनां ... नामानां प्रत्येकं पञ्चाशत् पलानीत्यर्थः अश्वत्थ शुङ्गादी-नाञ्च ... नां पृथक् दश पलानि ततोमिलित्वा पलशतचतुष्टये क्वाथ्ये

त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम् ।
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेन्मुहुः ॥
तत्पक्वं स्थापयेद्भाण्डे दत्वा क्षौद्रं घृतार्द्धकम् ।
तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी ।
कासश्वासतमश्छर्दितृष्णाज्वरनिपीड़ितः ॥
वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ।
उरःसन्धानकरणं वृंहणं स्वरबोधनम् ॥
अश्विभ्यां निर्म्मितं सिद्धं कुष्माण्डकरसायनम् ।
खण्डामलकमानानुसारात् कुष्माण्डकद्रवात् ॥

---

त्वगेला पत्रकव्यम्। द्विपले जीरकस्य चेति कणाशुण्ठ्योः प्रत्येकं पलद्वयं, जीरकस्य च द्विपले तन्त्रान्तरसम्मतश्चैतत् तद्यथा "द्विपलांशैः कणा-शुण्ठीजीरकैरवचूर्णितैः" इति। वैद्य प्रसारकेऽप्येवमेवोक्तम्। व्यव-हारोपीत्थमेव। अन्ये तु पलार्द्धिकामिति परेण सम्बन्धात् जीरकस्य पलार्द्धं मित्याहुः। तन्न तन्त्रान्तरविरोधात् त्वगादीनान्तु पञ्चानां प्रत्येकं पलार्द्धम्। आयुर्वेदसारेऽप्युक्तं कुष्माण्डकानां रूढ़ानां स्विन्नं शत-पलं पचेत्। प्रतप्ते हविषः प्रस्थे मधुवर्णेऽथ लोहिते। खण्डाच्छतं कणा-जाज्यो द्विपलं नागरादपि धान्योपत्रं त्रिगन्धञ्च पृथगर्द्धपला-शिकम्। घृतार्द्धं माक्षिकोपेतं तत्खादेदस्त्रपित्तजिदिति। घृतार्द्धमिति प्रस्थार्द्धमानमित्यर्थः। खण्डामलकमानानुसारादित्यादि -- खण्डामलके कुष्माण्डतुलार्द्धे कुष्माण्डस्वामलकरसयोः प्रत्येकं प्रस्थ इत्युक्तः, तेन कुष्माण्ड शतपलेऽपान्वितमिति द्विगुणत्वेन प्रस्थचतुष्टयं दातव्य-मित्यर्थः। पक्वान्तरमाह यवान् यावद्रसो भवेदिति। स्विन्नकुष्माण्ड-स्यातिपीड़नेन यावान् रसो भवति तावतैव पाक इत्यर्थः। व्यवहारोप्य-मेवैव। यत्तत्स्वायं पचः उक्तं हि तन्त्रान्तरे दृढ़ं पुराणञ्चापि कुष्माण्डं कठिनं दृढम्। त्वक्शिराभ्यां विनिर्मुक्तमन्तर्बीजं स्विन्नं सुपिष्टं दर्शितवन्त्रैव प्रपीड़ितम्। विशुष्कमातपे किञ्चित् पात्र्यां त्वक्-कपात्राम्। औडुम्बरकटाहेन पचेत् प्रस्थं च सर्पिषः। कृत्वा क्षौद्र-निभं तस्मिन् क्षिपेत् खण्डशतं भिषक्। कुष्माण्ड पीड़नात्तोयं यत्तेन

पात्रं पाकाय दातव्यं यावान् वातरसो भवेत्।
अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतम्॥२७

वासाखण्डकुष्माण्डकः।

पञ्चाशत्पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः।
प्रस्थं पलशतं खण्डं वासाक्वाथाढके पचेत्॥
मुस्ताधात्री शुभाभार्गी त्रिसुगन्धैश्च कार्षिकैः।
ऐलेय विश्वधन्याकमरिचैश्च पलांशिकैः॥
पिप्पलीकुडवञ्चैव मधुमानीं प्रदापयेत्।
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्॥
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति॥२८॥

---

विपचेत् पुनरिति। मुद्रापाक इत्यादि अङ्गुलिपीडनजन्यं चिह्नं-मुद्रा, तया पाकोऽयं। एतच्चोपलक्षणं, तेनान्यदपि पक्वलक्षणं ज्ञेयम्॥२७॥

पञ्चाशत्पलमित्यादि। अत्रापि पूर्ववत् स्विन्नं, संस्कृत, कुष्माण्डात् पञ्चाशत् पलम्। नचात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्वाथस्यैवोक्तत्वात्। वासायाश्चतुःषष्टि पलानि जलस्यापि चतुःषष्टि शरावाः स्थाप्यन्त षोडश शरावरूप माढकम्। शुभा वंशलोचना, ऐलेयं एलवालुकं, मधुमानीति मधुनोऽष्टौ पलानि। अत्र-केचित् मानिकायां द्वैगुण्यमिच्छन्ति, किन्तु मानिका कुडवौ चेति या वा संख्या पलैःकृता। आर्द्रे द्रव्ये द्रव्ये चैव न तत्र द्विगुणं विदुरिति वचनात्, तथाचारपाणि वचने मानिकाष्टौ पलान्येवेत्यवधारणादष्टावेव पलानि नतद्द्वैगुण्यात् षोडश पलानीत्यर्थः। चरकेऽपि पूर्णं शरावमित्यत्र पूर्णपदेन शरावे द्वैगुण्याभावः सूचितः तथाहि पूर्णपदं द्वैगुण्य प्रतिषेधपरं अन्यथा पूर्णपदं व्यर्थं स्यात्। चक्रस्तु मानिका कुडवौ चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्वमाशङ्क्य मानिकायां द्वैगुण्य मिच्छन् चरकोक्त लशुनादिघृते मानिकया षोडश पलत्वं व्याख्यातवान्॥२८॥

### वासाखण्डकः ।

तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढ़कं भिषक् ॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धं तथा शतम् ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥
कुड़वं पलमात्रन्तु चातुर्जातं सुचूर्णितम् ।
क्षिप्त्वा विलोड़ितं खादेद्रक्तपित्ती क्षतक्षयी ॥
कासश्वासपरीतश्च यक्ष्मणा च प्रपीड़ितः ॥ २८ ॥

### खण्डकाद्यो लौहः ।

शतावरीच्छिन्नरुहा वृषमुण्डितिकाबलाः ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥
भार्गी पुष्करमूलञ्च पृथक् पञ्चपलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥

---

तुलामादायेत्यादि । अत्रार्द्रा वासा एवं सर्वत्र, निम्बादिकमपि । उक्तं हि वासा निम्ब पटोल बलाकुष्माण्डकेन्दीवरी । वर्षाभू कुटजाश्वगन्धसहिते द्वे पूतिगन्धामृते । मांसं नागबला सहचर पुरौ हिङ्ग्वार्द्रके नित्यशोऽग्राह्याण्यतत्त्वथैव नहि शुष्काणि ये चेक्षुजाना-घनाः । अष्टगुणे जल इति शरावगतं नात्र द्विगुणत्वं, न द्विगुणत्वं तुलाभागे पलोन्मानागते तथा इत्युक्तेः । पादशेषाश्च षड्विंशतिशरावाः चूर्णानामिति हरीतकी चूर्णानामाढ़कं चतुःषष्टि पलानीत्यर्थः प्रायो न पाकश्चूर्णानामिति प्रायः शब्दात् पाकोऽप्यस्तीति सूचयति । तेन चूर्णानां पाकोऽपि न विरोधः । चातुर्जातक पलमात्रमिति प्रत्येकं पलमात्रं निर्दिष्टस्य मानप्रधानत्वात् ॥ २८ ॥

खण्डाद्यं लौहमाह शतावरीत्यादि । छिन्नरुहा गुडूची । वृषो वासकः, मुण्डितिका मुण्डीरी, गायत्री खदिरः, त्रिफलायास्त्वच इति निर्दिष्टस्त्रिफलायाः, दिव्यौषधि [illegible] मामलकाः, माक्षिकं स्वर्ण-माक्षिकं मनःशिला स्वर्णमाक्षिकाभ्यां प्रत्येकं निर्जित्वा वा, प्रक्षिप्य मारितं लौहं ग्राह्यं । खण्डतुल्यमितिच्छेदः, तेन खण्डस्यापि

दिव्यौषधहतस्यापि माक्षिकेन हतस्य वा ।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः ।
पचेत्ताम्रमये पात्रे गुड़पाको यथामतम् ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम् ।
शृङ्गीविड़ङ्गं कृष्णा च शुण्ठ्यजाजीपलं पलम् ॥
त्रिफलाधान्यकं पत्रं द्व्यक्षं मरिचकेशरम् ।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः ।
गव्यक्षीरानुपानञ्च देयं मांसरसं पयः ॥
गुरुवृष्यानुपानानि स्निग्धं मांसादि वृंहणम् ।
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन् ।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरन्तथा ॥
आनाहं रक्तसंस्रावं चाम्लपित्तं निहन्ति च ।
चक्षुष्यं वृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥

---

द्वादश पलानि । केचित्तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरमेवाधिकरोतीति [illegible] सह खण्डतुल्यमिति योजयन्ति । तत्तु न सम्यक् यतः लौहयोगत्वादत्र लौहप्राधान्येन तन्मानापकर्षस्यायुक्तत्वात्, रक्तपित्तप्रत्यनीकत्वं लौहस्य [illegible] तत एव महागुणिकत्वात् विशेषतो रक्तपित्तहरम् । तत्तु द्रव्यपुटादिभावितत्वेन महावीर्यकतयोपपन्नम् । व्यवहारस्तु लौहसमतयैव । प्रस्थार्द्धमिति षोड़श पलानि, शुभा वंशलोचना, अश्मजतुकं शिलाजतु, त्वक् गुड़त्वक्, शुण्ठ्यादीनां जीरकान्तानां प्रत्येकं पलं, त्रिफलादीनां केशरान्तानां प्रत्येकं द्व्यक्षं कर्षद्वयमित्यर्थः । विड़ालपदकं कर्षः तच्च पूर्व्वयुग पुरुषाभिप्रायेण मानमुक्तं व्यवहारस्तु [illegible] अतः पञ्चमाषादारभ्य रक्तिद्वयवृद्ध्या माषचतुष्टयं यावत् [illegible] । गव्यक्षीरानुपानमिति [illegible] चतुःषष्टि

आरोग्यं पुत्रदं श्रेष्ठं मामाग्निबलवर्द्धनम्।
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम्॥
छागं पारावतं मासं तित्तिरिः क्रकराः शशाः।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत्॥
नारिकेलपयः पानं सुनिषन्नकवास्तुकम्।
शुष्कमूलकजीराख्यं पटोलं वृहतीफलम्॥
फलं वार्त्ताकुपक्काम्रं खर्ज्जूरं स्वादु दाड़िमम्।
ककारपूर्व्वकं यच्च मांसञ्चानूपमम्भवम्॥
वर्ज्जनीयं विशेषेण खण्डकाद्यं प्रकुर्व्वता।
लौहान्तरवदत्रापि पुटनादि क्रियिष्यते॥ २०॥
यच्च पित्तज्वरे प्रोक्तं वहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत्॥ २१॥

इति रक्तपित्तचिकित्सा।

---

शुणं, लौहान्तरे तथा दर्शनात्। उक्तं हि "अनुपानं चतुःषष्टि गुणं प्रकुः सदा बुधाः। जीराख्यमिति जीराख्यशाकं मारिशाकारं चम्पकादौ जीरेति ख्यातम्। ककारपूर्व्वकमिति विहितान् क्रकरकुरङ्गकृष्णसारान् विहाय ह्याम्। ककार पूर्व्वकं कपोतकर्कोटादि तत्परित्याज्यम्। अन्तसार लौहवदत्रापि वनिमन्थादि ज्ञेयं मधुघृत मदनादिकञ्च। अत्र केचित् गन्धकाभ्ररसयोः कुर्व्वन्ति एतदनुकूलञ्च वचनं पठन्ति। न रसेन विना लौहं भस्मकञ्चाभ्रकं विनेति। तथा चपलेन विना लौहं यः करोति पुमानिह। उदरे तस्य किट्टानि जायन्ते नात्र संशय इति। एतन्न व्यवहारयितुम्। यतः रसाभ्रकल्पितलौहप्रयोगस्य प्रशस्ततापतिपादनार्थं तथाभ्रकशून्यलौहे क्रिमिकिट्टादि व्यापच्छङ्का निवृत्त्यर्थमभ्रकरसाभ्यां लेपनार्थञ्च फलातिशय प्रतिपादनार्थमपि चतुः सममौहे शाकानुपनि. पठितम्॥ पुरुषानिहेति, इह शब्दात् वचनद्वयमपालैव बोध्यं नान्यत्र। अन्यथा सामान्यत एव परिभाषितमिदं स्यादिति॥ २०। इति रक्तपित्ताधिकारः।

# अथ यक्ष्माधिकारः ।



शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यताम् ॥
शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यात् क्रव्यादमांसानि बृंहणानि विशेषतः ॥ १ ॥
दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम् ॥

---

यक्ष्मणोऽपि पित्तास्रस्य चागम इति रक्तपित्तानन्तरं राजयक्ष्म-चिकित्सितमुच्यते । शालीत्यादि । शाल्यादिकं सम्वत्सरातिक्रान्तं यदाह वाभटः शालिषष्टिकगोधूमयवमुद्गं समोषितमिति । क्रव्याद-मांसानीति क्रव्यादा व्याघ्रगृध्राद्यः । एषाञ्च मांसमतिशयेन मांसकरं भवति । उक्तं हि मांसेनोपचिताङ्गानां मांसं मांसकरं परम् । एतच्च भक्ष्यच्छागादिमांसव्याजेन देयम् । उक्तं हि काकोलूकवृकद्वीपि-गवाश्वनकुलोरगं गृध्रवाससखरोष्ट्रञ्च हितं छद्मोपसंहितमिति । सुश्रु-तेऽप्युक्तम् काकानुलूकान्नकुलान् बिड़ालान् गण्डूपदान् व्यालबिलेशया-श्च न । भूमांश्च दद्याद्विविधैः प्रकारैः सम्यक्स्वतान् सर्षपतैलभृष्टान् । देयानि मांसानि च जाङ्गलानि मुद्गादिका सूपरसाश्च हृद्याः । एतेषु रागाश्च रसाश्च यानि देयानि मांसानि सुकल्पितानि । मांसोपदंशांश्च पिबेदरिष्टान्माध्वीकमृद्वीकादींश्च सेव्य इति । सुकल्पितानीति सूद-शास्त्रोक्तविधया उपकल्पितानि ॥ १ ॥

दोषाधिकानामित्यादि चरकस्य । सस्नेहमिति पदच्छेदम् । यन्नकर्षण-मित्यनेन वमनविरेचनयोरत्र मृदुनोरबलापकर्षणयोः प्रयोगं दर्शयति । शुक्रमित्यादि वाभटस्य शुक्रस्य सर्वधातुसारत्वात्तदधीनं यक्ष्मिलक्षणं बलम् । मलायत्तं हि जीवितमिति यद्यपि सर्वेषामेव जीवितं मला-

सृष्टकोष्ठस्य युञ्जीत विधिं दृंहणदीपनम् ।
शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवितम् ॥
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥ २ ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ।
दाडिमामलकोपेतं सिद्धमाजरसं पिबेत् ॥
तेन षड्विनिवर्त्तन्ते विकाराः पीनसादयः ।
रसे द्रव्याम्बुपेयावत् सूदशास्त्रक्रमादिह ॥

---

धीनं मलस्य शरीर . तस्मात्तथापि विशेषाद्राजयक्ष्मिणो जीवितं मलाधीनं। उक्तं हि तस्मिन्काले पचत्यग्निर्यदन्नं कोष्ठसंश्रितम्। मलीभवति तत्प्रायः कल्पितं किञ्चिदोजसे। तस्मात् पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः। सर्वं धातुक्षयार्त्तस्य बलं तस्य हि विड्बलमिति ॥ २ ॥

पिप्पलीकमित्यादि। अत्र केचित् यव कुलत्थावन्यद्रव्यापेक्षया प्रचुरौ देयौ यूषयोनित्वात्। पिप्पली शुण्ठी च तावती देया यावत्या कटुत्वमात्रं स्यात्। एवं अम्लत्वार्थं दाडिमामलकयोर्दानम्। एतत् सर्वं पिप्पल्यादिद्रव्यापेक्षया द्विगुणमांसेन सह एकीकृत्याष्टगुण-जले क्वथनीयम्, तत्पादस्थं घृतेन संस्कृत्य उपयोज्यम्। वृद्धवैद्यास्तु पिप्पली शुण्ठ्योः प्रत्येकं माषकचतुष्टयं, यव कुलत्थयोस्तु प्रत्येकं कर्षः दाडिमामलकयोरपि प्रत्येकं माषचतुष्टयं ग्राह्यम्, समुदितद्रव्यापेक्षया मांसं द्विगुणं ग्राह्यं, सर्वमेकीकृत्याष्टगुणजले क्वथनीयं तत्पादस्थं घृतेन संस्कृत्य उपयोज्यमित्याहुः। चक्रस्तु स्वमतमाह रस इत्यादि। षडङ्गपरिभाषया द्रव्यं जलञ्च गृहीत्वार्द्धशृतं कार्य्यं तेनार्द्धशृतक्वाथेन पलानि द्वादश मांसस्य इत्यादि वक्ष्यमाणसूदशास्त्रोक्तपरिभाषानुसारेण परिमितं पिष्टं मांसं एकीकृतं पुनरपि पिष्ट्वा पक्त्वा च यूषः कार्य्य इति। व्यवहारस्तु पर्य्योक्त वृद्धोपदिष्ट एव ज्ञेयः। पीनसादय इत्यादिशब्दाज्ज्वरकोक्तानि शिरःशूलश्वासकासस्वरक्षयपार्श्वशूलानि बोध्यानि। रसे द्रव्याम्बु पेयावदित्यादौ पेयावदित्यनेन यथा क्वाथ-साध्यपेयायां षडङ्गपरिभाषया द्रव्यजलयोर्व्यवस्था तथा मांसरसेऽपी-

पलानि द्वादशप्रस्थे धनेऽथ तनुकेतु षट् ।
मांसस्य वटकं कुर्य्यात् फलमच्छतरे रसे ॥ ३ ॥
धन्याकपिप्पलीविश्व दशमूल जलं पिवेत् ।
पार्श्वशूलज्वरश्वासपीनसादि निवृत्तये ॥
अश्वगन्धामृताभीरुदशमूलीवलावृषाः ।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः ॥
दशमूलबलारास्नापुष्करसुरदारुनागरैः क्वथितम् ।
पेयं पार्श्वांसशिरोरुक्क्षयकासादिशान्तये सलिलम् ॥ ४ ॥
ककुभत्वक्नागबलावानरीबीजानि चूर्णितं पयसि ।
पक्कं घृतमधुयुक्तं ससितं यक्ष्मादिकासहरम् ॥
पारावतकपिच्छागकुरङ्गानां पृथक् पृथक् ।
मांसचूर्णमजाक्षीरं पीतं यक्ष्महरं परम् ॥ ५ ॥

---

त्यर्थः। मांसस्य स्नुदशाम्लोक्त वचनानुसारेण ग्राह्यमित्याह। पला-नीत्यादि।—अस्यार्थः सर्वत्रापि पिष्ट्वेति शेषः। प्रस्थद्रवे यदि धन-रसः कर्त्तव्यस्तदा मांसस्य द्वादश पलानि पिष्ट्वा वटकं कुर्य्यात्, तथा प्रस्थद्रवे यदि तनुकोऽल्परसः कर्त्तव्यस्तदा मांसस्य षट्पलानि पिष्ट्वा वटकं कुर्य्यात्, एवं प्रस्थे द्रवे यदि अच्छतरो रसः कर्त्तव्यस्तदा मांसस्य पलं पिष्ट्वा वटकं कुर्य्यादिति। षडङ्गयूषे पुनः षडङ्गपरिभाषा-नुसारेण प्रथमार्द्धं जलमर्द्धशृतं तत्प्रस्थार्द्धमेव भवति, तेन तत्र घन-रसे मांसस्य षट्पलानि, तनुके पलत्रयं, अच्छतरेऽर्द्धपलमिति ॥ ३ ॥

धन्याकपिप्पलीत्यादि वातकफोत्तरे योगोऽयम्। अश्वगन्धेत्यादि।—अभीरुः शतमूली, वृषो वासकः। क्षये ग्रायं योगः। अमृतासौद्रे-त्यादिकं पुष्करातिविषयोः प्रक्षेपत्वमिति वृन्दटिप्पनी। दशमूलबले-त्यादि स्पष्टम् ॥ ४ ॥

ककुभेत्यादि। ककुभत्वक् अर्जुनवल्कलं नागबलागोरक्षतण्डुला, अस्यमूलं सर्वत्र बोध्यम्, वानरी शूकशिम्बी, एषां चूर्णं प्रत्येकमेकपलं १ मिलितं चतुःपलं। दुग्धशरावं २ सर्वमिदं पक्वा उत्कारिका कार्य्या, परि-

घृतकुम्भसारलीढं क्षयं क्षयं नयति गजबलामूलम्
दुग्धेन केवलेन तु वायसजङ्घाग्निपीतैव॥
कृष्णाद्राक्षाभितालेहः क्षयहा स्त्रौ तैलवान्।
मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भवः॥
शर्करा मधुसंयुक्तं नवनीतं लिहन् क्षयी।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके॥ ६॥

सितोपलादिलेहः।

सितोपला तुगाक्षीरी पिप्पली बहुला त्वचः।
अन्त्यादूर्द्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा॥
चूर्णितं प्राशयेदेतत् श्वासकासक्षयापहम्।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम्॥
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्द्धगे॥ ७॥

लवङ्गाद्यं चूर्णम्।

लवङ्गकक्कोलमुशीरचन्दनं
नतं सनीलोत्पलजीरकं समम्।

---

मर्दनार्थं घृतकर्षं ५ मुष्टौ मधु किञ्चिद् दत्वा भक्ष्यम्। काशपतैलादि स्पष्टम्॥ ५॥

घृतकुम्भेति घृतकुम्भसारो मधु, गजबला नागबला, गोरक्षतण्डुला इति ख्याता। वायसजङ्घा काकजङ्घा। कृष्णेत्यादि सितोद्भव इत्यन्तं योगद्वयं स्पष्टम्। अतुल्ये चाज्यमाक्षिके इत्यपि योगान्तरम् अत्रापि लिहन् क्षयी क्षीराशी लभते पुष्टिमिति योज्यम्॥ ६॥

सितोपलादिचूर्णस्य। सितोपला शर्करा तुगाक्षीरी वंशरोचना, बहुला एला, त्वक् गुडत्वक्, अन्त्यादूर्द्ध्वं द्विगुणितमिति अत्र प्रयोगे त्वच एको भागः, एलाया द्वौ पिप्पल्याश्चत्वारः, तुगाक्षीर्या अष्टौ, सितोपलायाः षोडश इत्यर्थः। अत्राप्यर्द्धश्लोकागतमभिधत्ते यथा क्षते उक्तं प्रवक्ष्यामि यवागूर्विविधौषधा, तथाप्यत्र विशेषावगादतो मध्यभिधत्ते। चूर्णितं प्राशयेदित्यनेन मधुघृतं विनापि भक्षणं बोधयति॥ ७॥

त्रुटिः सकृष्णागुरुभृङ्गकेशरं
कणार्कविश्वानलदं सहाम्बुदम् ॥
अहीन्द्रजातीफलवंशलोचना-
सिताष्टभागं समसूक्ष्मचूर्णितम् ।
सुरोचनं तर्पणमग्निदीपनं
बलप्रदं वृष्यतमं त्रिदोषनुत् ॥
उरो विबद्धं तमकं गलग्रहं
सकासहिक्कारुचियक्ष्मपीनसम् ।
ग्रहण्यतीसारभगन्दरार्बुदं
प्रमेहगुल्मांश्च निहन्ति सज्वरान् ॥ ८ ॥

तालीशाद्यो मोदकः ।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥

---

लवङ्गमित्यादौ नतं तगरपादिका, तदभावे शिवलीङ्गोदरं, हलिनीत्पलपत्र जीरकमिति पाठे पत्रं तेजःपत्रं त्रुटिः सूक्ष्मैला, भृङ्गं गुडत्वक्, नलदं मांसी, सह्याम्बुमिति पाठे अम्बु बालकं अहीन्द्रो-नल मूलं शर्कराया एकभागापेक्षयाष्टौ भागा अन्ये तु मिलितचूर्णा-पेक्षयेत्याहुः । व्यवहारस्तु पूर्व्ववैव ॥ ८ ॥

तालीशपत्रमित्यादौ शुभेति पिप्पली विशेषणं न तु वंशलोचना, समानतन्त्रे हारीतादावदृष्टत्वात् । किन्तु संग्रहकाराः प्रबल 'एक' शुभाख्यां वंशलोचना व्याख्येति लिखन्ति । एतमेवार्थं वहिर्हिवति इष्टा तालीशमरिच नागर मासधिका वंशलोचना क्रमशः । वृद्धान्त-

कल्पयेद्गुड़िकां चैतच्चूर्णं पक्त्वा सितोपलाम्।
गुड़िकाह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः॥
पैत्तिके ग्राहयन्त्रेऽके शुभया वंशलोचनाम्॥ ८ ॥

विश्वरवासियोगः।

शृङ्गार्जुनाश्वगन्धानागबलापुष्कराभयाच्छिन्नरुहाः।
तालीशादिसमेतालेह्या मधुसर्पिभ्यां यक्ष्महराः॥
मधुताप्यविडङ्गाश्मजतुलौहघृताभयाः।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना॥
व्योषं शतावरी त्रीणिफलानि द्वे बले तथा।
सर्व्वामयहरोयोगः सोऽयं लौहरजोन्वितः॥

---

गेनार्द्धं कृष्णायाः सिता भवेदष्ट गुणा त्वगेलाचार्द्धभागिकाचेति प्रथम भागापेक्षयात्वगेलयोः प्रत्येकमर्द्धभागत्वं पिप्पल्यष्टगुणेति पिप्पलीभागापेक्षया अष्ट गुणा सितशर्करा। गुड़िका पक्षे समं जलेन शकरा पाकं कुर्व्वन्ति वृद्धाः॥ ८॥

शृङ्गीत्यादौ छिन्नरुहा गुड़ूची, तालीशादि समेता इत्यनेन तालीशादि द्रव्यमात्र मनुकर्षति, नतु तत्रोक्तभागवृद्धिक्रममपि यथा वक्ष्यमाणचैतस्य घृते कल्याणकस्यचाङ्गन्यत्वेपि कल्याणघृतोक्तकल्कद्रव्य मात्रमिति तेनात्र शृङ्ग्यादीनां समभागतया तालीशादयोपि समभागा एव ग्राह्याः। मधुताप्येत्यादिमधु घृताभ्यां लेहः। लौहमत्रायस्चूर्णं पुटादिशोधितं नतु लौहमगुरुरसायनत्वात्। लौहमगुर्विति वृन्द टीप्पनी। ताप्यं स्वर्णमाक्षिकं तच्चाम्रतसारवक्ष्यमाणविधिना शोधितं ग्राह्यम्। अश्मजतु शिलाजतु, तदपि वक्ष्यमाणशिवाटिका गुड़िका विधिना शोधितं ग्राह्यं। अयो रजश्चात्र मिलिततरचूर्णसमम्। लौह चूर्णमत्र रसायनतया श्रेष्ठत्वात् महावीर्यत्वाच्च महाव्याधिप्रशमनहेतुत्वं युज्यत इति। विश्ववासियोगे त्रीणि फलानीति त्रिफला, द्वे बले इति नागबलाबले नतु श्वेत पीत भेदात् अत्र लौहचूर्णं रसायनतया श्रेष्ठत्वात् यौगिकत्वात् महावी-

एष वज्रः क्षतं हन्ति कण्ठजांश्च गदां स्तथा ।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्द्दितम् ॥ १० ॥

रसेन्द्रगुडिका ।

कर्षं शुद्धरसेन्द्रस्य स्वरसेन जयाद्र्ययोः ।
शिलायां खल्लयेत्तावत् यावत् पिण्डं घनं ततः ॥
जलकणा काकमाचीरसाभ्यां भावयेत् पुनः ।
सौगन्धिकपलं भृङ्गस्वरसेन विभावितम् ॥
चूर्णितं रससंयुक्तमजाक्षीरपलद्वये ।
खल्लितं घनपिण्डन्तु गुडीं स्विन्नकलायवत् ॥
कृत्वादौ शिवमभ्यर्च्च्य द्विजातीन् परितोष्य च ।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशनः ॥
सर्व्वरूपं क्षयं कासं रक्तपित्तमरोचकम् ।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति ॥ ११ ॥

---

यंत्वात्र मिलित व्योषादि चूर्णेन समं ग्राह्यम् । अतएव व्योषादि-पाठान्विच्छिद्य लौहरजोन्वित मिति पठितम् । चूर्णयोग एवायं घृत मधुनो रश्रुतत्वात् । अन्येतु लेह एवायं घृतमधुभ्यां कर्त्तव्यः । लेह प्रकरणे विहितत्वादित्याहुः । युक्तञ्चैतत् ॥ १० ॥

कर्षमित्यादि । रसेन्द्रः पारदस्तस्य शो नं वक्ष्यमाणक्षुधावती गुडिकायां वक्ष्यमाणविधिना कार्य्यम् । तदनु मेण जयाया जयन्त्याः स्वरसेन खल्वशिलायां संमर्द्य पिण्डाकारं कुर्य्यात् तदनु जलकणा मोरटा तस्या रसेनाप्लाव्य प्रत्येकं सप्तधा भावयेत् ततः सौगन्धिकं भद्रतरगन्धकं तदपि क्षुधावत्यां वक्ष्यमाणविधिना शोधितं पल परिमितं पारदेन सह घर्षनीयं तदनन्तर मजादुग्धे पलद्वये खल्वशिलास्थिते खल्लितं घनपिण्डतापन्ने तु स्विन्न कलाय प्रमाणां गुडिकां कुर्य्यात् तदनु प्रत्यह मेकां गुडिकां जीर्णान्ने भक्षयेत् । अनुपानञ्च दुग्धादिकमेव ॥ ११ ॥

समाहिकं कौड़विकं तत्सर्व्वं खजमूर्च्छितम्।
स्थानं सर्पिर्गुड़ान् कृत्वा भूर्जपत्रेण वेष्टयेत्॥
तान् जग्ध्वापलिकान् क्षीरं मद्यञ्चानुपिवेत् कफे।
शोषे कासे च्चतक्षीणे श्रमस्त्रीभारकर्षिते॥
रक्तनिष्ठीवने तापे पीनसे चोरसिस्थिते।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः॥
क्वाथ्ये त्रयोदशपले द्रव्याल्पत्व भयाज्जलम्।

---

तक्वाथ्ये तु काथ्यं चतुर्गुणमं जगुरिति। अस्यार्थः त्रयोदशपले क्वाथ्ये-ऽष्टगुणं जलं त्रयोदश शरावपरिमितं भवति, तस्य तु पादशेषात् सपादशराव त्रयं क्वाथं भवति। क्वाथ्य समश्च विदारीरसच्छागमांसरसश्च क्षीरश्च क्वाथापेक्षया द्विगुणमिति सार्द्धषट् शरावाः एवं घृताढ़के पक्तव्ये-ऽशत् पलाधिकं द्रवपञ्चगतमिह भवति। एवञ्च सति द्रवाल्पत्वं स्यादिति भयात् केचित्तु यथोक्त एव क्वाथ्ये त्रयोदशपलकल्पे तथा पानीयं देयं यथा पादशेषात् क्वाथो घृतसमः स्यात् तेनात्र त्रयोदशपलेऽपि क्वाथ्य जलद्रोणं दत्वा पादशिष्ट क्वाथस्य घृतसमत्वं कल्पनीयमिति जगुरक्तवन्तः। अस्मिन् पक्षे क्षीरं द्विगुणं दत्वा विदारी मांसरसौ च मिलित्वा घृत समाविति चतुर्गुणद्रवेण पाक चतुर्गुणं सिद्धो भवति चतुर्गुणा द्रवेण तु स्नेह पाकोतसर्गत्वात्। जतूकर्णेनापि क्वाथ्यमानमनियमितोक्तं क्वाथस्तु तथापि स्नेहसमता, पञ्च प्रभृति यत्रस्युरित्युक्तेः। अपिच यथा हृस्विरं पञ्चमूलं बलां विदारीं वटादि शुङ्गांश्च निकाथ्य द्विक्षीरे छागविदारी रसेच समे तत् जीवनीयगणाकल्कैः पक्वा घृताढ़कमित्यादि। अन्ये तु द्रव्यमापोथितं क्वाथ्यं दत्वा षोड़शिकं जलम्। पादावशेषः कर्त्तव्य एषक्वाथविधिः स्मृत इति, " अष्टाङ्गपरिभाषानुसारेण क्वाथ्ये षोड़शगुणं जलं दीयमानं षड्विंशतिशरावं भवति, पादशेषाञ्च सार्द्धषट् शरावक्वाथो भवति, द्विक्षीर इति क्वाथापेक्षया क्षीरस्य द्वैगुण्यात् त्रयोदश शरावाः, मिलितौ विदार्य्याजरसावपि कषायापेक्षया द्विगुणाविति। एवं मिलित्वा सार्द्धद्वात्रिंशद्

अष्टगुणं क्वाथसमौ विदार्य्यजरसौ पृथक् ।
केचिद्यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुः ॥ १२ ॥

च्यवनप्राशः ।

बिल्वाग्निमन्थश्योनाककाश्मर्य्यः पाटलिर्बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥
शृङ्गीतामलकी द्राक्षा जीवन्ती पुष्करागुरु ।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी ॥
मुस्तं पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दने ।
विदारी वृषमूलानि काकोली काकनासिका ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ।
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत् ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् ।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक् ।
मत्स्यण्डिकायाः पूताया लेहवत् साधु साधयेत् ॥

---

शरावद्रवैः पाक इति व्याचक्षते । व्यवहारं पुनः प्रायेणानेनैव । स्वल्पो मध्यानन्दगुडः अर्द्धपक्वे वेष्टनस्य शतयुत कर्षोन्मितम् ॥ १२ ॥

बिल्वाद्यौ पर्ण्यश्चतस्र इति शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्ण्यः । तामलकी भूम्यामलकी । जीवन्ती स्वनामख्याता । पुनर्नवा मेदेति पुनर्नवा च मेदा चेति द्वन्द्वः न तु मेदाद्वयं, पर्ण्योऽन्यः पिप्पली शृङ्गी मेदा तामलकी त्रुटिरिति वाभटवचनात् । उत्पलं नीलोत्पलं मत कुष्ठं सर्व्वस्मिन्नेव तन्त्रान्तरे कुष्ठस्यापि पाठस्य टीकाकारैर्व्याख्यातत्वाच्च । काकनासिका काउयाठुटी, जेज्जटस्तु रक्तोफलिकत्वाच्च । शतान्यामलकस्येति आकृतिमानत्वात्, आमलकी फलस्य पञ्चशतानि एतानि कर्पटे पोट्टली कृत्वा अपरैः क्वाथद्रव्यैः सह क्वथनीयम् । गतरसत्वञ्च द्रव्याणां चतुर्भागावशेषेण क्वाथेनेति ज्ञापयेत्

षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्य्याः पिप्पलीद्विपलन्तथा॥
पलमेकं निदध्यात्तु त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनम्॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा॥
मेधां स्मृतिं कान्तिमनामयत्वं वपुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम्॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्॥
जराकृतं पूर्व्वमपास्य रूपं विभर्त्ति रूपं नवयौवनानाम्॥

---

न्यस्यति। अतएव पादांशशेष इति वाग्भटेनोक्तं चतुर्थभागावशेष इत्याहुः। तन्न व्याख्यानमिदम्। निष्कुलमिति निरस्थिरहितम्, तच्च वीजादि वर्जनेन कार्य्यम्। पलद्वादशक इति मिलित्वा निर्द्देशस्य मानप्रधानत्वात्, एवं त्वगेलापत्रकेशरादपि मिलित्वैव पलम्. केचित् समानकरणसामर्थ्यात् मिलितपलाद्युक्तः तन्मते अगस्त्यहरीतक्यादौ दशमूलस्यापि मिलित्वा द्विपलता स्यात् दशमूलीति समासनिर्द्देशादिति ज्ञेयम्। अत्र समयोरपि मधुसर्पिषो र्द्रव्यान्तरसंयोगादेव न विरुद्धत्वं ज्ञेयम्। किम्वा आमलकभर्ज्जनेन घृतस्योपक्षीणत्वात् समत्वमेव नास्तीति। यद्यपि मत्स्यण्डिकापेक्षया शर्करा सिता वा तथाप्युपात्तत्वादिह सैव प्रशस्ता. तदभावे शर्करा खण्डो वा गृह्यते चक्रेणात्र शर्करैवोक्ता। च्यवनस्य मुनेः प्राश इति घञ्। योपरुन्ध्यान्न भोजनमिति वा प्रथम.क्रमात् अनोपयुक्ता जरयन् द्वितीयादिवासे भोजनोपरोधं न करो-

सितामत्स्यण्डिकालाभे धात्र्याश्च मृदुभञ्जनम् ।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत् ॥ १४ ॥

जीवन्त्याद्यं घृतम् ।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीपुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ १५ ॥

पिप्पलीघृतम् ।

पिप्पलीगुड़संसिद्धं छागक्षीरयुतं घृतम् ।
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ १६ ॥

पाराशरं घृतम् ।

षष्टीबलागुडूच्यल्पपञ्चमूलीतुलां पचेत् ।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद् घृतम् ॥

---

तात्पर्यार्थः यदुक्तं कणार्द्धिनक माहरं यासामात्रा जरां व्रजति । कटीप्रदेशादि वातातपपरिहारेणेत्यर्थः ॥ १४ ॥

जीवन्तीमित्यादि चरकस्य । अत्र जलमेव चतुर्गुणम् । केचित्तु चरके खदंष्ट्राघृतायनन्तर मयं योग उक्त अतः सत्यामल्पा पूर्वयोगोक्तं क्षीरमेवात्रापि द्रवमिच्छन्ति किन्तु वाभटादपि न दुग्धमतो जलमेवोक्तम् ॥ १५ ॥

पिप्पलीत्यादि ।-- पिप्पलीगुड़ौ कल्कौ छागक्षीरं चतुर्गुणम् ॥ १६ ॥

षष्टीत्यादि ।-- वाभटस्य षष्ट्यादीनां मिलित्वा तुला । शूर्पे इति द्रोणद्वये उक्तं दृढ़बलेन कुम्भं द्रोणद्वयं शूर्पं इति । क्षीरपाणिनाप्युक्तं द्रोणद्वयन्तु शूर्पं स्यात् कुम्भ इत्यभिधीयते । तस्मात् द्रोणपर्य्यायः शूर्पं इति वृन्दलिखितमतं नादरणीयम् । यद्यपि तुला द्रव्ये एक-एव जलद्रोण उचित स्तथापि निर्द्दिष्टत्वादिह तोयं द्रोणद्वयमेव देयम् ।

अजापञ्चकं घृतम्।

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम्॥२०॥

बलागर्भं घृतम्।

द्विपञ्चमूलस्य पचेत् कषाये प्रस्थद्वये मांसरसस्य चैके।
कल्कं बलायाः सुनियोज्य गर्भं सिद्धं पयःप्रस्थयुतं घृतञ्च॥
सर्व्वाभिघातोत्थित यक्ष्मशूलक्षतक्षयोत्कासहरं प्रदिष्टम्॥२१॥

नागबलाघृतम्।

पादशेषे जलद्रोणे पचेन्नागबलातुलाम्।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत्॥
पलार्द्धिकैश्चातिबलाबलायष्टि पुनर्नवा।
प्रपौण्डरीककाश्मर्य्य पियालकपिकच्छुभिः॥
अश्वगन्धासिताभीरुमेदायुग्म त्रिकण्टकैः।
मृणालबिसशालूक शृङ्गाटककसेरुकैः॥
एतन्नागबलासर्पी रक्तपित्तक्षतक्षयान्।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम्॥

---

अजापञ्चकघृते सर्पिरप्यजाया एव एवं दधि च, यवक्षारस्याप्यत्र प्रक्षेपणत्वभाक्॥२०॥

द्विपञ्चमूलस्येति दशमूलस्य मिलित्वा द्वात्रिंशत् पलानि जलस्य च द्वात्रिंशच्छरावास्ततः प्रस्थद्वयं शेषः। मांसरसस्य चैक इति छागमांसरसस्य एकस्मिन् प्रस्थ इत्यर्थः, गर्भमित्यन्तः॥२१॥

पादशेष इत्यादि वाग्भटस्य। पादशेषमित्येव पाठः। पादशेषं यथा भवति तथा पचेदिति अन्ये तु पादशेष इति पठित्वा पादशेषे अर्त्तव्य इति व्याचक्षते। नागबला गोरक्षतण्डुला अतिबला गोरक्षतण्डुलैव मृणालविशेषस्त्वल्पमहद्भेदात्। मृणाल मुशीरं बिसं पद्ममूलमित्यन्ये॥२२॥

बलग्मौजस्यमायुष्यं वलीपलितनाशनम्।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते॥ २२॥

निर्गुण्डीघृतम्।

समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम्।
सिद्धं पीत्वा क्षयक्षीणो निर्व्याधिर्भाति देववत्॥ २३॥

बलाद्यं घृतम्।

बलाञ्च दंष्ट्राबृहतीकलसीधावनीस्थिराम्।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम्॥
कृत्वा कषायं पेष्यार्थं दद्यात्तामलकीं शटीम्।
द्राक्षापुष्करमूलञ्च मेदामामलकानि च॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम्।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम्॥
चरकोदितवासाद्यघृतानन्तरमुक्तितः।
वदन्तीह घृतात् क्वाथं पयश्च द्विगुणं पृथक्॥ २४॥

चन्दनाद्यं तैलम्।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम्।
मञ्जिष्ठा सरलं दारु शट्येला पूतिकेशरम्॥
पत्रं तैलं मुरामांसी कङ्कोलं वनिताम्बुदम्।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम्॥

---

निर्गुण्डीघृतमकल्कम्॥ २३॥

बलामित्यादि चरकस्य ज्वरचिकित्सितेयं योगः। कलसी पृश्नि-पर्णी, धावनी कण्टकारिका, स्थिरा शालपर्णी। चरकोदितेत्यादि चरके हि वासाघृतानन्तरमयं योग उक्तः। तत्र च क्वाथःपयश्च प्रत्येकं घृताद्द्विगुणम्, तत् साहचर्यादिहापि तथैवेति घृतसमं क्षीरं क्वाथश्च त्रिगुण इत्यन्ये॥ २४॥

चन्दनादितैले अम्बु बालकम्, वाप्यं कुष्ठ, पूतिः खट्टाशी तैलं

त्वग्रैयु नलिका चैभिश्चौलं मस्तुचतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत्॥
अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम्।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम्॥२५॥
छाग मांसं पयश्छागं छागं सर्पिः सशर्करम्।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मणुत्॥२६॥
उरोमत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिवेज्जीर्णे पयसाद्यात् सशर्करम्॥२७॥
इक्षुवालिकाबिसग्रन्थिपद्मकेशरचन्दनैः।
शृतं पयोमधुयुतं सन्धानार्थं पिवेत् क्षती॥२८॥

बलाद्यं घृतम्।

बलाश्वगन्धाश्रीपर्णी बहुपुत्री पुनर्नवाः।
पयसा नित्य...भ्यस्ताः शमयन्ति क्षतक्षयम्॥

शिलारसः, वनिता प्रियङ्गुः, निक्षा बलाकसरी, रेणु रेणुक, नलिका
नामुका, लाक्षारसो लाक्षाकाथः, लाक्षायाः षोडशगुणं ... ...
... ग्रहघ्नं इत्येकम्॥२५॥

छागेत्यादि स्पष्टम्॥२६॥

उर इत्यादि ... उरःक्षतचिकित्सामाह उरः क्षतं मत्वा लाक्षां
पयसा मधुसंयुतां पिवेदित्यर्थः जीर्णे पयसा सशर्करमन्नं भुञ्जीत इत्य-
न्वयः॥२७॥

इक्षुवालिकेत्यादि इक्षुवालिका मनखागरीति ख्याता विषमग्रन्थिः,
मृणालग्रन्थिः, पद्मकेशरं पद्मकिञ्जल्कम्. सन्धानार्थमिति क्षतोरःसन्धा-
नार्थम्॥२८॥

बलेत्यादौ श्रीपर्णीगाम्भार्याः फलं बहुपुत्रीशतावरीबलादयो
अभ्यस्ताःसमस्ताः बोध्याः। घृत मित्यादि स्पष्टम्॥२९॥

इति राजयक्ष्माक्षतक्षयचिकित्सा।

भार्गीद्राक्षाशटीशृङ्गीपिप्पलीविश्वभेषजैः ।
गुड़तैलयुतो लेहो हितो मारुतकासिनाम् ॥ २ ॥
पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ ३ ॥
बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥ ४ ॥
काकोलीबृहतीमेदायुग्मैः सवृषनागरैः ।
पित्तकासे रसक्षीरयूषांश्चाप्युपकल्पयेत् ॥ ५ ॥
द्राक्षामलकखर्ज्जूरं पिप्पलीमरिचान्वितम् ।
पित्तकासापहं ह्येतत् लिह्यान्माक्षिकसर्पिषा ॥ ६ ॥

---

पित्तकासे इत्यादि चरकस्य तनुकफ इत्यत्र घनकफे कफस्य तनुत्वं घनत्वञ्च कासरोगनिःसार्य्यमाणकफस्य दर्शनादेव ज्ञेयम् । मधुरैरिति मधुरद्रव्यैर्युक्तां त्रिवृतामिति सम्बन्धः । अन्ये तु मधुरैर्जीवनीयदशकैरित्याहुः । मधुरैर्जाङ्गलरसैरित्यत्र मधुरैः स्वादुभिः किम्वा जीवनीयसंस्कृतैः ॥ ३ ॥

बलेत्यादि स्पष्टम् । शरादीत्यादि चरकस्य शरादिपञ्चमूलन्तु शरेक्षुदर्भकाशशालयस्तेषां मूलं ग्राह्यम् । अत्र षड़ङ्गपरिभाषया अष्टगुणत्वाभावेन चतुर्गुणेन दुग्धं साध्यम् ॥ ४ ॥

काकोलीत्यादि अत्र युग्मैरिति काकोल्यादिभिः सम्बध्यते इति चक्रः । अन्ये तु बृहतीमेदाभ्यां युग्मत इति युक्तञ्चैतत् यदाह जतूकर्णः द्वाकाकोली मुख्यौ मेदा बृहती युग्मैरिति ॥ ५ ॥

द्राक्षेत्यादि इदं कफानुबन्धे ज्ञेयम्, पित्तोद्रेके तु खदिरस्थाने

खर्ज्जूरपिप्पलीद्राक्षासितालाजाः समांशिकाः।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः॥
शटीह्रीवेरबृहतीशर्करा विश्वभेषजं।
पिष्ट्वा रसं पिबेत् पूतं सघृतं पित्तकासनुत्।
मधुना पद्मबीजानां चूर्णं पैत्तिककासनुत्॥ ७॥
बलिनं वमनेनादौ शोधितं कफकासिनम्।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत्॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः॥
पौष्करं कट्फलं भार्गी विश्वपिप्पली पाचितम्।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे॥
क्वाथं [illegible] माक्षिकेण समन्वितम्।
पाययेत् [illegible] कफात्मकम्॥ ८॥
मुद्गामलकयवदाडिमाम्लां कर्कन्धुना मूलकशुण्ठकेन।
शटीकणाभ्यां च कुलत्थकेन यूषो भवाद्यः कफरोगहन्ता॥

---

शर्करा सेव्या, यदाह चारपाणिः पिप्पल्यामलकीद्राक्षा खर्ज्जूरं शर्करा मधु लेहोऽयं सघृतो नीतः पित्तक्षयजकासजित्॥ ६॥

खर्ज्जूरत्यादिस्पष्टम्। शटीत्यादि वाभटस्य तत्र शठ्यादिकं जले पिष्ट्वा तद्रसं वस्त्रपूतं कृत्वा घृतमिश्रं पिबेत्। बृहती चात्र कण्टकारी द्वयमनुक्तत्वात् उक्तं हि चरके शर्करा नागरोदीच्य कण्टकारी शटी समम्। पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितमिति॥ ७॥

बलिनमित्यादिना कफचिकित्सामाह। पिप्पलीक्षारकैरिति पिप्पलीयवक्षारसंस्कृतैरित्यर्थः। पुष्करमित्यादि कफापहपर्य्यन्तं स्पष्टम्॥ ८॥

सद्गुयवेत्यामलकदाडिमकर्कन्धु मूलक शुण्ठकैः पञ्चपलपरिमाणया अर्द्धभृतं कृत्वा मुद्गकलको तुल्या प्रसृतो दत्वा यूषः साध्यः पश्चात् कटुत्वार्थं शुण्ठीपिप्पलीचूर्णदानं, किम्वा चककमेव द्रव्यं यथोचितमा-

पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत्॥ ९॥

कट्फलादिः।

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया।
शृङ्गी पर्प्पटकं शुण्ठी सुराह्वा च जले शृतम्॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च॥ १०॥
कण्टकारीकृतः क्वाथः सकृ(ष्णः) सर्व्वकासहा।
विभीतकं घृताभ्यक्तं गोशकृत् परिवेष्टितम्॥
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम्।
वासकस्वरसः पेयो मधुयुक्तो हिताशिना॥
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः।
पिप्पली म(धु)कं द्राक्षा ल(ाक्षा) शृङ्गी शतावरी॥
द्विगुणा च तुगाक्षीरी सिता सर्व्वैश्चतुर्गुणा।
तं लिह्यान्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये॥
पिप्पलीपद्मकं लाक्षा संपक्वं बृहतीफलम्।
घृतक्षौद्रयुतो लेहः कासश्वासनिवर्हणः॥
हरीतकीनागरमुस्तचूर्णं गुडेन तुल्यं गुडिका विधेया।
निवारयत्यास्यविधारितेयं श्वासं प्रवृद्धं प्रबलञ्च कासम्॥ ११॥

---

तया गृहीतया क्वाथविधानेन पञ्चमूलीकवत् यूषः कार्य इत्याह। पार्श्व-शूल इत्यादिस्पष्टम्॥ ९॥

कट्फलमित्यादौ कत्तृणं गन्धतृणं। कण्टकारीत्यादिस्पष्टम्। विभीतक इत्यादि स्पष्टम् वासकेत्यादि च स्पष्टम्। मधुकमित्यादौ तुगा-क्षीरी वंशलोचना एकभागापेक्षया द्विगुणा, सर्व्वचूर्णापेक्षया चतुर्गुणा सिता। पिप्पलीत्यादि स्पष्टम् हरीतकीत्यादौ समुदितचूर्णेन तुल्यो गुडः। क्रमः॥ १० ॥ ११॥

भक्षयेद्घृतताम्बूलं पिबेद्दुग्धमथाम्बु वा।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥
करिचशीलार्कक्षीरैर्भावितार्कीं त्वचमाशुभावितां शुष्काम्।
कृत्वा विधिनाधूमं पिबतः कासाः शमं यान्ति॥
दशमूलीकषायेण भार्गीकल्कं पचेद् घृतम्।
दक्षतित्तिरिनिर्यूहे तत्परं वातकासनुत्॥ १७॥

दशमूलाद्यं घृतम्।

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीबिल्वसुरसव्योष हिङ्गुभिः॥
पेयानुपानं तत्पेयं कासे वातकफाधिके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च॥ १८॥

दशमूलषट्पलं घृतम्।

दशमूली चतुःप्रस्थे रसे प्रस्थोन्मितं हविः।
सक्षारैः पञ्चकोलैस्तु कल्कितं साधु साधितम्॥
कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवर्हणम्।
कल्कं षट्पलमेवात्र ग्राहयन्ति भिषग्वराः॥ १९॥

कण्टकारीघृतम्।

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः॥ २०॥

---

स्पष्टम्। दशमूलकाथेनेत्यादि। दक्षः कुक्कुटः; दक्षतित्तिरीभ्यां मिलित्वैव क्वाथ, दशमूलक्वाथेन दक्षतित्तिरीक्वाथेन च मिलित्वा चातुर्गुण्यम्॥ १७॥

दशमूलाढक इत्यादि। वाभटस्य मते दशमूलस्य क्वाथ आढकमानत्वं तेन क्वाथः क्वाथसमो मत इति वचनात् पादावशिष्ट क्वाथो-ऽप्याढकमानो भवति। बिल्वं बिल्वमूलं सुरसः पर्णासः, पेयानुपानमित्यत्र पेयानुपानमिति केचित् पठन्ति किन्त्वत्र पेयैव वातकफघ्नत्वात् युक्ता॥ १८॥

दशमूलषट्पलकं घृतं स्पष्टम्॥ १९॥

कण्टकारीघृतम्।

घृतं रास्नाबलाव्योषश्वदंष्ट्राकल्कपाचितम्।
कण्टकारीरसे सर्पिः पञ्चकासनिसूदनम्॥ २१॥

वृहत् कण्टकारी घृतम्।

सपञ्चमूलशाखायाः कण्टकार्य्यारसाढके।
घृतप्रस्थं बलाव्योषविड़ङ्गशटीचित्रकैः॥
सौवर्च्चलयवक्षारविल्वामलकपुष्करैः।
वृश्चीरवृहतीपथ्यायमानीदाड़िमर्द्धिभिः॥
द्राक्षापुनर्नवा चव्यदुरालभाम्लवेतसैः।
शृङ्गीतामलकीभार्गी रास्ना गोक्षुरकैः पचेत्॥
कल्कैस्तु सर्व्वकासेषु हिक्काश्वासे च शस्यते।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम्॥ २२॥

रास्नाद्यं घृतम्।

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम्।
पलिकां मानिकांशांस्त्रीन् कुलत्थान् वदरान् यवान्।
तुलार्द्धं चाजमांसस्य पादशेषेण तेन च।
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः॥

कण्टकारीत्यादि। कण्टकारीगुड़ूच्योर्मिलित्वा पल ६० जल शराव ६० शेष १५। अन्ये तु जलद्रोणं दत्वा शेषं १६ इत्याहुः। कण्टकारीरस इति कण्टकारी स्वरसश्चतुर्गुणः उक्तश्च निर्दिग्धिकायाः स्वरसं ग्राहयेद्यन्त्र पीड़ितम्। चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेदित्यादि॥ २०—२१॥

समूलेत्यादि।— अयं योगश्चरके वाभटे च पठ्यते। अत्र श्वेतरक्तभेदात् पुनर्नवाद्वयम्॥ २२॥

द्रोणेपामिति।— अयमपि चरके वाभटे च पठ्यते पलिकामिति

सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः ।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥
पञ्चकासान् क्षयं श्वासं पार्श्वशूलमरोचकम् ।
सर्व्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्द्ध्वानिलं जयेत् ॥
जीवकर्षभकौमेदेकाकोल्यौ शूर्पपर्णिके ।
जीवन्ती मधुकश्चैव दशको जीवकोगणः ॥ २२ ॥

अगस्त्यहरीतकी ।

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढ़कम् ।
हरीतकीशतञ्चैकं जलपञ्चाढके पचेत् ॥
यवैः स्विन्नैः कषायन्तं पूतं तच्चाभयाशतम् ।
पचेद्गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात् ॥

---

रास्नादिवर्गेण सम्बध्यते दशमूल्यपि प्रत्येकं पलांशम् । पलिकानिति पाठे रास्नादिशतावर्य्यन्तानां पलिकान् भागानिति सम्बन्धः । मानिका-शानःअष्टौ पलानि अत्र रास्नादि छागमांसान्तक्काथ्ये द्रोणप्रमाणं जलं, तच्च पादावशेषादाढ़कं क्षीरमप्याढ़कम्, अतो द्विगुणः पाकः ॥ २२ ॥

दशमूलीत्यादि वाभट चरकयोः । अत्र शूकशिम्बाया वीजं, तदभावे मूलमपि ग्राह्यमाहुः । यवाढ़कमिति यवहरीतक्यौ पटे बद्ध्वा दातव्यौ । पञ्चभिराढकैरिति द्वैगुण्यादशीतिशरावा भवन्ति । दशमूल्यादि हरीतक्यन्ताः क्वाथ्या एकत्रैव पक्तव्याः । यवैः स्विन्नैरित्यु-पलक्षणं तृतीया तेन स्विन्नैर्यवैरुपलक्षितः कषायो यदा भवति तदा तं कषायं पूतं कृत्वा, तच्च हरीतकीशतं गुड़तुलाञ्च दत्त्वा पुनः पचेदिति योज्यम् । यवानाञ्च स्विन्नता चतुर्भागावशिष्टकषाय एव भवतीति कृत्वा चतुर्भागावशिष्टमेव कषायं कुर्व्वन्ति । अन्येत्वष्टभागावशिष्टं कषाय-मेवाहुः । तन्न सुश्रुतसम्बादात् । स्विन्नहरीतकी शतस्य वंशशलाकया कृतच्छिद्रस्य भर्ज्जनार्थं घृत तैलयोः कुड़वे पृथक्, द्वैगुण्याच्च पृथगष्ट

तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्याद् द्वे चाभये नित्यमतः खादेद्रसायनात्॥
तद्वलीपलितं हन्यात् बलायुर्बलवर्द्धनम्॥
पञ्चकासान् क्षयं श्वासं हिक्काः सविषमज्वरान्॥
हन्यात्तथा ग्रहण्यर्शो हृद्रोगारुचिपीनसान्।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम्॥ २४॥

व्याघ्रीहरीतकी।

समूलपुष्पच्छदकण्टकार्य्यास्तुलां जलद्रोणपरिस्रुताञ्च।
हरीतकीनाञ्च शतं निदध्याद्दद्यात्र पक्वा चरणावशेषम्॥
गुड़स्य दत्त्वा शतमेतदग्नौ विपक्वमुत्तीर्य्य ततः सुशीते।
कटुत्रिकञ्च द्विपलप्रमाणं पलानि षट्पुष्परसस्य तत्र॥
क्षिपेच्चतुर्जातपलं यथाग्नि प्रयुज्यमानो विधिनावलेहः।
वातात्मकं पित्तकफोद्भवञ्च द्विदोषकासानपि च त्रिदोषान्॥
क्षयोद्भवञ्च क्षतजञ्च हन्यात् सपीनसश्वासमुरःक्षतञ्च।
यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात्॥२५॥

इति कासरोगचिकित्सा।

---

पञ्चधाने। भर्ज्जनन्तु अवयवदार्ढ्यार्थम्। तन्त्रान्तरे चात्र मधुनश्च पलाष्टकमित्युक्तं तुल्यमानत्वेऽपि घृतमधुनोर्द्रव्यान्तरयोगान्नविरुद्धत्वं ज्ञा-तारगणकमत्र पिप्पलीचूर्णाकुडवं प्रत्येकं लिह्यादिति प्रकृतलेहं लिह्यात्, द्वे चाभये खादेदिति योज्यम्। अत्र यद्यपि लेहस्य मानं नोक्तं तथापि मधुन प्रमाणात् कफकान्तं योज्यम्। धन्यमिति प्रभावात् किम्वा धनार्ज्जने हेतुः नैरुज्यसाधकत्वात् ॥ २४ ॥

व्याघ्रीहरीतक्यां कटुत्रिकं प्रत्येकं पलद्वयं चातुर्जातमिति मिलित्वा पलम् ॥ २५ ॥

इति कासाधिकारः।

## अथ हिक्काश्वासाधिकारः।



हिक्काश्वासातुरे पूर्व्वं तैलाक्ते स्वेद इष्यते।
स्निग्धैर्लवणयोगैश्च मृदु वातानुलोमनम् ॥
ऊर्द्ध्वाधः शोधनं शक्ते दुर्ब्बले शमनं मतम् ॥ १ ॥
कोलमज्जाञ्जनं लाजा तिक्ता काञ्चनगैरिकम्।
कृष्णा धात्री सिता शुण्ठी काशीशं दधिनाम च ॥
पाटलयाः सफलं पुष्पं कृष्णाखर्ज्जूरमुस्तकम्।
षडेते पादिका लेहा हिक्काघ्ना मधुसंयुताः ॥ २ ॥
मधूकं मधुसंयुक्तं पिप्पली शर्करान्विता।
नागरं गुड़संयुक्तं हिक्काघ्नं नावनत्रयम् ॥
स्तन्येन मक्षिकाविष्ठा नस्यं वालक्तकाम्बुना।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥
मधुसौवर्च्चलोपेतं मातुलुङ्गरसं पिवेत्।
हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ॥

---

तुल्यनिदानत्वात् कासान्तरं हिक्काश्वासचिकित्सामाह हिक्काश्वासातुर इत्यादि तैलाक्त इति लवणसंयोगैः सह तैलाक्त इति योज्यं, तेन सैन्धव संयुक्तेन तैलेनाभ्यक्त इत्यर्थः। स्निग्धैरिति स्निग्धैर्द्रव्यैः स्वेद इति योज्यं वाभटसम्वादात्। मृदु वातानुलोमनमिति ऊर्द्ध्वाधः शोधनस्य विशेषणं वाभटसम्वादात् किम्वा लवणयोगैरुपलक्षितं शोधनमिति योज्यम् ॥ १ ॥

शमनमाह कोलेत्यादि कोलमज्जा वदरास्थिमज्जा अञ्जनमत्र सौवीराञ्जनं तिक्ता कटुकी काञ्चनगैरिकमिति उत्तमलोहित गैरिकं काशीशं धातुकाशीशं कांस्यमाक्षिकमित्यन्ये, दधिनाम कपित्थफलम् ॥ २ ॥

मधुकमित्यादि मौषधं नाम स्पष्टं पञ्चवीत्यादौ पुष्करजटा पुष्करमूलम्। अभयेत्यादियोगद्वयं स्पष्टम्। स्तन्येत्यादौ फञ्जी मञ्जुयष्टिः ;

कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम्॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम्।
हिक्काश्वासी पिवेद्भार्गीं सविश्वामुष्णवारिणा॥
नागरं वा सिताभार्गी सौवर्च्चलसमन्वितम्।

शृङ्गीकटुत्रिकफलात्रयकण्टकारी
भार्गी सपुष्करजटालवणानि पञ्च॥
चूर्णं पिवेदशिशिरेण जलेन हिक्का-
श्वासोर्द्ध्ववातकसनारुचिपीनसेषु।

अभयानागरकल्कं पौष्करयवशूकमरिचकल्कं वा।
तोयेनोष्णेन पिवेच्छ्वासी हिक्की च तच्छान्त्यै॥
अमृतानागरफञ्जीव्याघ्रीपर्णीशृताधितः क्वाथः।
पीतः सकणाचूर्णः कासश्वासौ जयत्याशु॥
दशमूलीकषायस्तु पुष्करेण विचूर्णितः।
श्वासकासप्रशमनः पार्श्वहृच्छूलनाशनः॥
कुलत्थनागरव्याघ्री वासाभिः क्वथितं जलम्।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम्॥
गुड़ं कटुकतैलेन मिश्रयित्वा समं लिहेत्।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत्।

शृङ्गीमहौषधकणाघनपुष्कराणां
चूर्णं शटीमरिच शर्करया समेतम्॥
क्वाथेन पीतममृता वृषपञ्चमूल्याः
श्वासं त्र्यहेण शमयेदतिदोषमुग्रम्।

हरिद्रां मरिचं द्राक्षां गुड़ं रास्नां कणां शटीम्।
जह्यात्तैलेन विलिहन् श्वासान् प्राणहरानपि॥

हिक्कां हरति प्रबलां प्रबलं श्वासं नाशयत्याशु ।
शिखिपुच्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढम् ॥ ३ ॥

हिंस्राद्यं घृतम् ।

कर्षं कलिफलचूर्णं लीढं चात्यन्ताऽऽमिश्रितं मधुना ।
अचिराद्धरति श्वासं प्रबलामुग्रां हिक्काञ्चैव ॥
हिंस्राविडङ्गपूतिकत्रिफलाव्योषचित्रकैः ।
द्विक्षीरं सर्पिषः प्रस्थं चतुर्गुणफलान्वितम् ॥
कोलमात्रैः पचेत्तद्धि कासश्वासं व्यपोहति ।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥ ४ ॥

तेजोवत्याद्यं घृतम् ।

तेजोवत्यभयाकुष्ठं पिप्पलीकटुरोहिणी ।
भूतिकं पौष्करं मूलं पलाशं चित्रकं शटी ॥
सौवर्चलं तामलकी सैन्धवं बिल्वपेशिका ।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः ॥

---

दशमूलीकषाय इत्यादि जयेदित्यन्तं स्पष्टम् । शृङ्गीत्यादि शृङ्ग्यादीनां चूर्णं काथ्यात् पादिकं प्रक्षेपत्वात् । अत्र पञ्चमूली महती वातकफहन्तृत्वादित्याहुः । हरिद्रामित्यादि सुश्रुतस्य स्पष्टार्थम् । हिक्कामित्यादौ शिखी मयूरस्तत् पुच्छस्य भूतिर्भस्म तथा पिप्पलीचूर्णञ्च समं मधुना लेह्यम् ॥ ३ ॥

कर्षमित्यादि कलिफलं विभीतकं हिंस्रेत्यादि सुश्रुतस्य हिंस्रा काला औकड़ा, पूतिकं नाटाकरञ्जस्य मूलम् । कोलमात्रैरिति यद्यपि कोलशब्देन माषकाष्टकं कर्षश्चोच्यते यदाह चारपाणिः । गाथकाश्चान्तु जानीयात् कोलं वटकमेव च । ताभ्यां कर्षः पिचुश्चापि पाणितलं तथा । विडालपदकं कोलं किञ्चिच्च समुदाहृतमिति । तथापि कर्षं एवात्र ग्राह्यः । अन्यथा कल्कस्याल्पीयस्त्वं स्यात् । वृद्धकारस्य मेनार्थमुक्तं तस्मात् साध्वीयं व्याख्येति ॥ ४ ॥

हिङ्ग्वादैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे ।
एतद्यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः ॥
शोथार्शोनिलाशोँ ग्रहणीहृत्पार्श्वरुज एव च ॥ ५ ॥

भार्गीगुड़ः ।

शतं संगृह्य भार्ग्यास्तु दशमूलास्तथापरम् ।
शतं हरीतकीनाञ्च पचेत्तोयचतुर्गुणे ॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते ।
आलोड्य च तुलां पूतां गुड़स्य त्वभयां ततः ॥
पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमागतम् ।
शीते तु मधुनश्चात्र षट्पलानि प्रदापयेत् ॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक् ।
कर्षद्वयं यवक्षारं संचूर्ण्य प्रक्षिपेत्ततः ॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ।
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः ।
पलोऽत्र खागते माने न द्वैगुण्यमिहेष्यते ॥
हरीतकीशतस्यात्र प्रस्थत्वादाढ़कं जलम् ॥ ६ ॥

---

तेजोवत्याद्यैः चरकस्य तेजोवती चविका मरिचं कल्कं हिङ्ग्वादैरित्यत्र भागमपेक्ष्य तेन हिङ्गुनश्चत्वारो माषकाः ॥ ५ ॥

भार्गीगुड़े दशमूल्योऽपि मिलित्वा । तोये चतुर्गुण इति चक्रतद्वैगुण्य तु भार्गीशतं च मिलित्वा जलस्य शरावशतं देयमित्याहुः । हरीतकीशतस्यापि प्रस्थत्वादाढ़कं जलमिति वक्ष्यति तेन जलस्य षोड़शशरावाधिकशरावशतमित्यर्थः वृन्दस्तु हरीतकीशतैकस्य वारिप्रस्थमिहाधिकमित्याह वृन्दस्तु सम्यक् वीर्य्याधानार्थमत्र द्रवस्य द्वैगुण्यमिच्छन्ति नत्वते जलशरावशतद्वयम् । अनेनैव हरीतक्यापि पाकः व्यवहारस्तु शावश्वतर्ण्ण जलेनाकृतद्वैगुण्येन ॥ ६ ॥

कुलत्थगुड़ः।

कुलत्थं दशमूलञ्च तथैव द्विजयष्टिका।
शतं शतञ्च संगृह्य जलद्रोणे विपाचयेत्॥
पादावशेषे तस्मिंस्तु गुड़स्यार्द्धतुलां क्षिपेत्।
शीतीभूते च पक्के च मधुनोऽष्टौ पलानि च॥
षट्पलानि तुगाक्षीर्य्याः पिप्पल्याश्च पलद्वयम्।
त्रिसुगन्धि सुगन्धं तत् खादेदग्निबलं प्रति॥
श्वासं कासं ज्वरं हिक्कां नाशयेत्तमकं तथा।
प्रतिशतं द्रोणनियमाज्ज्ञेयं द्रोणत्रयं त्विह॥ ७॥

इति हिक्काश्वासचिकित्सा।



## अथ स्वरभेदाधिकारः।

वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्।
कफे सक्षारकटुकं क्षौद्रं कवड़ इष्यते॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः।
तेन निष्कृष्यते श्लेष्मा स्वरश्चास्य प्रसीदति॥

---

कुलत्थेत्यादौ जलद्रोण इति प्रतिशमित्यर्थः एतत्तु चक्रमतं दृढ़बलाह योगसन्दर्शनादत्र दृढ़बलोपदेशतः। जलं चतुर्गुणं देयमत्रत्वात् द्रोणवारिणः। मान सान्निध्यमस्मात्पाठादुद्धिपलं त्रिसुगन्धिन इति। योगसन्दर्शनादिति समानद्रव्यप्रमाणकस्य गुड़ान्तरे चतुर्गुणजलसन्दर्शनादित्यर्थः इदन्तु न सङ्गच्छते द्रोणपदस्य साक्षादुपादानात् अथ चतुर्गुणत्वकल्पने द्रोणपदस्य वैयर्थ्यं स्यात् पिप्पलीद्वयसान्निध्यात् त्रिसुगन्धि च निश्चित्य पलद्वयं तथा तन्त्रान्तरसम्वादाच्च यथा पठ्यतेऽत्रैव कुलत्थगुड़ान्तरे मधुनः कुड़वं दद्यात् त्रिसुगन्धि पलद्वयमिति॥ ७॥

इति हिक्काश्वासाधिकारः।

आद्ये कोष्णं जलं पेयं जग्ध्वा घृतगुड़ौदनम्।
क्षीरान्नपानं पित्तोत्थे पिबेत् सर्पिरतन्द्रितः।
पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये॥ १॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते।
क्षयजे सर्व्वजे चापि प्रत्याख्याय समाचरेत्॥ २॥
चव्याम्लवेतसकटुत्रिकतिन्तिड़ीक-
तालीशजीरकतुगादहनैः समांशैः।
चूर्णं गुड़प्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम्॥
तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे।
पथ्यां वा पिप्पलीयुक्तां संयुक्तां नागरेण वा॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति॥ ३॥

---

प्राणोदानदुष्टिसाधर्म्यात् हिक्काश्वासानन्तरं स्वरभेदचिकित्सा-माह वात इत्यादि तैलमत्र कटुष्णं कृत्वा कवलः कार्य्य इत्याहुः। क्षारो यवक्षारः। आद्य इति वातस्वरभेदे पिबेत्। सर्पिरिति यद्यपि सामान्येनैवोक्तं तथापि सुश्रुते श्वासोक्तं वासाघृतं पित्तकासोक्तं वा विदारीगन्धोत्पलाद्यारिष्टाद्युक्तं ज्ञेयमित्याहुः। पिप्पलीत्यादि पिप्पल्यादि चूर्णं गोमूत्रेण पेयं स्वरसंक्षय इति स्वरभेदे॥ १॥

स्वरोपघात इत्यादि सुश्रुतस्य कफवदिति कफजस्वरभेदवत्। क्षयजे सर्व्वजे चापीत्यपिशब्दबलात् मेदोजसहजयोः परिग्रहः। तन्त्रान्तरे ह्यनयोरप्यसाध्यत्वमुक्तं यथा क्षीणस्य वृद्धस्य कृशस्य चापि। चिरोत्थितो यश्च सहोपजातः। मेदस्विनः सर्व्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति। क्रिया चात्र क्षयजे क्षयकासोक्ता सर्व्वजे तु प्रत्येकदोषोक्तैव मिलित्वा कार्य्या॥ २॥

चव्याम्लवेतसेत्यादौ तिन्तिड़ीकं मकार्द्रकं तुगा वंशलोचना,

कलितरुफलत्वक्कणाचूर्णं तक्रेण लीढमपहरति ।
स्वरभेदं गोपयसा पीतं वामलकचूर्णञ्च ॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
स्वरोपघाते कासे च लेह्यमेनं प्रयोजयेत् ॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह ।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ ४ ॥

कण्टकारीघृतम् ।

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः ।
सर्पिः स्वरोपघातं हन्यात् कासञ्च पञ्चविधम् ॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे ।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ ५ ॥

---

दहनश्चित्रकः गुडोऽत्र समुदितचूर्णसमः त्रिसुगन्धि प्रत्येकमेकभागापेक्षया चतुर्थांशेनेति केचित्, एकभागसमं मिलितमित्यन्ये । तेजाह्वमित्यादि श्लोकद्वयं स्पष्टम् ॥ ३ ॥

कलितरुफलेत्यादि कलितरुफलं विभीतकफलं तक्रं घोलम् चुक्रेणेति पाठान्तरं बदरीपत्रकल्कमित्यादि बदरीपत्रं ससैन्धवं बद्ध घृते भृष्टं तेनैव घृतेनालोड्य लिह्येत् । शर्करेत्यादि शृतस्य मधुरैरिति काकोल्यादिगणैः पयःसाधनमिह क्षीरपाकपरिभाषया ॥ ४ ॥

व्याघ्रीत्यादि यद्यपि इदं घृतं रास्नेत्यादिना कासेऽप्युक्तं तथाप्यत्र स्वरभेदहन्तृत्वप्रतिपादनार्थं पुनरप्युक्तम् । स्वरसस्याभावे क्वाथग्रहणमाह शुष्कद्रव्यमित्यादि पादस्तु चतुर्थभागः । अत्र केचित् स्वरसानुकल्पत्वादष्टावशिष्ट एव क्वाथो युक्तो गुरुत्वादिति । पाद इत्यत्र मूलवचनत्वेनात्रापि पादशब्दमुक्तीभूतमाद्यभागमाह, तेन यद्भागापेक्षया अष्टगुणत्वं तावानेव भागः स्थापनीय इत्याहुः । अन्ये तु पादावशेषितमित्यत्र भागावशेषितमिति पठित्वा भागशब्दोऽष्टमभाग इत्याहुः व्यवहारस्तु चतुर्थभागेनैव ॥ ५ ॥

भृङ्गराजाद्यं घृतम्।

भृङ्गराजामृतावल्ली वासकदशमूलकासमर्द्दरसैः।
सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना॥ ६॥

इति स्वरभेदचिकित्सा।



## अथारोचकाधिकारः।

वान्तं समीरणे पित्ते विरेकं वमनं कफे।
कुर्य्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे॥
वान्तो वचाद्भिरनिले विधिवत् पिबेत्तु
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम्।

---

भृङ्गराज इत्यादि भृङ्गराजादीनां क्वाथस्वरसाः पिप्पल्यादिकः कल्कः सिद्धमिति तु घृतात् पादिकं मधु प्रक्षेप्यम्॥ ६॥

इति स्वरभेदाधिकारः।

---

अरोचकस्यापूर्ध्वगविकारत्वात् स्वरभेदानन्तरमरोचकमाह वान्तमित्यादि मनोघ्नजे इति मनोभेदनाद्धेतुशोकादितः। एतच्चोपलक्षणं तेन कायादिजेऽपि ज्ञेयम्। वान्त इत्यादि सुश्रुतस्य विधिवत् वान्तः कृतवमनः विधिवदित्यनेन लाजपेयादि क्रमञ्च बोधयति तेन वान्तः सन् पेयादिक्रमेण जातबलः सन् चूर्णं पिबेदु सङ्गतिः। अनिले इति कारणे कार्योपचारात् अनिलजे, अनिलजेऽपि वमनमिह कफस्थानगतत्वाद्देयम्। स्नेहस्तैलमिह वातहन्तृत्वादिति इन्दुटिप्पणी तत्र घृतमेव युक्तं वक्ष्यमाणवाग्भटवचनात्। वचभस्म इति वचक्षारः। वचगोत्तमं सैन्धवं एलं एलावालुकमिति कार्त्तिकः एलेत्यन्ये युक्तञ्चैतत् वाग्भटसंवादात्। गुड़ाम्बु मधुरैरिति गुड़ाम्बुयोगान्मधुरैर्वमनयोगैः अत्र मदनफलयोगोऽपि च्छेयः केवल गुड़ोदकेन वमनस्यासम्भवात्

कणाविडङ्गयवभस्महरेणु भार्गी-
राह्वैलहिङ्गु लवणोत्तमनागराणाम् ॥
पैत्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं
लेहः सितेन्द्रयवसितामधुसर्पिरिष्टम् ॥ १ ॥
निम्बाम्बुच्छर्दितवतः कफजेतु पानं
राजद्रुमाम्बु मधुना सह दीप्यकाढ्यम् ॥
चूर्णं यदुक्तमथवानिलजे तदेव
दोषैश्च सर्व्वकृतमेवमुपक्रमेच्च ॥ २ ॥

कुष्ठसौवर्च्चलाजाजीशर्करामरिचं बिडम् ।
धात्र्येलापद्मकोशीरपिप्पली चन्दनोत्पलम् ॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाडिमनिर्य्यासश्चाजाजीशर्करायुतः ।
सतैलमाक्षिकश्चैते चत्वारः कवडग्रहाः ॥
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्व्वजान् ॥

---

अन्ये तु मधुरशब्देनाष्टवर्गमाहुः अपरे तु मधुरैरित्यत्र मधुकैरिति पठन्ति ॥ १ ॥

निम्बाम्बुच्छर्दितवत इति आगमसाम्यमनित्यमिति आगमाभावाद्वा तत्र चैव छन्दोभङ्गः तेन न छन्दोभङ्गः चन्द्रटस्तु निम्बाम्बुर्धमितवत इति पठति। राजद्रुमाम्बु मधुनेति राजद्रुम आरग्वधस्तस्य फलक्वाथो मधुना सहित इत्यर्थः कार्त्तिकस्तु राजद्रुमशब्देन आरग्वधादिगणमाह, कफाधिक्येऽस्यौचित्यादिति चिन्त्यं दाभटपठितोक्तं तेन आरग्वधादिगणग्रहणं न प्रमाणमिति। दीप्यकाढ्यमिति यमानीचूर्णमत्र प्रक्षिप्य चूर्णं यदुक्तमथवेति अनिलजे यत् चूर्णमुक्तं कणादि नागरान्तं तदेवेह राजद्रुमाम्बुना पिबेत्। अयञ्च विधिर्वातानुबन्धे सति ज्ञेयः सर्व्वैश्च सर्व्वैः कृतामिति प्रत्येकदोषोक्तं मेलयित्वा सर्व्वदोषजमरोचकमुपाचरेदित्यर्थः ॥ २ ॥

त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकानि च।
त्वक् च दार्वीयमान्यश्च पिप्पलीतेजोवत्यपि॥
यमानीतिन्तिडीकञ्च पञ्चैते मुखशोधनाः।
श्लोकपादैरभिहिता सर्व्वारोचकनाशनाः॥ ३॥

अम्लिकायाः गुडतोयञ्च त्वगेलामरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कवडधारणम्॥ ४॥

कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाडिमम्।
सौवर्च्चलं गुडं क्षौद्रं सर्व्वारोचकनाशनम्॥ ५॥

क्षोदयानि त्रिफलारजनीद्वयञ्च
चूर्णीकृतानि यवशूकविमिश्रितानि।
क्षौद्रान्वितानि वितरेन्मुखधारणार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि॥ ६॥

यमानीषाड़वः।

त्रिट्चूर्णमधुसंयुक्तो रसो दाड़िमसम्भवः।
असाध्यामपि संहन्यादरुचिं वक्त्रधारितः॥

---

कष्टेत्यादि चरकस्य चत्वारो योगाः स्पष्टाः त्वङ्मुस्तेत्यादि त्वक् गुडत्वक तेजोवती चवी एषां चूर्णेन जिह्वाघर्षणं कार्यमित्याहुः मुखशोधना इति मुखगतदोषशोधनाः॥ ३॥

अम्लिकेत्यादि अम्लिका पक्वतिन्तिडीफलम् एतच्च पुरातनं ग्राह्यमित्याहुः। त्वगेलादीनाञ्च कटुत्वलोणवरापादकं मानम्॥ ४॥

कारवीत्यादि कारवी कृष्णजीरकं वृक्षाम्लं महार्द्रकं गुडिका पञ्चसमापकभागा मुखे धार्य्येत्याहुः॥ ५॥

क्षोदनीयादि सुश्रुतस्य मुखधावनार्थमिति घर्षणे मुखशोधनमिति। अन्यानि तिक्त कटुकानि च भेषजानीति त्वगेलादीनि संहितानि भवन्ति येदुक्तं त्वगेला सहितं सर्वं कटुतिक्तमरोचकी लिह्यात् क्षौद्रेण संयुक्तमल्पमल्पं पुनःपुनरिति॥ ६॥

यमानीतिन्तिडीकञ्च नागरं चाम्लवेतसम्।
दाडिमं बदरं चाम्लं कार्षिकाण्युपकल्पयेत्॥
धान्यसौवर्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम्।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम्॥
हृत्पीडापार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत्॥ ७॥

कलहंसः।

अष्टादशशिग्रुफलानि दश मरिचानि विंशतिश्च पिप्पल्यः।
आर्द्रकपलं गुडपलं प्रस्थत्रयमारनालस्य॥
एतद्विडलवणयुतं खजाहतं सुरभिगन्धाढ्यम्।
व्यञ्जनसहस्रघाति श्रेष्ठं कलहंसं नाम॥ ८॥

इत्यरोचकचिकित्सा।



---

यमानीत्यादि । अत्र यमानीषाडवे अम्लमिति वृक्षाम्लमम्लम् वराङ्गं गुडत्वक् पिप्पलीनां शतमित्याकृतिमानात्, एवं मरिचस्यापि शतद्वयम् एतच्चूर्णं मुखे धृत्वा शनैः शनैर्गलाधःकरणीयमित्युपदिशन्ति । षाडव इति मधुराम्लयोगस्य संज्ञा यमान्योपलक्षित. षाडवो यमानी-षाडवः ॥ ७॥

अष्टादशेत्यादि शिग्रुफलानि शोभाञ्जनबीजानि, सुरभिगन्धाढ्य चातुर्जातकाढ्यमित्यर्थः । स्वरयन्त्रनाड्यो शुद्धिकारकत्वं कण्ठस्वरजनकत्वेन कलहंससंज्ञा ॥ ८॥

इत्यरोचकाधिकारः।

# अथ छर्द्यधिकारः ।

आमाशयोत्क्लेशभवा हि सर्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात् ॥ १ ॥
प्राक्कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ २ ॥
हन्यात् क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ।
ससैन्धवं पिबेत् सर्पिर्वातच्छर्दिनिवारणम् ॥

---

अरोचकवत् पञ्चविधत्वात् तथा छर्द्यामयेऽप्यरुचेः सम्भवादरोचकानन्तरं छर्दिचिकित्सितमुच्यते आमाशयेत्यादि । चरकस्य आमः अपक्वः तस्याशयः आमाशयः तत्रोत्क्लेशः दोषाणामुदीरणं तद्धेतुकाश्छर्दयः किम्वा आमाशयस्याशयविशेषस्योत्क्लेश इति । हिशब्दो हेतौ । यस्मादामाशयोत्क्लेशेन एते छर्दयः आमाशयसमुत्थे च रोगे लङ्घनमुक्तं तस्मादित्यर्थः ॥ १ ॥

उत्सर्गमुक्त्वाऽपवादमाह प्राक् कारयेदित्यादि यद्यपि वातजायामप्यामाशयसम्बन्धेन कफोऽप्यस्ति लङ्घनसाध्यश्च तथापि वातस्य महात्ययस्याशुकारिणो लङ्घनशोधनाभ्यां वृद्धिर्महात्ययकरी स्यादिति भावः । अत्र लङ्घनमल्पदोषविषयं शोधनञ्च बहुदोषविषयमिति । संशोधनशब्देनात्र वमनविरेचनयोरेव ग्रहणम् उत्तरस्यापि वमनस्य वक्ष्यमाणत्वात् अन्ये त्वत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयन्ति ॥ २ ॥

हन्यादित्यादिरश्रुतस्य । क्षीरोदकमित्यत्र क्षीरघृतमित्युल्बनः पठित्वा व्याचष्टे च । क्षीरमथनादुद्धृतं घृतं क्षीरघृतं क्षीरयुक्तं वा क्षीरघृतमिति किन्तु वाभटे पीतं तुल्याम्बु वा पय इत्युक्तं तेन क्षीरोदकमिति पाठः । ससैन्धवं पिबेत् सर्पिरित्यत्र पक्वं घृतम् । मुद्गामलकयूषस्य ससर्पिष्कमिति सर्पिरिह यूषवत्त्वनार्थं । यवागूमित्यादि

मुद्गामलकयूषाभ्यां समर्पिष्कं ससैन्धवम्।
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत्॥ ३॥
पित्तात्मिकायां त्वनुलोमनार्थं द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात्
कफाशयस्थं त्वतिमात्रवृद्धं पित्तं जयेत् स्वादुभिरूर्द्ध्वमेव॥
शुद्धस्य काले मधुशर्कराभ्यां लाजैश्च मन्थं यदि वापि पेयाम्।
प्रदापयेन्मुद्गरसेन वापि शाल्योदनं जाङ्गलजै रसैर्वा॥ ४॥
चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेन्माक्षिकसंयुक्तं छर्द्दिस्तेन निवर्त्तते।
चन्दनञ्चामृणालञ्च बालकं नागरं वृषम्।
सतण्डुलोदकक्षौद्रः पीतः कल्कोवमिं जयेत्॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारतृड्दाहज्वरघ्नः संप्रकाशितः॥ ५॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम्।
अधोभागीकृते दोषे छर्द्दिः क्षिप्रं निवर्त्तते॥

---

अमृतस्य पञ्चमूली स्वल्पा इति चक्रः, महतीति गयादासः वातजायाम-स्यामाशयसमुत्थितत्वेनानुबन्धरूपस्य कफस्य विद्यमानत्वात्॥ ३॥

पित्तेत्यादि चरकस्य चूर्णीकृता त्रिवृदिति द्राक्षादिरसैः प्रत्येकमुपयोज्यमित्याहुः। कफाशयस्थमिति आमाशयोर्द्धभागस्थं. स्वादुभि-रूर्द्धमेवेत्यनन्तरोक्तैर्द्राक्षादिभिरेव। ऊर्द्धमिति वमनेन हरेदित्यर्थः स्वानुक्तमपि मदनफलं वमनयोग्यतया ज्ञेयम् अन्ये तु केवलमेव द्राक्षादिरसमाकण्ठं पीत्वा वमनं कार्य्यमित्याहुः। काल इति सम्यक्-शुद्धाकाले। यदि वापि पेयामिति मन्दाग्निं प्रति पेया ज्ञेया॥ ४॥

चन्दनेत्यादि चरकस्वादात्र श्वेतचन्दनं ज्ञेयम्। चन्दनकल्का-पेक्षया चामलकीरसश्चतुर्गुणः, पादव्यवस्था चतुर्द्धा इत्युक्तः। चन्दन-मित्यादौ अमृणालमुशीरम्। कषाय इत्यादि शुद्धंभृष्टो क्वाथविधिना कषायः कार्य्यस्ततो लाजचूर्णादिप्रक्षेपः॥ ५॥

गुडूचीत्रिफलारिष्टपटोलैः क्वथितं पिबेत् ।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥
क्वाथः पर्प्पटजः पीतः सक्षौद्रः छर्दिनाशनः ।
कफात्मिकायां वमनन्तु शस्तं सपिप्पलीसर्षपनिम्बतोयैः ॥
पिण्डीतकैः सैन्धवसंप्रयुक्तैश्छर्द्यां कफामाशयशोधनार्थम् ॥६॥
विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत् ।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥
सजाम्बवं वा वदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसंप्रयुक्तां लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥७॥
तर्पणं वा मधुयुक्तं तिसृणामपि भेषजम् ।
शृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम् ॥

---

हरीतकीनामित्यादि स्पष्टम् । गुडूचीत्यादौ पित्ताम्लसम्भवा-मित्यम्लपित्तसम्भवम् । क्वाथेत्यादि स्पष्टम् । कफात्मिकायामित्यादौ सपिप्पलीसर्षपनिम्बतोयैरिति निम्बवल्कलस्यार्द्रस्ते क्वाथे पिप्पल्या-दीनां प्रक्षेप इति इन्दुटिप्पनी, अन्ये तु तोयशब्देनात्र उष्णोदकमुच्यते तेन पिप्पल्यादिकल्कमुष्णोदकेन पिबेदित्याहुः वाभटेऽप्युक्तं कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः युक्तेन कोष्णतोयेनेति । तत्रानुक्तमपि वमनप्रसङ्गात्तेन सैन्धवं बोध्यम् । पिण्डीतको मदनफलम् । कफाशय-शोधनार्थमिति कफपूर्णामाशयशोधनार्थम् । कफस्यामाशयस्य च शोध-नार्थमित्यन्ये ॥ ६ ॥

विडङ्गेत्यादौ प्लवं कैवर्त्तमुस्तकम् । सजाम्बवमित्यादि जाम्बवं जम्बुफलास्थि, वदरस्य चूर्णमिति वदराम्लचूर्णमिति चरके पठ्यते तन्मते अम्लवदरस्यैव चूर्णम् अन्ये तु वदरस्य चूर्णमिति पठित्वा वद-र्यास्थिमज्जचूर्णमित्याहुः । मुस्तायुतां कर्कटकस्य शृङ्गीमिति द्वितीयो-योगः दुरालभां वेति तृतीयो योगः । योगत्रयेऽपि मधु सम्बध्यते ॥ ७ ॥

तर्पणेत्यादि तर्पणं तोयविप्लुताः शक्तवः । तिसृणामिति छर्दीनां वातादिजानां अन्यथा बहुवचनानुपपत्तिः ॥ एतेन त्रिदोषच्छर्दि

तिसृष्वपि भवेत् पथ्यं माक्षिकेन समायुतम्।
द्रव्यादापोत्थिताततोये प्रतप्ते निशि संस्थितात्॥
कषायो योऽभिनिर्याति स शीतः समुदाहृतः।
षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्॥ ८॥

श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः।
पेयश्छर्द्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना॥ ९॥

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य
ह्रीवेरवारिमधुना पिवतोऽल्पमल्पम्।
छर्द्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता-
लीढा निहन्ति मधुनाथ दुरालभा वा॥ १०॥

---

हरत्वमस्योक्तं भवति यतः पृथक् वात्यादि छर्द्दिं भेषजयुक्तमेव सान्निपातिकछर्द्दिं भेषजं भवति चरके तथोक्तत्वात्। शतमित्यादि सुश्रुतस्य अत्रापि पूर्ववत् व्याख्येयम्। हिमसंश्रितमिति शीतकषायसंज्ञितं तदर्थमेव लक्षणान्वयपरिभाषामाह द्रव्यादित्यादि व्यवहारस्तु प्रायेण भेषजार्द्धपलं जलपलद्वयमिति। रसाख्यायां पलद्वयमिति स्वरसाभावे यत्र भेषजचूर्णमुष्णोदके प्रक्षिप्य स्वरसानुकल्पः क्रियते तस्मिन् क्वाथे कर्त्तव्ये भेषजस्य पलद्वयं दत्त्वा स्वरसानुकल्पः कार्य्यः॥ ८॥

श्रीफलस्येत्यादि श्रीफलो विल्वं तस्य मूलं ग्राह्यं विल्वमूलं मरुत्कफघ्नं छर्द्दिघ्नं न च पित्तकृदिति गुणपाठात् एवमन्यत्रापि। गुडूच्या वा कषाय इति गुडूच्याक्वाथ एव शीतलः कार्य्यः नतु शीतकषायः नागार्जुनसम्वादे तस्योक्तत्वात् यथा छिन्नरुहायाः क्वाथं सुशीतं यो नरः पिवेन्मधुना। छर्द्दिं स वातपित्तश्लेष्मसमुत्थां निवारयतीत्यादि॥ ९॥

जम्बाम्रेत्यादि गवेधुको गुलाम्। धान्यं धान्यकं सेव्यमुशीरं वारि शीतकषायइत्यर्थः। पुनर्दुरालभेति श्लोकानुरोधादुक्तं त्रिसुगन्धियोगेन योगान्तरत्वाद्वा न पौनरुक्तम्॥ १०॥

जातरसः कपित्थस्य पिप्पली मरिचान्वितः ।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्बनाम् ॥ ११ ॥

एलादिचूर्णम् ।

पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चात्र कुडवं सलिलस्य च ॥
वाससा गलितं पीतं हन्ति छर्दिं त्रिदोषजाम् ।

एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥ १२ ॥

कोलामलकमज्जानौ माक्षिकाविट् सिता मधु ।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ।
अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्व्वापितं जले ।
तज्जलं पानपात्रेण छर्दिं जयति दुस्तराम् ।
षष्ट्याह्वं चन्दनोपेतं सम्यक् क्षीरप्रपेषितम् ॥
तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ।
लाजाकपित्थमधुमागधिकोषणानाम् ॥
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् ।
पथ्यामृतामरिचमाक्षिकपिप्पलीनाम्

---

जात्यादीत्यादि जाती आमलकी, कपित्थस्येति कपित्थफलस्य, एक एवायं योगः ॥ ११ ॥

पिष्ट्वेत्यादि इदन्तु अग्न्याद्यपेक्षया पेयं शेषं त्याज्यम् । एलेत्यादि स्पष्टम् ॥ १२ ॥

कोलेत्यादि कोलं वदरं तदस्थि मज्जा ग्राह्या कृष्णातण्डुलः पिप्पलीतण्डुलः । अश्वत्थेत्यादि स्पष्टम् । षष्ट्याह्वमित्यादौ तेन इति क्षी-

कुर्य्यात् कषायांस्तु तथैव युक्तान्मधूकपुष्पादिषु चापरेषु॥ २ ॥
बिल्वाढकीधातकिपञ्चकोलदर्भेषु सिद्धं कफजां निहन्ति।
हितं भवेच्छर्द्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन॥
सजीरकाण्याद्रकशृङ्गवेरसौवर्च्चलान्यर्द्धजलाप्लुतानि।
मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यःशमयन्तितृष्णाम्॥४

---

सगारिवेत्यादि सुश्रुतस्य सप्तमी षष्ठ्यर्थे तेन सारिवादिगणचतुष्टयस्य कषायं कुर्य्यादित्यर्थः मधुरो गणः काकोल्यादिः मधुरोगण इत्यत्र प्रथमो गण इत्युक्त्वा पठित्वा विदार्य्यादिगण इति व्याचष्टे तन्न प्रामाणिकं बहुभिरव्याख्यातत्वात्। अनेन गणचतुष्टयेन चत्वारः कषायाः कार्य्या इति चत्वार एव योगाः तथैव युक्तानिति शीतकषायविधिना कृतान् सुश्रुते कषायप्रस्तावे अस्य वचनस्य पठितत्वात् उल्वनस्तु तथैव युक्तानित्यत्र यथोक्तेनेति पूर्व्वोक्तविधानेन एतेन जलं दत्त्वा प्रवाते निशि वासनं कुर्य्यात्। मधुकपुष्पादिषु चापरेष्विति एषाञ्च शीतकषायं कुर्य्यादित्यर्थः मधुकपुष्पादीनि तु मधुकशोभाञ्जनकोविदारप्रियङ्गुपुष्पाणि चत्वारि रक्तपित्तप्रत्वेनेह पठितानि किंवा-दिशब्दः प्रकारवाची तेन मधुकपुष्पद्राक्षाकाश्मर्य्यखर्ज्जुराणीति चत्वारि॥ २ ॥

बिल्वाढ़कीत्यादि बिल्वस्य मूलं आढ़की तुवरी सिद्धमित्यतः पयं जलमितिशेषः जलमिति षडङ्गविधानेनेति चक्रः. अन्ये तु क्वाथमाहुः। अत्र सुश्रुतटीकाकृतो धातकी पञ्चकोलस्थाने धान्यकपञ्चमूलमिति पठन्ति पञ्चमूलं स्वल्पमित्याहुः सर्व्वासु तृष्णासु पित्त सम्भवत्वेन पञ्चकोलमनुचितमित्याहुः। दर्भ उलुकः। निम्बप्रसवोदकेनेति निम्बत्वगुडूचक्वाथेनेति चक्रः, निम्बपुष्पक्वाथेनेत्यन्ये निम्बपल्लवक्वाथेनेति जेज्जड़ः, युक्तञ्चैतत् तन्त्रान्तरसंवादात्। आर्द्रकशृङ्गवेरसौवर्च्चलानीत्यत्र शब्दादित्वात्। आर्द्रक शृङ्गवेरं आर्द्रकमेव, जीरकादिकञ्च सौरभकटुलवणात्मकारकं देयम्॥ ४ ॥

क्षतोत्थितां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ।
क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वाथ मधूदकं वा ॥
गुर्वन्नजामुल्लिखनैर्जयेत्तु क्षयादृते सर्वकृतां च तृष्णाम् ॥ ५ ॥

---

क्षतोत्थितामित्यादि सार्द्धश्लोकः सुश्रुतस्य । रुग्विनिवारणेनेति व्रणवेदनानिर्वापणेन कारणोच्छेदात् यत्कार्य्यरूपा क्षतजा तृष्णा शाम्यतीत्यर्थः । रसानामिति मांसरसानां असृजश्च पानैरिति छागादिरक्तस्य सद्यस्कस्य पानैरित्यर्थः एतच्चात्यर्थशोणितस्रुतौ क्षतायां ज्ञेयम् । क्षयोत्थितामित्यादौ क्षीरजलमिति क्षीरमिश्रितं जलमिति क्षीरजलमित्यत्र क्षीरघृतमित्युल्वणाः पठन्ति व्याचक्षते च क्षीरोत्थं घृतं क्षीरसंहृतं वा घृतमिति । मांसोदकमिति मांसरस एव अन्ये तु माषोदकमिति पठित्वा माषयूषमिति व्याचक्षते । मधूदकं वेति मधुमिश्रितमुदकमित्यर्थः । उदकञ्चात्र ऐन्द्रं, तदनुकारिभौममुदकं वा चरकसंवादात् । न च विरोधः अतुल्योपयोगात् उक्तं हि सुश्रुते । मध्वम्बुनी मधुसर्पिषी । मानतस्तुल्ये नाश्नीयादिति । ननु क्षयजायां बृंहणमेवोचितं मधूदकन्तु कर्षणमिति तत् कथमत्र प्रयुक्तमिति । नैवं क्षयजापि दोषत्रयेण जन्यते यदुक्तं रसक्षयात् या क्षयसम्भवा वा तां सन्निपातादिति केचिदाहुः इति । तत्र यद्यपि कफपित्तं वा अधिकं यदा मधूदकं देयम् उल्वणस्तु मधूदकमित्यत्र मधुकोदकमेवेति पठित्वा व्याचष्टे यष्टिमधुजलमिति तत्र युक्तं चरकसंवादात् । उल्लिखनैरिति वमनैः । न केवलं गुर्वन्नजामेव वमनैर्जयेत् किन्तर्हि अन्यामपीत्याह क्षयादृते इत्यादि क्षयोत्पन्नापि सर्वदैषा रक्ष्या, तस्यां क्षीणधातुत्वात् वमनं न कार्य्यम् । सर्वकृतामिति सर्वदोषकृतामामजामिति कार्त्तिकः, अन्ये तु क्षयादृते सर्वकृतास्तु तृष्णा इति पठन्ति क्षयजां विहाय अन्याः सर्वास्तृष्णा वातपित्तकफामगुर्व्वन्नैः कृततृष्णा वमनैर्जयेदिति व्याख्यानयन्ति । अस्मिन् पक्षे गुर्वन्नजायाः पृथगभिधानं निर्देशार्थम् ॥ ५ ॥

लाजोदकं मधुयुतं शीतं गुड़विमर्द्दितम् ।
काश्मर्य्यशर्करायुक्तं पिबेत्तृष्णार्द्दितो नरः ॥
अतिरुक्षदुर्ब्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतोमधुरोरसो हृद्यः ॥
आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् ।
छर्द्दिं सर्व्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ ६ ॥
वटशुङ्गसितालोध्रदाड़िमं मधुकं मधु ।
पिबेत्तण्डुलतोयेन छर्द्दितृष्णानिवारणम् ॥
गोस्तनेक्षुरसक्षीरयष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पानैस्तृष्णा शाम्यति दारुणा ॥
क्षीरेक्षुरसमाध्वीकैः क्षौद्रशीधुगुड़ोदकैः ।

---

लाजोदकमित्यादि लाजचूर्णभावितमुदकं शीतकषायो वा काश्मर्य्यं गाम्भारीफलम् । अतिरुक्षेत्यादिमधुरगणसाधितेनास्य सम्यङ्मधुरता ज्ञेया । आम्रजम्बूकषायेति आम्रजम्ब्वोः । फलास्थि कथ्यते पल्लवकषायोऽपि युज्यते जम्ब्वाम्रपल्लवशृतं क्षौद्रं दत्त्वा सुशीतलमिति पठितत्वात् ॥ ६ ॥

वटेत्यादौ शुङ्गादीनां चूर्णम् । गोस्तनेत्यादि गोस्तना द्राक्षा एभिः प्रत्येकं नस्यम् । माहेश्वरे तु द्राक्षादित्रये द्राक्षा यष्टिमधुनी-लोत्पले वर्त्तीकृत्य प्रक्षिप्य मधु च प्रक्षिप्य सर्व्वमालोड्य पेय-मिति । तथा वक्ष्यमाणक्षीरादिभिः प्रत्येकं गण्डूषाः बहुवचन निर्द्देशात । यद्यपि तालुशोषे घृतं निषिद्धं यदुक्तं तृष्णाच्छर्द्दिपरी-तस्य गर्भिन्यस्तालुशोषिणः न पिबेयुर्घृतमिति तथापि चरकसंवादा-दस्य बलवतो ह्यन्यानुक्तं घृतपानं बोध्यम् अतो विशिष्टविधित्वान्न विरोधः यद्वा दत्तवास्य तालुशोषेऽपि पिबेत् घृतं ह्यप्रमत्तमभ्यसेत्तुति किंवा वातोल्बणादन्यायामेतत् घृतपानं बोध्यम् । तालुशोषस्य तृष्णाप्रकार एव तेनेह सङ्गताभिधानम् । घृतमण्डमित्यादि

तृष्णाम्लानैश्च गण्डूषास्तालुशोषनिवारणाः।
तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा॥ ७॥
मूर्च्छाछर्दितृषादाहस्त्रीमद्यभृशकर्षिताः।
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये॥
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्।
तदेवालवणं पीतं मुखशोषहरं परम्॥
वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान्।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम्॥ ८॥
कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति॥
वारिशीतं मधुयुतं आकण्ठाद्वा पिपासितम्॥
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति।
वटशुङ्गामयक्षौद्रलाजनीलोत्पलैर्दृढा॥
गुडिकावदनन्यस्ता क्षिप्रं तृष्णां नियच्छति।

---

घृतस्योपरिभागः अतएव घृतस्योपरिस्थ्याजो भाग इति कार्त्तिककुण्डिते चक्रेणाप्युक्तः। श्रीकण्ठस्तु घृतस्योपरि स्थितभागः घृतमण्डमित्याह॥ ७॥

मूर्च्छेत्यादि स्पष्टम्। धान्याम्लेत्यादि धान्याम्लं काञ्जिकम्। सन्दधाति मुखे व्रणानिति रोपयतीत्यर्थः॥ ८॥

कोलेत्यादौ चुक्रीका चाङ्गेरी, चुक्रिकेति चुकाइ इति ख्याता। मुखलेप इति मुखकुहरे लेपः। कपोलेत्यादौ लेप इति तन्निबन्धः।

वारिशीतमित्यादि पित्ततृष्णायामयं योगः आकण्ठतोयपानादनु किञ्चित् मधुपानमित्युपदिशन्ति वृद्धाः। वटशुङ्गेत्यादि वटशुङ्गो वटप्ररोहः आमयः कुष्ठं मधु च यावता कठिना गुडिका

ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम्॥
भोजयेत्तेन शाम्येत्तु छर्द्दिस्तृष्णाभिपीड़िता॥ ९॥
पूर्व्वामयातुरः सन् दीनस्तृष्णार्द्दितोजलं याचन्।
न लभेत चेदाश्वेव मरणमाप्नोति दीर्घरोगं वा॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति।
तस्मात् सर्व्वास्ववस्थासु न क्वचिद्वारि वार्य्यते॥ १०॥

इति तृष्णाचिकित्सा।



## अथ मूर्च्छाधिकार:।

सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलश्च।
शीतानि पानानि च गन्धवन्ति सर्व्वासु मूर्च्छासु निवारितानि॥१

---

भवति तावन्मात्रं देयम्। ओदनं रक्तशालीनां शीतमिति सद्यस्क पानीयभक्तम्॥ ९॥

प्रवृद्धतृष्णायां जलस्याप्रदाने दोषमाह पूर्व्वामयेत्यादि। पूर्व्वामयातुरः सन् ज्वर रक्तपित्तादिरोगक्लिष्टः सन्। दीन इति तृष्णापीड़ितत्वेनैव क्लान्तमनाः। कथं म्रियत इत्याह तृषित इत्यादि॥ १०॥

इति तृष्णाधिकारः॥

---

तृष्णायां मोहोभवतीत्यनन्तरं मोहचिकित्सामाह सेकेत्यादि सुश्रुतस्य मणयो मुक्तास्फटिकप्रभृतयः ते च सहाराः हारारोपिता इत्यर्थः। पानानि च गन्धवन्तीति कर्पूरादियोगात् सुरभीणि पानीयानीत्यर्थः। सर्व्वासु मूर्च्छास्वनिवारितानीत्यनेन वातकफकृतायां मूर्च्छायामपि हेतुप्रत्यनीकचिकित्साकरणं वारणार्हता एते शीतक्रियोव्याधिप्रत्यनीकतया चित्तानुबन्धाच्च न वारणीया इति दर्शयति॥ १॥

सिद्धानि वर्गे मधुरे पयांसि सदाड़िमाजाङ्गलजारसाश्च।
तथा यवालोहितशालयश्च मूर्च्छासु शस्ताश्च सतीलमुद्गाः॥
यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत्॥ २॥
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः॥ ३॥
मद्यजायां वमेन्मद्यं निद्रां सेवेत् यथासुखम्।
विषजायां विषघ्नानि भेषजानि प्रयोजयेत्॥
कोलमज्जोषणोशीरकेशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढ्वा कृष्णां वा मधुसंयुताम्॥
महौषधामृता क्षुद्रापौष्करग्रन्थिकोद्भवम्।
पिवेत् कणायुतं क्वाथं मूर्च्छायेषु मदेषु च॥
शतावरीबलामूल द्राक्षासिद्धं पयः पिवेत्।
ससितं भ्रमनाशाय वीजं वाट्यालकस्य वा॥
पिवेत् दुरालभाक्वाथं सघृतं भ्रमशान्तये।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा॥
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते।
मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुड़ार्द्रकं प्रातः॥

---

वर्गे मधुर इति काकोल्यादिः। सदाड़िमा इति दाड़िमाम्ल-सहिता इत्यर्थः। सतीलो नीलकलायः। यथादोषं कषायानि ज्वर-घ्नानि प्रयोजयेदिति वातादिमूर्च्छासु यथाक्रमं वातादिकषायानि यानि तानि प्रयोजयेदित्यर्थः॥ २॥

रक्तजायामिति रक्तदर्शनजायाम्॥ ३॥

मद्यजायामिति मद्यसेवनजायां कोलमज्जादौ उषणं मरिचं। महौषधमित्यादौ क्षुद्रा कण्टकारी ग्रन्थिकं पिप्पलीमूलं, भ्रमः स्मृतिभ्रंशो, मोहस्वरूपव्यक्तग्लानिः। प्रयोगोऽभ्यासः। कौम्भं सर्पिर्द-शवर्षिकं अन्ये तु शतं सशतं स्वेच्छं कौम्भं सर्पिरुच्यते। अद्रु-

समाहात् पथ्यभोजी मदमूर्च्छाकासकामलोन्मदान्।
अञ्जनान्यवपीड़ाश्च धूमः प्रधमनानि च ॥ ४ ॥
सूचीभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे।
लुञ्चनं केशरोम्णाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितास्तस्याऽवरोधने ॥ ५ ॥
इति मूर्च्छाचिकित्सा।



## अथ मदात्ययाधिकारः।

मन्थः खर्ज्जूरमृद्वीकावृक्षाम्लाम्लीकदाड़िमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥
जले चतुष्पले शीते क्षुण्णद्रव्यपलं क्षिपेत् ॥
मृत्पात्रे मर्दयेत् सम्यक् तस्माच्च द्विपलं पिबेत्।
सतोलमुद्गमिश्रान् वा दाड़िमामलकान्विताम् ॥

---

नानेति तीक्ष्णान्यञ्जनानि अपस्मारोक्तानि। अवपीड़ाः नासिकायां निरूहणादिरूपा अवपीडा ये दीयन्ते। धूमाः वैरेचनधूमाः प्रधमनं चूर्णनस्यम् ॥ ४ ॥

सूचीभिरित्यादौ पीड़ा नखान्तर इति नखमांसयोर्मध्ये पीड़नं आत्मगुप्ता शूकशिम्बी ॥ ५ ॥

इति मूर्च्छाधिकारः।

---

मूर्च्छावन्मदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह मदएवात्ययकारको मदात्ययः, किंवा मदशब्देनेह मदहेतुतया मद्यमुच्यते तेन कृतोऽत्ययो मदात्ययः मन्थ इत्यादिद्रवैःस्तानोड़ितशक्तुको मन्थः, द्रवश्च खर्ज्जूरादीनां क्वाथः। वृक्षाम्लकं तिन्तिड़ीफलम् छन्दोनुरोधात् ह्रस्वः। सतोलेति सतोलो वर्त्तुलकलायः

द्राक्षामलककर्ज्जूरपरूषकरसेन वा ।
कल्पयेत्तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥ १ ॥
मद्यं सौवर्च्चलव्योषयुक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ २ ॥
मुद्गयूषः सितायुक्तः स्वादुर्व्वापि शीतो रसः ।
पित्तपानात्यये योज्याः सर्व्वतश्च क्रियाहिमाः ॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम् ।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥
सर्व्वजे सर्व्वमेवेदं प्रयोक्तव्यं चिकित्सितम् ।
आभिः क्रियाभिर्मिश्राभिः शान्तिं याति मदात्ययः ॥
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत् ।
लङ्घनाद्यैः कफे क्षीणे जातदौर्ब्बल्यलाघवे ॥
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः ॥ ३ ॥

पुनर्नवाघृतम् ।

क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत् ।

---

शीतलमुद्गमिश्रां वेति पाठे छागलरसस्य विशेषणं चरके हि एतद्वचनात् पूर्वं छागरसमित्युक्तम् ॥ १ ॥

मद्यमित्यादि — सौवर्च्चलव्योषयुक्तं लवणकटुरसात्मकत्वात् देयम् । किञ्चिज्जलमष्टभागिकमित्याहुः ॥ २ ॥

मुद्गयूषमित्यादि — स्वादुरित्यनेन संस्काराणां कटुद्रव्योपयोगोऽत्र न कार्य्य इति दर्शयति दीपनीयौषधमेव यस्यामवस्थायां क्षीरप्रयोगः कर्त्तव्यस्तामाह लङ्घनाद्यैरिति आद्यशब्दात् शोधनादीनां ग्रहणम् ॥ २ ॥

क्षीरप्रयोगमित्यादि एतद्वचनात् पूर्व्वं पयसा विहिते योगे बले जाते निवर्त्तयेदिति वचनमस्ति तेनात्र क्षीरप्रयोगमित्यत्र पूर्व्वो-

पयः पुनर्नवाक्वाथ यष्टीकल्कप्रसाधितम् ॥
घृतं पुष्टिकरं पानात्ययपानहतौजसः ॥ ४ ॥

अष्टाङ्गलवणम्।

सौवर्च्चलमजाज्यञ्च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ ५ ॥
चव्यं सौवर्च्चलं हिङ्गु पूरकं विश्वदीपकम्।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ ६ ॥
जलाप्लुतश्चन्दनरूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम्।
पिबन् सुरां नैव लभेत रोगान् मनोमतिभ्रंशमदं न याति ॥ ७ ॥
द्राक्षाकपित्थफलदाडिमपानकं य-
त्तत्पानविभ्रमहरं मधुशर्कराढ्यम् ॥ ८ ॥

---

क्रमेण निवर्त्तयेदित्यनेन सम्बन्धात् क्षीरप्रयोगं क्रमेण निवर्त्तयेत्। मद्यञ्च क्रमेणाल्पाल्पमाचरेदित्यर्थः। पयः पुनर्नवाक्वाथेत्यादौ।— क्षीरं घृतसमं क्वाथस्त्रिगुणस्तद्द्विगुणो वेत्याहुः ॥ ४ ॥

सौवर्च्चलेत्यादि।— अत्र सौवर्च्चलादीनां चतुर्णां समभागता। त्वगेलामरिचानामेकभागापेक्षया प्रत्येकमर्द्धभागिकत्वं, शर्कराभागोऽपि सौवर्च्चलाद्येकतमद्रव्यसमः ॥ ५ ॥

चव्यमित्यादौ — पूरकं बीजपूरस्य फलत्वगिति निश्चलः दीप्यक यमानी ॥ ६ ॥

मद्यं येन प्रकारेण विकारं न जनयेत्तदाह जलेत्यादि सम्प्लुतस्य। चन्दनेन रूषितं लिप्तमङ्गं यस्य। पिशितं मांसं उपदंशो भक्ष्यो यस्यां सा तथा। मनोमतिभ्रंशमिति विशेषणात् द्वितीयादि मदञ्च प्राप्नोति प्रथमन्तु मनोऽनुपघातकं लभत एवेत्यर्थः ॥ ७ ॥

द्राक्षेत्यादि सम्प्लुतस्य। द्राक्षादिभिः पानकं स्वदयास्वानुसारेण कार्य्यम् ॥ ८ ॥

पथ्यक्वाथेन संसिद्धं घृतं धात्रीरसेन वा।
सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥
मच्छर्द्दिमूर्च्छातिसारं मदं पूगफलोद्भवम्।
सद्यः प्रशमयेत् पीतमात्रं वारि शीतलम् ॥
वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वापि।
शाम्यति पूगफलमदश्चूर्णदजा शर्कराकवलात् ॥
शङ्खचूर्णरजोघ्राणं स्वल्पं मदमपोहति।
कुष्माण्डकरसः सगुडः शमयति मदनकोद्रवजम् ॥
धौस्तूरञ्च दुग्धं सशर्करं पानयोगेन ॥ ९ ॥

इति मदात्ययचिकित्सा।



## अथ दाहाधिकारः।

शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥

---

पथ्येत्यादि घृतद्वयमकल्कम्। अतैव मदत्वसामान्यात् पृथक् पृथक् चिकित्सामाह मच्छर्द्दीत्यादि। वन्येत्यादि वनं जलं तद्भावो वन्यः तां कुर्व्वन्ति इति करीषं इति शुष्कगोमयः। अन्ये तु वन्यकरीषं वनजकरीषमाहुः। एते च वन्यकरीषादयः पृथक् पृथक् प्रयोक्तव्याः। अर्ककेति अर्कनामकचूर्णभक्षणोत्थो रसनादिदाहः। एतच्च सम्पूर्णश्लोकानुरोधाल्लिखितम्। अल्पं मदं पूगभक्षणजमेव कुष्माण्डेत्यादि मदनं तृणधान्यविशेषः मयनघास इति ख्यातः। धुस्तूरजं धुस्तूरफलभक्षणजम् ॥ ९ ॥

इति मदात्ययाधिकारः।

---

मदात्ययदाहस्यापि मद्यपानजन्यत्वात् मदात्ययाधिकारं

छादयेत्तस्य सर्व्वाङ्गमारनालार्द्रवाससा।
लामज्जेनाथयुक्तेन चन्दनेनालेपयेत्॥
चन्दनाम्बुकणास्यन्दितालवृन्तोपवीजितः।
सुप्याद्दाहार्द्दितोऽम्भोजकदलीदलसम्भवे॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने।
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये। १॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः।
अन्तर्दाहं प्रशमयेदेतैश्चान्यैश्च शीतलैः॥ २॥
कुशाद्यं तैलं घृतञ्च।
कुशादिशालपर्णीभिर्जीवकाद्येन साधितम्।
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम्॥ ३॥

---

एव दाहचिकित्सा दहित्यादि कोलेत्यादि द्वितीयो योगः अत्रापि दिह्यादिति योज्यम् लामज्जमुशीरं शुक्लं सञ्जानविशेषः तालवृन्तं तालपत्र[illegible]व्यजनम्॥ १॥

क्षीरिकषायो, वटोदुम्बरादिकाथः। क्षीरादिकञ्चैतत् पानं परिषेकादौ योज्यम्॥ २॥

कुशादीत्यादि, कुशादिपञ्चमूलं तृणपञ्चमूलं तच्च सुश्रुतोक्तं कुशकाशनलदर्भकाण्डेक्षुमूलरूपम्। अत्र शालपर्णीशब्देन विदारीगन्धादिगणस्य ग्रहणमिति इन्दटिप्पनी अन्ये तु शालपर्ण्यादि पञ्चमूलस्य ग्रहणमित्याहुः। निम्बलक्ष्यादिशब्दाभावात् शालपर्णीमात्रस्यैव ग्रहणमित्याह। जीवकाद्येनेति जीवकाद्यष्टवर्गेण, जीवकाद्यष्टवर्गस्तु जीवकर्षभकमेदा महामेदा काकोली क्षीरकाकोली ऋद्धि वृद्धयः एवं सर्व्वत्र सुश्रुतयोगे जीवनीयाष्टकम्। चरकयोगे पुनरेव ऋद्धि वृद्धिरहितमाषपर्णी मुद्गपर्णी जीवन्तीकं मधुकमहितं जीवनीयदशकं ज्ञेयम्। अत्र कुशादि शालपर्णीभिः क्वाथः जीवकाद्येन कल्कः। अन्ये तु कल्ककाथावनिर्द्देशे गणात्तस्मात् समावपेदिति वचनात् सर्व्व एव कल्ककाथाविल्याहुः॥ ३॥

फलिनीलोध्रसेव्याम्बुहेमपत्रं कुटन्नटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ४ ॥
ह्रीवेरपद्मकोशीरचन्दनक्षोदवासिताम् ।
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ५ ॥

इति दाहचिकित्सा ।



## अथोन्मादाधिकारः ।

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम् ।
पित्तजे कफजे वान्तिः परो बस्त्यादिकः क्रमः ॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते ।
उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः ॥
ब्राह्मीकुष्माण्डफलषड्ग्रन्थाशङ्खपुष्पिकास्वरसाः ।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ।

---

फलिनीत्यादौ ।— फलिनी प्रियङ्गुः सेव्यमुशीरं, अम्बु बालकं हेम नागकेशरम् पत्रं तेजःपत्रं कुटन्नटं कैवर्त्तमुस्तकम् कालीयकं कालीयाइति ख्यातम् पीतकाष्ठं गन्धद्रव्यविशेषः श्वेतचन्दनमिति कश्चित् कालीयकक्वाथश्च पेषणार्थमिति वदन्ति ॥ ४ ॥

ह्रीवेरेत्यादौ ।— क्षोदं चूर्णम् । एषां चूर्णानि शीतजलेन मिश्रयित्वा अवगाहनं कार्य्यम् ॥ ५ ॥

इति दाहचिकित्सा ।

---

यद्यपि मदात्ययस्य उन्मादसदृशत्वेन तथा पूर्वोक्त रीत्या च मदात्ययानन्तरमुन्मादहावेव वक्तुमुचितौ तथापि सूचिकटाहन्यायेन दाहमभिधाय उन्मादचिकित्सितमुच्यते उन्मादे इत्यादि । परो बस्त्यादिकक्रम इति पश्चात् स्नेहवस्तिनिरूहणशिरोविरेचनात्मकः

दशमूलाम्बु सघृतं युक्तं मांसरसेन वा।
ससिद्धार्थकचूर्णं वा पुराणं वैककं घृतम् ॥
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्।
लाक्षारससन्निभं शीतं प्रपुराणमतः परम् ॥ १ ॥
श्वेतोन्मत्तोत्तरदिङ्मूलसिद्धस्तु पायसः।
गुडाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥
उन्मादे समधुः पेयः शुद्धो वा तालशाखजः।
रसोनस्तेऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥
अपक्वचटकीक्षीरपीतोन्मादविनाशिनी ॥ २ ॥
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत् ॥ ३ ॥

---

क्रमः कार्यः। चरकेऽप्युक्तं निरूहणं स्नेहवस्तिः शिरसश्च विरेचनम्। ततः कुर्यात् यथादोषं तेषां भूयस्त्वमाचरेदिति। सामान्यात् हेतुदुष्ययोरिति, उन्मादापस्मारयोर्हेतुर्मनोपघातादिः दूष्यञ्च हृदयसमानमित्यर्थः। सामान्याद्दोषदूष्ययोरिति केचित् पठन्ति। ब्राह्मीत्यादयश्चत्वारो योगाः कुष्माण्डीफलमत्र पुराणं व्याख्यमित्याहुः। पुराणघृतलक्षणमाह उग्रगन्धमित्यादि। चरकस्य। चरकटीकाकृतस्तु केचित् इमं श्लोकमनार्षं वदन्ति केचिद्देकवर्षीतीतं घृतं पुराणमिति ब्रुवते तन्त्रान्तरसंवादात् ॥ १ ॥

श्वेतेत्यादि श्वेतोन्मत्तः श्वेतधुस्तूरकस्य उत्तरदिशि स्थितं मूलं ग्राह्यम्। महेश्वरस्तु उत्तरदिशि स्थितं धवलधुस्तूरमूलं पिष्टा पल। क्षुद्र तण्डुल पल। दुग्धशराव। पायसं साध्यं तदनुरूपे गुडघृते दत्वा खादयेदित्याह। उन्माद इत्यादि शुद्ध इति केवलः तालशाखज इति छान्दसत्वाज्जलः। रस इति च्छेदः, तेन कोमलतालशाखाभवो रसः मधुप्रक्षेपेण, शुद्धो वा मधुना वनापि। अपक्व चटकीति न्याम चटकी कन्कीकाथ ॥ २ ॥

बद्धमित्यादि एतच्च स्रोतो विशुद्ध्यर्थंसुदेजनार्थञ्च ॥ ३ ॥

त्र्यूषणाद्यवर्त्तिः ।

सिद्धार्थको हिङ्गु वचा करञ्जौ देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ।
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनन्तथा ।
अपस्मारविषोन्मादं कृत्यालक्ष्मीज्वरापहः ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥
त्र्यूषणं हिङ्गु लवणं वचाकटुकरोहिणी ।
शिरीषनक्तमालानां बीजं श्वेताश्च सर्षपाः ॥
गोमूत्रपिष्टै रेतैर्वा वर्त्तिर्नेत्राञ्जने हिता ।
चातुर्थकमपस्मारमुन्मादञ्च नियच्छति ॥ ४ ॥

---

सिद्धार्थकेत्यादि अत्र करञ्जद्वयस्य त्वगित्याहुः, श्वेता श्वेतापराजिता, कटभी लताफटकीति ख्याता, अन्ये तु कटभीत्याहुः शिरीषस्य फलम् । अगद इति संयोग विषहरः, कृत्याभिचारः, राजद्वारे च शस्यत इति वशीकरणत्वात् । एतेनेति सिद्धार्थकादीनां कल्केन । त्र्यूषणेत्यादि स्पष्टम् । शुद्धस्येत्यादि चरकस्य । शुद्धस्येति शमितस्य आचारविभ्रंशे अनुन्मादे, सन्तर्जनमुद्वेजनं, तर्ज्जनं वचसा विस्मृतैर्हेतुभिरिति उन्मादहेतुभयहर्षादिविस्मारकतया प्रभावादेव मनः प्रकृतिं स्वभावं नयन्ति । परस्परप्रतिद्वन्द्वैरिति अन्योन्यविपरीतैः तस्य तत्सदृशप्राप्तैरिति भावे क्तः, तत्सदृशप्रापणैरित्यर्थः, शान्त्या आश्वासैरिति शान्तं सान्त्वप्रयोगः वशीभूतकरणार्थं उपायविशेषः आश्वासः सान्त्ववचनम् । उत्सादनं अङ्गघर्षणम् । नारायणतैलं महानारायणतैलञ्च वातव्याधौ वक्ष्यति ॥ ४-५ ॥

सुहृदाश्वासविश्रम्भो तीक्ष्णं नावनमञ्जनम् ।
ताड़नञ्च मनोबुद्धिस्मृतिसंवेदनं हितम् ॥
तर्ज्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्त्या सान्त्वाश्वासैश्च तं जयेत् ॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥
कल्याणकं महद्वापि दद्याद्वा चेतसं घृतम् ।
तैलं नारायणञ्चापि महानारायणन्तथा ॥ ५ ॥

पानीयकल्याणक्षीरकल्याणके ।

विशालात्रिफला कौन्ती देवदार्व्वेलवालुकम् ।
स्थिरानतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुकाः ॥
नीलोत्पलैलामञ्जिष्ठा दन्ती दाड़िमकेशरम् ।
तालीशपत्रं बृहतीमालत्याः कुसुमं नवम् ॥

---

विशालेत्यादि विशाला गोरक्षकर्कटी, कौन्ती रेणुक, एल वालुकं स्वनामख्यातं सुगन्धि द्रव्यं, स्थिरा शालपर्णी, नतं तगर पादुका तदभावे शियलोकोपरः, केशरं नागकेशरम्, मालती जाती तस्याः कुसुमं, नवमिति कुसुमविशेषणम् । अष्टाविंशतित्वं कल्कानां पाठादेव सिद्धं किमर्थमुच्यते अष्टाविंशतिभिरिति ? अत्र यद्यपि त्रिफलायाः प्रत्येकमेव भागो लभ्यते, उत्सर्गसिद्धत्वात् तथापि त्रिफलायाः प्रत्येकभागग्रहणदार्ढ्यार्थम् अष्टाविंशतिभिरित्युक्तम् यद्यपि त्रिफलाशब्देन द्राक्षाकाश्मर्य्यपरूषका उच्यन्ते तथापि हरीतक्यादित्रिफलाया एवात्र ग्रहणं प्राधान्यादेवान्यत्रापि । पुंसवनेष्विति

विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ॥
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।
वम्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ।
कण्डूपाण्ड्वामयोन्मादे विषमेह गरेषु च ॥
भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम् ।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहनिवारणम् ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।
द्विजलं सचतुःक्षीरं क्षीरकल्याणकन्त्विदम् ॥ ६ ॥

क्षीरकल्याणकं घृतम् ।

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणम् ॥

---

पुत्रकारकयोगेषु । एतदेव घृतं यदा जलस्याष्टौ शरावान् क्षीरस्य षोडश शरावान् दत्त्वा पच्यते तदा क्षीरकल्याणकं भवति ॥ ६ ॥

एभ्य एवेति कल्याणोक्तविशालादिभ्यः स्थिरादीनीत्युक्तैर्विदारीगन्धादेः पञ्चमूलस्यापि ग्रहणं स्यादतस्तत्र एकविंशतिमिति तद्ग्रहण-सम्भावनानवकाशोऽपि शङ्कानिरासार्थं वा एकविंशतिमित्युक्तम् । गृष्टि-रेकवारप्रसूता धेनुः । अत्र चतुर्गुणक्षीरस्य निर्देशादुत्सर्ग-सिद्धो द्रव एव देयः न त्वनिर्दिष्टमानक्वाथोऽत्र स्नेहसम एवेति चतु-र्गुणः पाकः युक्तश्चैतत् चतुः प्रभृति यत्र स्युरित्यादि परिभाषार्थेना-स्यार्थस्य समानन्यायत्वादिति केचित् । अन्ये तु क्षीरेणैवात्र चतु-र्गुणे प्राप्तेऽयं कषायः "एकेनापि चाष्टगुणमित्यादि परिभाषाया

वीरा द्विमाषकाकोली स्वयं गुप्तर्षभर्द्धिभिः ।
मेदया च समैः कल्कैः तत् स्यात् कल्याणकं महत् ॥
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ ७ ॥

चैतसं घृतम् ।

पञ्चमूल्याकाश्मर्य्यौ रास्नैरण्डत्रिवृद्बला ॥
मूर्व्वा शतावरी चेति क्वाथैर्द्विपलिकैरिमैः ।
कल्याणकस्य चाङ्गेन तद्घृतं चैतसं स्मृतम् ॥
सर्व्वचेतोविकाराणां शमनं परमं मतम् ।
घृतप्रस्थोऽत्र पक्तव्यः क्वाथोद्रोणाम्भसा घृतात् ।
चतुर्गुणोऽत्र सम्पाद्यः कल्कः कल्याणकैरितः ॥ ८ ॥

---

अविषयत्वेन स्नेहान्नीयं चतुर्गुणमिति द्रवचातुर्गुण्यपरिभाषया क्षीरमानसाहचर्य्यात् वा चतुर्गुणोऽत्रेय इति वदन्ति । वीरा ईश्वरपर्णी क्षीरविदारीत्यन्ये । द्विमाष इत्यनेन राजमाष स्वल्पमाषयोर्ग्रहणमिति केचित् अन्ये तु मुद्गपर्णी माषपर्णी इत्याहुः अपरे तु द्विशब्दस्य काकोलीत्यनेन सम्बन्धात् क्षीरकाकोल्या अपि ग्रहणमित्याहुः तन्न वाग्भटसंवादविरोधात्, अन्ये तु वीराद्र्माषेति पाठान्तरमद्र्माषश्च माष इति व्याचक्षते । वीरादिना परिमितस्वल्पीतानि इत्येके वीरादीनां प्रत्येकमेकपलमिति महेश्वरः ॥ ७ ॥

पञ्चमूल्याविति दशमूली गाम्भारी रहिता, द्विपलिकैरिति एषां प्रत्येकं द्विपलम्, कल्याणकस्य चाङ्गेनेति पानीयकल्याणोक्तकल्केन यथोक्तमानेनार्थः, अन्ये तु अनोक्तमानं परित्यज्य घृतात् पादिकं मानं गृह्णन्ति । यद्यपि द्रव्यमापोथ्य काथ्यं दत्त्वा षोड़शिकं परं पादावशिष्टं कर्त्तव्यमेव काथविधिः स्मृत इति क्वाथाद्येय परिभाषया त्रिंशत्पले काथ्ये षष्टिः शरावा भवन्ति जलस्य तथा काथस्य घृताच्चतुर्गुणार्थं द्रोणाम्भसेति चक्रेनोक्तम् ॥ ८ ॥

महापैशाचिकं घृतम्।

जटिला पूतना केशी चारटी मर्कटी वचा।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी॥
वयस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयस्था नाकुलीद्वयम्॥
कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम्।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम्॥
महापैशाचिकं नाम घृतमेतद्यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्॥ ९॥

हिङ्ग्वाद्यं घृतम्।

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ १०॥

---

महापैशाचिके जटिला मांसी, पूतना हरीतकी, केशी भूत-केशी, चारटी कुष्माण्ड पद्मचारिणीत्यन्ये मञ्जिष्ठेत्यपरे, मर्कटी शूकशिम्बी, जया जयन्ती वीरा क्षीरकाकोली पृश्निपर्णीत्यपरे, चोरकः चोरपुष्पी, वयस्था मज्जा, गुडूचीत्यन्ये, अपरे तु निर्गुण्डीत्याहुः, शूकरी वाराहिका तदभावे चर्म्मकारालुकः, छत्रा मधुरिका, अतिच्छत्रा शतपुष्पा, पलङ्कषा गुग्गुलुः, महापुरुषदन्ती शतावरी, वयस्था शुकानना ब्राह्मीत्यन्ये, नाकुलीद्वयं रास्नाद्वयं रास्नागन्धरास्ना च, कटम्भरा कटभी प्रसारणी वा, वृश्चिकाली वृश्चिक-पत्नी विछातीति ख्याता, स्थिरा शालपर्णी। स्वल्पपैशाचिकस्याभावात् महच्छब्दोऽयं महागुणकारकत्वादित्याहुः, अन्ये तु जटिला स्थिराम्बुभकेशीत्यादिना स्वल्पपैशाचिकस्यापि, तन्त्रान्तरे पठितत्वात् तदपेक्षयाऽस्य महत्त्वमाहुः॥ ९॥

हिङ्गित्यादौ व्योषस्य प्रत्येकं द्विपलांशता॥ १०॥

लशुनाद्यं घृतम्।

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूलस्य द्व्याढकेऽपां विपाचयेत्॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः॥
दाडिमाम्बुसुरामस्तुकाञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत्त्रिफलादारुलवणव्योषदीप्यकैः॥
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धकैः।
सिद्धमेतत् पिबेच्छूलगुल्मार्शोजठरापहम्॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषकृमिज्वरान्।
वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति॥११॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः।
पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक्॥१२॥

---

लशुनस्येत्यादौ अविनष्टस्येति विशुद्धस्य, तुलार्द्धं पञ्चाशत् पलानि, तदर्द्धं दशमूलस्येति मिलित्वा दशमूलस्य पञ्चविंशति पलानि, पादशेष इत्याढकः लशुनस्य रसश्चेति प्रस्थमेव। दाडिमाम्बु दाडिमरसः। तदर्द्धिकैरित्यत्र तच्छब्देन प्राधान्यात् प्रत्यासत्त्या च घृतपरिमाणात् कोलादिरसैः प्रत्येकमर्द्धप्रस्थैरित्यर्थः, अन्ये तु तदर्द्धिकैरित्यत्र तच्छब्देन पादावशिष्टकषायः परामृश्यते तेन लशुनस्य रसादीनां दशानामेव शरावार्द्धिकत्वेन प्रत्येकं प्रस्थमानमित्याहुः॥११॥

आगन्तून्मादचिकित्सामाह सर्पिरित्यादि सर्पिरत्र भूतघ्नं चैतसादि। पूजेत्यादौ बलिः पूजोपकरणम् उपहार उपढौकनम्। किंवा पूजा बल्योपहारः उपढौकनमेव। अञ्जनादिभिरिति आदिशब्दात् स्वस्त्ययनादिकं बोध्यं यदुक्तं भूतानामधिपं देवमीशानं जगतः प्रभुं। पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयमिति॥१२॥

कृष्णामरिचसिन्धूत्थमधुगोपित्तनिर्म्मितम् ।
अञ्जनं सर्व्वभूतोत्थमहोन्मादविनाशनम् ॥
दार्व्वीमधुभ्यां पुष्यायां कृतञ्च गुडिकाञ्जनम् ॥
मरिचं वातपे मासं सपित्तं स्थितमञ्जनम् ।
वैकृतं पश्यतः कार्य्यं दोषभूतहृतस्मृतेः ॥ १२ ॥
निम्बपत्रवचाहिङ्गुसर्पनिर्म्मोकसर्षपैः ।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥
कार्पासास्थिमयूरपिच्छबृहती निर्माल्यपिण्डीतकै-
स्त्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः ।
गोश्रृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः ।
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥
अश्मराक्षसजिन्नस्यं पक्वैन्द्रीफलमूलजम् ॥
साज्यं भूतहरं नस्यं श्वेताच्छागाम्बुनिर्म्मितम् ।

कृष्णेत्यादौ गोपित्तं गोरोचना दार्व्वीत्यादि स्पष्टम् । मरिच-मित्यादि मरिचं गोरोचनया आतपे मासैकं भावितमञ्जनं कर्त्तव्यम् । दोषभूतहृतस्मृतिरिति दोषेण भूतेन वा हृतास्मृतिर्यस्य इत्यर्थः ॥ १२ ॥

निम्बेत्यादि स्पष्टम् । कार्पासेत्यादि कार्पासास्थि कार्पासबीजं निर्म्माल्यं शिवनिर्म्माल्यम् । पिण्डीतकं मदनफलं त्वग्वांशीति त्वगुशीरं वांशी वंशरोचना अन्ये तु त्वग्वांशी वंशस्य त्वगित्याहुः । वृषदंशो विड़ालः तस्य विट् पुरीषं केशो भूतकेशी बाल इत्यपर ॥ अश्मेत्यादि पक्वैन्द्रीफलं परिणतगोरक्षकर्कटीफलं गोमूत्रेण सह योज्यं नस्यं विधेयम् । साज्यमित्यादौ श्वेता श्वेतापराजिता छागाम्बु छागलाम्बु देवेत्यादौ क्रूरामिति ताड़नबन्धनादिकम् ।

देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान्॥
वर्ज्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च॥ १४॥
इत्युन्मादचिकित्सा।



## अथापस्माराधिकारः।

वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु॥
मनोह्वा तार्क्ष्यजञ्चैव शकृत्पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः॥ १॥
यष्टीहिङ्गुवचावक्रशिरीषलशुनामयैः
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने।
पुष्याहृतं शुनः पित्तमपस्मारघ्नमञ्जनम्॥

---

एतञ्च परिवर्जनं वैद्यातुरोपघातपरिहारार्थम् उक्तञ्च वैद्यातुरौ विनिहन्ति एवं कृत्वा महौजस इति॥ १४॥

इत्युन्मादभतोन्मादाधिकारः।

---

तुल्यचिकित्सितत्वादुन्मादानन्तरमपस्मारचिकित्सितमुच्यते वातिकमित्यादि। वमनप्रायैरिति वमनप्रधानैः। सर्वत इत्यूर्द्ध्वमधश्च शुद्धस्य। चाश्वासितस्येति संशोधनानन्तरं संसर्ज्जनक्रमेण संजातबलस्य। मनोह्वा मनःशिला, तार्क्ष्यजं रसाञ्जनम्॥ १॥

यष्टीत्यादौ वक्रं तगरं, शिरीषं शिरीषस्य फलं, आमयं कुष्ठम्। पुष्ये त्यादि पुष्यनक्षत्रे यदृच्छया मृतकुक्कुरस्य पित्तं ग्राह्यमित्याहुः। उलूकः पेचकः कीटः पश्चिमदेशप्रसिद्धः, एषां तुण्डिकं यथा सम्भवं ग्राह्यम्। काचस्थानित्यादि कायस्थः निर्गुण्डी, शारदा-

तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ।
नकुलोलूकमार्ज्जारगृध्रकीटाहिकाकजैः ॥
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ।
कायस्थान् शारदान् मुद्गान् मुस्तोशीरयवांस्तथा ॥
सव्योषान् बस्तमूत्रेण पिष्ट्वा वर्त्तिं प्रकल्पयेत् ।
अपस्मारे तथोन्मादे सर्पदष्टे गरार्द्दिते ॥
विषपीते जलमृते चैताः स्युरमृतोपमाः ।
अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः ॥ २ ॥
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ।
जतुकाशकृता तद्वद्दग्धैर्वा बस्तरोमभिः ॥
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥ ३ ॥
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥
उद्बन्धितनरग्रीवापाशं दग्ध्वा कृता मषी ।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥ ४ ॥

---

निति मुद्गविशेषणं ज्येष्ठमाषोद्भवमुद्गनिरासार्थम् । वर्त्तिरित्यञ्जनवर्त्तिः । विषपीत इति पीतविषे, गरः संयोगविषं जलमृत इति जलपानेन मृतप्राये सर्व्वथा मृते हि भेषजं विफलमिति जलमृतलक्षणं यथा विट्शूलपायुमर्द्दोत्कमाध्मातोदरमेहनम् । विद्याज्जलमृतं जन्तुं शीतपादकराननमिति ॥ २ ॥

अपेतराक्षसीति अपेतराक्षसी श्वेततुलसी तस्याः स्वरस इत्यर्थः । पूतना हरीतकी, केशी भूतकेशी, चोरः चोरपुष्पी, चरकोक्तपूर्व्वयोगे बस्तमूत्रसन्दर्शनादत्रापि बस्तमूत्रमेवत्याहुः । किन्त्वा प्रधानकल्पतयात्र गोमूत्रमेव मवगन्तव्यम् । जतुकाशकृतेति जतुका चर्म्मचटकः तस्याः पुरीषेण, तद्वदित्युत्सादनम् । दग्धैरिति बस्तरोमभिरित्यनेन योज्यम् । अपस्मारेत्यादौ मूत्रं गोमूत्रम् ॥ ३ ॥

यः खादेदित्यादौ माक्षिकेण मधुना । उद्बन्धित उद्बन्धनमृतो नरः तस्य ग्रीवापाशं ग्रीवाबन्धनरज्जुम् ॥ ४ ॥

## स्वल्पपञ्चगव्यं घृतम् ।

प्रयोज्यं तैललशुनं पयसा वा शतावरी ।
ब्राह्मीरसश्च मधुना सर्व्वापस्मारभेषजम् ॥
निर्द्दह्य निर्द्रवां कृत्वा छागिकामरनालिकाम् ।
तामम्लसाधितां खादन्नपस्मारमुदस्यति ॥
हृत्कम्पोक्षिरुजा यस्य स्वेदो हस्तादिशीतता ॥
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ।
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥ ५ ॥

## बृहत् पञ्चगव्यं घृतम् ।

द्वे पञ्चमूले त्रिफलारजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
सम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढकीं मूर्व्वां दन्तीं भूनिम्बचित्रकौ ॥
द्वे शारिवे रोहिषञ्च भूतिकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥

---

प्रयोज्यमित्यादि योगत्रयं स्पष्टम् । निर्द्दह्येत्यादौ अमरनालिका अमराख्यस्तननाड़ी, अम्लसाधितामिति काञ्जिकसाधितां हृत्कम्प इत्यादि स्पष्टम् । गोशकृदित्यादौ दध्यम्लं परिणतदधि समभागत्व-दध्यादिभिश्च सम्बध्यते ॥ ५ ॥

द्वे पञ्चमूले इत्यादि द्वे पञ्चमूले विदारीगन्धादिके । रजन्याविति हरिद्राद्वयं वाभटेऽपि द्विपञ्चमूली त्रिफला द्विनिशा कुटजत्वच इत्युक्तम् । सप्तपर्णं सप्तपर्णस्य त्वक् अपामार्गं अपामार्गस्य मूलं नीलिनी स्वनामख्याता सम्पाकं आरग्वधं फल्गु काकोडुम्बरिका-

गोशकृद्रस दध्यम्लक्षीरमूत्रैश्च तत् समैः।
पञ्चगव्यमिति ख्यातं महत्तदमृतोपमम्॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके॥
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थकविनाशनम्॥ ६॥

महाचैतसं घृतम्।

शणत्रिवृत्तथैरण्डोदशमूलीशतावरी।
रास्नामागधिकाशिग्रु क्वाथ्यं द्विपलिकं भवेत्॥
विदारीमधुकं मेदे द्वे काकोल्यौ सिता तथा।
एभिः खर्जूरमृद्वीकाभीरुयुञ्जातगोक्षुरैः॥
चैतसस्य घृतस्याङ्गैः पक्तव्यं सर्पिरुत्तमम्।
महाचैतससंज्ञन्तु सर्व्वापस्मारनाशनम्॥
गरोन्मादप्रतिश्याय तृतीयक चतुर्थकान्।
पापालक्ष्मी जयेदेतत् सर्व्वग्रहनिवारणम्॥

---

फलं डुमदर इति लोके पौष्करं मूलमिन्द्रयवः। भार्गी भार्गीमूलं त्रिवृतां त्रिवृतामूलं निचुलानि इज्वलस्य फलानि, चव्यको हस्तिपिप्पली आढ़की तुवरी तस्याबीजं रोहिषो गन्धतृणभेदः भनिकं यमानी मदयन्तिका वनमल्लिका। अत्र पादावशिष्ट कषायस्तुर्यांशः गोशकृदिति रसादयस्तु घृतसमाः, तेनाष्टगुणः पाकः॥ ६॥

महाचैतसे शणस्य मूलं बीजं वा व्यवहारस्तु बीजमेति मागधिका पिप्पली। क्वाथ्यं द्विपलिकं भवेदित्यन्तेन क्वाथः, क्वाथोऽपि पूर्व्ववत् चैतसक्वाथवत् द्रोणाम्भसा कार्य्यः। विदारीप्रभृति कल्कः। मेदे मेदे द्वे, खर्ज्जूरं खर्ज्जूरस्य फलम्, अभीरु शतावरी युञ्जातं क्षौरपर्य्यायकः कन्दः, तदभावे तालमस्तकम्। चैतसस्य घृतस्याङ्गैरिति पूर्व्वोक्तचैतसघृतकल्कैर्विंशात्या त्रिफलादिभिः चैतसस्येत्यादि

कासश्वासहरश्चैव शुक्रार्त्तवविशोधनम् ।
घृतमानं क्वाथविधिरिह चैतस्य सम्मतः ॥
कल्कश्चैतस्य कल्कोक्तद्रव्यैः सार्द्धश्च पादिकः ।
नित्यं मुञ्जातकाप्राप्तौ तालमस्तकमिष्यते ॥ ७ ॥

कुष्माण्डकघृतम् ।

कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् ।
यष्ट्याह्वकल्कं तत् पानमपस्मारविनाशनम् ॥ ८ ॥

ब्राह्मीघृतम् ।

ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं मेध्यमुन्मादग्रहापस्मारनुद्घृतम् ॥ ९ ॥

पलङ्कषाद्यं तैलम् ।

पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः ।
जटिलापूतनाकेशी लाङ्गलीहिङ्गुचोरकैः ॥
लशुनातिरसाचित्ता कुष्ठैर्विड्भिश्च पक्षिणाम् ।

---

कल्याणसाङ्गैरिति वक्तव्येऽतिदेशातिदेशकरणम् अत्रोक्तकल्कद्रव्येण सह पादिकार्थम् अन्यथा कल्याणके तत्कालमन्वितैरनुक्तत्वादत्रापि अज्ञमानं प्रसज्येत अतो विशाला त्रिफलेत्यादिना कल्केन सह विदारी मधुकादेः कल्कस्य मिलित्वा घृतात् पादिकत्वं ज्ञेयम् अतएव वक्ष्यति कल्कश्चैतस्य कल्कोक्तद्रव्यैः सार्द्धश्च पादिकमिति ॥ ७ ॥

कुष्माण्ड घृतं स्पष्टम् । ब्राह्मीघृते चतुर्गुणे ब्राह्मीरसे घृतपाकः ॥ ८ । ९ ॥

पलङ्कषेत्यादि पलङ्कषा गुग्गुलुः, जटिला मांसी, पूतना केशी, भूतकेशी, इति केचित् अन्ये तु पूतना हरीतकीभेदः, केशी भूतकेशीत्याहुः जतुकर्णे गोलोमी पठ्यते न तु पूतना । नाकुली महापैशाचिका अयस्कृता, अतिरसा जलयष्टिमधु अन्ये तु ज्योतिष्मतीत्याहुः जतुकर्णे

मांसाग्निनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ १० ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ ११ ॥

इति अपस्मारचिकित्सा।



## अथ वातव्याध्यधिकारः।

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्व्वानेवोपपादयेत् ॥ १ ॥
विश्वोषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥ २ ॥

---

मधुकमिति। चित्रा, दन्ती मांसाग्निनां पक्षिणामिति स्पष्टादीनाम् ॥ १० ॥

अभ्यङ्ग इत्यादि अकल्कमिदं तैलम्। गोशकृता उत्सादनमुद्वर्त्तनं गोमूत्रेण स्नानमिति यथायोग्यतया बोध्यम् ॥ ११ ॥

इत्यपस्माराधिकारः।

---

वातविशेषस्याक्षेपकादेरपस्मारवद्वेग कर्त्तृत्वात्तथा प्रायस्तुल्यचिकित्सितत्वाच्चापस्मारानन्तरं वातव्याधिरुच्यते। यद्यपि वातव्याधिरित्युक्तर्विकृते वा यावति प्रसङ्गः तथापि व्याधिपदसमानाधिकरण्याद्विकृतो दुःखकारी वातोव्याधिरित्यर्थोज्ञेयः। ननु वातव्याधिवत् पित्तकफविकारा अपि तत्पतोषदाहादयः किमिति पृथक् करणे नोच्यन्ते नैवं वायोरतिबलत्वेन गरीयस्त्वात् तद्विकाराणामेव तु दुःसाध्यत्वात् आश्वेवात्ययकरत्वात् विशिष्ट चिकित्सितत्वाच्च पृथक्करणेनाभिधानं युक्तम्। कफपित्तविकाराणान्तु यथाविधित्वात् विरेचनवमनादि कफपित्तसामान्यचिकित्सोक्तया चिकित्सोक्ता इति ज्ञेया।

साधारणचिकित्सामाह स्वाद्वम्लेत्यादि ॥ १ ॥

विशेषत इत्यादौ क्षारं यवक्षारं किम्बा षड्धरणाख्याय निर्दिष्ट दीपनक्षारम् ॥ २ ॥

आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया।
आमाशयगते वाते छर्द्दिताय यथाक्रमम्।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना॥ ३॥
चित्रकेन्द्रयवाः पाठा कटुकातिविषाऽभयाः।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः॥
पलदशमांशो धरणं योगोऽयं सौश्रुतस्तस्य।
माषेण पञ्चगुञ्जकमानेन प्रत्यहं देयः॥ ४॥

---

आमाशयस्थ इत्यादि शुद्धस्य वमनविरेचनादिना शुद्धस्य। आमाशयगत इत्यादि सुश्रुतस्य छर्द्दिताय यथाक्रममिति स्नेह स्वेद पेयादि, क्रमान्वित क्रमेण, वातस्यापि कफस्थानगतत्वेन। यदुक्तं स्थानात् स्थानगतं दोषं स्थानवत् समुपाचरेदिति॥ २॥

षट्धरणयोगो महाव्याधिप्रशमन इति मेदःकफावृतव्याधिः। षट्धरण इति षण्णां चित्रकादीनां प्रत्येकधरणं पलदशमांशरूपं मानं यत्र स तथा एतदेवाह पलदशमांशो धरणमिति ननु पलद्वय व्यवस्थापि चरक सुश्रुत मतभेदेन द्विधा उक्ता तदिह चरकस्य पलस्य दशमांशो धरणम् इत्यत आह योगोऽयमिति अयं चित्रकेत्यादि योगः सौश्रुत इति कृत्वा तस्य सुश्रुतस्य पञ्चगुञ्जकमानेन माषेण यत्पलं भवति तस्यैव पलस्य दशमोभागः प्रत्येकं चित्रकादीनां षण्णां प्रत्यहं सप्तदिनं यावद्देयमित्यर्थः एवञ्च पञ्चगुञ्जकमानानुसारात् पलदशमांशेन रक्तिद्वयाधिकपञ्चमाषकाः भवन्ति षड्भिर्धरणैश्च मिलित्वा पञ्चरक्तिक माषानुसारेण सरक्तिद्वयपञ्चमाषाधिककर्षद्वयं स्यात् एतदेव व्यवह्रियमाणेन दशरक्तिकमाषेण सरक्तिद्वयमाषत्रयाधिककर्षार्द्धं भवति तादृक्चूर्णञ्च प्रत्यहमेव सप्तरात्रं यावत् देयम्। एतत्सर्वतोऽपि कर्षचूर्णस्य देयो भवति अत्र सरक्तिद्वयमाषक त्रयाधिक कर्ष परिहारार्थं विशेषवचनमेवेति॥ ४॥

पक्वाशयगते वाते हितं स्नेहविरेचनम्।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः॥
स्नुहीलवणवार्त्ताकुस्नेहान् छन्ने घटे दहेत्।
गोमयैः स्नेहलवणं तत्परं वातनाशनम्॥ ५॥
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः॥ ६॥
त्वङ्मांस सासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोचणम्॥ ७॥
स्नेहोपनाहाग्निकर्म्म बन्धनोन्मर्द्दनानि च।
स्नायुसन्ध्यस्थिसंप्राप्ते कुर्य्यात् वाते विचक्षणः॥ ८॥

---

वस्तयः शोधनीया या इति शोधनवस्तयः यथा शोधनद्रव्य निःक्वाथास्तत्कल्कस्नेहसैन्धवैर्युक्ताः खजेन मथिता वस्तयः शोधनीयाः मता इति। प्राशाश्च लवणोत्तरा इति लवणप्रधाना आहाराः किंवा लवणोत्तराः प्राशाः स्नेहलवणकल्याणलवणादयः। तदेव स्नेहलवणमाह स्नुहीत्यादि अत्र लवणानि पञ्च, स्नेहाश्चत्वारः छन्न इति शरावादि पिहिते लिप्तमुखे, गोमयैरितिस्नुहीपञ्चलवण वार्त्ताक फलानि तदनु घृत तैलवसामज्जभिः स्निग्धीकृत्य घट कृत्वा मुखमालिप्य गोमयाग्निना दग्ध्वा यानि अतः कोष्णं विभज्य उपयोज्यानि॥ ५॥

विधिर्वस्ति विशोधन इति। मत्राद्युताश्मरी चिकित्साविधिः॥ ६॥

त्वगित्यादि अत्र त्वङ्मांसादि गतवाते रक्त मोचणरूपमेकमेव चिकित्सितम्। आन्तरकरत्वव्यपगततया बोध्यम्। अन्ये स्नेहाभ्यङ्गोपनाहाग्नि मर्द्दनालेपनानि चेति सुश्रुतवाक्यस्य त्वङ्मांसासृक् शिरा प्राप्त इत्यनेन सह सम्बन्धं निदर्धति। ततश्च त्वङ्मांसासृग् गतवाते स्नेहाभ्यङ्गादिकं रक्तगतवाते तु योग्यतया रक्तमोचणमेवेत्याहुः॥ ७॥

स्नेहोपनाहेत्यादिना स्नायु सन्ध्यस्थिगतवात चिकित्सा माह॥ ८॥

स्वेदाभ्यङ्गावगाहांश्च हृद्यं चान्नं त्वगाश्रिते ॥ ९ ॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १० ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम् ॥ ११ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥
शिरोगतेऽनिले वातशिरोरोगहरी क्रिया ॥ १२ ॥
व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च
प्रदेशिनीभ्याञ्चोन्नम्य चिबुकोन्नामनं हितम् ॥

---

स्वेदाभ्यङ्गेत्यादिना रसगतानिलचिकित्सामाह । हृद्यमित्यत्र स्पृष्टमिति जेज्जड़ः पठति, किन्तु त्वक्शब्देन त्वकस्थाद्रस उच्यते त्वगाश्रयित्वञ्च रसस्य सर्व्वगत्वाद्भवति । अतएव धातुगत कुष्ठाभिधाने त्वग्गतत्वेनैव रसगतत्वमुक्तमिति कृत्वा रसगत कुष्ठलक्षणं सुश्रुतेनोक्तम् । एतोरसस्य विशेषेण हृदयाश्रितत्वात् हृद्यमेव पाठोयुक्त इत्याहुः ॥ ९ ॥

शीताप्रदेहेति शीतप्रदेहादिरूप चिकित्सा कथनार्थमिह लिखितं तेन त्वङ्मांसास्तृगित्यादि सुश्रुत वचनेन पूर्व्वोक्तस्य पौनरुक्त्यं नाशङ्कनीयम् ॥ १० ॥

मेदस्थानिलचिकित्सामाह विरेक इत्यादि । मज्जगतानिलचिकित्सामाह बाह्येत्यादि । शुक्रस्थानिलचिकित्सामाह हर्ष इत्यादि हर्ष इति मनसः ॥ ११ ॥

गर्भेत्यादौ मधुककाश्मर्य्यफलाभ्यां दुग्धं साध्यं, सिता तु प्रक्षेपणीया । केचित्तु सितादिभिर्दुग्धं साध्यमित्याहुः उत्थापने पुष्टिजनने ॥ १२ ॥

व्यादितास्यइति व्यादितास्ये विवृतास्ये प्रदेशिनी, अङ्गुष्ठानन्तराङ्गुली, उन्नम्ये तत्र चिबुकमिति शेषः । मासखण्डरी मापपिष्टक

अर्द्दिते नवनीतेन खादेन्माषेण्डरीं नरः।
चीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥
स्नेहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः।
अर्द्दितं च जयेत् सर्पिः पिबेदौत्तरभक्तिकम् ॥ १३ ॥
पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा।
रूक्षस्वेदस्तथानस्यं मन्यास्तम्भे प्रशस्यते ॥
वाताद्वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥ १४ ॥

कल्याणकलेहः।

सहरिद्रावचाकुष्ठं पिप्पली विश्वभेषजम्।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्।
तच्चूर्णं सर्पिषालोढ़ं प्रत्यहं भक्षयेन्नरः ॥
एकविंशतिरात्रेण भवेत् श्रुतिधरोनरः।
मेघदुन्दुभिनिर्घोषमत्तकोकिलनिस्वनः
जडगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ १५ ॥
वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा।

---

विवृतिः। माषेण्डरीं भक्षणान्तरं चीरमांसरसैरन्नं भुक्त्वा ततो दशमूलीजलं पिबेदित्यर्थः। औत्तरभक्तिकमिति भोजनानन्तर कालीयम् ॥ १३ ॥

पञ्चमूली। वाताद्दित्यादौ वाग्धमनी वाग्वाहिनी धमनी ॥ १४ ॥

सहरिद्रेत्यादौ अजाजी कृष्णजीरकं, अजमोदा यमानी, यष्टिमधुशब्देन ब्रह्मयष्टीति श्रीकण्ठदत्तो व्याचष्टे तत्तु न व्यवहारसिद्धं नापि टीकान्तरे दृष्टमिति ॥ १५ ॥

वक्ष इत्यादि सुश्रुतस्य त्रिकमिह अंशद्वयान्तरसन्धिः सहिश्लेष्मस्थानं तद्गत एव वाते वमनं नस्यश्च यौगिकम्। नस्यमिह

वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितम् ॥ १६ ॥

माषबलादिः।

माषबलाम्बुकशिम्बीकतृणरास्नाश्वगन्धोरुबूकाणाम्।
क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्णः॥
अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम्।
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम् ॥ १७ ॥
दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम्।
सायं भुक्त्वा पिबेन्नस्यं विश्वच्यामवबाहुके ॥ १८ ॥
मूलं बलायास्त्वथ पारिभद्रात्तथात्मगुप्तास्वरसं पिबेत् वा।
नस्यन्तु यो मांसरसेन दद्यान्मासादसौ वज्रसमानबाहुः॥१९॥

---

शिरोविरेचनमिति। कुशलेन प्रयोजितमिति विशेषणात् प्रतिमर्शं विना चतुर्विधमप्यत्र नस्यमित्यके ॥ १६ ॥

माषबलेत्यादि अत्र कतृणं गन्धतृणं, अश्वगन्धा मूलं। क्वाथमात्रा चात्र मुखेन पेयक्वाथतुल्या, यस्तु तावन्तं क्वाथं नासिकया पातुं न शक्नोति, तेनासौ स्तोकस्तोकशः। रामठं हिङ्गु, तस्य रक्तिकाद्वयं सैन्धवस्य तु माषकद्वयं प्रक्षिपन्ति वृद्धाः। यस्मिन् पार्श्वे पीड़ा तत्पार्श्वनासापुटेन भोजनसमाप्तौ सायंकाले शक्त्यनुरूपं पेयश्चायं क्वाथः॥ १७ ॥

दशमूलीत्यादौ तैलाज्यमिश्रितमिति तैलाज्यं प्रक्षेपणीयम्। भुक्त्वेति भोजनानन्तरं सायंकाले शक्त्यनुरूपं नासिकया पिबेत् ॥ १८ ॥

मूलमित्यादि मूलं बलाया इत्येकोयोगः, पारिभद्राच्च मूलमिति द्वितीयः, अनयोः स्वरसः क्वाथो वा। आत्मगुप्तास्वरसं पिबेदिति, तृतीयः, पानमेषां नासिकया, नस्यन्तु योमांसरसेनेति चतुर्थः। अत्र तैल सैन्धवे प्रक्षिपन्ति वृद्धाः। अन्ये सैन्धवचूर्णमात्रं प्रक्षिपन्ति नस्यन्तु योमांसरकेनेत्यत्र. तयोर्मांसरसनेति पठित्वा विश्वच्यवबाहुकयोरिति व्याख्यानयन्त्यके ॥ १९ ॥

माषात्मगुप्त कैरण्डवाट्यालकसृतं पिबेत् ।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम् ॥
बाहुशोषे पिबेत् सर्पिर्भुक्त्वा कल्याणकं महत् ॥ २० ॥

हरीतक्यादिलेहः ।

हृदि प्रकुपिते वाते चांशुमत्याः पयो हितम् ।
हरीतकीवचारास्नासैन्धवं चाम्लवेतसम् ॥
घृतमात्रासमायुक्तमपतन्त्रकनाशनम् ॥ २१ ॥

स्वल्परसोनपिण्डः ।

पलमर्द्धं पलञ्चैव रसोनस्य सुकुट्टितम् ।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः ॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोडितम् ।
यथाग्निभक्षितं प्रातरुष्णकाथानुपानतः ॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम् ।
वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम् ॥

---

माषेत्यादि वचनं स्पष्टम् ॥ २० ॥

बाहुशोषइत्यादौ महत् कल्याणकम्, उन्मादाधिकारोक्तम् । हृदित्यादौ अंशुमती शालपर्णी तया सिद्धं पय इत्यर्थः । हरीतकीत्यादि क्वाथेन चूर्णेन वायं योगः, क्वाथपक्षे सैन्धवघृते प्रक्षिपेत्, चूर्णपक्षे घृतकर्षद्वयेन चूर्णस्याष्टौ माषकाः पेया इत्यर्थः ॥ २१ ॥

पलमर्द्धपलमित्यादि पलमर्द्धपलञ्चेति सार्द्धपलम् एवं चशब्दः पूर्वयोगापेक्षया, इवार्थे वाशब्दो वा । "पलमर्द्धं पलञ्चैव" इत्यपि पाठः । त्वगादिरहितपिष्टरसोनस्य किञ्चिदातपेन शुष्कस्य सार्द्धपलमेकं, माषकाष्टकं माषकदशकं वा प्रतिदिनं सेवनीयम् । अनयैव मात्रया मासमेकं सेवनोपयुक्तं न स्यात् अतः पुनरपि रसोन पिण्डं करणीयम् । नच वाच्यं यावत्या मात्रया मासोपयोगो भवति

एकाङ्गरोगिणे चैव तथा सर्व्वाङ्गरोगिणे।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः॥
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः॥ २२॥
हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम्।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः॥ २३॥
वातघ्नैर्दशमूल्या च नरं कुब्जमुपाचरेत्।
स्नेहैर्मांसरसैर्वापि प्रवृद्धं तं विवर्ज्जयेत्॥
पिप्पल्यादि रजस्तूनीप्रतितून्योः सुखाम्बुना।
पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा॥ २४॥
आध्माने लङ्घनं पाणितापश्च फलवर्त्तयः।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधनः॥ २५॥
प्रत्याध्माने तु वमनं लङ्घनं दीपनन्तथा।
प्रत्यष्ठीलाष्ठीलिकयोरन्तर्विद्रधिगुल्मवत्॥

---

तावत्येव मात्रा क्रिमिति न दर्शितेति, यस्तत्राश्नाति वीर्य्यहानिः स्या-दित्याहुः॥ २२॥

हन्तीत्यादौ सवचोषणमिति वचामरिचचूर्णसहितमित्यर्थः॥ २३॥

वातघ्नैरिति भद्रदार्व्वादिगणैः, दशमूली च विख्यातैव गणत्वात् एतैः क्वाथस्वेदोपनाहादिकं कुर्य्यात्। नवत्वस्य कुब्जस्य यावत् स्वकार्य्यकर्त्ति। पिप्पल्यादिगणः सौश्रुतः रजस्चूर्णं स्नेहलवणञ्च स्नेहलवणवार्त्ताकुस्नेहानित्यादिना पूर्व्वमुक्तम् एतदपि सुखा-म्बुना एव पिबेदिति। सघृतं क्षारहिङ्गु वेति घृतेनैव यवक्षार हिङ्गुनोश्च पानम्। घृतस्य कर्षैकं यवक्षारस्य चतुर्म्माषकं हिङ्गुनः षड्रक्तिकमिति॥ २४॥

दीपनं पाचनञ्चेति लङ्घनानन्तरं दोषशेषशमनार्थं दीपनं पाचनञ्च भेषजं देयम्॥ २५॥

दशमूलीबलारास्ना गुडूची विश्वभेषजम्।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु॥ २६॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिसाधितः।
दुर्व्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत्॥
पञ्चमूलकषायन्तु रूबूतैलं त्रिवृद्युतम्।
त्रिवृतैर्वाथ वा युक्तं गृध्रसीगुल्मशूलनुत्॥ २७॥
तैलं घृतं वार्द्रकमातुलुङ्गयोरसं सचुक्रं सगुडं पिबेद्वा।
कट्यूरुपृष्ठत्रिकगुल्मशूलगृध्रस्युदावर्त्तहरः प्रदिष्टः॥ २८॥
तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः।
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः॥ २९॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचर्णिता।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम्॥
अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम्।

---

प्रत्याध्माने तु वमनमिति प्रत्याध्मानस्यामाशयसमुत्थत्वात्॥ २५॥

दशमूलीत्यादि दशमूल्यादीनां क्वाथे एरण्डतैलं प्रक्षेप्यम्। शेफालिकेत्यादिवचनं स्पष्टम्। पञ्चमूलीत्यादि पञ्चमूली महती॥ २७॥

तैलं घृतं वेत्यादौ आर्द्रकरस मातुलुङ्गफलरस चुक्र गुडादीनां तुल्यो भागः तैलं घृतं वा दत्त्वा पिबेदिति। पिबेद्वेति वाशब्दः पूर्व्वयोगापेक्षया किम्वा तैलमेव सचुक्रगुडमित्येको योगः, तथा घृतमपि सचुक्रगुडमिति द्वितीयः। तथा मिलितार्द्रकरसः मातुलुङ्गरसोऽपि सचुक्रगुड इति तृतीयो योगः। मातुलुङ्गो मधुकुक्कुटी॥ २८॥

तैलमेरण्डजमित्यादि योगोऽयं विरेचकत्वेनाल्पमात्रया प्रत्यहं मासं यावदुपयोज्यः। भूरिमात्रोपयोगे तु बलहानिः स्यात् तेन गोमूत्रस्य पलं किञ्चिन्न्यूनं वा तथा एरण्डतैलमपि माषकाष्टकं किञ्चिन्न्यूनं वा कोष्ठाद्यपेक्षया प्रत्यहं मासं यावदुपयोज्यम्॥ २९॥

गोमूत्रैरण्डतैलाभ्यामित्यादि गोमूत्रैरण्डतैलयोर्मिलित्वा कर्षद्वयं पिप्पलीचूर्णस्य माषकचतुष्टयमिति व्यवहरन्ति वृद्धाः। अश्ना-

वार्त्ताकुं गृध्रसीखिन्नः पूर्व्वामाप्नोत्यसौ गतिम् ।
पिष्ट्वैरण्डफलं क्षीरे सविश्वं वा फलं त्ववोः ॥
पायसो भक्षितः सिद्धो गृध्रसीकटीशूलनुत् ॥ २० ॥
रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलोः ।
सर्पिषा वटिकां कृत्वा खादेद्वा गृध्रसीहराम् ॥
गृध्रस्यार्त्तं नरं सम्यक् पाचनाद्यैर्विशोधितम् ।
ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ २१ ॥
नादौ वस्तिविधिं कुर्य्यात् यावदूर्द्धं न शुध्यति ।
स्नेहो निरर्थकस्तस्य भस्मन्येवाहुतिर्यथा ॥ २२ ॥
गृध्रर्त्तस्य जङ्घायाः स्विन्नस्विन्ने कृते भृशम् ।
पद्भ्यां निर्म्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥
अवताय्याङ्गुलौ सम्यक् कनिष्ठायां शनैः शनैः ।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥
तं शस्त्रेण विदार्य्याशु प्रवालाङ्कुरसन्निभम् ।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद्यष्ट्याह्वचन्दनैः ॥

---

तैलादौ एरण्डतैलसाधितां सम्बन्धितामित्यर्थः । पिष्ट्वेत्यादि त्वग्-रहितमेरण्डबीजं कर्षं किञ्चित्तण्डुलान् दत्त्वा क्षीरेण विरेचनार्थं पायसः साध्यः । सविश्वं वेति पूर्व्वयोगापेक्षया वा शब्दः, अत्रापि किञ्चित्तण्डुलादीन् दत्त्वा शुण्ठ्येरण्डफलाभ्यां पिष्टाभ्यां कर्षार्द्धं वा कर्षाशुण्ठ्योरित्यादिपरिभाषया पायसः साध्यः ॥ २० ॥

रास्नाया इत्यादि स्वाद्यन्त माषकाष्टकं तप्तजलमनुपानम् ॥ २१ ॥

नादौ वस्तिविधिं कुर्य्यादित्यादौ यावदूर्द्धं न शुध्यतीति, ऊर्द्धमित्यत्र पक्वाशयादिति शेषः तेन यावद्विरेकवमनाभ्यां आमाशयो न शुध्यतीत्यर्थः ॥ २२ ॥

गृध्रसीत्यादि जङ्घायाः सकाशात् गृध्रसीं कनिष्ठायामङ्गुलौ

विध्येच्छिरामिन्द्रवस्ते रधस्ताच्चतुरङ्गुले।
यदि शोपशमं गच्छेद्दहेत् पादकनिष्ठिकाम् ॥ ३३ ॥
तगरस्य शिफामार्द्रां पिष्ट्वा तक्रेण यः पिबेत्।
वङ्क्षणानिलरोगार्त्तः स क्षणादेव मुच्यते ॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कटिमूलेषु सर्व्वेषु तैलमेरण्डसम्भवम् ॥
विश्वाच्यां खञ्जपङ्ग्वोश्च दाहे हर्षे च पादयोः।
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके ॥ ३४ ॥
शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत् ॥ ३५ ॥
गुग्गुलुं क्रोष्टुशीर्षे तु गुडूचीत्रिफलाम्भसा ॥ ३६ ॥
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम्।
रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके ॥
पिबेदेरण्डतैलं वा दहेच्छूचीभिरेव वा ॥ ३७ ॥

---

अवनार्थेति योजना, कण्डरा कनिष्ठाङ्गुलिसंहता स्थूलशिरा, इन्द्रवस्तिरिह गुल्फजङ्घयोर्मध्यदेशः ॥ ३३ ॥

तगरस्येत्यादि तगरः पिण्डतगरः। दशमूलीत्यादि दशमूलीकायनागरक्वाथौ एरण्डतैलं प्रक्षिप्य पिबेत्। नागराम्भ इति अत्रान्न सामतायां बोध्यम् ॥ ३४ ॥

शिरां यथोक्तामिति शिराव्यधविध्यनतिक्रमेण वातकफभयादल्पमल्पञ्च रक्तं स्राव्यम्। खञ्जपङ्ग्वादौ देशानोक्तत्वेन खञ्जादयोऽपि रक्तावृतवातवेदनायां जङ्घादि सन्धिगता एव शिराव्यध्या भवन्तीति भानुमती ॥ ३५ ॥

गुग्गुलुमित्यादौ एरण्डक्वाथेन त्रिफलाक्वाथेन वा शोधयित्वा गुग्गुलुर्ग्राह्यः। अत्र एरण्डतैलेन पिष्ट्वा गुग्गुलुः प्रक्षेप्यः ॥ ३६ ॥

क्षीरेणेत्यादि चतुर्गुणेन दुग्धेन एरण्डतैलं पेयं, बहुदोषे विरेचनार्थं जीर्णे क्षीरान्नभोजनमित्यादि वाग्भटदर्शनात्। पिबेद्वा वृद्धदारकमिति अत्रापि क्षीरेणेति योज्यम् ॥ ३७ ॥

आदित्यपाकगुग्गुलुवटकः ।

खञ्जां स्निग्धाम्लवणैः स्वेदमर्द्दोपनाहनम् ।
पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम् ॥
दशमूलाम्बुना भाव्यं त्वगेलार्द्धपलान्वितम् ।
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः ॥
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः ।
हन्ति सन्ध्यस्थिमज्जस्थान् वृत्रमिन्द्राशनिर्यथा ॥
भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च ।
आर्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥ ३८ ॥

त्रयोदशाङ्गगुग्गुलुः ।

आभाश्वगन्धा हवुषा गुडूचीशतावरीगोक्षुरवृद्धदारकम्
रास्नाशताह्वाकशटीयमानी समागरा चेति समैश्च चूर्णम्
तुल्यं भवेत् कौशिकमत्र मध्ये देयं तथा सर्पिरतोऽर्द्धभागम्
अद्यात्क्रमात् त्वथ तत् प्रयोगात् कृत्वानुपानं सुरयाथ यूषैः
मद्येन वा कोष्णजलेन वाथ क्षीरेण वा मांसरसेन वापि ।

---

खञ्जामित्यादौ अम्लमिति काञ्जिकम् । पृथगित्यादौ त्वगेलयोर्मिलित्वार्द्धपलं बोद्धम्, अत्र त्रिफलादि गुग्गुल्वान्तं सर्व्वमेकीकृत्य बोध्यम् । भाव्येत्यादि क्वाथ विशेषः तेनेति अष्टांशशेषक्वाथेनार्द्रं कृत्वा दिनैकं यावद्भाव्यं, भावनाविधि समाप्तिस्तु सप्ताहादिति । इयञ्च परिभाषा वाभटमतानुसारिणी तेनास्या असूत्रकत्वं नाशङ्कनीयम् । वृन्दस्तु वेहवद्दृढगुणेनायमालोड्य चातपे स्थितः । दशमूलाम्बुना शोध्यः सप्तवारन्तु गुग्गुलुर्विन्दुकवान्, तत् पुनरत्नार्थमिति नियमः ॥ ३८ ॥

त्रयोदशाङ्गगुग्गुलौ आभामिति स्वनामख्यातं वणिजद्रव्यम् । हवुषा स्वनामख्याता । समैरिति समैर्भागैरुपलक्षितं, तुल्यं भवेत् कौशिकमिति समुदितसर्व्वचूर्णसमं गुग्गुलुरित्यर्थः ततोऽर्द्धभागमिति

कटीग्रहे गृध्रसि बाहुपृष्ठे हनुग्रहे जानुनि पादयुग्मे॥
सन्धिस्थिते चास्थिगते च वाते मज्जागते स्नायुगते च कुष्ठे।
रोगान् जयेद्वातकफानुविद्धान् वातेरितान् हृद्गतयोनिदोषान्।
भग्नास्थिविद्धेषु च खञ्जवाते त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः॥३९॥
जिह्वावरकमग्रे तु वाते वातहरं हितम्।
अन्नावृते तदुल्लेखो दीपनं पाचनं लघु॥
सुप्तिवाते त्वसृङ्मोक्षं कारयेद्बहुशो भिषक्।
दिह्याच्च लवणागारधूमैस्तैलविमर्द्दितैः॥ ४०॥
सर्पिस्तैलवसामज्जापानाभ्यञ्जनवस्तयः।
स्वेदाः स्निग्धानि वातघ्नस्थानं प्रावरणानि च॥
वसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च।
बृंहणं यत्तु तत्सर्व्वं प्रशस्तं वातरोगिणाम्॥
पटोलफलकैर्यूषो हृद्योवातहरो लघुः।
वाट्यालकक्कृतोयूषः परं वातविनाशनः॥ ४१॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे।
अजाशीर्षाम्बुजानूपक्रव्यादपि शृतैः पृथक्॥

---

कौशिकार्द्धभागं भिषजस्तु यावता घृतेन गुग्गुलोः पेषणं भवति तावदेव घृतं गृह्णन्ति सुराद्यनुपानभेदो दोषभेदापेक्षः॥ ३९॥

जिह्वापाटवहरत्वात्तत्कर्तृत्वामाह जिह्वेति आवरणमिति वायो रावरकीयो दोषस्तम्। तदुल्लेखइति अन्नस्य वमनम्॥ ४०॥

सर्पिरित्यादि क्रियासूत्रं चरकस्य। पटोलफलकैरित्यादौ तथा वाट्यालकक्कृतोयूष इत्यादौ यूषयोनित्वान्मुद्गादयोऽपि बोध्याः अन्येतु केवलयोरेव पटोलफलवाट्यालकयोर्यूषावेवेत्याहुः॥ ४१॥

बलायाइत्यादि बलादिभिस्त्रिभिः साधनद्रव्यैरजाशीर्षादयस्तु चत्वारः पृथक् साध्याः, तेन द्वादशरसा भवन्ति। बलादिभिरर्द्धं शृतं कृत्वा तेन मांसरसः करणीय इत्याहुः। अन्ये तु प्रास्थिकेऽ-

साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान्।
भोजयेद्वातरोगार्त्तं तैर्यथालवणैर्नरम् ॥ ४२ ॥
पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम्।
वाजिगन्धाबलास्तिस्रो दशमूली महौषधम् ॥
द्वे पुनर्नवे रास्ना च गणोऽयं वातनाशनः ॥ ४३ ॥
कोलं कुलत्थं सुरदारुरास्नामाषाउमातैलफलानि कुष्ठम्।
वचाशताह्वे यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ ४४ ॥
आनूपवेशवारोष्णप्रदेहो वातनाशकः।
निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् ॥
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ ४५ ॥

---

अपि कर्षमानं बलामूलमनुरूपमजाशीर्षमांसञ्च प्रक्षिप्य पाचनीयम्, परिशिष्टे पलचतुष्टये सति वस्त्रेण छानयित्वा परिमर्द्दनीयं, तदनु सैन्धवाम्लदधि त्रिकटून्यनुरूपाणि, दत्त्वा संस्कार्य्यम्। एवं वृहत् पञ्चमूलेन च साधनम्। अजाशीर्षवत् कूर्म्मकर्कटाद्यम्बुजानां मांसेन तथा माहिषवराहादीनामानूपानां मांसेन तथा क्रव्यादानां मांसेन रससाधनं कुर्य्यादिति ॥ ४२ ॥

पञ्चमूलीत्यादि स्वल्पा पञ्चमूली। वाजिगन्धेत्यादौ बलास्तिस्र इति बला, अतिबला, नागबला, इति ख्याता। अत्र बला पीतपुष्पा, अतिबला श्वेतपुष्पा, नागबला गोरक्षतण्डुला पुनर्नवाद्वयं श्वेतरक्त-पुष्पभेदात गणत्वादनेन सर्व्वाः कषायादिकल्पनाः कार्य्याः ॥ ४३ ॥

कोलमित्यादि कोलं बदरफलं अतसी तिसीतिकाख्या, तैल-फलं तैलविशिष्टफलं एतानि समभागचूर्णानि काञ्जिकेन पिष्ट्वा तप्तीकृत्य लेपो देयः ॥ ४४ ॥

आनूपवेशवार इति वराहादिमांसकृतः। तस्य पारिभाषिकीं संज्ञामाह निरस्थीत्यादि ॥ ४५ ॥

काकोल्यादिः सवातघ्नः सर्व्वाम्लद्रव्यसंयुतः।
सानूपमांसः सुस्विन्नः सर्व्वस्नेहसमन्वितः॥
सुखोष्णः स्पष्टलवणः शाल्वनः परिकीर्त्तितः।
तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणाम्॥ ४६॥

शाल्वनस्वेदः।

वातघ्नो भद्रदार्व्वादिः काकोल्यादिस्तु सौश्रुतः।
मांसेनात्रौषधं तुल्यं यावताम्लेन चाम्लता॥
पट्टी स्यात् स्वेदनार्थञ्च काञ्जिकाद्यम्लमिष्यते।
चतुः स्नेहोऽत्र तावान् स्यात् सुस्विन्नत्वं यतो भवेत्॥

---

शाल्वनस्वेदमाह काकोल्यादिरित्यादि काकोल्यादिरिति काकोल्यादिगणः। वातघ्न इति भद्रदार्व्वादिगणस्य संज्ञा, सर्व्वाम्लद्रव्यं काञ्जिकसुरासौवीरतुषोदकादि। सानूपमांसइति, अनूपाश्च शूकरादयः। सर्व्वस्नेहाः सर्पिस्तैलवसामज्जानः। उपनाह इति उष्णबहुल प्रलेपः॥ ४६॥

उक्तमेव शाल्वनस्वेदं विवृतनोति वातघ्न इत्यादि, सौश्रुत इति विशेषणेन सुश्रुतोक्तकाकोल्यादिगणो ग्राह्यः न पुनरष्टवर्गसंज्ञित इति। तत्र सौश्रुतेन काकोल्यादिर्यथा काकोल्यौ मधुकामेदे जीवकर्षभकौ सहे। ऋद्धिर्वृद्धिस्तुगाक्षीरी पुण्डरीकं सपद्मकं। जीवन्ती साम्लताशृङ्गी मृद्विका चेति क्वचित्। काकोल्यादिरयं पित्तशोणितानिलनाशन इति। भद्रदार्व्वादिर्यथा भद्रदारु निशे भार्गी वरुणोमेषशृङ्गिका। जटाभिती चार्त्तगलौ वरागोक्षुरतण्डुलाः। अर्कौ श्वदंष्ट्रा गणिका धुस्तूरश्चाश्मभिदुरः। वरीस्थिरा पटोलारक् वर्षाभवस्तुकोयवः। भद्रदार्व्वादिरित्येष गणो वातविनाशन इति। मांसेनात्रौषधं तुल्यमिति काकोल्यादि भद्रदार्व्वादि गणद्वयमौषधं मांसेन तुल्यं ग्राह्यं यद्वा लाभपक्षेऽपि मांसं तुल्यं देयं तेन वातापहम्। इन्दुस्त्वाह अम्लादिभिश्च संस्कार्य्यं काकोल्यादिकं त्रिभिरिति अस्यार्थः अम्लादिभिः अम्लस्नेहलवणैः संस्कारः कार्य्यः। संस्कारत्वादत्र त्रयं ताव-

समस्तं वर्गमर्द्धं वा यथालाभमथापि वा ।
प्रयुञ्जीतेति वचनं सर्व्वत्र गणकर्म्मणि ॥ ४७ ॥

अश्वगन्धाघृतम् ।

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम् ।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम् ॥ ४८ ॥

दशमूलघृतम् ।

दशमूलस्य निर्य्यूहे जीवनीयैः पलोन्मितैः ।
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिनुत् ॥
क्वाथोऽत्र त्रिगुणः सर्पिः प्रस्थः साध्यः पयः समः ॥ ४९ ॥

---

न्मात्रं देयं यावदम्लस्निग्धमत्र्यणत्वमात्रं स्यादित्यर्थः । काकोल्यादि-स्त्वथाभद्रदार्व्वादिस्तथानूपमांसं एतत् त्रयमत्र संस्कार्य्यम् । संस्कार्य्य-त्वादस्य प्राधान्यं तेन त्रयमेवं संस्कार्य्यत्वात् प्रत्येकं तुल्यभागमिति । यावताम्लेन चाम्लता पटुः स्यादिति पटुशब्दात् ङीप् प्रत्ययः स्यादिति व्यक्तिः स्यादिति । काञ्जिकादिशब्दात् सुरासौवीरतुषोदकधान्याम्ल-दधिमस्त्वम्लिका कोषादीनां ग्रहणम् ॥ ४७ ॥

अश्वगन्धाघृते चतुर्गुणक्षीरसाहचर्य्यादश्वगन्धक्वाथोऽपि चतु-र्गुणः । कल्कोऽप्यश्वगन्धाया एव ॥ ४८ ॥

दशमूलघृते दशमूलक्वाथोऽपि त्रिगुणः क्षीरन्तु स्नेहसममिति चक्रः । जेज्जटमते तु स्नेहाच्चतुर्गुणः क्वाथः क्षीरं स्नेहसममिति । कस्मिन्नर्थे परिभाषा एकद्वित्रिद्रवद्रव्यैः कुर्य्यात् स्नेह चतुर्गुणम् । क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणमिति अस्यार्थः यत्रैको द्रवः तत्र तेनैव चातुर्गुण्यं यत्र तु द्वौ वा तत्र द्वाभ्यां, यत्र त्रयस्तत्र त्रिभिरिति चातुर्गुण्यं मिलित्वा, क्षीरन्तु स्नेहसमं चतुर्भिरपि मिलित्वैव चातु-र्गुण्यं एवं सर्व्वत्र व्याख्येयं जीवनीयमत्र जीवनीयदशकम् अतोऽक्र-संख्यत्वादनेनैव कल्कः ॥ ४९ ॥

छागलाद्यं घृतम्।

आजं चर्म्मविनिर्मुक्तं त्यक्तश‍ृङ्गखुरादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम्॥
छागलाद्यमिदं नाम्ना सर्व्ववातविकारनुत्।
अर्दिते कर्णमूले च बाधिर्य्ये मूकमिन्मिने॥
जड़गद्गदपङ्गूनां खञ्जे गृध्रसी कुब्जयोः।
अपतानेपतन्त्रे च सर्पिरेतत् प्रशस्यते॥
द्रोणे द्रव्यतुलाम्बुत्या स्याच्छाग दशमूलयोः।
पृथक् तुलार्द्धं यष्ट्याह्वद्वयं देयं द्विधोक्तितः॥ ५० ॥

एलादितैलम्।

एलामुराशरलशैलजदारु कौन्ती

आजं चर्म्मविनिर्म्मुक्तमित्यादि चर्म्मादिहीनं तरुणछागमांसं द्वात्रिंशत्पलमानं गृहीत्वा दशमूलञ्च द्वात्रिंशत्पलमानं जलद्रोणे पक्तव्यमित्याह वृन्दः। चक्रस्त्वाह ,त्यक्तश‍ृङ्गखुरादिकमिति ग्रहणा-दोग्यता दर्शनार्थं पुनराकृतिमानग्रहणार्थञ्च, अतः पञ्चाशत् पलानि मांसस्य दशमूलस्य च अतएव वक्ष्यति द्रोणइति एवं मयूरादिषु घृतेष्वपि, इह वैद्यव्यवहारस्त्वाकृतिमानेन। केचित्तु शतावर्य्याः कल्क-माहुः रसस्यानुक्तं, तदयुक्तं यतः कल्कद्रव्यमध्येनोक्तः अतः क्षीर-ग्राहचर्य्येन रसोग्राह्यः। क्षीरशतावरीरसौ प्रत्येकं स्नेहसमौ यष्ट्या-ह्वयद्वयं द्विधोक्तित इति स्थलजलभेदेन यष्टिमधुद्वयं ग्राह्यमित्यर्थः। वृन्दस्तु घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते तज्ज्ञातव्यमिहा-र्थेन भागतोद्विगुणेन च, इति वचनात् यष्टिमधुनोभागद्वयं ग्राह्यमि-त्याह व्यवहारस्तु वृन्दोक्तमतेनैव ॥ ५० ॥

एलेत्यादि — कौन्तीरेणुकं, चण्डाचोरपुष्पी, नलदं मांसी, हेमपुष्पं नागकेशरपुष्पं स्थौनेयं ग्रन्थिपर्णं गन्धरसः खनाम ख्यातः।

चण्डा शटीनलद चम्पक हेमपुष्पम्।
स्थौणेय गन्धरसमूर्तिदलाम्बुवाल
श्रीवासकुन्दुरुनखाम्बुवराङ्ग कुष्ठम्॥
कालीयकं जलदकर्कटचन्दन श्रीः
जात्याः फलं सविकसं सहकुङ्कुमञ्च॥
एकातुरुष्कलघुलाभतया विनीय
तैलं बलाक्वथनदुग्धयुतञ्च दध्ना।
सार्द्धं पचेत्तु हितमेतदुदाहरन्ति
वातामयेषु बलवर्णवपुः प्रकाशि॥ ५१॥

बलाशैरीयतैले।

बलानिःक्वाथकल्काभ्यां तैलं पक्वं पयोन्वितम्।
सर्व्ववातविकारघ्नमेवं शैरीयपाचितम्॥ ५२॥

---

पूतिखट्टाशी, दलं तेजपत्रं, तुरुष्कः सिह्लकः, लघु अगुरु, लाभतयेति यथालाभं द्रव्यं मानञ्च ग्राह्यं लभ्यत इति लाभः कर्म्मणि घञ् नेह-भावप्रत्ययः विनीय कल्कीकृत्य, तैलमुत्तमगंतः प्रस्थपरिमितं, बला-क्वथनं बलाक्वाथः, तस्य च प्रस्थद्वयं दुग्धं दधि च प्रत्येकं स्नेहसमम्, एवं मिलित्वा चतुर्गुणः पाकः। अन्ये तु क्वाथश्चतुर्गुणः दधिदुग्धं प्रत्येकं स्नेहसममित्याहुः। व्यवहारः पुनरनेनैव। इदमेव तैलं अन्ये पाकभेदेन पठन्ति यथा तिलतैलं शः ४ छागमांसार्थतिलतैल पल ४ पाकार्थं दधिश ४ दुग्धश ४ कल्कार्थं मञ्जिष्ठा कर्ष १२ इति प्रथमः पाकः। क्वाथार्थं वारियाला मूल पल ३२ पानीयश ३२ शेषश ८ कल्कार्थं रेणुकाचोरपुष्पी गन्धरसः गुडत्वक् शटी तेजपत्र उशीरकाङ् मुथा एला सरल शैलजवला एषां प्रत्येकं कर्ष १ द्वितीय पाकः। तृतीयपाके तु कल्कार्थं एलाचिमुरा चम्पक कलिका आढ़की नागेश्वर गाठियाना खटाशी नवनीतखोटी कुन्दुरुनखी श्वेतचन्दन शोधितस-मुद्रकर्कटः कालीयकः जातीफल कुङ्कुम सिह्लक अगुरु एतत् सर्व्वं चूर्णीकृत्य गन्धोदकेन तैलकर्म्मेन तृतीयः पाकः॥ ५१॥

बलातैले बलाक्वाथश्चतुर्गुणः क्षीरन्तु स्नेहसमं अन्ये तु बला-क्वाथश्चतुर्गुणः दुग्धन्तु घृत सममित्याहुः। एवं शैरीयतैलम्॥ ५२॥

बलातैलम्।

बलामूलकषायस्य दशमूलीकृतस्य च।
यवकोलकुलत्थस्य क्वाथस्य पयसा तथा॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः।
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम्॥
तथागुरुसर्ज्जरसं सरलं देवदारु च।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम्॥
मांसीशैलेयकं पत्रं तगरं शारिवां वचाम्।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम्॥
तत्साधुसिद्धं सौवर्णे राजते मृन्मयेऽपि वा।
प्रक्षिप्य कलसे सम्यक् सुनिगुप्तं निधापयेत्॥
बलातैलमिदं नाम्ना सर्व्ववातविकारनुत्।
यथा बलमथोमात्रां सूतिकायै प्रदापयेत्॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्।
क्षीणवाते मर्म्महते ऽभिहते मथितेऽथवा॥
भग्ने श्रमाभिपन्ने च सर्व्वथैवोपयोजयेत्।
सर्व्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति॥

---

बलामूलकषायस्येति सुश्रुतस्य अत्र दशमूलस्य मिलित्वा एक-क्वाथः यवकोलकुलत्थानाञ्च मिलित्वा एकक्वाथस्य एवं बलाक्वाथेन सह त्रयः क्वाथास्तथा पयश्चेति द्रवचतुष्टयम्, एषां चतुर्णां द्रवाणां प्रत्येकं तैलप्रस्थापेक्षयाष्टगुणो भागः। एवञ्च मिलित्वा तैलात् द्वात्रिंशद्गुणो द्रवो भवति। तैलस्य मानविशेषानिर्द्देशात् प्रस्थ परिमितमेव ग्राह्यम्। एकतइति एकीकृत्य। आवाप्य मधुरं गणमिति काकोल्यादिगणं कल्कीकृत्य। सैन्धवसंयुतमिति सैन्धवमगुर्व्वादिन् कल्कीकृत्य पक्तव्यं। कालानुसारिवा तगरपादिका, तदभावे शियालोकोमड़ः। तगरं पिण्डतगरमूलम्। शारिवा श्यामलता, पुनर्नवाल्लः

हिक्काकासमधीमन्थं गुल्मश्वासं सुदुस्तरम् ।
षण्मासानुपयुज्यै तदन्त्रवृद्धिमपोहति ॥
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ।
एतद्धि राज्ञा कर्त्तव्यं राजमात्राश्च ये नराः ॥
सुखिनः सुकुमाराश्च बलिनश्चापि ये नराः ॥ ५३ ॥

नारायणं तैलम् ।

विल्वाग्निमन्थश्योणाकपाटलापारिभद्रकः ।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥
बलाचातिबलाचैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसीशैलेयकं वचा ॥
चन्दनं तगरं कुष्ठमेलापर्णीचतुष्टयम् ।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्वा चतुर्गुणम् ।

---

कल्कः । सुनिगुप्तमिति वातातपादिपरिहारेण सुष्ठु रक्षितम् । तैलमिदं सुस्नुते मूढः गर्भं पतित' तेन सूतिकायै प्रदापयेदिति विशेषेणोक्तम् । अन्त्रवृद्धिमपोहतीति अप्राप्तफलकोषान्त्रवृद्धिं व्यपोहतीति, प्राप्तफलकोषयोः पुनरसाध्यत्वात् । राजमात्रा इति राज्ञ इव मात्रा परिच्छदो येषां ते तथा ॥ ५३ ॥

नारायणतैले पारिभद्रकः पालिटामन्दार इति प्रसिद्धः, प्रसारणी गन्धभादालिया इति ख्याता, अतिबला गोरक्षतण्डुला, तगरं गणदर्पदिका तदभावे शियालीकोपडः पिण्डतगरमूलमित्यन्ये । आजं

पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥
अधोभागे च ये वाताः शिरो मध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्राज्ज्वरक्षीणाश्च ये नराः ॥
बधिरा लल्लजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
एतत्तैलवरन्तेषां नाम्ना नारायणं स्मृतम् ॥
तगरं नतमलशादभावेशीयलिङ्गोपङ्ः ॥ ५४ ॥

महानारायणं तैलम् ।

शतावरी चांशुमती पृश्निपर्णी शटी वरा ।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
पादावशेषे पूते च गर्भं चैनं समावपेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरु ॥

---

जा यदि वा [illegible] ति यद्यपि [illegible]व्याजपयसोः प्रायोगुणसाम्यं तथाच गोक्षीरेण पा[illegible] [illegible]त्यनभिष्यन्दि त्रिदोषहरञ्च भवतीति प्रक्षेतव्य धान्यत्वाङ्गः [illegible] [illegible]ितव्यमिम् विशेषव्यापकमिति नारायणसंज्ञा-स्यास्य [illegible] [illegible] शतावरीप्राधितत्वाद्वा ॥ ५४ ॥

महाना[illegible] अंशुमती शालपर्णी पूतिकस्य लाटाकरञ्ज [illegible]स्यात [illegible] [illegible]श्वधुक गोरक्षतण्डुला, सहचरोझिण्टी ।

शैलेयं तगरं कुष्ठमेला मांसी स्थिराबला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥
गव्याजपयसः प्रस्थौ द्वौ द्वावेव प्रदापयेत् ।
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥
तैलमेतत् प्रयोक्तव्यं सर्व्ववातनिवारणम् ।
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत् ॥
गर्भमश्वतरी विन्देत् किं पुनर्मानुषी तथा ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम् ।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम् ।
नारायणमिति ख्यातं वातान्तकरणं परम् ॥ ५५ ॥

अश्वगन्धातैलम् ।

शतं पक्वाश्वगन्धाया जलद्रोणे प्रपेषितम् ।
विस्राव्य विपचेत्तैलं क्षीरं दत्त्वा चतुर्गुणम् ॥
कल्कैर्मृणालशालूककिसलकिञ्जल्कमालती ।
पुष्पैश्चोशीरमधुकपारिषा पद्मकेशरैः ॥
मेदा पुनर्नवा द्राक्षामञ्जिष्ठा बृहतीद्वयैः ।

---

शताह्वः चनुफा इतिख्याता, चन्दनं रक्तचन्दनं, शैलेयं शैलजं तगरं तगरपादिका, स्थिराशालपर्णी अश्वाह्वा अश्वगन्धा । एषां कल्कानां प्रत्येकं पलार्द्धम् । प्रस्थौ द्वौ द्वाविति पृथग् द्वौ द्वौ प्रस्थौ ॥ ५५ ॥

अश्वगन्धातैले अश्वपेषितमिति पादशेषितं मृणालं कमलदण्डं चिक्कणकल्पनाकन्दं. किसलयं न वपत्रनिर्गतः पतानः किञ्जल्कः

एलैलवालुत्रिफलामुस्तचन्दनपद्मकैः॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम्।
हन्यात् पुष्टिबलं कुर्य्यात् क्षयाणां मांसवर्द्धनम्॥
रेतोयोनिविकारघ्नं प्रायाद्योषापकर्षणम्।
षण्ढानपि वृषान् कुर्य्यात् पानाभ्यङ्गानुवासनैः॥ ५६॥

मूलकाद्यं तैलम्।

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम्॥
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः॥
पिप्पल्यतिविषा रास्ना चविकागुरुचित्रकैः।
भल्लातकवचाकुष्ठश्वदंष्ट्रा विश्वभेषजैः॥
पुष्कराह्व शटीविल्वशताह्वा नतदारुभिः।
तत्सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान्॥ ५७॥

रसोन तैलम्।

रसोन कल्कस्वरसेन पक्वं
तैलं पिवेद्यस्त्वनिलामयार्त्तः।

---

पद्मवराटः पद्मकेशरस्य उक्तत्वात्, अन्ये तु उत्पलकिञ्जमित्याहुः
अटासाने एडेति पाठ महाराष्ट्रामाषपर्णी॥ ५६॥

मूलकेत्यादि चरकस्य मूलकस्वरसादीनि चत्वारि द्रवाणि तैल-
समानि। बलाचित्रक सैन्धवैरित्यत्र बलाग्निमुक सैन्धवैरित्येव पाठः
चरकेषु दृश्यते अत्रत विलक शब्दैरण्डमूलं व्याचक्षते तत्तटीका-
कृद्भिर्नव्याख्यातमिति॥ ५७॥

रसोनकल्कस्वरसेन पक्वमिति रसोन कल्कस्वरसाभ्यामित्यर्थः।
अत्र स्वरस एव चतुर्गुणः अन्येत स्वरसः स्नेहसमः तोयं त्रिगुण-
मिति तथा वातरोगाः नश्यन्ति यथा विमात्रा इव दुर्गृहीताः

माषतैलम् ।

माषात्मगुप्तातिविषोरुबूकरास्नाशताह्वालवणैः सुपिष्टैः ।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥६१॥

माषतैलम् ।

माषप्रस्थं समावाप्य पचेत् सम्यक् जलाढके ।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम् ।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ॥
रास्नात्मगुप्ता मधुकं बलाव्योषं त्रिकण्टकम् ।
पक्षाघातार्दिते वाते कर्णशूले सुदारुणे ॥
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे विश्वाच्यामववाहुके ॥
शस्तं कलाय खञ्जे च पानाभ्यञ्जनवस्तिभिः ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ६२ ॥

माषतैलम् ।

माषातसीयवकुरण्टककण्टकारी
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः ।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन वस्तिपिशितस्य रसेन चापि ॥
शृङ्गाटसमागधिकया शतपुष्पया च

---

माषात्मगुप्तेत्यादौ अतिविषा [illegible] इति निश्चलः यदि [illegible] माषबलाकषाये मिलित्वा चतुर्गुणे क्वाथः ॥ ६१ ॥

माषप्रस्थमित्यादौ जीवनीयानि यान्यष्टाविति—अष्टवर्गः ॥ ६२ ॥

माषातसीत्यादौ [illegible] कलायः । कश्चित्तिलमित्याह । कण्टकारी [illegible] गोकण्टको गोक्षुरः टुण्टुकजटा श्योना-

माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम्॥
क्वाथप्रस्थाः षडेवात्र विभज्यन्तेन कीर्त्तिताः॥ ६५॥

महामाषतैलम्।

माषस्याढ़कं दत्त्वा तुलार्द्धं दशमूलतः।
पलानि छागमांसस्य त्रिंशद्‌द्रोणेऽम्भसः पचेत्॥
पूतशीते कषाये च चतुर्थांशावतारिते।
प्रस्थञ्च तिलतैलस्य पयो दद्याच्चतुर्गुणम्॥
आत्मगुप्तोरुबूकस्य शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रक कट्फलम्॥
सव्योषं पिप्पलीमूलं रास्ना मधुक सैन्धवम्।
देवदार्व्वमृताकुष्ठं वाजिगन्धावचाशठी॥
एतैरक्षसमैः कल्कैः साधयेत् मृदुनाग्निना।
पक्षाघातार्द्दिते वाते बाधिर्य्ये हनुसंग्रहे॥
कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे।
पाणिपादशिरोग्रीवा भ्रमणे मन्दचंक्रमे॥
कलाय खञ्जपाङ्गुल्ये गृध्रस्यामववाहुके।
पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे॥
तैलमेतत् प्रशंसन्ति सर्व्ववातरुजापहम्॥ ६६॥

---

वाह क्वाथ प्रस्थाः षडेवात्रेत्यादि। जीवनीयैरिति जीवनीयदशकैः॥ ६५॥

माषस्याढ़कमित्यादि—अढ़कं द्वात्रिंशत्पलानि, अत्रापि पूर्व्ववत् यष्टिमधुकस्य भागद्वयं लवणत्रयमिति सौवर्च्चलं विड़ं सैन्धवम्। पुनःसैन्धवमितिवचनात् सैन्धवस्यापि भागद्वयम्। जीवनीयमिति जीवनीयदशकम्। पाणिपादशिरोग्रीवाभ्रमणइति—पाणिपादादिकम्प इत्यर्थः॥ ६६॥

## महामाषतैलम्।

द्विपञ्चमूलीं निःक्वाथ्य तैलात् षोड़शभिर्गुणैः।
माषाढकं साधयित्वा तस्मिन् यूषे चतुर्गुणम्॥
ग्राहयित्वा तु विपचेत्तैलप्रस्थं पयःसमम्।
कल्कार्थञ्च समावाप्य भिषग्द्रव्याणि बुद्धिमान्॥
अश्वगन्धां शटीं दारु बलां रास्नां प्रसारणीम्।
कुष्ठं परूषकं भार्गीं द्वे विदार्यौ पुनर्नवाम्॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम्।
शतावरीं गोक्षुरकं पिप्पलीमूलचव्यकम्॥
जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम्।
तत् साधुसिद्धं विज्ञाय माषतैलमिदं महत्॥
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत्।
पक्षाघाते हनुस्तम्भे अर्दिते सापतन्त्रके॥
अवबाहुकविश्वच्योः खञ्जपङ्गुलयोरपि।
हनुमन्याग्रहे चैवमधिमन्थे च वातिके॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे।
कलायखञ्जशमने भैषज्यमिदमादिशेत्॥

---

द्विपञ्चमूलीत्यादि — अत्र माषस्य क्वाथस्याढ़कमात्रत्वमुक्तं तद्वाहाद्दशमूलस्यापि क्वाथस्याढ़कं ज्ञेयम्। तैलात् षोड़शभिर्गुणैरिति तैलप्रस्थापेक्षया षोड़शगुणजलैरित्यर्थः। प्रस्थः षोड़शगुणः सन् द्रोणो भवति तेन जलद्रोणेनेत्यर्थः। माषाढ़कञ्च तैलात् षोड़शगुणैर्जलैः साधयित्वेति योज्यम्। तं दशमूलक्वाथं तथा माषक्वाथञ्च तैलाच्चतुर्गुणं यथा स्यात्तथा ग्राहयित्वा तैलप्रस्थं विपचेदिति योज्यम्। पयःसममिति दुग्धं तुल्यं तेन नवगुणः पाकइति चक्रः। अतएव वक्ष्यति दशमूलाढ़कं द्रोण इत्यादि। अन्ये तु द्विपञ्चमूलीं माषाढ़कञ्चैकीकृत्य जलद्रोणमात्रेण साधयेदित्याहुः।

दशमूलाढकं द्रोणे निःक्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः ॥ ६७ ॥

मज्जस्नेहः ।

ग्राम्यानूपौदकानां तु भित्त्वास्थीनि पचेज्जले ।
तं स्नेहं दशमूलस्य कषायेन पुनः पचेत् ॥
जीवकर्षभकास्फोताविदारीकपिकच्छुभिः ।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत्सिद्धं नावनाभ्यङ्गात्तथा पानानुवासनात् ।
शिरःपार्श्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ।
बलपुष्टिकरस्तेषामेतत् स्यादमृतोपमम् ॥ ६८ ॥

चतुःस्नेहः ।

प्रस्थः स्यात्त्रिफलायास्तु कुलत्थकुडवद्वयम् ।
कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ।
जलद्रोणे पचेत् पादशेषं प्रस्थोन्मितं पृथक् ॥
सुरारनालदध्यम्लसौवीरकतुषोदकम् ।
कोलदाडिमवृक्षाम्लरसं तैलं घृतं वसाम् ॥

---

तस्मिते पञ्चगुणः पाकः । द्वे विदार्यौ विदारी क्षीरविदारी च ।
मातुलुङ्गफलं, मातुलुङ्गस्य फलं जीवनीयदशकम् ॥ ६७ ॥

ग्राम्यानूपौदकानामित्यादौ — द्विगुणक्षीरसाहचर्याद्दशमूल-
क्वाथोऽपि द्विगुण एव ग्राह्यः । अन्ये तु चतुर्गुणमित्याहुः । वात।
घ्नैरिति भद्रदार्व्वादिगणैः । जीवकर्षभकयोः पुनः पाठो भागद्वय
ग्रहणार्थम् । आस्फोता आफरमल्लिकेति ख्याता ॥ ६८ ॥

प्रस्थः स्यादित्यादि — अत्र त्रिफलाख्याया मिलिता प्रस्थः, कृष्ण-
गन्धा शोभाञ्जनस्य मूलत्वक् । अन्ये तु कृष्णागन्धामित्याहुः ।

मज्जानश्च पयश्चैव जीवनीयपलानि षट्।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत्॥
शिरामज्जास्थिगे वाते सर्व्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तदभ्यङ्गं प्रदापयेत्॥ ६९॥

कुब्जप्रसारणीतैलम्।

प्रसारणीशतं क्षुण्णं पचेत्तोयार्म्मणे शुभे।
पादशिष्टे समं तैलं दधि दद्यात् सकाञ्जिकम्॥
द्विगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम्॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम्।
प्रसारण्याश्च मूलानि मांसीभल्लातकानि च॥
पचेन्मृद्वग्निना तैलं वातश्लेष्मामयान् जयेत्।
अशीतं नरनारीस्थान् वातरोगानपोहति॥
कुब्जं स्तिमितपङ्गुत्वं गृध्रसीखुडकार्द्दितम्।
हनुपृष्ठशिरोग्रीवास्तम्भं वापि नियच्छति॥ ७०॥

त्रिशतीप्रसारणीतैलम्।

प्रसारण्यास्तुलामश्वगन्धाया दशमूलतः।

---

तत्र जतूकर्णसम्वादात्। दशमूलं पलोन्मितमिति प्रत्येकं। प्रस्थोन्मितं पृथगिति सुरादीनां पयोन्तानां प्रत्येकं प्रस्थः। जीवनीय पलानि षडिति मिलिता। महास्नेह इति चतुःस्नेहस्य संज्ञा॥६९॥

कुब्जप्रसारणीतैले समभिति पादावशिष्टक्वाथसमं, आढ़कद्वयमित्यर्थः। दधि दद्यात् सकाञ्जिकमिति दधिकाञ्जिके तैलसमे। अन्ये तु सकाञ्जिकमिति पयोविशेषणं कृत्वा काञ्जिकस्यापि द्वैगुण्यमिच्छन्ति व्यवहारस्तु, पूर्व्वथैव कुब्जको पाठ्यवातः। अन्ये तु वातकण्टक इत्याहुः॥ ७०॥

प्रसारण्यास्तुलामित्यादौ दशमूलस्य मिलिता न तु पृथक्।

तुलां तुलां पृथग्वारिद्रोणे पादांश शेषिते ॥
तैलाढकं चतुःक्षीरं दधितुल्यं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षारप्रसारण्यश्वसैन्धवैः ॥
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ।
शुण्ठ्याः पञ्चपलं दत्त्वा त्रिंशत् भल्लातकानि च ॥
पचेद्धस्त्यादिना वातं हन्ति सन्धिशिरास्थितम् ।
पुंस्त्वोत्साहस्मृति प्रज्ञाबलवर्णाग्निवृद्धये ॥
प्रसारणीयं त्रिशती अश्वं सौवर्च्चलं त्विह ॥ ७१ ॥

सप्तशतिकाप्रसारणी ।

समूलपत्रामुत्पाट्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचराच्छतावर्य्याः शतन्तथा ॥
बलात्मगुप्ताश्वगन्धाकेतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढकं भिषक् ॥
मस्तु मांसरस चुक्रं पयश्चाढकमाढकम् ।
दध्नाढकसमायुक्तं पाचयेन्मृदुनाग्निना ॥
द्रव्याणान्तु प्रदातव्या मात्राचार्द्धपलांशिका

---

वारिद्रोणे इति तिसृषु तुलासु प्रत्येकं जलद्रोणदानमित्यर्थः । सैन्धव सान्निध्यादश्वं सौवर्च्चलं वदन्ति वृद्धाः । ग्रन्थ्यादीनां यष्ट्याह्वान्तानां प्रत्येकं द्विपलं, जीवनीयदशकञ्च प्रत्येकं पलिकम् । त्रिंशत् भल्लातकास्त्विनीत्याकृतिमानात् ॥ ७१ ॥

समूलपत्रामित्यादौ शतं ग्राह्यमिति प्रसारण्याहृत्यर्थः । तथा सहचराच्च शतमित्यन्वयः । केतकी केओया इति ख्याता । पचेच्चतुर्गुणेतोये इत्यत्र पचोल्लेखागतमानत्वान्न द्वैगुण्यम् । अन्ये तु सम्यक्वीर्य्याधानार्थञ्चतुर्गुणमष्टगुणं स्मरन्ति इदन्तु न व्यवहारसिद्धं चूर्णं पञ्चाधिकारोक्तविधिना कार्य्यमित्येके । अन्ये तु महाराज-

तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम् ॥
रास्ना सैन्धवपिप्पल्यौ मांसीर्मञ्जिष्ठयष्टिका।
तथा मेदामहामेदाजीवकर्षभकौ पुनः ॥
शतपुष्पाव्याघ्रनखं शुण्ठीदेवाह्वमेव च।
काकोलीक्षीरकाकोली तथाभल्लातकस्तथा ॥
पेषयित्वा समानेतान् साधनीया प्रसारणी।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत् ॥
यत्र यत्र प्रदातव्यास्तन्मे निगदतः शृणु।
कुब्जानामपथपङ्गूनां वामनानां तथैव च ॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः।
वातशोणितदुष्टानां वातोपहतचेतसाम् ॥
स्त्रीषु प्रक्षीणशुक्राणां वाजीकरणमुत्तमम्।
वस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रदापयेत् ॥
प्रयुक्ता शमयत्याशु वातजान् विविधान् गदान् ॥ ७२ ॥

एकादशशतीकं प्रसारणीतैलम्।

शाखामूलदलैः प्रसारणितुलास्तिस्रः कुरण्टात्तुले
छिन्नायाश्च तुले तुले रुवुकतो रास्नाशिरीषात्तुला।
देवाह्वाच्च सकेतकाद्दृषाटशते निःक्वाथ्य कुम्भांशिके
तोये तैलघटं तुषाम्बुकलसौ दत्वाढकं मस्तुनः ॥

---

प्रसारण्यां वक्ष्यमाणविधिनेत्याहुः। द्रव्यानामिति कल्क द्रव्यानां। तगरं पूर्ववत्प्राख्येयं केशरं नागकेशरं, मञ्जिष्ठायष्टिका इति मञ्जिष्ठायाः छान्दसत्वाल्लक्षः। यष्टिका यष्टिमधु व्याघ्रनखं नखी। देवाह्वं देवदारु भल्लातकाफलं रक्तचन्दनं देयम् ॥ ७२ ॥

शाखामूलदलैरित्यादि — अत्र तृतीया इत्थम्भावार्थे विशेषणे वा, कुरण्टकः पीतझिण्टी रास्नाशिरीषयोर्मिलिता एका तुला। देवदारुकेतकयोरपि मिलितैव तुला। अटशत इति द्रोणशते, कुम्भांशे

शुक्ताच्छागरसादथेक्षुरसतः क्षीराच्च दत्वाढ़कं
दत्वा कर्कटजीवकाद्य विकसा काकोलिकाकर्कुरा।
स्पृक्कैलाघनसारकुन्दसरला काश्मीरमांसीनखैः
कालीयोत्पल पद्मकाह्वयनिशाककोलकग्रन्थिकैः॥
चाम्पेया भयचोचपूगकटुकाजातीफ लाभीरुभिः
श्रीवासामरदारुचन्दन वचाशैलेयसिन्धूद्भवैः।
तैलाख्योदकटम्भराङ्घ्रि नलिका दन्तीरकच्चोरकैः
कस्तूरीदशमूलकेतकनतध्यामाख्यगन्धाम्बुभिः॥
कौन्तीताक्षकशल्लकीफललवङ्गामाशताह्वामयैः
भल्लाततिलकाब्जकेशर महाश्यामालवङ्गान्वितैः।
सम्योगैस्त्वपलैर्मितैर्यस पचेन्मन्देन पावेग्निना
पानाभ्यञ्जनवस्तिनस्य विधिना तन्मारुतं नाशयेत्॥
सर्व्वाङ्गाङ्गगतं तथावयवगं सन्ध्यस्थिमज्जान्वितम्

---

शिकदति द्रोण इयशेषे, तदुक्तं द्रोणद्वयन्तु शूर्पं स्याज्ज्ञेयः कुम्भः स एव च। अन्ये तु कुम्भोद्रोणमित्याहुः। इह वाभटवचनात् कुम्भशब्दोन द्रोणपर्य्यायः किन्तु व्यवहारः पूर्व्वं नैव। अतएव बहुत्वादेकस्मिन् पात्रे क्वाथो दुष्करः, तेन द्रव्यं विभज्य जलं तदनुसारेण दत्वा क्वथनीयम्। तैलघटं तैलद्रोणं तुषाम्बुकलशा-श्रिति काञ्जिकस्य द्रोणद्वयम्। शुक्तादीनाञ्चक्षीरान्तानां प्रत्येकमा-ढकं जीवकाद्यं जीवनीयदशकमष्टवर्गो वा, काकोल्याः भागद्वयं जीवनीयगणेष्वस्याः पठितत्वात्, विकसा मञ्जिष्ठा कर्कुरा शूक-शिम्बा, दुरालभेत्यन्ये। घनसारः कर्पूरं, कुन्दुः कुन्दुरखोटिः सुगन्धि गन्धद्रव्यं सरला सरलकाष्ठं, नतु त्रिवृता, सुगन्धिद्रव्यान्तः पठितत्वात्। एवं ग्रन्थिपर्णी न तु पिप्पलीमूलम्। उत्पलमम्बुत् पद्मपुष्पं न तु कुष्ठं, चाम्पेयं चम्पककलिका नागकेशरो वा, अभय-मुशीरं चोचं गुडत्वक् पूगं पूगफलं पूगवल्कलमित्यन्ये, कटुका कताकस्तूरी, अभीरुः शतमूली, श्रीवासो नवनीतखोटिः, चन्दनं

श्लेष्मोत्थानथपैत्तिकांश्च शमयेन्नानाविधानामयान् ।
धातून् बृंहयति स्थिरञ्च कुरुते पुंसां नवं यौवनं
वृद्धस्यापि बलं करोति सुमहद्वन्ध्यासु गर्भप्रदम् ॥
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽस्नुनाभूरुहाः
सिक्ताः शोषमुपागताश्च फलिनः स्निग्धाभवन्ति स्थिराः ।
भग्नाङ्गाः सुदृढा भवन्ति मनुजा गावो हयाः कुञ्जराः ॥ ७२॥

## अष्टादशशतिकप्रसारणीतैलम् ।

समूलदलशाखायाः प्रसारण्याः शतत्रयम् ।
शतमेकं शतावर्य्या अश्वगन्धा शतन्तथा ॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम् ।
शतं वाट्यालकस्यापि शतं सहचरस्य च ॥
जलद्रोणशतं दत्त्वा शतभागावशेषितम् ।
ततस्तेन कषायेण कषायद्विगुणेन च ॥
सुव्यक्तेनारनालेन दधिमण्डाढकेन च ।
क्षीरशुक्तेक्षुनिर्य्यासच्छागमांसरसाढकैः ॥
तैलात् द्रोणं समायुक्तं दृढे पात्रे निधापयेत् ॥

---

श्वेतचन्दनं तैलं सिल्हकं, कटम्बरा प्रसारणी हस्तिकर्णी वा तस्याः अग्निमूलं कशेरुको गन्धशठी ध्यामं गन्धतृणं कौन्ती रेणुका तालीशं रसाञ्जनं फलं मदनफलं, लघु अगुरु श्यामा प्रियङ्गु, महाश्यामा श्यामलता एषां प्रत्येकं त्रिपलं व्योषस्य मिलित्वा त्रिपलं ग्राह्यम् । अत्र कल्कभूतद्रव्यादेवादितैलपदधर्मैर्मन्दद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः, उत्तमैस्तृतीयो वदति । अत्र गन्धशुद्ध्यर्थं कर्पूरकस्तूरीभ्यां पत्रकल्कः । पत्रकल्कमप्यशक्याप्ये वाच्यं पत्रकल्कस्य मानमत्र तैलानुरूपतः सुगन्धि तैलान्तरोक्तमानानुसाराद्वा ग्रेवम् । ७२ ।

समूलदलेत्यादि — दशमूलाच्छतं शतमिति दशमूलानां प्रत्येकं शतमित्यर्थः । वृद्धा अत्र क्वाथमध्ये रास्नादेवदारुणोरपि प्रत्येकं पञ्चाशत् पलानि प्रक्षिपन्ति, अतएव चक्रोऽपि क्वाथे तस्याहमिति

द्रव्याणि यानि पेयानि तानि वक्ष्याम्यतः परम्।
भल्लातकं नतं शुण्ठी पिप्पली चित्रकं शटी॥
वचा पृक्का प्रसारण्याः पिप्पल्यामूलमेव च।
देवदारुशताह्वा च सूक्ष्मैलात्वचबालकम्॥
कुङ्कुमं मदमञ्जिष्ठा तुरुष्कं नखकागुरु॥
कर्पूरकुन्दरुनिशा लवङ्गध्यामचन्दनम्।
कक्कोलनलिकामुस्तं कालीयोत्पलपत्रकम्॥
शटीहरेणु शैलेय श्रीवासञ्च सकेतकम्।
त्रिफलाकच्छुरा भीरुशरला पद्मकेशरम्॥
प्रियङ्गुशीरनलदं जीवकाद्यं पुनर्नवा।
दशमूलाश्वगन्धे च नागपुष्पं रसाञ्जनम्॥
कटुकाजातिपूगानां फलानि शल्लकीरसम्।
भागान् त्रिपलिकान् दत्त्वा शनैर्मृद्वग्निना पचेत्॥
विस्तीर्णे सुदृढे पात्रे पाक्यैषा तु प्रसारणी।
प्रयोगः षड्विधश्चात्र रोगार्त्तानां विधीयते॥
अभ्यङ्गात्त्वग्गतं हन्ति पानात् कोष्ठगतं तथा।
भोजनात् सूक्ष्मनाड़ीस्थान् नस्यादूर्द्धगतन्तथा॥

---

वक्ष्यति जलन्तु यथोक्तमेव देयं नत्वधिकम्। कषायद्विगुणेनारणा-लेन द्रोणद्वयेनेत्यर्थः। क्षीरादीनां प्रत्येकमाढकं, समायुक्तमिति पदं कषायेनेत्यादिभिस्तृतीयान्तैर्योज्यं प्रसारण्या अपि मलमित्य-न्वयः। त्वक् गुड़त्वक् मदः कस्तूरी तुरुष्कं सिह्लकं नखचोरक-मिति पठित्वा अगुरुस्थाने चोरपुष्पमित्याहुरेके। उत्पलं उत्पल-पुष्पं ध्यामं गन्धतृणं पत्रं तेजपत्रं शटी गन्धशटी, श्रीवासं नवनीत-खोटिः, सकेतकमित्यत्र सेड़गज मिति पठित्वा एड़गजबीजमाह गयदासः। कच्छुरा शूकशिम्बामूलं, शरलं शरलकाष्ठं पद्मकेशरं

पक्वाशयगते वस्तिर्निरूहः सार्व्वकायिके ।
एतद्धि वड़वाश्वानां किशोराणां यथामृतम् ॥
एतदेव मनुष्याणां कुञ्जराणां गवामपि ।
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः ॥
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः ।
वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥
न प्रसूते च या नारी सापि पीत्वा प्रसूयते ।
अप्रजः पुरुषो यस्तु सोऽपि पीत्वा लभेत् सुतम् ॥
अशीतिं वातजान् रोगान् पैत्तिकान् श्लैष्मिकानपि ।
सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव तु ॥
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत् ।
कृत्वा विष्णोर्बलिञ्चापि तैलमेतत् प्रयोजयेत् ॥
क्वाथे तुलार्द्धं रास्नायाः किलिमस्य च दीयते ।
भल्लातकासहत्वे तु तत्स्थाने रक्तचन्दनम् ॥
त्वक्पत्रं पत्रमधुरीकुष्ठचम्पकगैरिकाः ।
ग्रन्थिकोषीमरुवकमधिकत्वेन दीयते ॥

---

पार्श्विककल्कः नलदं मांसी, जीवकाद्यं जीवनीयदशकं, नागपुष्पं नागकेशर पुष्पचूर्णं कटुका लताकस्तूरीफलानीति कटुकादिभिस्त्रिभिः सम्बध्यते । धनुको स्वनाम ख्याता रसोगन्धरसः, अत्र त्रिफलाया मिलित्वा पलत्रयं एवं जीवनीय दशमूलयोरपि, प्रत्येकशस्तु त्रिपल-ग्रहणे कल्कस्यातिबाहुल्यं स्यात् । अत्रापि कल्कभूयस्त्वात् अधमैः सुगन्धिद्रव्यैः प्रथमः पाकः मध्यमैस्तु द्वितीयः, उत्तमैस्तृतीय इति । अत्रापि तृतीयः पाकः गन्धोदकेन, केचित्तु द्वितीयपाकोऽपि गन्धोदकेनेत्याहुः । अतोपदेशादनुक्तमप्यधिकं गन्धद्रव्यं देयमित्याह, त्वक्-पत्रेत्यादि, त्वक्पत्रं तेजपत्रं पत्रन्तु तेजपत्र सदृशमेव पत्रान्तरं ग्रन्थि-

कर्पूरं मदरदानञ्च युक्तं गन्धोदकक्रिया ।
द्रव्यशुद्धिः पाकविधिर्भाविप्रसारणी समः ॥ ७४ ।

महाराज प्रसारिणी तैलम् ।

शतत्रयं प्रसारण्या द्वे च पीतसहाचरात् ।
अश्वगन्धैरण्डबलावरीरास्नापुनर्नवा ॥
केतकीदशमूलञ्च पृथक् त्वक् पारिभद्रकात् ।
प्रत्येकमेषान्तु तुला तुलार्द्धं किलिमात्तथा ।
तुलार्द्धं स्याच्छिरीषाच्च लाक्षायाः पञ्चविंशतिः ॥
पलानि लोध्राच्च तथा सर्व्वमेकत्र साधयेत् ।
जलपञ्चाढ़कशते सपादे तत्र शेषयेत् ॥
द्रोणद्वयं काञ्जिकञ्च षड्विंशत्याढ़कोन्मितम् ।
क्षीरदध्नोः पृथक् प्रस्थान् दशमस्त्वाढ़कान्तथा ॥
इक्षुरसाढ़कौ चैव छागमांसतुलात्रये ।
जलपञ्चचत्वारिंशत् प्रस्थान् पक्के तु शोषयेत् ॥
सप्तदशरसप्रस्थान् मञ्जिष्ठाक्काथ एव च ।
कुड़वो नाढ़कोन्मानोद्रवैरेतैस्तु साधयेत् ॥

---

पंक्तिपर्णं कोषो जातिकोषः। कर्पूरादिदानविधिमाह कर्पूरेत्यादि ॥ ७४ ॥

शतत्रयमित्यादि — दशमूली पृथक् शत मित्यन्वयः, तेन दशमूलस्य प्रत्येकं शत पलं ग्राह्यं किलिम देवदारु लोध्राच्च तथेति पञ्चविंशति पलानीत्यर्थः। जलपञ्चाढ़कशते सपाद इत्याढ़कशतस्य पादः पञ्चविंशत्याढ़कस्तेन जलस्य पञ्चविंशत्याढ़काधिकं पञ्चशताढ़कमित्यर्थः। तत्र शोषयेद्द्रोणद्वयमिति तेषु द्रोणद्वयं स्थाप्यमित्यर्थः। यद्यपि काञ्जिकस्य षड्विंशत्याढ़कास्तथापि काञ्जिकद्रोणमात्रेण व्यवहारः। अन्यथा काञ्जिकस्येव गर्भं स्यादतएव चक्रोवक्षति काञ्जिकं मानतो द्रोणमिति। मञ्जिष्ठाक्काथः कुड़वोनाढ़कोन्मानइ इति पञ्चदशशरावपरिमितः।

मधुद्रुतिलतैलस्य द्रोणं प्रस्थेन संयुतम्।
काञ्जिकं मानतो द्रोणं शुक्तेनात्र विधीयते ॥
आद्य एभिर्द्रवैः पाकः कल्को भल्लातकं तथा।
नागरं मरिचञ्चैव प्रत्येकं षट्पलोन्मितम् ॥
भल्लातका सहत्वे तु रक्तचन्दनमुच्यते।
पथ्याक्षधात्र्यः सरलं शताह्वा कर्कटी तथा ॥
चोरपुष्पी शटीमुस्तं द्वयं पद्मञ्च सोत्पलम्।
पिप्पलीमूलमञ्जिष्ठा साश्वगन्धा पुनर्नवा ॥
दशमूलं समुद्दिष्टं चक्रमर्दो रसाञ्जनम्।
गन्धपर्णं हरिद्रा च जीवनीयोगणस्तथा ॥
एषां त्रिपलिकैर्भागैराद्यः पाको विधीयते।
देवपुष्पीबोलपत्रं शल्लकीरसशैलजे ॥
प्रियङ्गु क्षीरमधुरीमांसी दारुबलाचलम्।
श्रीवासो नलिकाक्षोटिः सूक्ष्मैलाकुन्दुरुर्मुरा

---

एभिर्द्रवैरिति क्वाथ काञ्जिकादिभिः। नागरं शुण्ठी, अत्र भल्लातक सहत्वे रक्तचन्दनं देयं, अतएव वक्ष्यति भल्लातकेत्यादि। अक्षं विभीतकं पद्मं पद्मपुष्पं शतपत्रं नीलोत्पलम्। दशमूलं समुद्दिष्टमिति, तेन दशमूलस्य मिलित्वा पलत्रयमित्यर्थः। चक्रमर्दो एडगजबीजम्। जीवनीयोगण इति जीवनीय दशकं। द्वितीय पाकमाह देवपुष्पीत्यादि देवपुष्पादीनां कल्कः देवपुष्पी चोरहुली, बोलोगन्धरसः शल्लकीरसः शल्लक्याः रसः। अन्ये तु शल्लकीरसशब्देन कुन्दुरुमाहुः यदुक्तं शब्दार्णवे कुन्दुरुर्नीलगन्धः स्यात् भीषणः शल्लकीरसः। मन्यते भागद्वयं कुन्दुरोः। बला वाट्यालकम्। चलं शिह्लकं अक्षोटिः काष्ठाक्षोटिः नख्यौ द्वयमिति यद्यपि पञ्चनख्यो भवन्ति यदुक्तं नखी पञ्चविधा ज्ञेया गन्धार्थं गन्धतत्परैः। काचिद्बदरपत्राभा तथोत्पलदलापरा। काचिदश्वखुराकारा गजकर्णसमा परा। वराहकर्णसङ्काशा पञ्चमी परिकीर्तिता। तथाप्यत्राद्यास्तु चतसृषु मध्ये नखद्वयं

गन्धोत्थश्च त्वक्पत्री पमरा पूतिचम्पकम्।
मदनं रेणुका पृक्का सरलञ्च पलत्रयम्॥
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते।
गन्धोदकन्तु त्वक्पत्रीपत्रकेशरीमुस्तकम्॥
प्रत्येकं सरलामूलं पलानि पञ्चविंशतिः।
कुष्ठार्द्धभागोऽत्र जलप्रस्थास्तु पञ्चविंशतिः॥
षड्विंशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्म्मणि।
गन्धाम्बुचन्दनाम्बुभ्यां तृतीयः पाक इष्यते॥
कल्कोऽत्र केशरं कुष्ठं त्वक् कालीयक कुङ्कुमम्।
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा॥
लवङ्गागुरुकक्कोलजातीकोषफलानि च।
एलालवङ्गवल्ली च प्रत्येकं त्रिपलोन्मितम्॥
कस्तूरी षट्पला चन्द्रात् पलं सार्द्धञ्च गृह्यते।

---

चाद्यं वराहकर्णिका निषिद्धत्वात्, यथा कटिकर्णं ठरगखुरं मद्यं प्रयुञ्जीत गन्धयोगेषु। धूपेषु बदरी[पलपत्रं] न वराहकर्णखुभवापि। त्वक्पत्री तेजपत्रं पतिः खट्टाशः, चम्पकं चम्पककलिका। प्रत्येकं पलत्रयमित्यन्वयः। गन्धोदके त्वक्पत्री तेजपत्रं परन्तु सुगन्धिपत्रान्तरं तेजपत्रसदृशं वाटियापत्रमिति ख्यातम्। बलामूलं वाट्यालकस्य मूलम्। कुष्ठार्द्धभाग इति कुष्ठस्य सार्द्धद्वादशपलमित्यर्थः। गन्धाम्बुचन्दनाम्बुभ्यामिति गन्धाम्बु गन्धोदकं तच्चोक्तमेव चन्दनाम्बु चन्दनक्वाथं गाढ़ं कृतम्, अन्येतु सुपिष्टश्वेतचन्दनमिश्रं वारिमात्रं वदन्ति। जातीकोषफलानीति जातीकोषोरससारः तथा जातीफलचेत्यर्थः। भद्रश्रियं श्वेतचन्दनं लवङ्गवल्ली लवङ्गवल्कलम्, चन्द्रः कर्पूरं वैद्यार्थे पलकल्कार्थम्। अस्य तैलस्य पलिका लिख्यते। कृष्णतिलतैल प्र ६८, क्वाथार्थं गन्धभाद्रालिका पलं २००, पीतभिण्टीमूल पल

वेशार्थञ्च पुनश्चन्द्रमदौ देयौ तयोन्मितौ ॥
महाप्रसारणी सेयं राजभोग्या प्रकीर्त्तिता।
गुणान् प्रसारणीनान्तु वहत्येषा ब्रवोत्तमान् ॥
अत्र शुक्तिर्निधिर्मध्यः प्रस्थः पञ्चाङ्कोन्मितम्।
कार्षिकं कुडवं दध्नो गुड़प्रस्थो न्वमूलकात् ॥
पलान्यष्टौ शोधितानात् पलषोड़शकन्तथा।
कशा क्षीरकसिन्धूत्थहरिद्रामरिचं पृथक् ॥
द्विपलं भाविते भाण्डे घृतेनाष्टदिनं स्थितम्।
सिद्धं भवति तच्छुक्तं यदावतार्य्य गृह्यते ॥
तदा देयं चतुर्जातं पृथक् कर्षतयोन्मितम्।
पञ्चपल्लवतोयेन गन्धानां चालनन्तथा ॥
शंखनखादि संस्कारो विशेषश्चात्र वक्ष्यते।
आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः ॥

---

२००, अश्वगन्धा पल १०० एरण्डमूल पल १००, वारियाबामूल पल १००, शतमूल पल १००, रास्ना पल १००, पुनर्नवा पल १०० केतकी मूल पल १००, दशमूल प्रत्येक पल १००, देवदारु पल ५०, शिरीष छाल पल ५०, लाक्षा पल २५, लोध पल २५, पाकार्थ जल ८४०० शराव, शेष १२८ शराव, शुक्त ६४ शराव, दुग्ध ४० शराव, दधि ४० श, दधिमस्तु १६ शराव, इक्षुरस १२ शराव, छागमांस पल २००, जल १८० शराव, शेष ६८ शराव, मञ्जिष्ठा पल ६०, पाकार्थ जल ६० शराव, शेष स १५। कल्कार्थं रक्तचन्दन त्रिकटु एषां चतुर्नां प्रति सेर २ हरीतकी बहेड़ा आमलकी सरल कटुका समुद्रफल कट ... काकड़ाश्रृङ्गी ... बच चोरहुली शटी नागरमुथा केशरमुथा पद्मपुष्प, नीलोत्पल, पिप्पलीमूल मञ्जिष्ठा अश्वगन्धा पुनर्नवा ... रसाञ्जन गन्धतृण हरिद्रा जीवक ऋषभक मेदा महामेदा काकोली क्षीरकाकोली मुगानी माषानी जीवन्ती यष्टिमधु एषां प्रत्येकं

गन्धकाष्ठानि सर्व्वत्र पत्राणि पद्मपल्लवम् ।
चण्डीगोमयतोयेन यदि वा तिन्तिड़ीजलैः ॥
नखं संक्षालयेदेभिरलाभे स्वयमये न तु ।
पुनरुद्धृत्य प्रक्षाल्य भर्ज्जयित्वा निषेचयेत् ॥
गुड़पथ्याम्बुनाप्येवं शुध्यते नात्र संशयः ।
गोमूत्रे चाम्लबुक्के पक्ता पञ्चदलोदके ॥
पुनः सुरभितोयेन वाष्पस्वेदेन स्वेदयेत् ॥
गन्धोग्रा शुध्यते ह्येवं रजनी च विशेषतः ।
मुस्तकन्तु मनाक् क्षुण्णं काञ्जिके त्रिदिनोषितम् ।
पञ्चपल्लवपानीयैः खिन्नमातपशोषितम् ॥
गुड़ाम्बुना सिच्यमानं भर्ज्जयेच्चूर्णयेत्ततः ।
राजशोभाञ्जनजलैर्भावयेच्चेति शुध्यति ॥
काञ्जिके क्वथितं शृङ्गं भृष्टा पथ्यागुड़ाम्बुना ।
सिञ्चेदेवं पुनः पुष्पैर्विविधैरधिवासयेत् ॥

---

बल २ टगमूल मिलित्वा पल २ प्रथमः पाकः। द्वितीयपाके कल्कार्थं देवकुली गन्धरसः तेजपत्र सर्ज्जरस शैलज प्रियङ्गु वीरणमूल मञ्जरी जटामांसी देवदारु बनामूल सिह्लक नवनीत खोटि नालुका काष्ठ-खोटि मुद्गपर्णी कन्दुक, मुरा वदरपत्र नखी अश्वखुरनखी चतुष्पलपत्रनखी तेजपत्र पोथारा खट्टाशी चम्पककलिका मदनक, रेणुका-पिण्डिमूल खल्यपत्र तुलसी एषां प्रत्येकं पल २ । गन्धोदकार्थं तेज-पत्र पाटीयापत्र वीरणमूल मुथा वेणामूल एषां प्रति पल २५ कुष्ठ पल १२ तोला ४ पाकार्थं जल १०० शराव, शेष ५० शराव । अनेन गन्धोदकेन द्वितीयः पाकः । तृतीयः पाके कल्कार्थं नागकेशर कुष्ठ गुड़त्वक् कबाबक कुङ्कुम श्वेतचन्दन गाठियाना लताकस्तुरी जवङ्ग अगुरु कक्कोल रसवास जातीयफल एलाद्वय लवङ्गबालक एषां प्रत्येकं २ पल, कस्तूरी पल १ कर्पूर तोला १२ चन्दनोदकार्थं,

पत्रञ्च सदलं स्निग्धं हरितद्युतिचोत्तमम् ।
भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः ॥
मृगशृङ्गोपमं कुष्ठं चन्दनं रक्तपीतकम् ।
काकतुण्डाकृतिः स्निग्धोः गुरुश्चैवोत्तमोगुरुः ॥
स्निग्धाल्पकेशरन्तुच्छं शालिनो वृत्तमांसलः ।
मुरा पीता वरा प्रोक्ता मांसीपिङ्गजटाकृतिः ॥

---

घृतभाण्ड इति घृतेन भाविते भाण्ड इत्यन्वयः । इदं सर्व्वं भाण्डे कृत्वा अष्टदिनं यावत् स्थितं सत् शुक्तं स्विन्नं भवति. अष्टदिनान्तरं यदा तैल उपयुज्यते तदा चातुर्जातं दत्त्वा तैले देयम् । अन्येतु मत्स्यं तण्डुलतोयेत इत्यादिनैव शुक्तं कुर्व्वन्ति । अत्रान्तरे गन्धद्रव्यशुद्ध्यर्थं प्रकरणमाह पञ्चपल्लवतोयेनेति । नखशुद्धिमाह चण्डेत्यादि चण्डो महिषी उक्तं हि महिषी चोच्यते चण्डो सौरभीव निगद्यत इति । अस्या-गोमयं मलमित्यर्थः । महिषीमलं सलिलेनालोड्य नखो स्वेदनं कार्य्य-मित्यर्थः । किन्तु गोमयेनाप्युत्स्वेद उक्तः । तिन्तिडीजलैरिति तिन्तिडीसलिलैः । अलाभे कृमघ्नेनापि कृष्णमृत्तिकाभिश्रितजले-नेत्यर्थः । क्वाथयेत् करञ्जं कृष्णमृत्तिकामिश्रिते जले । समुद्रकर्कट-शुद्धि प्रकारोऽप्येवं तत्रैवोक्तं अनेनैव प्रकारेण शुद्धिमायाति कर्कटः ।

वचाशुद्धिमाह गोमूत्रइत्यादि ।

अलम्बुषक इत्यादि अलम्बुषासहितोदके, अलम्बुषा च मुण्डिरी सुरभीतोयं गन्धोदकम् । अनेनवाष्पस्वेदः कार्य्यः । गन्धोदकं स्थाल्यां निःक्षिप्य तदुपरि सच्छिद्रं स्थाल्यन्तरं दत्त्वा मृदा स्थालीद्वयावकाशं लिप्य सच्छिद्र स्थालीमध्ये वचां निःक्षिप्य ततः शरावेन पिधाया-ऽधोज्वाला देया इति वाष्पस्वेदविधिः । गन्धोत्था वचा रजनी च विनोत्था इत्येनेन हरिद्रा शुद्धिरपि वचाशुद्धिविधवैव कुर्य्यादिति बोधयति । मुस्तकशुद्धिमाह मुस्तकमित्यादि मनाक् कुसुमित किञ्चित् पेषितं छागस्य जलं मूत्रम् । शैलजशुद्धिमाह शैलमिति शैलजं काञ्जिके विपाच्य पञ्चपल्लवतोयेन क्षालनमित्यपरेयः । खट्टाशीशुद्धिमाह

रेणुका सुक्ष्मसंस्थानाघ्नसमानपर्णं वनम्।
जातीफलं सम्बन्धं स्निग्धं गुरु च शस्यते॥
एला सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डरा।
नखमखखुरं हस्तिकर्णश्चैवात्र शस्यते॥
एतेषामपरेषाञ्च नवता प्रबलो गुणः॥ ७५॥

महासुगन्धितैल लक्ष्मीविलास तैले।

जिङ्गीचोरकदेवदारुसरलं व्याघ्री वचाचेलकं
त्वकपत्रैः सह गन्धकपलकशटी पथ्याक्षधात्रीघनैः।
एतैः शोधितसंस्कृतैः पलयुतेत्याख्या तथा संख्यया
तैलप्रस्थमवस्थितैः स्थिरमतः कल्कैः पचेद्गान्धिकम्॥

यथालाभमित्यादि टोलापाकमिति खट्टाशी गुडकं वस्त्रेण पोट्टलीं बद्धा पञ्चपल्लवक्वाथमध्ये टोलापलक्षमानां पचेत् तत आकृष्य निष्पीड्य निःस्नेहतां नयेत्, तदनु शोभाञ्जनमलकृते पिण्डे तन्निधाय केतकीपुष्पपत्रैर्वेष्टयित्वा कुशलेन बद्धा पङ्केनालिप्य पुटकेन पचेत्, तदनु जात्यादिकुसुमैरधिवासयेदित्युपदेशः। मिश्चकादि शुद्धमाह तदृष्णमित्यादि तरुकं सिह्लकं प्रधिरेणेति कुङ्कुमेन आयत्तमित्यनुक भाक्षमिति सर्व्वत्र योज्यम्। इदानीं गन्धद्रव्याणां प्रशस्तानां लक्षणमाह ईषदित्यादि ईषत्सारगन्धेनानुगत इति मगः मृगमदः। रक्तपीतकमिति किञ्चिद्रक्तपीतसारम्। अरुणमिति कुङ्कुमम्। शालिजः खट्टाशो॥ ७५॥

जिङ्गीत्यादि जिङ्गी मञ्जिष्ठा व्याघ्री विष्णुनेति ख्यातं सुगन्धि द्रव्यं नखीत्यन्ये। चेलकत्वक् गुवाकद्रवस्य त्वक् पत्रं तेजपत्रं गन्धपत्रं भाटियापत्रं पलयुगन्तु प्रत्येकं गन्धिकैरिति गन्धविदितार्थः। एतैः कल्कैः प्रथमः पाकः द्वितीयपाकार्थं कल्कमाह मांसीत्यादि मुन्दरी प्रियङ्गुत्वक् गुड़त्वक् ग्रन्थि ग्रन्थिपर्णं अम्बु वालकं वृकक्रष्टं नलिका नाम्ना मिषिमधुरो शुयामीहरीति लोके। एतैः कल्कैः द्वितीयः पाकः। तृतीयपाकार्थं कल्कमाह एलेत्यादि। कर्पूरः कियत्मानं पाद्यमित्यत आह पञ्चेत्यादि मदनि कस्तूरिका पञ्चभाः

मांसी मुरादमनचम्पकसुन्दरीत्वक्-
स्पृक्काम्बुकुङ्कुमनखैर्द्विपलैः सदृक्षैः ।
श्रीवासकुन्दुरुनखीनलिकामिषीणां
प्रत्येकतः पलमुपाय्य पुनः पचेत्तु ॥
एलालवङ्गघनचन्दनजातिपूतिः
कक्कोलकागुरुलताघुसृणैः पलार्द्धैः ।
कस्तूरिकाद्यसहिता मलदोंशियुक्तैः
पक्वा तु मन्दशिखिनैव महासुगन्धम् ॥
पञ्चद्विकेन चार्द्धेन मदात् कर्पूरमिष्यते ।
कर्पूरमदयोरर्द्धं पत्रकल्कादिहेष्यते ।
पक्वपूतेष्युष्ण एव सम्यक् पेषणवर्त्तितम् ॥
दीयते गन्धवृद्धयर्थं पत्रकल्कं तदुच्यते ॥
प्रागुक्तौ शुद्धसंस्कारौ गन्धानामिह तैः पुनः ।

---

विभक्तस्य कस्तूरिकस्यैको भागो रक्तिद्वयाधिकत्रिमाषको भवति तथा मानेन कर्पूरस्य द्वौ भागौ ग्राह्यावित्यर्थः । अतः कर्पूरस्य रक्तिचतुष्टयाधिको माषकषट्क इति । पक्षान्तरमाह अर्द्धेनवेति कस्तूरीकर्षापेक्षया चार्द्धेन तेन कर्पूरस्याष्टौ माषका इत्यर्थः । ननु पत्रकल्के कियन्मानौ कर्पूरमदौ देयावित्यत आह कर्पूरमदयोरित्यादि इह तैलकल्के पत्रकल्कात् पत्रकल्कमनपेक्ष्य कर्पूरमदयोरर्द्धमिति तैलकल्करूपतया यावन्मानौ कर्पूरमदावुक्तौ पत्रकल्के तु तदपेक्षया द्विगुणौ कर्पूरमदौ देयाविति पत्रकल्कमानमपि कथितं भवति तेन पत्रकल्के कस्तूर्याः कर्षद्वयं कर्पूरस्याष्टरक्तिकाधिकाः द्वादशमाषकाः किंवा कर्षं इति । पत्रकल्कशब्दस्यार्थमाह पक्वपूत इत्यादि पूर्वोक्तौ गन्धानां शुद्धिसंस्कारावत्रापि कार्यौ, तथा तैः पूर्वोक्त महासुगन्धितैलसाधनद्रव्यैः त्रिफलादिभिर्द्विगुणैर्यदि तैलमेतत् साध्यते तदा इदमेव तैलं लक्ष्मीविलाससंज्ञकञ्च भवतीत्याह प्रागुक्तावित्यादि। पाकार्थमुभयोरपि तैलयोः क्रमात् द्रवद्रव्यमाह पञ्चपला-

द्विगुणैर्वल्लीविलासः स्यादयं तैलः सदुत्तमः ।
पञ्चपल्लवाम्बुनाद्यो द्वितीयो गन्धवारिणा ।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना ॥ ७६ ॥

इति वातव्याधिचिकित्सा ।



## अथ वातरक्ताधिकारः ।

बाह्यं लेपाभ्यङ्गसेकोपनाहैर्वातशोणितम् ।
विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत् ॥
द्वयोर्मुञ्चेदसृक्शृङ्गसूच्यलाबुजलौकसा ।
देशाद्देशं व्रजेत् स्राव्यं शिराभिः प्रच्छनेन वा ॥
अङ्गग्लानौ च न स्राव्यं रूक्षे वातोत्तरे च यत् ॥ १ ॥

---

म्बुनेत्यादि आम्रपत्रं जम्बुपत्रं कपित्थपत्रं बिल्वपत्रं बीजपूरकपत्रं, एतत् सर्व्वं मद्दग्धजले पक्त्वा चाङ्गावशेषं, कुर्य्यात् । गन्धवारिना गन्धोदकेन तस्यावक्तमेव धूपिताम्बुनेति, अगुर्व्वादि धूपितजलने-र्थः ॥ ७६ ॥

इति वातव्याधिचिकित्सा ।



वातविशेषत्वाद्वातरक्तचिकित्सामाह बाह्यमित्यादि बाह्यमित्युत्तानं त्वङ्मांसाश्रयमित्यर्थः । अन्तराश्रयं मेदःप्रभृति धात्वाश्रयं गम्भीरं तथाचोक्तं त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयमिति । द्वयोरिति उत्तानगम्भीरयोः । देशाद्देशं व्रजेदिति स्थानान्तर प्रचरणशीलम् ॥ १ ॥

अमृतनागरधन्याककर्षत्रयेण पाचनं सिद्धम् ।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि ॥
वत्साद्यनुद्भवः क्वाथं पीतो गुग्गुलुसंयुतः ।
समीरणसमायुक्तं शोणितं संप्रसाधयेत् ॥ २ ॥
वासागुडूची चतुरङ्गुलानामेरण्डतैलेन पिबेत् कषायम् ।
क्रमेण सर्व्वाङ्गजमप्यशेषं जयेदसृक् वातभवं विकारम् ॥ ३ ॥
लीढ्वामुण्डितिकाचूर्णं मधुसर्पिःसमन्वितम् ।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं सुदुस्तरम् ॥ ४ ॥
तिक्तोऽथवा पञ्चगुडेन पथ्या जग्ध्वा पिबेच्छिन्नरुहा कषायम् ।
तद्वातरक्तं शमयत्युदीर्णमाजानुसंभिन्नमपि स्रवच्च ॥ ५ ॥
घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफञ्च ।
वातासृगुग्रं रुवुतैलमिश्रा शुण्ठ्यामवातं शमयेद्गुडूची ॥
गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा ॥
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ।
दशमूली शृतं क्षीरं सद्यः शूलनिवारणम् ॥
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥ ६ ॥

---

अमृतेत्यादि प्रत्येकमेवकर्षं गृहीत्वा कर्षत्रयमित्यर्थः । वत्स-
इत्यादौ पीतो गुग्गुलुसंयुत इति शोधनार्थं प्रायेण गुग्गुलोः
कर्षः, कर्षार्द्धं वा. शमनार्थन्तु माषकचतुष्टयमिति एवं सर्व्वत्र ॥ २ ॥
वासेत्यादौ चतुरङ्गुलोऽत्र शोनालुफलं तन्मात्ररसमात्रादेकका-
र्षमेकया द्विगुणमेवैरण्डतैलं प्रयोज्यमित्याहुः ॥ ३ ॥
लीढ्वेत्यादौ मुण्डीतिका मुण्डीरीति ख्याता । ४ ॥
तिक्तोथवेति पुरुषमपेक्ष्य आकृतिमानान्तिक्तः पञ्च वा पिष्ट्वा सम-
गुडेन खादेत् तदनु गुडूच्याः कषायमनुपेयम् ॥ ५ ॥
घृतेनेत्यादि षड्योगाः गुडूच्याः स्वरसेन क्वाथेन वा । दश-

पटोलकटुकाभीरुत्रिफलामृतसाधितम्।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥ ७ ॥
गोधूमचूर्णाजपयो घृतञ्च सच्छागदुग्धोरुवुबीजकल्कः।
लेपे विधेयं शतधौतसर्पिः सेकेपयश्चाविकमेव शस्तम् ॥ ८ ॥
लेपः पिष्टास्तिलास्तद्वत् भृष्टाः पयसि निर्वृताः।
कटुकामृतयष्ट्याह्वं शुण्ठीकल्कं समाक्षिकम् ॥
गोमूत्रपीतं जयति सकफं वातशोणितम्।
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके ॥ ९ ॥
कोकिलाक्षामृताक्वाथे पिवेत् कृष्णां कफाधिके।
पथ्याभोजीत्रिसप्ताहान्मुच्यते वातशोणितात् ॥
कफरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम् ॥ १० ॥

---

मूलोत्थादि दशमूलीशृतं क्षीरं परिषेक इति योज्यं तत्र सेकं शूलं वातरक्तदेशे व्यथा। तद्धन्तीति परिषेकः ॥ ६ ॥

पटोलेत्यादौ कटुका कटुरोहिणी, अभीरुःशतमूली, अमृतं गुडूची। अयं योगः पित्तोत्तरे ॥ ७ ॥

गोधूमेत्यादि गोधूमचूर्णं छागदुग्ध घृताभ्यां सम्मीय कोष्णं कृत्वा वातोत्तरे लेपः, शीतं रक्तोत्तरे। इन्दुः अस्मिन्प्रयोगे घृतं न पठ्यते, तेन घृतं विनाप्ययं योगः। सघृतः पुनरयं चरके पठ्यते यथा वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगली पयश्च, इति। उभयमपि प्रमाणं स्मृतिद्वैधवत् ॥ ८ ॥

लेपेत्यादौ तिलान् दुग्धेन पिष्ट्वा ततो भृष्ट्वा पुनर्दुग्धे निर्वापयेदित्यर्थः इन्दु वाभटसम्वादात् किन्तु लोकके भृष्टतिलान् दुग्धे निर्व्वापितान् तेनैव दुग्धेन पिष्ट्वा लेप इति व्यवहरन्ति वृद्धाः। तद्धन्तीत्यनेन पूर्व्वोक्त योगफलमतिदिश्यते कटुकेत्यादि कटुकाकटुरोहिणी एषां चतुर्णां प्रत्येकं द्विमाषकं कल्कीकृत्य गोमूत्र पलार्द्धेन पेयम् ॥ ९ ॥

कोकिलाक्षेत्यादि कोकिलाक्ष मूलं ग्राह्यम्। हृद्यं गुडघृत-

संसर्गेषु यथोद्रेकं मिश्रं वा प्रतिकारयेत्।
सर्व्वेषु सगुडां पथ्यात् गुड़ूची क्वाथमेव वा॥
पिप्पलीवर्द्धमानं वा शीलयेत् सुसमाहितः॥ ११॥

नवकार्षिकः।

त्रिफलानिम्बमञ्जिष्ठावचाकटुकरोहिणी।
वत्सादनीदारुनिशाकषायो नवकार्षिकः॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम्।
कुष्ठं कापालिकाकुष्ठं पामादेवापकर्षति।
पञ्चरक्तिकमानेन कार्य्योऽयं नवकार्षिकः॥
किं त्वेवं साधिते क्वाथे योग्यमात्रा प्रदीयते॥ १२॥

गुड़ूचीघृतम्॥

गुड़ूचीक्वाथकल्काभ्यां सपयस्कं शृतं घृतम्॥
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम्॥ १३॥

शतावरीघृतम्।

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम्॥ १४॥

---

मिति, आहारं विहाय घृतेन समभागेन लोहित्यं कर्त्तव्यमित्याहुः।
कृष्णां दृष्टफलमेतत्॥ १०॥

संसर्गेष्विति संसर्गजेषु द्वन्द्वजेषु यथोद्रेकमित्येकदोषोल्वणे, मिश्रमिति समकुदिते॥ ११॥

नवकार्षिके दारुनिशा दारुहरिद्रा पञ्चरक्तिक मानेन मानेन त्रिफलादीनां नवकर्षान् गृहीत्वा अष्टगुणे जले क्वाथः किम्वा व्यवहारिभिरेव नवकर्षैः क्वाथः कार्य्यः परं तद्वयोगमात्रापेक्षया अधिकं यद्भवति तत्त्याज्यम् एतदेवाह पञ्चरक्तिक मानेनेत्यादिः अत्र जलदानार्थं वृन्देन कर्षादौतु पलं यावदित्यादि परिभाषाविहिता-नैव॥ १२॥

अमृताद्यं घृतम्।

अमृता मधुकं द्राक्षा त्रिफला नागरं बला।
वासारग्वधवृक्षीरदेवदारुत्रिकण्टकम्॥
कटुकाशवरीकृष्णाकाश्मर्य्यस्य फलानि च।
रास्नाक्षुरकगन्धर्वैरष्टदारवनोत्पलैः॥
कल्कैरेभिः समैः कृत्वा सर्पिः प्रस्थं विपाचयेत्।
धात्रीरससमं दत्त्वा वारित्रिगुणसंयुतम्॥
सम्यक् सिद्धन्तु विज्ञाय भोज्यपाने च शस्यते।
वक्तदोषान्वितं वातं रक्तेन सह मूर्च्छितम्॥
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम्।
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे॥
वातरोगोपसृष्टस्य वेदनाश्चाति दुस्तराम्।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम्॥
एतान् सर्व्वान्निहन्त्याशु वातपित्तकफोत्थितम्।
सर्व्वकालोपयोगेन वर्णायुर्बलवर्द्धनम्॥
अश्विभ्यां निर्म्मितं श्रेष्ठं घृतमेतदनुत्तमम्॥ १५॥

दशपाकबलातैलम्।

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम्।
दशपाकं भवेदेतद्वाताऽसृग्वातपित्तजित्॥

---

गुडूच्यादि घृते काथचतुर्गुणः क्षीरन्तु स्नेह समभिति व्यवहरति॥ एवं शतावरीघृतम्। अन्ततैलादौ वरी शतावरी तयाऽऽख्या-समानेति शवरी, गन्धर्व्वः एरण्डम्। उत्पलं नीलोत्पलम्॥१२—१५॥

दश पाक बला तैले बलाकाथस्य चतुर्गुणः चतुर्गुण क्षीर वाहुल्यात्। तैलमिदं यथोक्तमानेन द्रवेण दशवारान् पक्तव्यम्। अनेन पाकेन स्नेहक्षयोऽवलनाप्ति क्षीरगत स्नेहेन न्यूनभागपूरणात् अतश्च बहुपाकोपदेशः प्रकृतिसमवेत व्याध्यभिप्रायेण स्नेहयोनामल्पापि

बल्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम् ।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥ १६ ॥

गुडूच्यादि तैलम् ।

गुडूचीक्वाथदुग्धाभ्यां तैलं लाक्षारसेन वा ।
सिद्धं मधुककाश्मर्य्यरसैर्वा वातरक्तनुत् ॥ १७ ॥

खुड्डाकपद्मक तैलम् ।

पद्मकोशीरयष्ट्याह्व रजनीक्वाथ साधितम् ।
स्यात् पिष्टैः सर्ज्जमञ्जिष्ठा वीराकाकोलिचन्दनैः ॥
खुड्डाकपद्मकमिदं तैलं वातास्रदोषनुत् ॥ १८ ॥

नागबलातैलम् ।

शुद्धाम्भसा नागबलातुलाम्भु विपाच्य तैलाढ़कमत्र दद्यात् ।

---

प्रकृतिसमसमवेते व्याधौ तैलादिष्वनुक्तोऽपि बहुधा पाको वीर्य्योत्कर्षार्थं बुध्यत एव। विकृतिसमसमवेते तु यथोद्दिष्टमेव कार्य्यं संयोगप्रभावैरचिन्त्यत्वात् तस्मात् विकृतिसमसमवेते व्याधिहरमेव भेषजं दोषबद्धिं कृत्वा यथोद्दिष्टमेव कार्य्यम्। प्रकृतिसमसमवेते तु दोषचयादेव व्याधिचये दोषहरमेव भेषजं दीयते दोषप्रत्यनीकतया अनुक्तमपि क्रियत एव। नच व्याधिहरमेव दोषहरमेवेति वाच्यं वातकारकेणाऽपि खदिरेण सर्व्वकुष्ठोपशमप्रसङ्गात् खदिरं हि वातजनकमपि प्रभावाद्वातिकमपि कुष्ठमुपशमयति न तु वातम्। किञ्च यदि दोषहरमेव व्याधिहरमिति स्वीक्रियते तदा प्रतिव्याधौ बहुप्रयोगकथनमपि मुनीनां व्यर्थं स्यात् तत्तद्दोषप्रत्यनीक भेषजगणकथनेनैवान्यथासिद्धेः। तस्माद्व्याधिहरे संयोगप्रधानत्वात् यथोक्तविध्यनुसरणमेव शरणम्। दोषहरे तु वीर्य्योत्कर्षार्थं मुक्तोऽनुक्तो वा बहुधा पाकोऽपि दोषप्रत्यनीकतया युक्तमेवेत्याहुः। किञ्च बहुवित्तव्ययायासाध्यत्वात् वैद्यानामयमपगम्यते पन्थाः ॥ १६ ॥

गुडूच्यादितैलमकल्कम्। खुड्डाकपद्मक तैले वीरा क्षीरकाकोली,

घजापयस्तुल्यविमिश्रितन्तु ततस्तु यष्टीमधुकस्य कल्कम् ।
पृथक् पचेत् पञ्चपलं विपक्वं तद्वातरक्तं शमयत्युदीर्णम् ।
बस्तिप्रदानादिह सप्तरात्रात् पीतं दशाहात् प्रकरोत्यरोगम् ।
तुलाद्रव्ये जलद्रोणो द्रोणो द्रव्यतुला मता ॥ १८ ॥

पिण्डतैलम् ।

समधूच्छिष्टमञ्जिष्ठं ससर्ज्जरसशारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २० ॥

अन्यपिण्डतैलम् ।

शारिवासर्ज्जमञ्जिष्ठायष्टीसिक्थैः पयोऽन्वितैः ।
तैलं पक्वं विमञ्जिष्ठैर्यवैर्वा वातरक्तनुत् ॥ २१ ॥

---

अब्जकपद्मकं श्वेतपद्मम् । नागबलातैले नागबला गोरक्षतण्डुलेति ख्याता । अजापयस्तैलतुल्यं न तं तगरपादिका । १७—१८ ।

मधूच्छिष्टेत्यादि मधूच्छिष्टं मधुसिक्थकं सर्जरसो धूपकः शारिवा अनन्तमूलं जलञ्चात्र चतुर्गुणं पिण्डतैलभाषया चात्र वस्त्रपूतमेतत्तैलं कर्त्तव्यमित्याहुः । वैद्यास्तु पूत्वैव व्यवहरन्ति किन्तु चरके मधूच्छिष्टेत्यादेः पूर्व्वम् "आरनालाढके तैलं पादसर्जरसं शृतम् । प्रभूतं खजितं तोये ज्वरदाहार्त्तिनुत् परम्" इत्युक्तम् । तेन आरनालाढके साध्यं तैलमेव. सर्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपादपि पिण्डतैलमुच्यते, इति चक्रः । जतुकर्णोऽप्युक्तं काञ्जिके सर्जरसं शृतं खजितं बहुना जलेन दाहहितं सिक्थानन्तासिक्थसर्जरसैर्युक्तं मथितमिति । २० ।

अपरपिण्डतैलद्वयमाह शारिवेत्यादि यष्टि यष्टिमधुकः पयश्चतुर्गुणं इह द्रवान्तराभावात् । विमञ्जिष्ठैरित्यादि, तृतीयं पिण्डतैलं, विमञ्जिष्ठैर्मञ्जिष्ठारहितैः शारिवादिभिः कल्कैर्यवैर्वा यवकल्कस्य तैलं चतुर्गुणं पयसा सह पक्वं सत् अपरं पिण्डतैलं भवतीत्यर्थः । विमञ्जिष्ठमितिपाठे क्रिया विशेषणम् ॥ २१ ॥

कैशोरको गुग्गुलुः।

वरमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम्॥
द्वात्रिंशच्छिन्नरुहा पलानि देयानि यत्नेन
विपचेदप्रमत्तो दर्व्या संघट्टयन् मुहुर्यावत्।
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्॥
अवतार्य्य वस्त्रपूतं पुनरपि सम्पादयेत् पात्रे।
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये॥
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षडक्षपरिमाणम्।
क्रिमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः॥
पलमेकञ्च गुडूच्या दत्त्वा संमर्द्य यत्नेन।
उपयुज्य चानुपानं यूषं तोयं सुगन्धिसलिलेन॥
इच्छाहारविहारी भेषजमुपयुज्य सर्व्वकालमिदम्।
तनुरोधिवातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च॥

---

कैशोरगुग्गुलौ वरमहिषलोचनोदरसन्निभवर्णस्येति लोहितवर्णस्येत्यर्थः। न तु कृष्णस्य, लोहितो महिषलोचनोदरो भवतीति त्रिफलाञ्च यथोक्तपरिमाणामिति प्रत्येकं प्रस्थमानां छिन्नरुहा गुडूची तस्याः द्वात्रिंशत्पलानि एवं मिलित्वा षण्णवति पलानि क्वाथ्यानि। अत्र हि द्रवद्वैगुण्यादुत्सर्गसिद्धं जलं दीयमानं षण्णवति शरावपरिमितं भवति। षण्णवतिशरावैश्च षडाढका भवन्ति एतत् सर्व्वमभिधाय वक्ष्यति प्रत्येकं त्रिफलाप्रस्थ इत्यादि। अन्ये त्वाहुः त्रिफलाञ्च यथोक्तपरिमाणामिति मिलित्वा, निर्द्देशस्य मानप्रधानत्वात्। तेन गुग्गुलुप्रभृतीनि द्रव्याणि मिलित्वा चतुःषष्टिपलानि भवन्ति तत्र चोत्सर्गसिद्धं जलं चतुःषष्टिशरावमेव चतुःषष्टिशरावैश्च द्रोणो भवति तेन तोयराशिशब्देनात्र द्रोणो बोध्य इति। अत्र गुग्गुलुः पुटके बद्धा अपरैः क्वाथ्यैः सह तोयराशौ क्वथनीयः पश्चात् गुग्गुलु-

जयति क्षतं परिशुष्कं स्फुटितञ्चाङ्गानुजञ्चापि।
व्रणकासकुष्ठगुल्मं श्वयथूदरपाण्डुमेहांश्च॥
मन्दाग्निञ्च विबन्धं प्रमेहपीडकाश्च नाशयत्याशु।
सततं निषेव्यमाणं कालवशाद्धन्ति सर्व्वगदान्॥
अभिभूय जरादोषं याति कैशोरकं रूपम्।
प्रत्येकं त्रिफलाप्रस्थो जलं तत्र षडाढकम्॥
षड़ाद्द गुग्गुलोः पाकः सुगन्धस्तु विशेषतः॥ २२॥

अमृताद्योगुग्गुलुः।

प्रस्थमेकं गुडूच्यास्तु अर्द्धप्रस्थञ्च गुग्गुलोः।
प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्द्दिशेत्।
सर्व्वमेकत्र संक्षुद्य साधयेन्नल्वणेऽम्भसि॥
पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत्।
तावत् पचेत् कषायन्तु यावत् सान्द्रत्वमागतम्।
दन्तीव्योषविडङ्गानि गुडूची त्रिफलात्वचः।
ततश्चार्द्धपलं पूतं गृह्णीयाच्च प्रति प्रति॥
कर्षन्तु त्रिवृतायास्तु सर्व्वमेकत्र कारयेत्।

---

विहाय काथ्यं त्यक्त्वा चिह्नेतद्गुण क्वाथे पुनस्तं गुग्गुलुं संक्षिप्य पाचनीयं यावत् घनीभवति दर्व्वीप्रलेपेटवताश्च त्रिफलादिचूर्णं प्रक्षिपेदिति एवं वक्ष्यमाणामृताख्य गुग्गुलावपि द्रष्टव्यम्। हिमोपचाख्य इति हिमशीतलवत् शीते। अत्र चेत्यमेव शक्तुरनुकर्षः वचनादुन्नीयते। अन्यत्र तु कोणएव चूर्णानां दानं दृश्यते। अत्र त्रिफला चूर्णार्द्धपलं मिलित्वैव युज्यते मानप्रधानत्वात् निर्द्देशस्य, प्रत्येकन्तु व्यवहरन्ति त्रिकटोश्चूर्णं षड्कपरिमाणमिति मिलित्वा क्रिमिरिपु विडङ्गः। एवं तोयमित्यादौ चापब्दोबोध्यः। कैशोरकं रूपमिति कैशोरो यौवनोन्मुखोऽवस्थावकः॥ २२॥

अमृताद्यगुग्गुलौ तत्प्रमाणमिति प्रस्थार्द्धं व्योषसार्द्धपल-

तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद्बुधः ॥
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रदापयेत् ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥
दुष्टव्रणप्रमेहांश्च आमवातं भगन्दरम् ।
नाड्याढ्यवातश्वयथून् सर्व्वानेतान् व्यपोहति ॥
अश्विभ्यां निर्म्मितः पूर्व्वममृताख्यो हि गुग्गुलुः ॥
अर्द्धप्रस्थं त्रिफलायाः प्रत्येकमिह गृह्यते ॥ ८२ ॥

पुनर्नवागुग्गुलुः ।

अमृतायाश्च द्विप्रस्थं प्रस्थमेकञ्च गुग्गुलोः ।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥
सर्व्वमेतच्च संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि ।
पुनः पचेत् पादशेषं यावत् सान्द्रत्वमागतम् ॥
दन्तीचित्रकमूलानां कलाविश्वफलात्रिकम् ।
गुडूचीत्वग्विडङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥
त्रिवृताकर्षमेकन्तु सर्व्वमेकत्र चूर्णयेत् ।
सिद्धे चोष्णे क्षिपेत्तत्र त्वमृतागुग्गुलोः परम् ॥
यथा वह्निबलं खादेदम्लपित्ती विशेषतः ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥

---

मिति प्रत्येकं, त्रिफलात्वच इति निरस्य त्रिफलायाः प्रत्येकमर्द्धप्रस्थम् । तत्प्रमाणमिति पदस्यार्थमाह अर्द्धप्रस्थं त्रिफलाया इत्यादि ॥ ८२ ॥

पुनर्नवागुग्गुलौ लक् गुडत्वक । अमृता गुग्गुलोः परिशिष्यनन्तरं मात्रामितिशेषः तेन परमित्यनन्तरममृतागुग्गुलोर्मात्रां यथाग्निबलं खादेदित्यर्थः । अमृताख्य गुग्गुलौ पुरेति अमृत-निर्म्मितत्वादामृताख्यः यद्यप्यमृतायोगादमृताद्यगुग्गुलुस्तथापि पुन-

कुष्ठञ्च वाप्रमेहांश्च सामवातं भगन्दरम्।
नाड्याढ्य वातश्वयथून् हन्यात् सर्व्वामयानयम्॥
अश्विभ्यां निर्म्मितोह्येषोऽमृताख्योऽगुग्गुलु पुरा॥ २४

योगसारामृतः।

शतावरीनागबलाश्वदारकमुष्टाः।
पुनर्नवामृताकृष्णावाजिगन्धात्रिकण्टकम्।
पृथग्दशपलान्येषां सूक्ष्मचूर्णानि कारयेत्।
तदर्द्धं शर्करायुक्तं चूर्णं संमर्दयेत् बुधः॥
स्थापयेत् सुदृढ़े भाण्डे मध्वर्द्धाढकसंयुतम्।
घृतप्रस्थे समालोड्य त्रिसुगन्धिपलेन तु॥
तं खादेदिष्टचेष्टाको यथा वह्निबलं नरः।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम्।
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
हत्वा करोति पुरुषं वली पलितवर्ज्जितम्॥
योगसारामृतो नाम लक्ष्मीकान्तिविवर्द्धनः।
दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा॥
कटूष्णगुर्व्वभिष्यन्दिलवणाम्लानि वर्ज्जयेत्॥ २५॥

इति वातरक्तचिकित्सा।

---

संवादयोगात् पुनर्नवागुग्गुलुरिति नामान्तरं पूर्व्वोक्तामृता गुग्गुलोरयवच्छेदार्थं वा॥ २४॥

योगसारामृते तदर्द्धं शर्करायुक्तमिति चमुदित चूर्णार्द्धं शर्करा। त्रिसुगन्धिपलेनेति प्रत्येकम्॥ २५॥

इति वातरक्तचिकित्सा।

## अथोरुस्तम्भाधिकारः।

श्लेष्मणः क्षपणं यत् स्यान्न च मारुतकोपनम्।
तत्सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम्॥ १॥
तस्य न स्नेहनं कार्य्यं न वस्तिर्नच रेचनम्।
सर्व्वो रूक्षः क्रमः कार्य्यस्तत्रादौ कफनाशनः॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः॥ २॥
शिलाजतुं गुग्गुलुं वा पिप्पलीमथनागरम्।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा॥ ३॥
भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवाः।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिबर्हणाः॥
पिप्पलीपिप्पलीमूलभल्लातक्वाथ एव वा।
कल्को वा समधुर्देय ऊरुस्तम्भविनाशनः॥ ४॥
त्रिफलाचव्यकटुकग्रन्थिकं मधुना लिहेत्।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत्॥

---

स्वाहृतवातजन्यत्व सामान्याद्वातरक्तानन्तरमूरुस्तम्भ चिकित्सा-माह श्लेष्मण इत्यादि एवंविधञ्च भेषजमरिष्टादि ॥ १॥

ऊरुस्तम्भे स्नेहादिनिषेधमाह तस्येत्यादि स्नेहनमिति पाना-भ्यङ्गाभ्यां किंवा स्नेहनमिति वस्तिकर्म्मविशेषणं तेनानुवासना-भिलर्षः। विरेचनशब्देनात्र वमनमपि बोध्यम्, ऊरुस्तम्भे वमनस्यापि निषिद्धत्वात् ॥ २॥

शिलाजत्वित्यादि शिलाजतुशोधितमेवोपयोज्यं प्रत्येकं शिला-जत्वादीनां गोमूत्रेण दशमूलीक्वाथेन वा पानम् ॥ ३॥

भल्लातकादिभिर्द्दशमूलान्तैर्मिलित्वा क्वाथ इत्याहुः पिप्पली-त्यादि पिप्पल्यादीनां त्रयाणां क्वाथो वा देयः पिप्पल्यादीनां कल्क-इति चूर्णं मधुसहितं वा अवलेहरूपतया देयं किंवा पिप्पल्यादीन चूर्णं पानयोग्यं मधु दत्त्वा पेयम् ॥ ४॥

लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ।
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः ॥
पिप्पलीवर्द्धमानं वा माक्षिकेण गुडेन वा ।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ॥ ५ ॥

अष्टकट्वरं तैलम् ।

चव्याभयाग्निदारूणां समधुः स्यादुरुग्रहे ।
कल्कोद्दिहेच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥
क्षौद्रसर्षपवल्मीकमृत्तिकाढ्ययुतं भिषक् ।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे सलेपनम् ॥
कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत् ।
स्थलान्याक्रामयेत् कल्यं प्रतिस्रोतो नदीस्तरेत् ॥

---

त्रिफलेत्यादि कटुकं त्रिकटुकम् । युक्तं गोमूत्रेण पिबेदिति वक्ष्यमाणं योगः शिलाजतुं गुग्गुलुं वेत्यादिना पूर्व्वमेवोक्तस्तथापि सम्पूर्णश्लोकानुरोधात् पुनरत्र लिखितः । कटुकायुतमिति त्रिकटुयुतं कटुरोहिणीयुतं वा । षड्धरणं वातव्याधावुक्तं यद्यपि षड्धरणं पिबेदित्यनेनैव सुखाम्बुना इति लभ्यते उष्णोदकेनैव षड्धरणपानस्य पूर्व्वमुक्तत्वात्, तथाप्यनन्तरोक्तक्षौद्रेण पानाशङ्कानिरासार्थमेतदुक्तं भवति । पिप्पलीवर्द्धमानं वेति पिप्पलीवर्द्धमाननियमक्रमेण पिप्पलीं गृहीत्वा मधुना गुडेन वा सहोपयुञ्जीत गण्डीरारिष्टमेवेति गण्डीरं समठः तस्य जलमेव ग्राह्यं तीक्ष्णत्वात् तस्यारिष्टं सन्धानं तत्र गम्भीर शतपलं जलद्रोणेन पक्त्वा पादावशेषे तस्मिन् गुडतुलामारोप्य धातकीभिर्निम्ने भाण्डे सन्धानीयं ईषदम्लं यदा भवति तदोपयोज्यं । किं वा अरिष्टं समठविल्वयोश्चूर्णमनन्तरोक्तेन मधुना गुडेन वा सहोपयोज्यम् ॥ ५ ॥

चव्येत्यादि समधुः कल्कः पेय इति योज्यम् । दिह्येदित्यादि सर्षपैरित्यन्तं एको योगः उत्सादनमुद्वर्त्तनम् । स्थलानीत्युच्चप्रदेशान् कल्यमिति प्रातः, निरुजमित्यन्ये । अष्टकट्वरतैले पथ्याया पिप्पलीमूल नागरयोः प्रत्येकमेकपलमित्युक्तं निश्चलस्तु प्रत्येकं पलद्वयं

पक्वाभ्यां पिप्पलीमूलनागराद्दष्टकट्वरः।
तैलप्रस्थः समोदभ्रा ग्भ्रस्तुरक्तापहः॥
षट्कट्वरतैलेऽत्र तैलं सार्षपमिष्यते॥ ६॥
कुष्ठ श्रीवेष्टकोदिच्यं शरलं दारुकेशरम्।
अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत्॥
सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत्।
सैन्धवाद्यं हितं तैलं वर्षाभूमृतगुग्गुलुः॥ ७॥

इति ऊरुस्तम्भचिकित्सा।

---

## अथामवाताधिकारः।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च॥
विरेचनं स्नेहपानं वस्तयश्चाममारुते॥

---

अन्यथा कल्कस्यात्यन्तमल्पोपत्वं स्यादित्याह। षट्कट्वरमिति षट्-गुणं कट्वरं सक्षारदध्रस्तक्रस्यादौ प्रस्थाः॥ ६॥

कुष्ठेत्यादौ श्रीवेष्टकः नवनीत खोटिः। अजगन्धात्र यमानी। चतुर्गुण जलेन पाकः। सक्षौद्रमिति प्रक्षेपविषया, अयञ्च विधिर-वस्थाविशेष बोध्यः चरकमध्यादात् सैन्धवाद्य तैलं वातव्याधावुक्तं पुनर्नवा गुग्गुलुरमृतागुग्गुलुश्च वातरक्ते चोक्तः॥ ७॥

ऊरुस्तम्भ चिकित्सा।

---

आमवातसामान्यादूरुस्तम्भानन्तरमामवातचिकित्सामाह लङ्घ-नमित्यादि। विरेचनन्तु महेश्वरपत्रिकायां विशेषेणोक्तं उक्तं हि त्रिवृत् सैन्धवशुण्ठीनामारनालेन चूर्णितम्। पीत्वा विरेचयेज्जन्तुमामवातहरं परम्। सप्ताहञ्च त्रिवृच्चूर्णं त्रिवृत् क्वाथेन भावितम्। काञ्जिकेन तु तत्

स्नेहपानं किम्वा स्नेह शब्देनात्र विरेचकतया एरण्डतैलं बोध्यं
वाच्य इति शोधनवक्तव्यः॥ १॥

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च।
विरेचनं स्नेहपानं वस्तयश्चाममारुते॥
सैन्धवाद्येनानुवास्य क्षारवस्तिः प्रशस्यते।
आमवाते पञ्च कोलसिद्धं पानान्नमिष्यते॥ १॥
रूक्षः स्वेदो विधातव्यो वालुकापुटकैस्तथा।
शटीशुण्ठ्यभयाचोग्रादेवाह्वाति विषामृता॥
कषायमामवातस्य पाचनं रूक्षभोजनम्॥ २॥

रास्नादशमूलकम्।

शटीविश्वौषधीकल्कं वर्षाभूक्वाथसंयुतम्।
सप्तरात्रं पिबेज्जन्तुरामवातविपाचनम्॥
दशमूलामृतैरण्डरास्ना नागरदारुभिः।
क्वाथो रूबूकतैलेन सामं हन्त्यनिलं गुरुम्॥ ३॥

रास्नापञ्चकम्।

दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कुक्षिवस्तिकटीशूले तैलमेरण्डसम्भवम्॥
रास्नां गुडूचीमेरण्डं देवदारुमहौषधम्।
पिबेत् सर्व्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे॥ ४॥

---

शीतं रेचनस्त्वामवातिनाम् इति। ततस्त्वमत्र बोध्यम्। स्नेहपान-
मिति लङ्घनादिभिरामक्षये जाते तदनन्तरं रूक्षस्य वायोः प्रशमनार्थं
स्नेहपानं किम्वा स्नेह शब्देनात्र विरेचकतया एरण्डतैलं बोध्यं
वक्तव्य इति शोधनवक्तव्यः॥ १॥

रूक्षस्वेद इति रूक्षस्वेदं तन्त्रान्तरोक्तं यथा कार्पासास्थि कुल-
त्थिकातिलयवैरेरण्डमूलातसीवर्षाभूशणबीजैः काञ्जिकयुतैरेकीकृतैर्वा
पृथक्। स्वेदस्तदनु कुर्य्यादुदरशिरः स्फिक्पाणिपादाङ्गुलिप्रोष्ठा-
स्कन्धकटीरुजो विजयते सामः समस्तारुज इति॥ २॥

शठीत्यादौ उग्रा वचा॥ ३॥

दशमूलेत्यादौ रूबूकतैलेनेति शोधनार्थं एरण्डतैलस्य कर्षं
द्वयमधिको वा शमनार्थं पुनः षड्माषका इति॥ ४॥

रास्नासप्तकम् ।

रास्नामृताऽरग्वधदेवदारुत्रिकण्टकैरण्ड पुनर्नवानाम् ।
क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥ ५ ॥
शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ।
आमवाते कटीशूले पाचनोरुक्प्रणाशनः ॥
आमवाते कषायुक्तं दशमूलरसं पिबेत् ॥ ६ ॥
खादेद्वाप्यभयाविश्वं गुडूचीं नागरेण वा ॥ ७ ॥
एरण्डतैलसंयुक्तां हरीतकीं भक्षयेन्नरो विधिवत् ।
आमानिलार्त्तियुक्तो गृध्रसीवृद्ध्यर्द्दितोऽनिलम् ॥ ८ ॥
कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा ।
आमवातप्रशमनं कफवातहरं परम् ॥ ९ ॥
पञ्चकोलकचूर्णञ्च पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्मामकफारोचकनाशनम् ॥

---

रास्नापञ्चके पिबेदिति क्वाथरूपतया अत्र योगे तथा वक्ष्यमाणे रास्नासप्तके यदि विवेकश्चिकीर्षितो भवति तदा एरण्डतैलं प्रक्षेप्यमिति वदन्ति ॥ ५ ॥

शुण्ठीगोक्षुरकक्वाथ इति अत्र शुण्ठ्याभागमेकं गोक्षुरस्य भागद्वय मन्यन्ते कोष्ठभेदे कर्त्तव्ये यवक्षारमत्र प्रक्षिपन्ति ॥ ६ ॥

अभया विश्वमिति हरीतकीचूर्णं मा २ शुण्ठी चूर्णं मा २ पिष्ट्वा खाद्यं तप्तजलमनुपेयम् । गुडूचीं नागरेन वा इति क्वाथेन व्यवहारः केचित्तु पिष्ट्वा उष्णोदकेन भक्षयन्ति ॥ ७ ॥

एरण्डेत्यादि हरीतकीचूर्णं स्यैरण्डतैलेनावलेहः ॥ ८ ॥

कर्षं नागरचूर्णमित्यादि शुण्ठीचूर्णंलवणयुक्तस्य काञ्जिकस्य भक्तेन सहोपयोगः प्रचरति ॥ ९ ॥

पञ्चकोलेत्यादि सममाग पञ्चकोलचूर्णं मापकाष्टकमुष्णजलेन पेयम् ।

अमृतानागरगोक्षुरमुण्डितवरुणकैः कृतं चूर्णम्।
मस्तारनालपीतमामानिलनाशनं ख्यातम्॥ १०॥

वैश्वानरं चूर्णम्।

माणिमन्थस्य भागौ द्वौ यमान्यास्तद्वदेव तु।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम्॥
दश द्वौ च हरीतक्याः सूक्ष्मचूर्णीकृताः शुभाः॥
मस्तारनालतक्रेण सर्पिषोष्णोदकेन वा।
पीतं जयत्यामवातगुल्मं हृद्वस्तिजान् गदान्॥
प्लीहानं हन्ति शूलादीनानाहं गुदजानि च॥
विबन्धं जाठरान् रोगांस्तथा वै हस्तपादजान्।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम्॥ ११॥

अलम्बुषाद्यं चूर्णम्।

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम्।
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम्॥
त्रिफलां नागरञ्चैव सूक्ष्मचूर्णानि कारयेत्।
मस्तारनालतक्रेण पयो मांसरसेन वा॥
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम्॥ १२॥

---

अमृतेत्यादौ वरुणं वरुणमूलम्॥ १०॥

वैश्वानरचूर्णमाह मणिमन्थस्येत्यादि मणिमन्थं सैन्धवम्। यमान्यास्तद्वदिति भागद्वयम्। भागास्त्रयोऽजमोदाया इति अजमोदायमानी तेन पञ्चभागो यमान्या एव एके यमानीस्थाने यवक्षारं पठन्ति केचिद्वनयमानीञ्चाप्यन्यस्य यमान्याः भागद्वयं प्रयच्छन्ति अन्येत्वजमोदां वनयमानीं वदन्ति किन्त्वन्तः परिमार्ज्जने यवान्येव युक्ता। दश द्वौ चेति द्वादशभाग इति॥ ११॥

अलम्बुषामित्यादि अलम्बुषा मुण्डीरि वृद्धदारकं वृद्धदारकमूलं वरुणं वरुणमूलम्।

अलम्बुषेत्यादि स्पष्टम्॥ १२॥

शतपुष्पाविडङ्गञ्च सैन्धवं मरिचं समम् ।
चूर्णमुष्णाम्बुनापीतमग्निसन्दीपनं परम् ॥ १३ ॥

हिङ्ग्वाद्यं चूर्णम् ।

हिङ्गु चव्यं विडं शुण्ठीकृष्णाजाजी सपौष्करम् ।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥ १४ ॥

योगराजगुग्गुलुः ।

चित्रकं पिप्पलीमूलं यमानीं कारवीं तथा ।
विडङ्गान्यजमोदाञ्च जीरकं सुरदारु च ॥
चव्यैलासैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम् ।
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥
संमर्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत् ।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ॥
प्लीहगुल्मोदरानाह दुर्नामानि विनाशयेत् ।

---

हिङ्गु चव्यमित्यादौ कृष्णा पिप्पली अजाजी सितजीरकमिति निश्चलः कृष्णजीरकमिति इन्द्रटिप्पणी । भागोत्तरमिति यथोत्तरं भागपरिवृद्धिः ।

पीतमिति उष्णाम्बुना ॥ १३—१४ ॥

योगराजगुग्गुलौ कारवी कृष्णजीरकं अजमोदा यमानी अन्तः परिमार्जनत्वात् एवं अन्यत्रापि । सम्मर्द्य सर्पिषा गाढमिति प्रथमं तावत् घृतं दत्वा गुग्गुलुः पेषणीयः पश्चादल्पमल्पं चूर्णं दत्वा पेषणीयः सम्यक्चूर्णमिलनेन तु स्निग्धभाण्डे निधापयेत् । मर्द्दनार्थं

कटिवस्तिगुदस्फुटनञ्चैवास्थिजङ्घयोस्तीव्रम् ॥
श्वयथुस्तथ ङ्गसन्धिषु ये चान्ये स्युरामवातसम्भूताः ।
सर्व्वे प्रयान्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥ १९ ॥

शुण्ठीघृतम् ।

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परम् ।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥ २० ॥

गुडूचीघृतम् ।

अमृतायाः कषायेण कल्केन च महौषधात् ।
मृद्वग्निना घृतप्रस्थं वातरक्तं हरं परम् ॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि
अर्शांसि गुल्मशूलञ्च नाशयत्याशु योजितम् ॥ २१ ॥

काञ्जीकषट्पलं घृतम् ।

हिङ्गुत्रिकटुकं चव्यं माणिमन्थं तथैव च ।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥
आरनालाढकं दत्त्वा तत् सर्पिर्जठरापहम् ।
शूलं विबन्धमानाहमामवातं कटीग्रहम् ।
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ २२ ॥

---

र्मिति समेनैव गुडेन किञ्चिज्जलं दत्त्वा वह्निसम्बन्धाद् घीकृतेन वटकाः कार्य्याः । चूर्णं वेति गुडयोगं विना ॥ १९ ॥

शुण्ठीघृते चतुर्गुणेन तोयेनेति नागरक्वाथेन केवलोदकेन वेति क्वाथस्थाने चतुर्गुणं जलं दत्त्वा इत्यर्थः ॥ २० ॥

अमृताया इत्यादौ कल्केन चेतिपदं महौषधादित्यनेन सम्बध्यते। आढ्यवाते ऊरुस्तम्भे ॥ २१ ॥

काञ्जिकषट्पलके त्रिकटुकं प्रत्येकं पलिकं माणिमन्थं सैन्धवम् ॥ २२ ॥

शतपुष्पाविडङ्गञ्च सैन्धवं मरिचं समम्।
चूर्णमुष्णाम्बुनापीतमग्निसन्दीपनं परम्॥ १३॥

हिङ्ग्वाद्यं चूर्णम्।

हिङ्गु चव्यं विड़ं शुण्ठीकृष्णाजाजी सपौष्करम्।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत्॥ १४॥

योगराजगुग्गुलुः।

चित्रकं पिप्पलीमूलं यमानीं कारवीन्तथा।
विड़ङ्गान्यजमोदाञ्च जीरकं सुरदारु च॥
चव्यैलासैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम्।
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम्॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत्।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम्॥
संमर्द्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत्।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि॥
प्लीहगुल्मोदरानाह दुर्नामानि विनाशयेत्।

---

हिङ्गुचव्यमित्यादौ कृष्णापिप्पली अजाजीसितजीरकमिति निश्चलः कृष्णजीरकमिति छन्दटिप्पणी। भागोत्तरमिति यथोत्तरं भागपरिवृद्धिः।

पीतमिति उष्णाम्बुना॥ १३—१४॥

योगराजगुग्गुलौ कारवी कृष्णजीरकं अजमोदायमानी अन्नः परिमार्ज्जनत्वात् एवं अन्यत्रापि। सम्मर्द्द्य सर्पिषा गाढ़मिति प्रथमं तावत् घृतं दत्त्वा गुग्गुलुः मेषणीयः पश्चादल्पमल्पं चूर्णं दत्त्वा प्रेषणीयः सम्यक्चूर्णमिलनेन तु स्निग्धभाण्डे निधापयेत्। गाढ़मार्थं

कटिवस्तिगुदस्फुटनञ्चैवास्थिजङ्घयोस्तथा ॥
श्वयथुस्तथ.ङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः ।
सर्व्वे प्रया.न्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥ १९ ॥

शुण्ठीघृतम् ।

नागरक्काथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परम् ।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥ २० ॥

गुडूचीघृतम् ।

अमृतायाः कषायेण कल्केन च महौषधात् ।
मृद्वग्निना. घृतप्रस्थं वातघ्नं परम् ॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि
अर्शांसि गुल्मशूलञ्च नाशयत्याशु योजितम् ॥ २१ ॥

काञ्जीकषट्पलं घृतम् ।

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च ।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥
आरनालाढ़कं दत्त्वा तत् सर्पिर्जठरापहम् ।
शूलं विबन्धमानाहमामवातं कटीग्रहम् ।
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ २२ ॥

---

नीति समेनैव गुड़ेन किञ्चिन्न्यूनं दत्त्वा वञ्चिवदवाद्योक्तेन वटकाः कार्य्याः । चूर्णं वेति गुड़योगं विना ॥ १९ ॥

शुण्ठीघृते चतुर्गुणेन तोयेनेति नागरक्काथेन केवलोदकेन वेति क्काथस्थाने चतुर्गुणं जलं दत्त्वा इत्यर्थः ॥ २० ॥

अमृताया इत्यादौ कल्केन चेतिपदं महौषधादित्यनेन सम्बध्यते। क्काथ्यमाने चौदकत्वं ॥ २१ ॥

काञ्जिकषट्पलके त्रिकटुकं प्रत्येकं पलिकं माणिमन्थं सैन्धवम् ॥ २२ ॥

शुण्ठ्यर्थं पयसासाध्यं दध्नि वा मूत्रसंग्रहे ।
दोषघ्नार्थं मतिमता मस्तुना च प्रकीर्त्तितम् ॥ २३ ॥

शुण्ठीघृतम् ।

सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ २४ ॥

रसोनपिण्डः ।

रसोनस्य पलशतं तिलस्य कुडवं तथा ।
हिङ्गु त्रिकटुकं क्षारौ पञ्च वै लवणानि च ॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यमानी च धान्यकञ्चापि बुद्धिमान् ॥
प्रत्येकन्तु पलञ्चैषां सूक्ष्मचूर्णानि कारयेत् ।
घृतभाण्डे दृढे चैतत् स्थापयेद्दिनषोड़शम् ॥
प्रक्षिप्य तैलमानीय प्रस्थार्द्धं काञ्जिकस्य च ।
खादेत् कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंश्रिते ।
अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च ॥
सोन्मादे वातभग्ने च शूले जन्तुषु शस्यते ॥ २५ ॥

---

शुण्ठ्यर्थमित्यादि उक्तत्वेन काञ्जिकपट्पलकं यदि शुण्ठ्यर्थे [illegible]
तदा काञ्जिकस्थाने पयो दत्वा साध्यं विण्मूत्रसंग्रहे कार्य्यं दध्ना [illegible]
दोषघ्नार्थं यदि तदा मस्तुना । साध्यमित्यर्थः ॥ २३ ॥

शुण्ठीघृतं स्पष्टम् ॥ २४ ॥

रसोनपिण्डे निस्तुषो रसोनस्यापि पिण्डस्य पलं [illegible]
मानीत्यष्टौ पलानि द्वैगुण्याभावात् जन्तुष्विति क्रिमिषु ॥ २५ ॥

हस्तमूलामलगुन्नाभ्यां मार्कवैर्लवणैस्त्रिभिः।
चर्चितैः पलिकैः सार्द्धमारनालपरिप्लुतैः।
विन्यसेत् स्नेहपात्रे च धान्यराशौ पुनर्न्यसेत्।
सप्तरात्रात् समुद्धृत्य पानभक्ष्यभोजनैः।
सिध्मलेयं प्रयोक्तव्या सामे वाते विशेषतः॥
अम्लहन्नाश्यपहताः कम्पिनः पीठसर्पिणः।
मधुसीमग्निसादश्च शूलगुल्मोदराणि च॥
वलीपलितखालित्यं हत्वास्युरमलेन्द्रियाः॥ २६॥
दधिमत्स्यगुडक्षीरपोतकीमाषपिष्टकम्।
वर्ज्जयेदामवातार्त्तो गुर्व्वभिष्यन्दकारि यत्॥ ३०॥

इति आमवातचिकित्सा।



## अथ शूलाधिकारः।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः।
क्षारचूर्णानि गुडिकाः शस्यन्ते शूलशान्तये॥

---

भवति स्नेहपात्रमिह कटुतैलपात्रमेव बोधिकं भवत्यमिति पानभो- जनं भोजनं मन्दाग्निभोजनम्॥ २६॥

माषपिष्टकमिति माषकृतपिष्टकञ्च अभिष्यन्दकारिदोषः स्रो- तसावरोधकारि॥ ३०॥

आमवाताधिकारः।



आमवातवत् शूलोप्यामसम्बन्धेन तदनन्तरं शूलचिकित्सामाह वमनमित्यादि सम्भृतस्य वमनमुत्क्लिष्टकफे, लङ्घनमामपाचनार्थं स्वेदः

पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः।
पायसैः कृशरैः पिष्टैः स्निग्धैर्वापि सितोत्करैः॥ १॥
वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाड़िमाढ्यः॥ २॥
बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः।
सहिङ्गुलवणं पीतं सद्योवातरुजापहम्॥ ३॥
शूलीनिरन्नकोष्ठोऽद्भिरुष्णाभिश्चूर्णिताः पिबेत्।
हिङ्ग्वतिविषाव्योषवचासौवर्चलाभयाः॥
तुम्बुरूण्यभयाहिङ्गु पौष्करं लवणत्रयम्।
पिबेत् यवाम्बुना वातशूलगुल्मापतन्त्रकी॥ ४॥
श्यामाविड़ङ्गशिग्रुफलानि पथ्या विड़ङ्गकम्पिल्लकमश्वमूत्री।
कल्कं समं मद्ययुतश्च पीत्वा शूलं निहन्यादनिलात्मकन्तु॥ ५॥

---

पित्तं विहाय। क्षार इति क्षारवस्तिः क्षारप्रयोगो वा। चूर्णगुटिके इति इहैव वक्ष्यमाणे॥ १॥

वातात्मकेत्यादौ यूष इति कुलत्थनाम्नः यवयोर्मिलित्वा पलं, जलं षोड़शपलं, पलचतुष्टयस्थिते विमर्द्य वस्त्रेण छानयित्वा हिङ्गु वहितेन घृतेन भर्जनीयं तदनन्तरं सैन्धवादीनां चूर्णं मिलित्वा कर्षः प्रक्षेपः पश्चाद्दाड़िमबीजरससंयोज्यम्॥ २॥

बलेत्यादियोगोऽयं क्वाथविधिना हिङ्गुलवणाभ्यां प्रक्षेपं लवणमत्र सौवर्चलं वातशूलहन्तृत्वादित्याहुः॥ ३॥

निरन्नकोष्ठ इति अभुक्त इत्यर्थः। अन्ये तु अन्नं अजीर्णान्नं तच्छून्यकोष्ठ इत्याहुः। प्रतिविषा अतिविषा तुम्बुरु स्वनामख्यातं यवाम्बुनेति यवक्वाथेन। यवैरण्डाम्बुनापेयमिति तु पाठान्तरं तेन द्वाभ्यामेव क्वाथः॥ ४॥

श्यामेत्यादि श्यामा वृद्धदारकः कम्पिल्लको गुण्डा रोचनी अश्वमूत्री गम्भारी, क्षारो यवक्षारः॥ ५॥

यमानीहिङ्गुसिन्धूत्थक्षारसौवर्च्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिषूदनाः॥ ६॥
विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम्॥ ७॥
हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः॥
तद्वद्द्वयवक्वाथो हिङ्गुसौवर्च्चलान्वितः॥ ८॥
हिङ्ग्वम्लकृष्णालवणं यमानीक्षाराभया सैन्धवतुल्यभागम्।
चूर्णं पिबेद्वारुणिमण्डमिश्रं शूले प्रवृद्धे ऽनिलजे प्रिवाय॥९॥
सौवर्च्चलाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसैः पिष्टा गुडिकानिलशूलनुत्॥
हिङ्ग्वम्लवेतसव्योष यमानीलवणत्रिकैः।
बीजपूररसोपेतैर्गुडिका वातशूलनुत्॥

---

यमानीत्यादौ सुरा मण्डेनेति सुराया उपरितनस्वच्छद्रवभागेन पानमत्रापि॥ ६॥

विश्वमित्यादि एरण्डमूलस्य भागत्रयं शुण्ठ्यास्त्वेको भाग इत्यर्थः॥ ७॥

हिङ्गुपुष्करेति हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वेति उभयत्र सहयोगे तृतीया। तद्वदिति सद्यः शूलहर इत्यर्थः॥ ८॥

हिङ्ग्वम्ले त्यादि अम्लोऽम्लवेतसः कृष्णा पिप्पली लवणमिह सौवर्च्चलं विशेषतः शूलहन्तृत्वात् क्वचित्तु कृष्णामलकमितिपाठं स च निष्फलत्वादसम्मतः। निश्चलस्तु कृष्णामलकमित्यत्र कृष्णलवणमिति पठति। हारीत सम्वादात् छन्दभङ्गोऽपि नाशङ्काः, अनन्तत्वात् पद्यमार्गस्येति व्याचष्टे॥ ९॥

सौवर्च्चलेत्यादौ अम्लिका तिन्तिडी, द्विगुणोत्तरैरिति यथोत्तरं

बीजपूरकमूलञ्च घृतेन सह पाययेत्।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः॥ १०॥
बिल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा।
गुड़िकां भ्रामयेदुष्णां वातशूलविनाशिनीम्॥
तिलैश्च गुड़िकां कृत्वा भ्राम जठरोपरि।
गुड़िका शमयत्येषा शूलञ्चैवातिदुःसहम्॥
नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः।
जीवन्ति मूलकल्को वा सतैलः पार्श्वशूलनुत्॥ ११॥
गुड़ः शालिर्यवाः क्षीरं सर्पिः पानं विरेचनम्।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम्॥ १२॥
पैत्ते तु शूले वमनं पयोभि-
रसैस्तथेक्षोः सपटोलनिम्बैः।
शीतावगाहाः पुलिना सवाताः
कांस्यादि पात्राणि जलप्लुतानि॥ १३॥
विरेचनं पित्तहरञ्च शस्तं रसाश्च शस्ताः शशलावकानाम्।

---

द्विगुणैरित्यर्थः। एषा गुड़िका चलत्तोपक्रमिता उष्णोदकानुपानेन भक्षणीया। एवं वक्ष्यमाणा गुड़िकापि॥ १०॥

बिल्वमूलेत्यादौ अम्लतुषाम्भः काञ्जिकं तिलैरिति पिष्टैः। गुड़िकेयं कोष्णा भ्रामयितव्या। जीवन्तीमूलकल्केनापि लेपः॥ ११॥

सम्प्रति पित्तशूलचिकित्सामाह गुड़ इत्यादि गुड़ः पुरातन उपहतमलश्च ज्ञेयः वातपित्तहरणे यौगिकत्वात्। उक्तं हि सुश्रुते पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक् प्रसादनः। पुराणश्चाधिकगुणः स्मृतः पथ्यतमो गुड़ः॥ १२॥

पैत्ते तु शूले वमनमित्यादि पित्तजेऽपि वमनमाशयस्थपित्ताहरणार्थम्। सपटोलनिम्बैरिति पटोलनिम्बकल्कयुतैः। मदनफलयोगमत्र केचिदिच्छन्ति॥ १३॥

सन्तर्पणं लाजमधूपपन्नं योगाः सुशीतामधुसंप्रयुक्ताः ॥
छर्द्यां ज्वरे पित्तभवेऽपि शूले
घोरे विदाहेऽप्यतितर्षिते च ॥ १४ ॥
यवस्य पेयां मधुना विमिश्रां
पिबेत् सुशीतां मनुजः सुखार्थी ॥ १५ ॥
धात्र्या रसं विदार्य्या वा त्रायन्त्या गोस्तनाम्बु वा ।
पिबेत् सशर्करं सद्यः पित्तशूलनिषूदनम् ॥
शतावरीरसं क्षौद्रयुतं प्रातः पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्व्वपित्तामयापहम् ॥
बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुबालिकाः ।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ १६ ॥
शतावरीसयष्ट्याह्ववाट्यालकुशगोक्षुरैः ।
शृतशीतं पिबेत्तोयं सगुड़क्षौद्रशर्करम् ॥
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ॥ १७ ॥
त्रिफलानिम्बयष्ट्याह्वकटुकारग्वधैः शृतम् ।
पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ।
तैलमेरण्डजं वापि मधुकक्वाथसंयुतम् ॥

---

विरेचनं पित्तहरमिति मधुरगुणोपेतं सन्तर्पणं लाजमधूपपन्नं लाजमधुभ्यां निर्म्मितं सन्तर्पणमिति ॥ १४ ॥

यवस्य पेयामिति यवस्य यवागूम् ॥ १५ ॥

धात्र्या रसमित्यादि योगत्रयं धात्र्याः स्वरसः विदार्य्या अपि स्वरसः त्रायन्तीगोस्तनयोः क्वाथः शर्करा च सर्व्वत्र योज्या शतावरीरसमित्यादि स्पष्टम् । बृहत्यावित्यादि इक्षुबालिका खागरभेदा ॥ १६ ॥

शतावरीत्यादौ शृतशीतमिति शृतं शीत मेव क्वथनादितः न तु शीतकषायः ॥ १७ ॥

त्रिफलेत्यादौ यष्ट्याह्वः यष्टिमधुकः कटुका कटुरोहिणी चैवमेर

शूलं पित्तोद्भवं हन्याद् गुल्मं पैत्तिकमेव च ॥ १८ ॥
त्रिफलारग्वधक्वाथं सक्षौद्रं शर्करान्वितम् ।
पाययेद्रक्तपित्तघ्नं दाहशूलनिवारणम् ॥
प्रलिह्यात् पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ।
श्लेष्माधिके छर्दनलङ्घनानि शिरोविरेकं मधुशीधुपानम् ॥
मधूनि गोधूमयवानरिष्टान् सेवेत रूक्षान् कटुकांश्च सर्वान् ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी तोयसाधिता ।
लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् ॥
सुखोष्णेनाम्बुना पीतं कफशूलविनाशनम् ॥ १९ ॥
बिल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् ।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥
मुस्तां वचां तिक्तकरोहिणीञ्च तथाभयां निर्दहनीञ्च तुल्याम् ।
पिबेत्तु गोमूत्रयुतां कफोत्थशूले तथामस्य च पाचनार्थम् ॥
वचाब्दाग्न्यभयातिक्ताचूर्णं गोमूत्रसंयुतम् ।
रुक्षारं वा पिबेत् क्वाथं बिल्वादेः कफशूलवान् ॥ २० ॥

---

एरण्डजमिति तैलं प्रक्षेप्यं अन्ये तु योगद्वयमाहुः तन्मते एरण्डजं तैलमित्येकः, मधुकक्वाथसंयुतमेरण्डतैलमिति द्वितीयः ॥ १८ ॥

त्रिफलारग्वधक्वाथमित्यादि स्पष्टम् । श्लेष्माधिक इति मधुना कृतः शीधुर्मधुशीधुः । अरिष्टान् रूक्षान् विशेषान् । पिप्पलीत्यादि स्पष्टम् । लवणत्रययुतमिति लवणत्रयं सौवर्च्चलसैन्धवविड़म्, समभागचूर्णादष्टमाषकमुष्णोदकपलेनालोड्य पेयम् । चूर्णविषये योगोऽयम् ॥ १९ ॥

बिल्वमूलमित्यादि अयं योगः क्वाथविधिना । मुस्तामित्यादौ निर्दहनीमूर्वा, मुस्तादि निर्दहन्यन्त एको योगः । मुस्तकादिकं पिष्टा गोमूत्रेण पेयम् । वचेत्यादौ अग्निश्चित्रकः रुक्षारमित्यादिस्तु द्वितीयो योगः । बिल्वादेर्दशमूलस्य क्वाथं पिबेदिति ॥ २० ॥

मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः ।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥ २१ ॥
आमशूले क्रिया कार्य्या कफशूलविनाशिनी ।
सेव्यमामहरं सर्व्वं यदग्निबलवर्द्धनम् ॥
सहिङ्गुतुम्बुरुव्योषयमानीचित्रकाभयाः ।
सक्षारलवणाश्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥
विन्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ २२ ॥
चित्रकं ग्रन्थिकैरण्डशुण्ठीधान्यं जलैः शृतम् ।
शूलानाहविबन्धेषु सहिङ्गु विड्सैन्धवम् ॥
दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम् ।
अर्शःशूलं जयत्याशु मन्दस्याग्नेश्च दीपनम् ॥ २३ ॥
समाक्षिकं बृहत्यादिं पिबेत् पित्तानिलात्मके ॥ २४ ॥
व्यामिश्रं वा विधिं कुर्य्याच्छूले पित्तानिलात्मके ।
पित्तजे कफजे वापि या क्रिया कथिता पृथक् ।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ २५ ॥

---

मातुलुङ्गरसइति मातुलुङ्गमूलक्वाथः योगद्वयेऽपि मधुयवक्षारौ प्रक्षेप्यौ ॥ २१ ॥

आमशूलमिति आमहरं भूत्वा यदग्निवृद्धिकरं भवति पञ्चकोलादि तत् सेव्यं नतु घृतादि । तच्च कवलिग द्रव्यविशेषः ॥ २२ ॥

चित्रकमित्यादौ ग्रन्थिकं पिप्पलीमूलं सहिङ्गु विड्सैन्धवमित्यत्र सहिङ्गुविड्दाडिममिति केचित् पठन्ति दीप्यकं यमानी ॥ २३ ॥

समाक्षिकं बृहत्यादिमिति बृहत्यौ गोक्षुरैरण्डेत्यादिना पूर्व्वमुक्तं अन्ये तु सन्निपातज्वरोक्तं बृहत्यादिकमाहुः । व्यवहारस्तु पूर्व्वमेव ॥ २४ ॥

द्वन्द्वजशूलचिकित्सामाह व्यामिश्रमित्यादि ॥ २५ ॥

पटोलत्रिफलारिष्टक्वाथं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहशूलोपशान्तये ॥
रसोनं मधुसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥ २६ ॥

विश्वादिः ।

विश्वोरुबूकदशमूलयवाम्भसा तु
द्विक्षारहिङ्गुलवणत्रयपुष्कराणाम् ।
चूर्णं पिबेत् हृदयपार्श्वकटीग्रहाम-
पक्वाशयांसभवरुग्ज्वरगुल्मशूली ॥
क्वाथेन चूर्णपानं यत्तत्र क्वाथप्रधानता ।
प्रवर्त्तते न ते नात्र चूर्णापेक्षी चतुर्द्रवैः ॥ २७ ॥

रुचकादिः ।

चूर्णं समं रुचकहिङ्गुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयन्तथा यवरसेन तु विड्विबन्धे ॥

---

पटोलेत्यादौ अरिष्टो निम्बः । रसोनमित्यादि निश्चलधृतरसोन माषा ६, मधुपल १ । २६ ।

विश्वोरुबूकेत्यादि अम्भसेति क्वाथेन । हिङ्गुसौवर्चलमित्यादि वक्ष्यमाणयोगे समुदितदशमूलयवयोर्द्वयोः प्रत्येकं तुल्यभागेन ग्रहणं व्यवहारदर्शनादत्रापि तथैव मानमाह श्रीकण्ठः । तेन विश्वरुबूकदशमूलानां मिलितानामेको भागः यवस्य चापरो भाग इति । व्यवहारोऽपि दृश्यत एव । द्विक्षारादयस्तु प्रक्षेपविषये प्रयोज्याः नतु पानस्य चतुर्द्रवैरिति परिभाषया पानविषये एवं वक्ष्यमाणेष्वपि । एतदेवाह क्वाथेन चूर्णपानं यदित्यादि । अस्यार्थस्तु ज्वरातीसाराधिकारे व्याख्यानमेवोक्तः ॥ २७ ॥

समं सुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः ।
तन्नाल्पमानमेवात्र हिङ्गु संपरिदीयते ॥ २८ ॥
हिङ्गु सौवर्चलं पथ्या विड़सैन्धवतुम्बुरु ।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा ॥
पार्श्वहृत्कटिपृष्ठांसशूले तन्द्रोपतानके ।
शोथे श्लेष्मप्रसेके च कर्णरोगे च शस्यते ॥ २९ ॥

एरण्डसप्तकम् ।

एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटुमूलकृतः कषायः ।
सक्षारहिङ्गुलवणोरुबुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः ॥
हिङ्गुत्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम् ।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः ॥ ३० ॥

---

चूर्णः सममित्यादि रुचकं सौवर्चलम् । तीक्ष्णत्वेन सुण्ठ्यादिः कर्षोर्द्धं स्वाल्पस्य वा कार्यः । प्रक्षेपः सौवर्चलमाषा १ शुण्ठ चूर्णमाषा २ हिङ्गु रति १ । एवं यवरसेनेति ॥ समं सुण्ठ्यम्बुनेत्यादौ समशब्दस्य तुल्यार्थत्वे हिङ्गुनो रुचकमरीचसमानत्वेन बहुमानता स्यादतः सममिति पदं सहार्थे ॥ २८ ॥

हिङ्गुसौवर्चलेत्यादौ दशमूलयवयोर्द्वयोः क्वाथः तेन प्रत्येकं दश-मूल १ माषा ० रति यवतण्डुल १ कर्षः पाकार्थं जलशराव १ शेष २ पल । भद्रे विवक्षिते हिङ्ग्वादीनां प्रक्षेपः ॥ २९ ॥

एरण्डेत्यादौ मातुलुङ्गं मातुलुङ्गस्य मूलम् । पाषाणभित् पाषाणभेदी त्रिकटु गोक्षुरकस्य मूलम् । लवणमत्र सैन्धवं नतु सौवर्चलं नागार्जुनसम्वादात् अयं योग आमवाते चक्रादिना लिखितः अतश्चात्रापि युज्यते । हिङ्गुत्रिकटुकमित्यादौ मातुलुङ्गरसो मातुलुङ्गक्वाथः । अन्ये तु मातुलुङ्गफलरसं इत्याहुः ॥ ३० ॥

प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥
यः पिबति सप्तरात्रं शक्तूनेकान् कलाययूषेण ।
स जयति परिणामरुजं चिरजामपि किं तन्नूतनजाम् ॥ ४ ॥
लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा ।
परिणामशूलं शमयेत्तक्रं वा पयोर्जितम् ॥ ५ ॥

सामुद्राद्यं चूर्णम् ।

कृष्णाभयालौहचूर्णं गुडेन सह भक्षयेत् ।
पक्तिशूलं निहन्त्याशु तज्जठराग्निमन्दताम् ।

---

तथेति चागत्यः पूर्वयोगापेक्षया, शम्बूकादिषु कलम्बुकरसेन संमर्द्य समांशिका वटिका कार्या । अत्र केचिच्छम्बुकभस्म टङ्कणमित्युक्तवैतत् तन्त्रान्तरसम्वादात् । शक्तूनिति यवशक्तून् । एकानिति केवलान् । कलाययूषः वर्त्तुलकलाययूषः । अयं योगः पित्तशूले युक्तः ॥ ४ ॥

लौहचूर्णमित्यादि । वरा त्रिफला, लौहचूर्णस्यैको भागः । त्रिफलायाश्च प्रत्येकं लौहसमभागत्वम् । तन्मलञ्चेति लौहमलं मण्डूरं वरायुक्तमिति बोध्यम् । लौहमलस्य तु मिलितत्रिफलातुल्यभागः । मारितपुटित लौहचूर्णं मा ८ त्रिफलाचूर्णप्रमा ८ । अन्ये तु लौहचूर्णस्य महावीर्यत्वात् व्याधिप्रत्यनीकत्वाच्च प्राधान्यमतिकृत्वा मिलितत्रिफलाचूर्णसमत्वमित्याहुः । तन्मते लौहचूर्णं कर्ष १ तो १ त्रिफलाचूर्णमतो १ मिलित चूर्णात् प्रथमतो रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां संमर्द्य लेह्यम् । लौहान्तरवत् क्षीरं चतःषष्टिगुणं षष्टिगुणं वानुपेयम् । दिनत्रयानन्तरं रक्तिद्वयेन वृद्धिर्माषकद्वयं यावत् । एवं मपरं लौहान्तरवत् । तथा शोधितमण्डूरपल १ मिलितत्रिफलाचूर्णं पल १ । ततोमिलितचूर्णात् ८ माषा मधुघृताभ्यां लेह्यम् ॥ ५ ॥

कृष्णेत्यादि । प्रत्येकं समभाग इति नियमः । अन्ये तु मिलि-

आमवातविकारांश्च स्थौल्यञ्चैवापकर्षति।
पथ्यालोहरजः शुण्ठीचूर्णं माक्षिकसर्पिषा॥
परिणामरुजं हन्ति वातपित्तकफात्मिकाम्।
सामुद्रं सैन्धवं क्षारो रुचकं रौमकं विडम्॥
दन्ती लोहरजः किट्टं त्रिवृच्छूरणकं समम्।
दधिगोमूत्रपयसामन्तःपावकपाचितम्।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा॥
जीर्णे जीर्णे तु भुञ्जीत मांसादि घृतसाधितम्।
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत्॥
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवांस्तथा।
शूलानामपि सर्व्वेषामौषधं नास्ति तत्परम्॥
परिणामसमुत्थस्य विशेषेणान्तकृन्मतम्॥ ६॥

सप्तामृतं लौहम्।

नारिकेलं सतोयञ्च लवणेन प्रपूरितम्।
विपक्वमग्निना सम्यक् परिणामजशूलनुत्॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
मधुकं त्रिफलाचूर्णमयोरजः समं लिहन्॥
मधुसर्पियुतं सम्यक् गव्यं क्षीरं पिबेदनु।
छर्द्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम्॥

---

तत्र्यंचूर्णसमं लौहचूर्णमित्याहुः। पथ्येत्यादि पथ्यादीनां त्रयाणां प्रत्येकं समभागः। सामुद्रेत्यादि सामुद्रं करकचं रुचकं सौवर्च्चलं रौमकं रुमानदीभवं तदभावे शाकम्भरीलवणम्। लौहरजश्च मारितं पुटितं लौहचूर्णम्। किट्टञ्च गोमूत्रशोधितमण्डूरचूर्णम्। दधिगोमूत्रपयसेति दध्यादित्रयं मिलित्वा चतुर्गुणं मिलितचूर्णसमं वा सर्व्वं चूर्णमेकीकृत्य पक्तव्यं व्यवहारस्तु दध्यादिना चतुर्गुणेनैव॥ ६॥

नारिकेलमित्यादि। नारिकेलमिहसपक्वम्। मधुकमित्यादि।

यामाद्यं शूलसङ्घस्य प्रोद्यस्यैव निहन्ति सः।

गुड़पिप्पलघृतम्।

सपिप्पलीगुड़ं सर्पिः पचेत् क्षीरचतुर्गुणे।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्॥ ७॥

पिप्पलीघृतम्।

क्वाथेन कल्केन च पिप्पलीनां सिद्धं घृतं माक्षिकसंप्रयुक्तम्।
क्षीरानुपानस्य निहन्त्यवश्यं शूलं प्रवृद्धं परिणामसंज्ञम्।

कोलादिमण्डूरम्।

कोलाग्रन्थिकशृङ्गवेरचपलाक्षारैः समं चूर्णितम्।
मण्डूरं सुरभीजलेऽष्टगुणिते पक्त्वाथ सान्द्रीकृतम्॥
तं खादेद्घनादिमध्यविरतौ प्रायेण दुग्धान्नभुक्॥
जेतुं वातकफामयान् परिणतौ शूलञ्च शूलानि च॥ ८॥

भीमवटकमण्डूरम्।

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयवक्षारैः।
प्रथमयोरजसां पलिकांशैश्चूर्णितैर्मिश्रैः॥
अष्टगुणामूत्रयुक्तं क्रमपाकात् पिण्डतां नयेत् सर्व्वम्।
कोलप्रमाणगुड़िकास्ताभोज्यादिमध्यविरतौ च॥

---

मण्डूरचूर्णसमं लौहरजः। अन्ये त्वेकभागसमं लौहरजश्चाहुः
व्यवहारस्तु पूर्व्वेणैव। सपिप्पली गुड़मिति, पिप्पलीगुड़ौ कल्कौ॥ ७॥

क्वाथेत्यादौ। माक्षिकसंप्रयुक्तमिति सिद्धशीते मधुपादिकं प्रक्षे-
प्यम्। कोलेत्यादौ। कोला चवी, चपला पिप्पली, क्षारो यवक्षारः।
समं चूर्णितं मण्डूरमिति सर्व्वचूर्णसमं मण्डूरं सुरभीजले गोमूत्रे।
अष्टगुणितइति मण्डूरापेक्षया। आसन्नपाके कोलादिचूर्णं प्रक्षेप्यम्।
चूर्णितचूर्णापेक्षयाऽष्टगुणं गोमूत्रमित्याहुरन्ये। शूलं सान्निपातिकं
शूलानि चेति वातादिजानि॥ ८॥

भीमवटकमण्डूरे। कोलप्रमाणा इति त्रिमिताष्टमाषकमात्राः।

एतत्सर्पिर्यूपतयोम.ऽ रैरत्नरो निवारयति ।
अम्लविवत्तनशूलं गुल्मं प्लीहाग्निसादांश्च ॥

क्षीरमण्डूरम्।

लौहकिट्टपलान्यष्टौ गोमूत्राष्टाढ़के पचेत् ।
क्षीरप्रस्थेन तत्सिद्धं पक्तिशूलहरं नृणाम् ।

चविकादिमण्डूरम् ।

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चविकानागरक्षारपिप्पलीमूलपिप्पलीः ॥
चूर्ण्य नचिपेत्तस्मिन् प्रांशाः सान्द्रतां गते ।
गुडिकाः कल्पयेत्तेन पक्तिशूलनिवारिणीः ॥८॥
मण्डूरं शोधितं पक्वीं लौहजां वा गुडेन तु ।
भक्षयेन्मुच्यते शूलात् परिणामसमुद्भवात् ॥
संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ॥१०॥

शतावरीमण्डूरम् ।

शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ।
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः ॥
विपचेत सर्व्वमेकध्यं यावत् पिण्डत्वमागतम् ।
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोपि वा ॥
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ।
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः ॥ ११ ॥

---

तेनाष्टमाषकैरवेति । गिडो वटकाः कार्य्याः । व्यवहारस्तु भिषग्व्यापकैरिति । अत्रापि गृहस्याष्टगुणत्वं पूर्ववत् । अम्लविवत्तनशूलं परिणामशूलम् । क्षीरमण्डूरं स्पष्टम् । चविकादि मण्डूरम् । स्पष्टम् ॥ ८ ॥

मण्डूरेत्यादौ । लौहजा पक्वी अम्लपाकजादिप्राणमात्रलौहजा वा वालुकापुटादि शोधिता ग्राह्या ॥ १० ॥

## तारामण्डूरगुडः।

विडङ्गं चित्रकं चव्यं त्रिफलाव्योषणानि च।
नवभागानि चैतानि लौहकिट्टसमानि च॥
गोमूत्रं द्विगुणं दत्त्वा मात्रार्द्धिकगुडान्वितम्।
शनैर्मृद्वग्निना पक्वा सुसिद्धं पिण्डतां गतम्॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया।
प्राङ्मध्यादिक्रमेणैव भोजनस्य प्रयोजितः॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च॥
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति।
वर्ज्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च॥
पक्तिशूलान्तकोह्येष गुडो मण्डूरसंज्ञकः।
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः॥१२॥

## राममण्डूरम्।

षांशं श्वेतवाट्यालं मण्डूपर्णीमयूरकम्।
तण्डुलीयञ्च कषार्द्धं दत्त्वाधश्चोर्द्धमेव च॥

---

शतावरी मण्डूरे। अमृतोऽपिर्वेति वा शब्दः समुच्चये तेन भोज-
नान्ते भोजनमध्ये भोजनस्यादौ इति॥११॥

तारामण्डूरे। नवभागानि चैतानि विडङ्गादीनां प्रत्येकमेक-
कभागतया नवभागा ग्राह्याः इह व्यवहारात् ते चात्रपाके प्रक्षेप्याः।
लौहकिट्टसमानि चेति लौहकिट्टस्यापि नवभागत्वम्। गोमूत्रं द्विगुण-
मिति मिलितचूर्णात्। अत्र पक्तोल्लेखगतमानत्वात्तथैव व्यवहाराच्च
द्वैगुण्यम्। मात्रार्द्धिकगुडान्वितमिति सर्व्वचूर्णसमो गुडः। कोलमा-
त्रयेति अष्टमाषकमानेन॥१२॥

पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम् ।
अन्तर्वाष्पमदग्धञ्च तथास्थाप्यं दिनत्रयम् ॥
चिकूर्णं द्विगुणेनैव गुड़ेन सुविमर्द्दितम् ।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्षं त्रिभागतः ॥
तक्रानुपानं वर्ज्यञ्च वार्त्तमम्लकमत्र तु ।
अम्लपित्ते च शूले च हितमेतत् यथामृतम् ॥ १३ ।

रसमण्डूरम् ।

कुड़वं पथ्याचूर्णं द्विपलं गन्धाश्मलौहकिट्टञ्च ।
भृङ्गरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजस्य ॥
प्रस्थोन्मितञ्च दत्त्वा लौहे पात्रेऽथ दण्डसंघट्टम् ।
शुष्कं घृतमधुयुतं मर्दितं स्थाप्यञ्च भाण्डे स्निग्धे ॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान् ।
शूलं तथाम्लपित्तं ग्रहणीञ्च कमलामुग्राम् ॥ १४ ॥

---

वशिरमित्यादि। वशिरं सूर्य्यावर्त्तः, मधुपर्णी गुडूची, मयूरकोऽपामार्गः। पाक्यं सुजीर्णमण्डूरमिति गोमूत्रमल्पमल्पं दत्त्वा दिनत्रयं पक्तव्यं यथा मण्डूरं न दह्यते। गोमूत्रञ्चैकदा बहुतरं न देयं तथासत्युत्तानधारणं कर्त्तुमशक्यमिति। अवतार्य्य शरावेण पिधाय दिनत्रयं स्थाप्यं तदनुप्रक्षाल्य शोधयित्वा पाच्यं भक्ष्यं कर्षं त्रिभागत इति कर्षमेव भागत्रयं कृत्वा खाद्यं व्यवहारस्तु माषकचतुष्टयेन। वार्त्ताम्लमिति वदरीतिन्तिड़ीकादिकम्। रामकृतत्वाद्रामण्डूरम् ॥ १३ ॥

कुड़वमित्यादौ।— गन्धाश्मशोधितलौहमलञ्च प्रत्येकं द्विपलमित्यर्थः। रसगन्धकौ कज्जलीकृत्य हरीतकीमण्डूरचूर्णाभ्यां सहमिश्रीकृत्य भृङ्गराजस्वरसं केशराजस्वरसञ्च प्रत्येकं प्रस्थमानं दत्त्वा तावद्दृष्टव्यं लौहपात्रे लौहदण्डेनैव यावच्चूर्णप्रायं भवति ततः प्रथमतः रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां संमर्द्य लेह्यं क्षीरादिकमनुपेयम्। इत्यनन्तरं रक्तिद्वयं कृत्वा वृद्धिर्माषकद्वयं यावत् ॥ १४ ॥

त्रिफलालौहः।

अक्षामलकशिवानां स्वरसैश्च पक्वं सुलोहजचूर्णम्।
सगुडं यदुग्रदं भुङ्क्ते मुञ्चति त्रिदोषजं शूलम्॥ १५॥

लोहगुडिका।

लोहस्य रजसो भागास्त्रिफलायास्तथा त्रयः।
गुडस्याष्टौ तथा भागा गुडान्मूत्रं चतुर्गुणम्॥
एतत् सर्व्वञ्च विपचेद्गुडपाकविधानवित्।
लिह्याच्च तद्यथाशक्ति क्षये शूले च पाकजे॥ १६॥

धात्रीलौहम्।

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लोहचूर्णस्य।
यष्टीमधुकरजश्च द्विपलं दद्यादुपले दृढम्॥
अमृताक्वाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम्।
चण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम्॥
घृतमधुना सह युक्तं भुक्तादौ मध्यतोऽन्ते च।
त्रीनपि वारान् खादेत् पथ्यं दोषानुबन्धेन॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान्।
मध्येऽन्नविष्टम्भं जयति नृणां विदह्यते नान्नम्॥
पानान्नकृतान् दोषान् भुक्तान्ते शीलितं जयति।
एवं जीर्यति चान्ने शूलं नृणां सुकष्टमपि॥
हरति सहसा युक्तायोगश्चायं जरत्पित्तम्।

---

अक्षामलकेत्यादि।—स्वरसैरिति मिलित्वा चतुर्गुणैः प्रत्येकमित्यन्ये परेण व्यवहारः। स्वरसाभावे क्वाथः। सगुडमिति सम गुडम्। पाकस्यास्य मुद्रया तदुक्तं गुडादि प्रविशेद्यत्र तत्र पाकस्य मुद्रया। लौहान्तरवद्विधिरत्र॥ १५॥

लौहस्येत्यादि।—भागद्वयं कोभागः त्रिफलायास्त्रय इति मिलित्वा लिह्याच्च रक्तिचतुष्टयादिक्रमेणेत्याहुः॥ १६॥

चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवान् जयेद्रोगान्।
प्रसादयत्यपि रक्तं पाण्डुत्वं कामलां जयति॥ १७॥

लोहामृतम्।

तनूनि लोहपत्राणि तिलोत्सेधसमानि च।
कणिकामूलकल्केन संलिप्य सर्षपेण वा॥
विशोष्य सूर्य्यकिरणैः पुनरेवावलेपयेत्।
त्रिफलायाजले ध्मातं वापयेच्च पुनः पुनः॥
ततः संचूर्णितं कृत्वा कर्पटेन तु छानयेत्।
भक्षयेन्मधुसर्पिर्भ्यां यथाग्नेरतत्प्रयोजयेत्।
माषकं त्रिगुणं वाथ चतुर्गुणमथापि वा॥
छागस्य पयसः कुर्य्यादनुपानमभावतः।
गवां घृतेन दुग्धेन चतुःषष्टिगुणेन च॥
पक्तिशूलं निहन्त्येतन्मासेनैकेन निश्चितम्।
लोहामृतमिदं श्रेष्ठं ब्रह्मणा निर्म्मितं पुरा॥
ककारपूर्व्वकं यच्च यच्चाम्लं परिकीर्त्तितम्।
सेव्यं तन्न भवेदत्र मांसं चानुपसम्भवम्॥ १८॥

खण्डामलकी।

स्विन्नपीड़ितकुष्माण्डात्तुलार्द्धं भृष्टमाज्यतः।
प्रस्थार्द्धे खण्डतुल्यन्तु पचेदामलकीरसात्॥

---

धात्रीत्यादि।— अमृताकाथेनामलकीकाथेन। अन्ये त्वमृतां गुडूचीमाहुः। व्यवहारस्तु पूर्व्वेणैव। जरत्पित्तमम्लपित्तम्॥ १७॥

तनूनीत्यादि।— कणिकामूलकल्केन श्वेतार्कमूलकल्केन तथा श्वेतसर्षपकल्केन परिलिप्य चातपे संशोष्य ततो दग्ध्वा त्रिफलाकाथे निर्व्वापणं तावत् कार्य्यं यावत् सर्व्वं लोहस्य जारणम्। ततः प्रक्षाल्य संशोष्य चूर्णीकृत्य रक्ति वृद्ध्यादिक्रमेण न वायसादिवदस्योपयोगः। कणिच परिलिप्य पुनः पुनरिति पाठान्तरम्॥ १८॥

प्रस्थे सुखिन्नकुष्माण्डरसप्रस्थे विपाचयन्।
दर्व्याग्रा पाकं गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत्॥
द्वे द्वे पले कणाजाजीशुण्ठीनां मरिचस्य च।
पलं तालीशधन्याकचातुर्जातकमुस्तकम्॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च।
पक्तिशूलं निहन्त्येतद्दोषत्रयभवञ्च यत्॥
छर्द्यम्लपित्तमूर्च्छाश्च श्वासकासारोचकम्।
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत्॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम्॥ १८॥

नारिकेलखण्डः।

कुडवमितमिह स्यान्नारिकेलं सुपिष्टं
पलपरिमितसर्पिः पाचितं खण्डतुल्यम्।
निजपयसि तदेतत् प्रस्थमाने विपक्वं
गुडवदथ सुशीते शाणभागान् क्षिपेच्च॥

---

खण्डामलक्याम्।—खण्डतुल्यमिति खण्डस्य पञ्चाशत्पलानि। मरिचस्य पलमित्यन्वयः। तालीशादिकञ्च प्रत्येकं कर्षमानमित्यर्थः॥१८॥

कुडवमित्यादि।—अत्र केचिन्नारिकेलस्याद्रत्वेन द्वैगुण्य-मिच्छन्ति अतएवोक्तं—अष्टौ पलानि कुडवो नारिकेले तथैव च इति। ये च द्वैगुण्यमिच्छन्ति तेषामभिप्रायो नारिकेलस्याष्टपलत्वे खण्डस्या-प्यष्टपलत्वं खण्डतुल्यमिति वचनात्। अतश्चात्र नारिकेलोदकप्रस्थस्य द्रवत्वेनोपादानात् पाकस्य द्वैगुण्यं प्रवर्त्तत चतुर्गुणत्वं तु सर्गविदः किञ्च तन्त्रान्तरे—चातुर्गुण्यमुक्तं यथा कुडवं नारिकेलस्य श्लक्ष्णं दृषदि पेषितम्। शुद्धखण्डस्य कुडवं सर्व्वमेतच्चतुर्गुणे। आलोड्य नारि-केलस्य जले मृद्वग्निना पचेदिति। अस्मिन् वचने गवेराया अपि कुडवमुक्तं अत च न द्वैगुण्यम्। पाश्चात्यत्वञ्चेव न हिरण्यिता

धन्याकशिम्बीपयोदतुगाद्विजीरान्
भागं त्रिजातमिभकेशरवह्निचूर्णम् ।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तं
शूलं वमिं सकलपौरुषकारिहारि ॥ २० ॥
कलायचूर्णभागौ द्वौ लौहचूर्णस्य चापरः ।
कारवेल्लपलाशानां रसेनैव विमर्द्दितः ॥
कर्षमात्रां ततश्चैकां भक्षयेद्गुडिकां नरः ।
मण्डानुपानात् सा सा हन्ति नरत्पित्तं सुदारुणम् ॥
त्रिफलाद्वा त्रैफलं चूर्णमयश्चूर्णसमन्वितम् ।
यष्टीचूर्णेन वा युक्तं लिह्यात् क्षौद्रेण तद्गदे ॥
पित्तान्ते वमनं कृत्वा कफान्ते च विरेचनम् ॥ २१ ॥
अम्लद्रवे च तत् कार्य्यं जरत्पित्ते यदीरितम् ।
आमपक्वाशये शुद्धे गच्छेदम्लद्रवं शमम् ॥
माषेण्डरी सतुषिकाखिन्ना सर्पिर्युता हिता ।

---

ये चतुर्जातका इत्युक्तः। अत्र च खण्डतुल्यमिति पठ्यते। तथा च नारिकेलस्य शस्य कुड़वाद्वैगुण्येन परमनयोर्नारिकेलखण्डयोः समता स्यात्। नान्यथेति तेन द्वैगुण्याभावपक्ष एव साधुः। नारिकेलं तथैव चेति वाक्यं नादरणीयमित्याचार्य्यत्वेनाहुः। तुगा वंशलोचना नागकेशरसहितं त्रिजातं मिलित्वा भागमात्रं पुनः भागमित्युक्तः। पौरुषं शुक्रं हारि मनोहारि ॥ २० ॥

कलायेत्यादि।— कलायो वर्त्तुलकलायः, लौहचूर्णस्यापर इत्येकोभागः। पलाशानामिति पत्राणां, मण्डोयवमण्डः, जरत्पित्तमम्लपित्तम्। लिह्यादित्यादि।— मिलितत्रिफलाचूर्णस्य लौहचूर्णेन समत्वम्। अन्ये तु त्रिफलायाः प्रत्येकं लौहचूर्णसमत्वमाहुः। तद्गद इति जरत्पित्ते ॥ २१ ॥

पित्तान्तमित्यादौ।—अम्लद्रव इति, भुक्ते जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते स्वनामादिनोक्तः शूलविशेषः। माषेण्डरी वटविकेति सप्त-

गोधूममण्डकं तत्र सर्पिषा गुड़संयुतम् ॥
खचितं शीतदुग्धेन छर्दितं वा हृतं मतम्।
शालितण्डुलमण्डं वा कवोष्णं सिकथवर्जितम् ॥
वाट्यं क्षीरेण संसिद्धं घृतपूरं सशर्करम्।
शर्करां भक्षयित्वा वा क्षीरमुत्क्वथितं पिबेत् ॥
पटोलपत्रयूषेण खादेद्व्यञ्जकशाककान् ॥
अम्लद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः।
तस्मादत्रान्नपानानि मात्राहीनानि कल्पयेत्। २२ ॥
इति परिणामशूलचिकित्सा।

---

## अथोदावर्त्ताधिकारः।

त्रिवृत्सुधापत्रतिलादिशाकग्राम्यौदकानूपरसैर्यवान्नम्।
अन्यैश्च सृष्टानिलमूत्रविड्भिरश्नात् प्रसन्नागुड़सीधुपायी ॥

---

अथाधकृतमाषेण्डरो माषपिष्टकविकृतिर्भक्ष्यविशेषः। गोधूममण्डको गोधूमकृतो भक्ष्यविशेषः पश्चिमदेशे प्रसिद्धः। छर्दितं वा हृतं मतमिति छर्दितं संयावाकृतिर्लिङ्गः। वाट्यं यवमण्डम्। घृतपूरो भक्ष्यविशेषः। पटोलेत्यादौ।— यूषो मुद्गयोगात् किम्वा क्वाथः ॥ २२ ॥
इति परिणामशूलाधिकारः।

---

परिणामं विना भावसाधर्म्यात् शूलानन्तरमुदावर्त्तः। उदावर्त्ते हि सर्वत्र शूलवदवश्यम्भावी वायुः। यदुक्तं सुश्रुते—सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः। वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये इति। उक्तेनैव वेगविधारणेनाद्यस्य निरुद्धवायोरावर्त्तनमुदावर्त्त इति निरुक्तिरस्य। त्रिवृदित्यादि।— त्रिवृत्सुधयोः पत्रं आदिशब्दात् सप्तलादि पत्रपरिग्रहः। अन्यैरिति विशुमलाद्यनुलोमनैः क्षीरादिभिः। प्रसन्ना मदिराविशेषः गुड़कृतसीधु गुड़-

नाराचचूर्णम्।

खण्डपलं त्रिवृता समसुपकुल्याकर्षचूर्णितं श्लक्ष्णम्।
प्राग्भोजने च समधु विडालपदकं लिहेत् प्राज्ञः॥
एतद्गाढ़पुरीषे पित्ते कफे च विनियोज्यम्।
सुस्वादुर्न पयोज्योऽयं चूर्णो नाराचकोनाम्ना॥४॥
रसोनं मद्यसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनम्॥
हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्त्तिं सुनिर्म्मिताम्।
घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम्॥५॥
मदनं पिप्पली कुष्ठं वचा, गौराश्च सर्षपाः।
गुड़क्षारसमायुक्ता फलवर्त्तिः प्रशस्यते॥

---

हरीतक्यादौ।—पीलुनीति चूर्णं पीलुनीति पाठान्तरे पीलुनी चीरस्पर्शिफलं इदमेव युक्तं स्रंसकत्वात्।

हिङ्ग्वादि चूर्णस्य।—स्वर्जी स्वर्जिक्षारः। हिङ्ग्वादिभ्य-श्चोत्तरं द्विगुणम्॥२॥

नाराचचूर्णे। त्रिवृतासममिति त्रिवृच्चूर्णस्यापि पलं उपकुल्या पिप्पली प्राग्भोजन इति परिणामे भोजनविधाने वा॥४॥

रसोनमित्यादि।—मद्यपस्य योगः शूलाधिकारे पूर्व्वमुक्तोऽपि तथाप्युदावर्त्तेऽपि विहितत्वात् पुनरप्यत्र लिखितः।

हिङ्गुमाक्षिकेत्यादि।—हिङ्गु माषा। सैन्धवकर्षं। मधुश। एवं व्यवहाराद् गृहीत्वा पक्त्वा च फलवर्त्तिं कुर्य्यात्। हिङ्गुसैन्धवयोः वर्त्तिकरणोचितं मधु देयमित्यन्ये। गुड़पाकवदस्य पाकः तदैव वर्त्तिः कर्त्तव्या ततो घृतेनाभ्यज्य गुदे क्षिपेत्॥५॥

मदनमित्यादौ।—गुड़ोऽभिहितचूर्णसमः गुड़श्च मनाक् जलं दत्त्वा पक्त्वा च वर्त्तिं कुर्य्यादित्यर्थः।

आगारधूमेत्यादि।—आगारधूमोऽप्यत्र। चन्द्रक काञ्जि-

आगारधूमसिन्धूत्थतैलयुक्ताम्लमूलकम्।
चूर्णं निर्गुण्डिपत्रं वा स्विन्ने पायौ विद्बुधः॥ १॥
सौवर्च्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत्।
एलां वाप्यथ मद्येन क्षीरवारि पिबेच्च सः॥
दुःस्पर्शस्वरसं वापि कषायं ककुभस्य च।
एर्व्वारुबीजं तोयेन पिबेद्वा लवणीकृतम्॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा।
सर्व्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम्॥
स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत्।
अश्रुमोक्षोऽश्रुजे कार्य्यः स्वप्नो मद्यं प्रियाः कथाः॥

---

कमूलकं सिक्थकमिति आगारधूमकाञ्जिकसिक्थकमङ्गुष्ठनिभं मधु विधाय सैन्धवतैलैर्व्वर्च्चितं स्विन्ने गुदे प्रक्षेप्तव्यम्। निर्गुण्डी सिन्धुवारः। तत्पत्रमपि चूर्णीकृत्य आगारधूमादिक्षिप्तं स्विन्ने गुदे निक्षेप्यम्॥ १॥

सौवर्च्चलेत्यादि सुश्रुतस्य।— अत्र सिन्धूत्थजरणाद्यास्तु शाणिका चव्यादिपदेन संगृहीतत्वात् सौवर्च्चलस्य माषकचतुष्टयं मदिरा चाहारद्रव्यत्वात् प्रचुरा ग्राह्या। व्यवहारस्तु मदिरा पलद्वयेन। एलां वाप्यथ मद्येनेति एला चूर्णस्याष्टौ माषकाः मद्यस्य पलद्वयमित्याहुः। क्षीरवारीति समक्षीरेण मिश्रितं वारीत्यर्थः।

दुःस्पर्शेत्यादि सुश्रुतस्य।— दुःस्पर्शा दुरालभा दुःस्पर्शास्वरसमिति पाठे दुःस्पर्शा कण्टकारीत्यन्ये। ककुभोऽर्ज्जुनः। एर्व्वारुः ग्रीष्मभवा कर्कटीतुल्यनः लावणीकृतमिति सैन्धवयोगादीषल्लवणीकृतमिति। एतच्च एर्व्वारुबीजमित्यनेनैव सम्बध्यते न तु पूर्व्वेण।

पञ्चमूलीति।— पञ्चमूली लघुपञ्चमूली समानतन्त्रभोजनसम्बादात् यथा लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नर इति। श्रीकण्ठदत्तस्तु तृणपञ्चमूलीत्याह। सर्व्वथैव कार्त्स्न्येन सुश्रुतेऽपि निरवशेष इत्युक्तम्। जृम्भजमिति जृम्भवेगविघातजं एवमुत्तरत्रापि। अश्रुमोक्षोऽश्रुनिःसरणं बहु ताडनाञ्जनादिना। स्वप्नश्चेति द्राक्षापलं च।— कार्य्यम-

क्षवजे क्षवपत्या घ्राणस्थे नानयेत् क्षवम्।
तथोर्द्ध्वजत्रुगोऽभ्यङ्गः स्वेदो धूमः सनावनः॥
हितं वातघ्नमाद्यञ्च घृतञ्चौत्तरभक्तिकम्॥
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत्॥ ७॥
छर्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत्।
भुक्त्वा प्रच्छर्द्दनं धूमो लङ्घनं रक्तमोक्षणम्॥
रूक्षान्नपाने व्यायामो विरेकश्चात्र शस्यते॥ ८॥
वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः।
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः॥
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम्।
अत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः॥
शालिः पयो निरूहाश्च शस्तं मैथुनमेव च।
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भेषजः॥
तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम्।
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरा नरः॥ ९॥

---

जत्रुगोऽभ्यङ्ग इति ऊर्द्ध्वजत्रुदेशगतोऽभ्यङ्गः कार्य्यः। आद्यं भक्ष्यम्। क्रमोपेतमिति स्नैहिकधूमपानोक्तक्रमयुक्तम्॥ ७॥

छर्द्याघातमित्यादि।— छर्द्दिवेगविघातजं कुष्ठविसर्पादिकं कार्य्यकारणयोरभेदोपचारात् एवं क्षुद्विघात इत्याद्यपि व्याख्येयम्। यथादोषमिति यत्रानुदोषदूष्यकृद्दोषः छर्द्दिविघातजरोगे जातस्तद्विपरीतनस्यादिभिर्जयेदित्यर्थः॥ ८॥

वस्तिशुद्धिकरावापमित्यादि।— वस्तिशुद्धिकराणीह तृणपञ्चमूलगोक्षुरतरादीनि आवाप इति क्षीरसाधनार्थं कल्कः। रमयेयुः मैथुने योजयेयुः अवगाहो वातपित्तहरद्रव्यक्वाथे कोष्णे। चरणायुधाः कुक्कुटाः। निरूहाश्चेति उत्तरवस्तिश्चेति चकारात्। सुविश्रान्त इति विरतक्रियः॥ ९॥

निद्राघाते पिबेत् क्षीरं स्वप्नः संवाहनानि च ॥ १० ॥
उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम् ।
द्विरुत्तरा हिङ्गुवचा सकुष्ठा सुवर्च्चिका चेति विडङ्गचूर्णम् ।
सुखाम्बुनानाहविसूचिकार्त्तिहृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥
वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान् ।
उष्णाम्बुनानाहविमूढवाताः पीत्वा जयेदाशु हितौदनाशी ॥ ११ ॥
त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् ।
वटिकामूत्रपीतास्ताः श्रेष्ठा चानाहभेदिकाः ॥ १२ ॥
फलञ्च मूलञ्च विरेचनोक्तं हिङ्ग्वर्कमूलं दशमूलमग्र्यम् ।
स्नुक्चित्रकौ चैव पुनर्नवा च तुल्यानि सर्वैर्लवणानि पञ्च ।
स्नेहैः समूत्रैः सह जर्जराणि शरावसन्धौ विपचेत् सुलिप्ते ॥
पक्वं सुपिष्टं लवणं तदन्नैः पानैस्तथानाहरुजाघ्नमग्र्यम् ॥ १३ ॥
राठधूमविडव्योषगुडमूत्रैर्विपाचिता ।
गुदेऽङ्गुष्ठसमा वर्त्तिर्विधेयानाहशूलनुत् ॥ १४ ॥

---

निद्राघातेत्यादौ ।—क्षीरमिह माहिषं निद्राकरत्वादित्याहुः । अन्ये तु प्रधानकल्पतया गोक्षीरं अतएव तन्त्रान्तरं— निद्राघाते पिबेत् क्षीरं गोः सुप्यादथ मानव इति ॥ १० ॥

आनाहचिकित्सामाह उदावर्त्तेत्यादि । द्विरुत्तरा इत्यादि ।—यथोत्तरद्विगुणा इत्यर्थः । सुखाम्बुनेत्यनन्तरं पीतमिति शेषः ॥ ११ ॥

त्रिवृदित्यादि ।— त्रिवृदित्यरुणमूला त्रिवृत् श्यामा श्याममूला त्रिवृत् । वटिकेयं माधवदृष्टेन व्यवहृता । योगोयमतिक्रूरकोष्ठे ॥ १२ ॥

फलञ्चेत्यादौ ।— विरेचनोक्तमिति दीर्घञ्जीवितीयेऽपामार्गतण्डुलीये वा विरेचनकल्पे वा विरेचनकर्म्मणि यदुक्तम् । हिङ्गुस्थाने हिंस्रेति पाठान्तरम् । शरावसन्धाविति । अन्तःस्थकरजस्याधोश-रावसन्धावित्यर्थः । विपचेदिति दहेत् । पक्वमिति दग्धं अपक्वमिति शेषम् ॥ १२ ॥

वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः।
मधुनि गुडे वा पक्वा पायौ धृता चाङ्गुष्ठपरिमाणा॥
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता घृताभ्यक्ता।
आनाहोदावर्त्तप्रशमनी जठरगुल्मनिवारिणी॥१५॥

मुष्ककमूलाद्यं घृतम्।

मूलकं मुष्ककाद्रं च वर्षाभूपञ्चमूलकम्।
आरेवतफलञ्चापि पिष्ट्वा तेन पचेद्घृतम्।
तत्पीयमानं शमयेदुदावर्त्तं सुदारुणम्॥१६॥

स्थिराद्यं घृतम्।

स्थिरादिवर्गस्य पुन-
र्नवायाः शम्याकपूतीकरञ्जयोश्च।
सिद्धः कषाये द्विपलांशिकानां
प्रस्थो घृतात् स्यात् प्रतिरुद्धवाते॥१७॥

इति उदावर्त्तचिकित्सा।

---

राठेत्यादि।— राठो मदनफलं धूमो गृहधूमः। यावता गुडेन चूर्णेन च पाकाद्वर्त्तिं कर्त्तुं शक्यते तावद्गुडं देयमिति॥१४॥

वर्त्तिरित्यादि।—मिलित्वा त्रिकट्वादीनां कर्षं १। मधुपलं १। गुडकर्षं १। इत्यन्ये। युक्त्या त्रिकट्वादिकं गृहीत्वा वर्त्तिः कर्त्तव्येत्यन्ये। गुडे वेति वा शब्दोऽपि पूर्वयोगापेक्षया समुच्चये वा द्रष्टव्यः॥१५॥

मूलकमित्यादि सुश्रुतस्य।— मुष्ककमिति मूलकविशेषणम्। आर्द्रमित्यार्द्रकमन्यः। चक्रस्तु मुष्कमिति मूलकार्द्रकयोर्विशेषणमाह। पञ्चमूलकमिति बिल्वादिपञ्चमूलं कफवातहन्तृत्वादिति केचित्। स्वल्पपञ्चमूलमिति भानुमती। आरेवतफलं आरग्वधस्य फलम्। मूलकमिदं घृतम्॥१६॥

स्थिरादीत्यादि।—स्थिरादिवर्गस्य शालपर्ण्यादिपञ्चमूलस्य।

## अथ गुल्माधिकारः।

यदन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम्।
वृंहणं यद्भवेत् सर्वं तद्धितं सर्वगुल्मिनाम्॥
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये।
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्वणम्॥
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति।
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक्॥
उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः।
स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः॥
स्वेदानुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम्॥१॥
पेया वातहरैः सिद्धाः कौलत्था धन्वजा रसाः।
खडाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः॥२॥

---

पाकः स्रोतसां पाकः। द्रवत्ववचनात्। पूतिकेति करञ्जफलविशेषस्य तेन डाढाकरञ्ज इत्यर्थः॥१०॥

इत्युदावर्त्ताधिकारः।

---

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्मः। कुम्भीत्यादि स्फुटार्थः।— वातहरक्वाथादिभिः पूर्णाभिरल्पमुखीभिः कुम्भीभिः स्वेदनम्। तथा उत्स्विन्नमाषादिपिण्डकैश्च स्वल्पैः स्वेदः। इष्टकया तप्तया वातहरक्वाथसिक्तया स्वेदः। शाल्वणादय इत्यादि गणेन वेशवारादिपरिग्रहः। स्थानावसेको रक्तस्येति। स्थिरगुल्मे गुल्मस्थानाद्रक्तावसेकः। बाहुमध्ये शिराव्यध इति बाहोरधस्तात् स्वल्पशिराव्यधो न तु मध्येन दा महती तस्या मर्म्मत्वात्। शिराव्यधश्च यस्मिन् पार्श्वे गुल्मस्तत्पार्श्वस्थबाहौ कार्य्यः। विविदोषचिकित्सया गुल्मस्थापनं स्वेदादिना च शोणितदुष्टौ सत्यां बोध्यः। केचि-दादिकङ्कादि पद्यं श्लोकानुरोधादेवोक्तम्॥१॥

आहारविधिमाह पेयेत्यादि।— वातहरैः पञ्चमूलादिभिः।

मातुलुङ्गरसो हिङ्गु दाडिमं विड्सैन्धवम् ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ३ ॥
नागरार्द्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च ।
तिलस्यैकं गुडपलं क्षीरेणोष्णेन पाययेत् ॥
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत् ॥ ४ ॥
पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ ५ ॥
साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलम् ।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत् ।

---

पञ्चमूलस्येह बृहत्पञ्चमूलं उष्णवीर्यतया विशेषेण वातहरत्वात् ॥ २ ॥

मातुलुङ्गेत्यादि ।—मातुलुङ्गरसादिकं द्रवीकृत्य सुरामण्डः पेयः । सुरामण्डस्याहारद्रव्यतया प्रमाणं प्राह्यः न च चूर्णाच्चतुर्गुणः । एवमन्यत्रापि सुरया भेषजपाने ज्ञेयम् ॥ ३ ॥

नागरेत्यादौ ।—लुञ्चितस्येति निस्तुषीकृतस्येति । अत्र भूरिमात्रौषधोपयोगो व्याधिमहत्त्वेन भवतीति ज्ञेयम् । वाग्भटे पुनरेतदर्द्धमानेनायं योगः पठ्यते । यथा—शुण्ठ्याः कर्षं गुडस्य द्वौ तैलात् कृष्णतिलात् पलम् । खादेदेकत्र सञ्चूर्ण्य कोष्णक्षीरानुपो-जयेदिति । अन्ये तु नागरार्द्धपलमिति पुरुषस्य बलाबलं बुद्ध्वा, हीनपुरुषे तु तृतीयभागेन कर्त्तव्यम् ॥ ४ ॥

पिबेदित्यादि ।—योगद्वयं पूर्वयोगः कफानुबन्धवायौ द्वितीयस्तु पित्तानुगे । उक्तं हि चरके—पूर्वं कफानुबन्धे च हितं पित्तानुगेऽपरमिति । पूर्वमिति वारुणीसंयुक्तमेरण्डतैलम् । परमिति पयःसंयुतमेरण्डतैलम् ॥ ५ ॥

साधयेदित्यादि ।—निस्तुषतया शुद्धः आपूर्णवीर्यतया च शुष्क इत्यर्थः । क्षीरोदकेऽष्टगुणित इति क्षीरोदकयोश्च समासकरणात् मिलित्वाऽष्टगुणत्वं प्रत्येकं भागानुक्तेश्च समत्वमिति । तेन रसोनचतुःपलापेक्षया क्षीरनीरयोः प्रत्येकं चातुर्गुण्यान्मिलित्वा द्वात्रिंशत्पलानि स्युः । अनयोश्च द्रवत्वेऽपि न द्वैगुण्यं पलोल्लेखनत्वमानत्वविधानात् ।

काकोल्यादिमहातिक्तवासाद्यैः पित्तगुल्मिनम्।
स्नेहितं स्रंसयेत् पश्चाद् योजयेद्वस्तिकर्म्मणा॥ ८॥
स्निग्धोष्णजे पित्तगुल्मे कम्पिल्लं मधुना लिहेत्।
रेचनार्थी रसं वापि द्राक्षायाः सगुड़ं पिबेत्॥
दाहशूलार्त्तिसंक्षोभस्वप्ननाशारुचिज्वरैः।
विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत्॥
पक्के तु व्रणवत् कार्य्यं व्यधशोधनरोपणम्।
स्वयमूर्द्ध्वमधो वापि स चेद्दोषः प्रपद्यते॥
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान्।
परन्तु शोधनं सर्पिः युक्तं समधु तिक्तकम्॥ ९॥

---

वासाद्यघृतं रक्तपित्तोक्तं स्रंसयेदिति विरेचयेत्। वस्तिकर्म्मणेत्यनुवासननिरूहाभ्याम्॥ ८॥

स्निग्धोष्णजइत्यादौ।—कम्पिल्लं गुण्डारोचनी। विदह्यमानमिति पच्यमानम्। उपनाहयेदिति व्रणशोथोक्तपाचनपिण्डैः प्रलेपयेत्। यथा जलावरुद्धो वायुरेव बुद्बुदरूपो भवति तथा कफपित्तावरुद्धो वायुरेव कुण्डलीभूतो गुल्म इत्यर्थः। एतेन दोषमात्राश्रयित्वे गुल्मे मांसशोणितयोः पाकाश्रययोरभावादपाकित्वमुक्तम्। गुल्मोयद्यपि दोषमात्राश्रय एव तथापि यदा कारणवशादाश्रयं मांसादिकमासाद्य कृतवास्तुपरिग्रहो भवति वातोपशमनार्थं कृतस्वेदादिभिर्वा दुष्टं रक्तं सहकारी लभते तदा गुल्मस्यापि पाकः। अकृतवास्तुपरिग्रहस्तु दोषमात्राश्रयत्वान्न पच्यत इति चरकेणाप्यनुमत एवेति। अन्ये तु भेदः पुनरियं विद्रधिगुल्मयोः विद्रधिरचिरकाल पाकश्चिरपाकश्च गुल्म इति। अन्ये तु वातिक एव गुल्मो न पच्यते वातोरभावादस्थिरत्वाच्च। अतएव माधवकरोऽप्याह प्रायो न पच्यते गुल्मो वातजस्तु विशेषतः। रक्तपित्तादिदुष्टत्वात् पच्यतेऽन्यो यदृच्छयेति। स्वयमित्यादि स्वयमेवात्मभिन्ने सति दोषः यद्यूर्द्ध्वमधो वा गच्छति तदा द्वादशाहमुपेक्षेत न शोधनरोपणा-

रोहिणी कटुका निम्बं मधुकं त्रिफलात्वचः।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतापले ॥
द्विपलञ्च मसूराणां साध्यमष्टगुणेऽम्भसि।
घृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम् ॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः।
ज्वरस्तृष्णा च शूलञ्च भ्रममूर्च्छारतिस्तथा ॥
दीप्ताग्नयो महाकायाः स्नेहसात्म्याश्च ये नराः।
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ॥
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः।
बह्वनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ॥ १० ॥
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना।
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ॥
सोत्क्लेशा चारुचिर्यस्य स गुल्मो वमनोपगः।

---

दिकं कुर्यात्। उपद्रवान् ज्वरादीन् उपद्रवेभ्यो ज्वरादिभ्यश्चावरं रक्षन्नित्यर्थः। परन्तु शोधनमिति द्वादशाहात् परं शोधन द्रव्य-हितं घृतं पेयम्। शुद्धे समधु तिक्तकमिति शुद्धे सति तिक्तद्रव्यसा-धितं घृतं समधु मधुसहितं देयं रोपणार्थमिति शेषः ॥ ८ ॥

रोहिणीत्यादि।— रोहिणी कटुका कटुरोहिणी। त्रिफलात्वच इति निरस्थि त्रिफलाः। एते त्रायमाणान्ताः प्रत्येकं कर्षांशाः। पटोलत्रिवृतापले इति द्विवचनात् प्रत्येकं पलमेकम्। अष्टगुणे घृता-दिति योज्यं घृतं चतुःपलमेवोक्तं तेन घृतेन संमूर्च्छितमेकीकृतं एतेन क्वाथघृताभ्यां मिलिताष्टौ पलानि। इयञ्चमात्रा व्याधिनिर्देशा न दोषावस्थेति एतदेवाह दीप्ताग्नय इत्यादि ॥ १० ॥

बह्वनेत्यादौ।—घृतं सक्षारकटुकमिति यवक्षारत्रिकटुकल्क-साधितमित्यर्थः। वमनोपग इति वमनेनोपगम्यते उपचर्यते यः स वमनोपगः। पूर्वं वातिक इति तत्र एतावस्थायां वमनयुक्तं इह तु कफगुल्म एवेति न पौनरुक्तम्। मूढ़ इत्यादि। स्निग्धादव-

मन्देऽग्नावनिले मूढ़े ज्ञात्वा सस्नेहमाशयम्॥
गुड़िकाश्चूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम्।
क्षाराऽरिष्टगणाश्चापि दाहः शेषे विधीयते॥
पञ्चमूलीकृतं तोयं पुराणं वारुणीरसम्।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा॥ ११॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य वा।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक्॥
यमानीचूर्णितं तक्रं विड़ेन लवणीकृतम्।
पिबेत् सन्दीपनं वातमूत्रवर्च्चोऽनुलोमनम्॥
व्यामिश्रदोषे व्यामिश्रः सर्व्व एव क्रियाक्रमः।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः॥ १२॥
वचा विड़ाभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः।
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशिकाः क्रमात्॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम्।
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम्॥ १३॥

---

इहैवोक्ताः क्षारारिष्टगणा इति प्रतिसारणीयक्षारस्यानुपयुक्ततया पक्व-क्षार एव तदभिधानं ज्ञेयम्। पानीयक्षारश्चात्रापि ग्रहण्यध्यायोक्ता-श्चानुसर्त्तव्याः। अरिष्टाश्च ग्रहण्यर्शश्चिकित्सितोक्ताः। उक्तं हि यथैव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम्। अरिष्टयोगाः सिद्धाश्च ग्रह-ण्यर्शश्चिकित्सित इति। दाहस्तु शरलौहादिभिः। उक्तं हि तस्य दाहकृते रक्ते शरलौहादिभिर्हितमिति। दाहः शेष इति दाहस्य दारुणत्वात् क्रियान्तरासिद्धौ शेष एव कर्त्तव्यता युक्ता।

पञ्चमूल्येत्यादि। पञ्चमूली महती कफप्रत्यनीकत्वात्। माध्वीकं मधु॥ ११॥

स्वेदमाह तिलेत्यादि। — गुल्ममयमिति गुल्मस्थानम्। त्रिदोषघ्नो विधिरिति दशाद्युक्तयोगा एकीकृत्य योज्याः प्रकृतिसमसमवेतत्वात् विकृतिविषमसमवेतत्वं चरकेऽप्यभ्यधायि॥ १२॥

यमानीहिङ्गुसिन्धूत्थक्षारसौवर्च्चलाभयाः ।
सुरामण्डेन दातव्या गुल्मशूलनिवारणाः ॥ १४ ॥

हिङ्ग्वाद्यं चूर्णम् ।

हिङ्गु त्रिकटुकं पाठां हवुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिड़ीकाम्लवेतसौ ॥
दाड़िमं पौष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्डामयेऽरुचौ ।
उरोविबन्धे हिक्कायां श्वासे कासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुड़िकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥ १५ ॥

---

वचेत्यादौ ।— अभया हरीतकी, धर्म्मांशुतरुः, दीप्यकोऽ-
मानी, आदिशब्दादुष्णोदकादीनां ग्रहणम् ॥ १३ ॥

यमानीत्यादौ ।— क्षारो यवक्षारः । योगोऽयमुष्णाम्बुना प्रचरति
॥ १४ ॥

हिङ्ग्वादिचूर्णे ।— अजमोदा यमानी, अजगन्धा श्वेतयमानी,
तिन्तिड़ीकं महार्द्रकं द्वौ क्षारौ यवक्षारसर्जिकाक्षारौ लवणे द्वे
सैन्धवसौवर्च्चले । प्राग्भुक्तमिति भोजनस्य प्राक् परिणामे भोजना-
व्यवहितपूर्व्वकाले वा । प्रकारान्तरमाह भावितमित्यादि बहुश इति
सप्ताहं मातुलुङ्गरसेन मर्द्दनान्यातपे भाव्यं तदनुवाटमात्रमिता
वटिकाः कार्य्याः । एकां खादित्वा तप्तजलाद्यनुपेयमिति कार्म्मुकाः
कर्म्मकारकाः ॥ १५ ॥

पूतिकपत्रगजचिर्भटिचव्यवह्नि-
व्योषञ्च संस्तरचितं लवणोपधानम्।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं
प्रयोज्यं गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥ १६ ॥
हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकीम्।
श्यामाविडं सैन्धवञ्च यवक्षारं महौषधम् ॥
यवक्वाथोदकेनैतद्घृतभृष्टन्तु पाययेत्।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥ ॥ १७ ॥
पथ्याहरीतकीहिङ्गुसैन्धवसाम्लवेतसम्।
यवक्षारं समांशञ्च पिबेदुष्णेन वारिणा ॥

---

पूतीकपत्रेत्यादि।— पूतीकः लाटाकरञ्जः, गजचिर्भटी गोरक्षकर्कटी, वह्निश्चित्रकः, संस्तरचितमिति संस्तररूपतया विहितम्। लवणोपधानं सैन्धवगर्भम्। सैन्धवं पूतीकपत्रादिभिः समं ग्राह्यम्। पूतीकपत्रादि संस्तरे सैन्धवं दत्त्वा तदुपरि पुनः पूतीकपत्रादिकं विन्यस्य अन्तर्धूमं दग्धव्यम् ॥ १६ ॥

हिङ्ग्वित्यादौ।— तुम्बुरु स्वनामख्यातं श्यामा त्रिवृत्। हिङ्गुप्रभृतीनां चूर्णं प्रभूतं कृत्वा स्वस्थं ततो योग्यां मात्रां गृहीत्वा यवक्वाथे भावयित्वा घृते परिभर्ज्य पाययेदित्यर्थः। यवक्वाथोदकेन यवक्वाथेनोष्णोदकेनेत्यर्थः। अस्मिन् प्रयोगे हि वैद्यप्रसारके उष्णोदकमेरण्डतैलाधिकं पठितम्। तद्यथा उष्णोदकेन पातव्यमेतत् सघृततैलकमिति। अन्ये तु उदकशब्दोऽयं द्रववचनः तेन यवक्वाथरूपेण द्रवेणेत्याहुः। यवक्षारोदकं पाठान्तरमसङ्गतं वृद्धवाग्भटे यवक्वाथस्योक्तत्वात्। भिद्यते विलीयते न तु पाकं सन् भेदं गच्छति। सपरिग्रह इति वास्तुपरिग्रहसहितः सोपद्रव इति वा ॥ १७ ॥

पथ्येत्यादि हारीतस्य।— इमं योगं भोजनादिमध्यावसानेष्वपि

एतद्धि गुल्मं निचयं सम्मूलं सपरिग्रहम्।
भिनत्ति सम्प्रयातेषा वह्नेर्दीप्तिं करोति च॥१८॥
पिप्पलीपिप्पलीमूलचव्यकाजाजीसैन्धवैः।
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम्॥१९॥

हिङ्ग्वादि।

नादेयीकटुजार्कशिग्रुबृहतीस्नुग्बिल्वभल्लातकव्याघ्री।
किंशुकपारिभद्रकजटापामार्गनीपाग्निकम्॥
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितम्।
हिङ्ग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु॥
हिङ्गुग्रगन्धाविडशुण्ठ्यजाजीहरीतकीपुष्करमूलकुष्ठम्।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविसूचिकासु॥२०॥

---

कारकत्वादिति निश्चलः। तत्र हारीते हि पाठ्यते योगराजेन क्षिप्रप्रयुक्तेन योगेन गुल्मेनोक्तं न तु भोजनादिमध्यावसानेष्वपीति॥१८॥

पिप्पलीत्यादि।—अयं योगो वातगुल्मे प्रणिधेयः॥१९॥

नादेयीत्यादि।—नादेयी भूमिजम्बुका व्याघ्री कण्टकारी किंशुकः पलाशः पारिभद्रकजटा पारिभद्रमूलं अग्निकं चित्रकं सलवणाः सैन्धवाः लवणा ज्योतिष्मतीत्येके। नादेयीप्रभृतीन् दग्ध्वा क्षारः कार्यः। अस्माढ़कं पलगतं वा पानीयक्षारविधिना चतुर्गुणे षड्गुणे वा उदके पक्त्वा चतुर्भागावशेषे कल्कमपनीय एकविंशतिवारान् परिस्राव्य स्थापयेत्। अस्य कर्षमर्द्धपलं वा हिङ्ग्वादिचूर्णपादिकं दत्त्वा मांसघृतक्षीराणामन्यतमेषु प्रक्षिप्य पिबेत् मांसरसादिभिश्च भोक्तव्यं भोजोरक्षणार्थम्। अन्ये त्वाहुः एकदा विपच्य स्थापिते क्षारोदकेऽम्लत्वादिदोषशङ्का स्यात् अतः क्षाराद्यमेव चापेक्षया पलादिपरिमितं क्षारं गृहीत्वा प्रत्यहमन्तरोक्तकार्यविधिना क्षारोदकं कार्यमिति हिङ्ग्वादिप्रतिवापमिति हिङ्ग्वादेः पादिकस्य प्रतिवापः प्रक्षेपो यत्र तत्तथा। एतदिति क्वाथक्षारजलं यस्य तत्त्वस्यायं प्रयोगस्तथोक्त हिङ्ग्वाद्यं परिहानाद् वक्ष्यमाणहिङ्ग्वादिस्वनन्तरं पाठवत्वात् सम्प्रदुक्कारस्याभिमतो लक्ष्यते।

त्रिफलाकाञ्चनक्षीरीसप्तलानीलिनीवचा।
त्रायन्तीहपुषातिक्ताभिवृत् सैन्धवपिप्पलीम्॥
पिबेत् सञ्चूर्ण्य मूत्रेण मांसरसादिभिः।
सर्व्वगुल्मोदरश्वित्रकुष्ठार्शःशोथहेदितः॥ २१॥

काङ्कायनगुड़िका।

शटीपुष्करमूलञ्च दन्तीं चित्रकमाढ़कीम्।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत्॥
त्रिवृतायाः पलञ्चैव कुर्यात् भागिश्च हिङ्गुनः।
यवक्षारपले द्वे च द्वे पले चाम्लवेतसात्॥
यमान्यजाजी मरिचं धान्यकञ्चेति कार्षिकम्।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि॥
मातुलुङ्गरसेनैव गुड़िकाः कारयेद्भिषक्।
तासामेकां पिबेद्द्वे च तिस्रो वापि सुखाम्बुना॥
अम्लैश्च मद्यैर्यूषैश्च घृतेन पयसाथवा।
एषा काङ्कायनेनोक्ता गुड़िका गुल्मनाशिनी॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम्॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम्।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम्॥
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत्॥ २२॥

---

हिङ्ग्वादौ।— उग्रगन्धा वचा भागोत्तरमुत्तरोत्तरमेकभागवृद्धिः। उष्णाम्बु नाम्न-पानमुपदिशन्ति॥ २०॥

त्रिफलेत्यादौ।— काञ्चनक्षीर्य्या अभावे कङ्कुष्ठमाहुः। सप्तला चर्म्मकषा नीलिनी नीलवृक्षः। विरेकार्थोऽयं योगः॥ २१॥

शटीत्यादि।— यमान्यादीनां प्रत्येकं कर्षः उपकुञ्ची क्षणजीरकं अजमोदा यमानी अनयोः प्रत्येकं अष्टमिकामर्द्धपलमित्यर्थः॥ २२॥

हपुषाद्यं घृतम्।

हपुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम्॥
सकोलमूलकरसं सक्षीरं दधि दाडिमम्।
तत्परं वातगुल्मघ्नं शूलानाहविबन्धनुत्॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरम्।
पार्श्वहृद्वस्तिशूलघ्नं घृतमेतद्व्यपोहति॥२३॥

पञ्चपलकं घृतम्।

पिप्पल्याः पिचुरध्यर्द्धो दाडिमाद्द्विपलं पलम्।
धान्यात् पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम्॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरान्॥२४॥

त्र्यूषणाद्यं घृतम्।

त्र्यूषणत्रिफलाधान्यविडङ्गचव्यचित्रकैः।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत्॥२५॥

---

हपुषेत्यादि।— हपुषा स्वनामख्याता पृथ्वीका कृष्णजीरकं हिङ्गुपत्रिकेत्यन्ये दीप्यको यमानी। सकोलमूलकरसमिति कोलं शुष्कबदरं तस्य क्वाथः मूलकस्यापि शुष्कस्य क्वाथः। न पुनर्नवद्रव्यस्य स्वरसः तस्य तु गुल्मे निषिद्धत्वात्। दाडिमस्याप्यम्लस्वरसः द्रवसाहचर्यात्। विश्वामित्रेणापि दाडिमरसः पठितः। एवं पञ्चभिर्द्रवैः प्रत्येकं स्नेहसमैः पाकः॥२१॥

पिप्पल्या इत्यादि।— पिचुरध्यर्द्धं इति सार्द्धकर्षः। पलं धान्यादिति बोद्धव्यम्। पञ्चघृतादिति पञ्चपलानीत्यर्थः। क्षीरं चतुर्गुणमिति घृतपञ्चपलापेक्षया विंशतिपलानि क्षीरस्येत्यर्थः॥२४॥

त्र्यूषणादिघृतं सक्षीरमिति।— चतुर्गुणक्षीरसहितं द्रवान्तराभावात्॥२५॥

त्रायमाणाद्यं घृतम्।

जले दशगुणे साध्यं त्रायमाणाचतुःपलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः॥
रोहिणीकटुकामुस्तात्रायमाणादुरालभाः।
कल्कैस्तामलकीवीरा जीवन्तीचन्दनोत्पलैः॥
रसस्यामलकीनाञ्च क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत्॥
पित्तगुल्मं रक्तगुल्मं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतद्घृतोत्तमम्॥
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते।
चत्वारिंशत्पलं तेन तोयं दशगुणं भवेत्॥२१॥

द्राक्षाद्यं घृतम्।

द्राक्षामधुकखर्ज्जूरं विदारीं सशतावरीम्।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम्॥
जलाढ़के पादशेषे रसमामलकस्य च।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम्॥
साधयेत्तु घृतं सिद्धं शर्कराक्षौद्रपादिकम्।

---

जलइत्यादौ पञ्चभागस्थितमिति पञ्चभागावशिष्टं तेन त्राय-माणादौ पलानीत्यर्थः। कल्कैरित्यत्राव्यवहितैरामलक्यादिभिः सम्ब-ध्यते न केवलमेतैः कल्कः कटुरोहिण्यादयश्च कल्का इति योजना। वीरा क्षीरकाकोली। पलोल्लेखगतमानत्वादिह न द्वैगुण्यमित्याह पलेत्यादि॥२१॥

द्राक्षेत्यादौ।—मधुकं यष्टिमधु। शर्कराक्षौद्रपादिकमिति शि-क्षिता। अत्र क्वाथ्यद्रव्यस्य प्रस्थमानस्य षाड़्गुण्यादिवृद्धादीनामपि, प्र-स्थमानत्वमित्याह षाड़्गुण्यादित्यादि॥२७॥

योजयेत् पित्तगुल्मघ्नं सर्व्वपित्तविकारनुत् ॥
पाढचव्याग्निदहयवशूकारैः कायतुल्यता ॥ २७ ॥

क्षीरषट्पलकं घृतम्।

पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः।
पलिकैः सयवक्षारैः सर्पिः प्रस्थं विपाचयेत् ॥
क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणी पाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ २८ ॥

धात्रीषट्पलकं घृतम्।

धात्रीफलानां स्वरसे षडङ्गं पाचयेद्घृतम्।
शर्करासैन्धवोपेतं तद्धितं सर्व्वगुल्मिनाम् ॥ २९ ॥

भार्गीषट्पलकम्।

षड्भिः पलैर्मगधजाफलमूलचव्य-
विश्वौषधज्वलनयावककल्कपक्वम्।
प्रस्थं घृतस्य दशमूल्यरुबूकभार्गी-
क्वाथेऽद्यो पचति दध्नि च षट्पलाख्यम् ॥

---

क्षीरषट्पलक इति।— क्षीरप्रस्थेनैव केवलेन घृतसमेन पाक इति ब्रुवते। अन्ये तु त्रिगुणं जलं ददति तत्र सर्व्वथा द्रवानुक्तौ चिकाल द्रवं भवतीत्याह चक्रः ॥ २८ ॥

धात्रीत्यादौ।— सुश्रुतस्य। धात्रीस्वरसश्चतुर्गुणः। षडङ्गमिति यवक्षारसहितपञ्चकोलकल्कं प्रत्येकं पलिकम्। उक्तं हि पञ्चकोलैः ष घृतं क्षीरैः प्रत्येकं पलिकैः पचेत्। क्षीरे धात्रीरसे वापि सितासैन्धव-योजितम्। शर्करासैन्धवोपेतमिति शर्करा सैन्धवयोर्मिलिता पादिकयोः प्रक्षेपः। अत्रापि शर्करापादत्वं सैन्धवस्यैकपाद इति वदन्ति ॥ २९ ॥

षड्भिः पलैरित्यादि।— मगधजा पिप्पली तस्याः फलं मूलञ्च ज्वलनश्चित्रकः यावको यवक्षारः। यावजेति पाठे स एवार्थः। अत्र क्षीरं घृतसमं द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेदित्युक्तेः। दधिः

गुल्मोदराश्विभगन्दरवह्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान्।
सद्यः शमं नयति ये च कफानिलोत्था-
भार्ग्यादिषट्पलमिदं प्रवदन्ति तज्ज्ञाः ॥ २० ॥

भल्लातकं घृतम्।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढके॥
पादावशेषे पूते च पिप्पलीं नागरं वचाम्।
विडङ्गं सैन्धवं हिङ्गु यावशूकं बिडं शटीम्॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमान् भिषक्।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत्॥
एतद्भल्लातकं नाम कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीकासगुल्मनुत्॥ २१॥

रसोनाद्यं घृतम्।

रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम्।
सुरारनालदध्यम्लमूलकस्वरसैः सह॥

---

क्वाथौ तु मिलित्वा त्रिगुणौ अत्र चतुर्गुणः पाकः। एकेनापि चातुर्गुण्यं द्वाभ्यामपि चातुर्गुण्यं त्रिभिरपि चातुर्गुण्यमिति वचनात्। अन्ये तु क्वाथो द्विगुणः क्षीरं दधि च प्रत्येकं स्नेहसममित्याहुः। निश्चलस्तु क्वाथश्चतुर्गुणः दधि तु चतुर्गुणं क्षीरन्तु स्नेहसममिति नवगुणः पाक इत्याह। अन्ये तु दधिक्वाथौ मिलित्वा चतुर्गुणौ क्षीरन्तु स्नेहसममिति पञ्चगुणः पाक इत्याहुः॥ २०॥

भल्लातकघृतं द्विगुणाद्रवेणैव पक्तव्यं निर्दिष्टे तद्वद्वहोति वचनात् पञ्चमूलं स्वल्पं तदेव विदारीगन्धाद्यं प्रत्येकं पलोन्मितम्। भल्लातकं नामेत्यनन्तरं सर्पिरिति शेषः चरके तु एतद्भल्लातकघृतं कफगुल्महरं परमित्येव पाठः॥ २१॥

रसोनेत्यादौ।—पञ्चमूलं महत्पञ्चमूलं वातकफहरत्वात् तस्य

व्योषदाडिमत्वक्चव्ययमानीचव्यसैन्धवैः।
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च पलान्वितैः।
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान्।
कासापस्मारमन्दाग्निप्लीहशूलानिलान् जयेत्॥ २१॥

दन्तीहरीतकी।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुडम्।
ताश्चाभयास्त्रिवृच्चूर्णात्तैलाच्चापि चतुःपलम्॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले।
क्षौद्रं तैलसमं दद्याच्चातुर्जातपलं तथा॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम्।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः॥
प्लीहश्वयथुगुल्मार्शोहृत्पाण्डुग्रहणीगदाः।
शाम्यन्त्युत्क्लेशविषमज्वरकुष्ठान्यरोचकाः॥ २२॥

उशीराद्यरिष्टः।

उशीरमुत्पलकञ्च यवासं हस्तिद्वयम्।

---

दधः क्वाथः। दधीनस्वरसादीनां पञ्चां चोइकत्वं दीप्यकं चोक्त-यमानी॥ २२॥

जलद्रोणे - इत्यादौ।— विंशतिः पञ्च चाभया इत्याकृतिमानात्। हरीतकीफलानि कर्पटे पोट्टलीं बद्ध्वा अगस्त्यहरीतकीवत् क्वथनीयानि। ता आर्द्रकुडवमिति पलचतुष्टयमित्यर्थः तैलमुत्स्विन्नहरीतकीभर्जनार्थं न तु त्रिवृच्चूर्णपरिभर्जनार्थं तद्योगेन विरेचनशक्त्यपकर्षप्रसङ्गात्। पलमेकं कणाशुण्ठ्योर्मिलित्वा एवं चातुर्जातपलमिति। प्रस्थमत्र दोषस्य सार्द्धत्रयोदशपलरूपं उक्तं हि भोजे वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः इति।
॥ २२ ॥

चित्रकस्य जलद्रोणे पचेत् पादावशेषितम् ॥
मागधीचित्रकक्षौद्रलिप्तकुम्भे निधापयेत्।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ॥
व्युषोषितं दशाहञ्च जीर्णभक्तः पिबेन्नरः।
अरिष्टोऽयं जयेद्गुल्ममविपाकं सुदुस्तरम् ॥ २४ ॥
रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धं विरेचनम् ॥ २५ ॥
शताह्वाचिरविल्वत्वग्दारुभार्गीकणोद्भवः।
कल्कः पीतो हरेद्गुल्मं तिलक्काथेन रक्तजम् ॥ २६ ॥

---

हस्तीरमित्यादि। हस्तीरः श्वेतपुनर्नवा हस्तीरादीनां मिलित्वा पलशतं द्रोणे द्रव्यतुलामतेति वचनात् अन्ये त्वाढ़कमाहुः। मागधी पिप्पली मधुनः प्रस्थमिति शरावचतुष्टयं पथ्याचूर्णार्द्धसंयुतमिति हरीतकीचूर्णप्रस्थार्द्धमष्टौ पलानि तेन संयुतम्। व्युषोषितं तुषधान्यराशिमध्ये स्थितम्। जीर्णभक्तः परिणताहारः लघुकोष्ठ इत्यर्थः। अस्य पलमर्द्धपलं वा प्रातरुपयोज्यम् ॥ २४ ॥

रौधिरस्येत्यादौ।—गर्भकालव्यतिक्रम इति गर्भकालस्य दशमासरूपकालस्य व्यतिक्रमे। समयनियमं रक्तगुल्मस्यौषधार्हसमय प्रदर्शनार्थमेवोक्तं ज्वरे सप्ताहात् पाचनवत् न तु गर्भशङ्कानिरासार्थं दशमासातिक्रमेणापि गर्भावस्थादर्शनात् उक्तं हि तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यादिति। तथा पिण्डितं स्पन्दनमस्य गर्भलक्षणात् विरुद्धलक्षणमुक्तं यः स्पन्दते पिण्डित एव नाङ्गैरिति एतेन दशमासादर्वागपि शोणितगुल्मावधारणं भवत्येव तस्माद् व्याधिमहिम्ना अस्य दशमासातिक्रमे सत्येव सुखचिकित्स्यत्वप्रदर्शनार्थं अर्वाक् चिकित्सायान्तु शोणितातिस्रुतौ गर्भाशयोपघातादिकं स्यादिति ॥ २५ ॥

शताह्वेत्यादि।—शताह्वादिकल्कानां प्रक्षेपः चिरविल्वत्वक्

तिलक्वाथो गुड़व्योषहिङ्गुभार्गीयुत भवेत्।
पानं रक्तभवे गुल्मे नष्टपुष्पे च योषिताम्।
सक्षारं लवणं मद्यं प्रपिबेद्रक्तगुल्मिनी॥ ३७॥
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा।
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः॥
न प्रभिद्येत यद्येवं दद्याद्योनिविशोधनम्॥३८॥
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः।
रुधिरेऽति प्रवृत्ते तु रक्तपित्तहरी क्रिया॥३९॥
भल्लातकात् कल्ककषायपक्वं सर्पिः पिबेच्छर्करया विमिश्रम्।
तद्रक्तपित्तं विनिहन्ति पीतं बलाशगुल्मं मधुना समेतम्॥४०॥

---

व्याटाकरञ्जलक्। तिलक्वाथेनेति तिलफलक्वाथेनेत्यर्थः एवमुत्तरयोगेऽपि तिलफलस्यैव क्वाथः केचित्तु तिलनालकृतक्षारोदकेनापि व्यवहरन्ति। रक्तजमित्यार्त्तवजम्॥ ३६॥

तिलक्वाथेत्यादौ।—गुडादयः प्रक्षेप्याः नष्टपुष्पे रक्तदृष्टार्त्तवे। सक्षारेत्यादौ।—क्षारोयवक्षारादिकृतः अन्ये तु यवक्षार इत्याहुः॥ ३७॥

पलाशक्षारतोयेनेत्यादि।—अकल्कमिदं घृतम्। पलाशस्य क्षारस्याढ़कमुदकाढ़कैः संदह्याग्नौ साधनीयम्। तस्मात्षड्भिस्त्र्यादिकषणोदये तृतीयभागेऽवशिष्टे त्रिः सप्तवारान् परिस्राव्य क्षारोदकं घृताच्चतुर्गुणं ग्राह्यं तेन घृतस्य पाक इति चक्रः। अन्ये तु पानीयक्षारविधिना स्रावितक्षाराम्बुना घृतपाकं कुर्व्वन्ति। उष्णैरिति उष्णैरुष्णवीर्य्यैः सुरामण्डादिभिः॥ ३८॥

क्षारेणेत्यादि।—पलाशक्षारेण सह पललं तिलचूर्णं किञ्चिज्जलं दत्त्वा वर्त्तिं विधाय योन्यभ्यन्तरे दद्यात्। अथवा पलाशादिक्षारतिलचूर्णं सीजक्षीरेण मिश्रणीयं तेन सूत्रवस्त्रं भावयित्वा वर्त्तिः कार्य्या सा च योन्यभ्यन्तरे देया। रुधिरेत्यादि स्पष्टम्॥३९॥

भल्लातकादित्यादि।—अत्र पादिकशर्कराप्रक्षेपः एवं मध्वपि

खर्जूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेदालुकं गुल्मी मधुराणि फलानि च॥ ४१॥
इति गुल्मचिकित्सा।

---

# अथ हृद्रोगाधिकारः।

वातोत्थिते हृदये वामयेत् स्निग्धमातुरम्।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च॥
पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम्।
सौवर्चलमथो शुण्ठी अजमोदा वचूर्णितम्॥
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः।
पाययेच्छुद्धदेहन्तु स्नेहनान्यतमेन वा॥ १॥

---

कल्कान्मधुशर्करेत्युक्तेः। बलासः कफः कफगुल्मे शर्कराखाने मधु देयमित्यर्थः॥ ४०॥

खर्जूरमित्यादि।— सुश्रुतस्य। खर्जूरं शुष्कमांसं मूलकमादौ शुष्कं वातकरत्वात् पथ्यत्वात्। वैदलं मुद्गादि आलुकं पिण्डालुकम्। मधुराणि फलानि क्षीरिवृक्षफलानि आरग्वधो न्यग्रोधादिफलवर्ज्जनस्योक्तत्वात्। चकारात् हरीतकीवर्गोपलक्षणं गुल्मे हरीतकीवर्गस्यापि हितत्वात्॥ ४१॥

इति गुल्माधिकारः।

---

गुल्मस्य हृदयं स्थानमुक्तं अतः स्थानसाम्यात् हृद्रोग उच्यते। वातोपसृष्टे इत्यादि सुश्रुतस्य। अत्रानुक्तमपि मदनफलादिचूर्णं बोध्यं वमनयोगत्वात्। वातजेऽपि वमनविधानं हृदयस्य कफस्थानत्वात् एवं पित्तजे वमनं बोध्यं चरके हृद्रोगिणो यद्यप्यवस्था उक्तास्तथापि कफोत्क्लेशे बलीयसि सर्वत्रैव वमनं प्रयेयम्। पिप्पलीत्याद्यन्यतमेनवेत्यन्तं सुश्रुतस्य। फलाम्लं मातुलुङ्गं दाडिमादि। कुयलाद

नागरं वा पिबेदुष्णं कषायश्चाग्निवर्द्धनम्।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥ २ ॥
श्रीपर्णीमधुकक्षौद्रसितागुडजलैर्वमेत्।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्।
शीताः प्रदेहाः परिसेचनानि तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे च पित्तापहमन्नपानम्।
पिष्ट्वा पिबेद्वापि सिताजलेन यष्ट्याह्वयं तिक्तकरोहिणीञ्च ॥ ३ ॥
अर्ज्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये।
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥
घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचोये।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ ४ ॥

---

तस्य रसोऽम्लाख्यः। धान्याम्लं काञ्जिकं कौलत्थः कुलत्थयूषः। स्नेहेनान्यतमेनेति घृतादीनामन्यतमेन ॥ १ ॥

नागरमित्यादि।— नागरं नागरकृतकषायं पिबेत्। चशब्दः पूर्व्वयोगापेक्षया ॥ २ ॥

पैत्तिकचिकित्सामाह श्रीपर्णीत्यादि।— सुश्रुतस्य। श्रीपर्णी गाम्भारीफलम्। श्रीपर्णीमधुकयोरेव यौगिकत्वात् जलमत्र शृतकाथः। अत्र क्षौद्रसितागुडान् प्रक्षिप्य पित्तजे वमेत्। किम्वा जलस्य श्रीपर्ण्यादिभिः सम्बन्धात् पञ्चयोगाः। अत्रानुक्तमपि मदनफलादि बोध्यम्। डल्लनस्तु सितोतपलजलैरिति पठित्वा उतपलं कुष्ठमिति व्याचष्टे। मधुरैः शृतं घृतमिति काकोल्यादिगणकाथकल्कसाधितं घृतम्। शीता इत्यादौ। द्राक्षादिभिर्युक्तमन्नपानं मण्डयूषादिपानमिति केचित्। अन्ये तु—पित्ते द्राक्षेत्युन्मिर्यासितापक्षौद्रपरूषकैः। युक्तो विरेको-हृद्यः स्यादिति तन्त्रान्तरदर्शनात् द्राक्षादिभिर्युक्तो विरेकइत्याहुः। सिताजलेनेति शर्करामिश्रितजलेनेत्यर्थः ॥ ३ ॥

वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादिञ्च योजयेत् ॥५॥
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वेषु हितं विधेयम्।
हीनाधिमध्यत्वमवेक्ष्य चैव कार्यं त्रयाणामपि कर्म शस्तम्।
चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम्॥
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥६॥
तैलाज्यगुडविपक्वं चूर्णं गोधूमपार्थजं वापि।
पिबति पयोऽनु च यः स भवति जितसकलहृदामयः पुरुषः॥७
गोधूमककुभचूर्णं छागपयोगव्यसर्पिषा विपक्वम्।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥८॥

---

अर्जुनेत्यादि।—क्षीरनिःक्वाथपयसा अर्जुनत्वगादिभिः प्रत्येकं साधितं सितया सह पेयमिति चत्वारो योगाः। केचित्तु वारिसाधितक्षीरे सिताद्रव्ययोगादिति पञ्चयोगानाहुः। पञ्चमूली धावनी खल्वा। एते च योगा वातपित्तविषयाः ॥४॥

वचेत्यादि।—सुश्रुतस्य। वचाकषायेण निम्बकषायेण वा वमनं किम्वा वचाकल्को निम्बस्य कषायः, ताभ्यां निर्जित्य वमनम्, हृदीति हृद्रोगे। वातहृद्रोगहृच्चूर्णं पिप्पल्यादिचूर्णम्। अन्ये तु वातहृद्रोगे पिप्पल्यादिना यच्चूर्णमुक्तं तत् पाययेदित्यर्थः वातहृद्रोगप्रकरणात्। वातहृच्चूर्णं पिप्पल्यादिकं तथा पिप्पल्यादिगणं पाययेदित्याहुरन्ये ॥५॥

त्रिदोषज इत्यादि।—लङ्घनविधानं हृदयस्य कफस्थानतया। त्रिदोषजे उल्वणदोषचिकित्सामाह हीनेत्यादि।—अधिशब्दोऽधिकवाची, आधिक्यमित्यर्थः। चूर्णमित्यादि स्पष्टम् ॥६॥

तैलाज्येत्यादि।—तैलाज्यगुडान् मिलित्वा पाकिकाम् दत्वा गोधूमपार्थचूर्णं स्तोकमात्रेण तोयेनोत्कारिकावद्विपाच्य भक्ष्यम्। किम्वा गोधूमपार्थचूर्णसमो गुडः। तैलाज्ये तु संस्कारार्थं स्तोकमात्रे। पार्थोऽर्जुनवृक्षः। वाशब्दः पूर्वयोगापेक्षया ॥७॥

गोधूमेत्यादि।—ककुभोऽर्जुनः। अत्रापि योगे सर्पिर्मधु-

मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत् ।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥
रसायनं परं तुल्यं वातजित् सघोजितम् ।
संवत्सरप्रयोगेण जीवेद्वर्षशतद्वयम् ॥
हिङ्ग्वुग्रगन्धाविड्विश्वकृष्णाकुष्ठाभयाचित्रकयावशूकम् ।
पिबेच्च सौवर्च्चलपुष्कराद्यं यवाम्बुना शूलहृदामयघ्नम् ॥
दशमूलीकषायेण लवणक्षारयोजितम् ।
कासं श्वासञ्च हृद्रोगं गुल्मं शूलञ्च नाशयेत् ॥
पाठां वचां यवक्षारमभयामम्लवेतसम् ।
दुरालभां चित्रकञ्च त्र्यूषणञ्च फलत्रिकम् ॥
शटीं पुष्करमूलञ्च तिन्तिडीकं सदाडिमम् ।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत् ॥
सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाययेत् ।
अर्शःशूलानि हृद्रोगं गुल्मञ्चाशु व्यपोहति ॥ ९ ॥
पुटदग्धमश्मपिष्टं हरिणविषाणन्तु सर्पिषा पिबतः ।
हृत्पृष्ठशूलमुपशाम्यत्यचिरेण कष्टमपि ॥
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ।

---

शर्करायां पञ्चविंशत्यां गृहीत्वा छागलोदकोद्धारिकावत् पाकः । शीते मधु देयम् ॥ ८ ॥

मूलं नागबलाया इति मूलं चूर्णीकृतं मूलमित्यर्थः । ककुभस्य वल्कलमिति ककुभत्वक्चूर्णमपि दुग्धेन पेयम् । योगद्वयमेतत् । हिङ्ग्वित्यादि ।— पुष्करशाखान्ता कल्कस्यैव भागद्वयं हिङ्ग्वादिपुष्करान्तानां चूर्णं यवक्वाथे प्रक्षिप्य पिबेत् ॥ ९ ॥

पुटेत्यादि ।— हरिणशृङ्गं कृष्णसंपुटे कृत्वा प्रक्षिप्य गोमयाग्नौ दग्धं शिलायां पिष्टं घृतेन पेयमिति । क्रिमीत्यादि ।— पिशितप्रधानमोदनं पिशितौदनं तत्र दत्त्वा पललेन संयुक्तं व्यञ्जनं भो-

दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥
सुगन्धिभिः सलवणैर्योगैः साम्लाग्निगर्भकैः ।
विडङ्गगाढं धान्याम्लं पाययेद्धितमुत्तमम् ॥
क्रिमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम् ।
हृदि स्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ॥
यवान्नं वितरेच्चास्मै सविडङ्गमतःपरम् ॥ १० ॥

बल्लभघृतम् ।

शुद्धं यवाढ्यं च हरीतकीनां सौवर्चलस्यापि पलद्वयञ्च ।
पक्वं घृतं बल्लभकेति नाम्ना हृत्क्रुत्पार्श्वशूलोदरमारुतघ्नम् ॥ ११ ॥

श्वदंष्ट्राद्यं घृतम् ।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकतृणम् ।

---

भजेत् । पललं तिलचूर्णम् । एतच्च शीतोदकेन योज्यं क्रिमीणामुत्क्लेशार्थम् । पश्चादिति क्रिम्युत्क्लेशानन्तरं विरेचयेत् । कैश्चिद्विरेचयेदित्याह सुगन्धिभिरित्यादि । योगैरिति विरेचनयोगैः । कीदृशैः सुगन्धिभिर्द्रव्यैर्जातकयोगैरिति शेषः । सौगन्ध्यञ्च वान्तिरक्षानिरासार्थम् । वमनञ्च क्रिमिहृद्रोगे निषिद्धं क्रिमिजन्त्वादित्युक्तत्वात् । सलवणैरित्यत्र सपललैरिति पठित्वा सकृष्णतिलचूर्णैरिति व्याख्यानयन्ति केचित् । पीतविरेकस्यानुपानमाह विडङ्गगाढमित्यादि ।—विडङ्गगाढं विडङ्गचूर्णोत्कटम्, धान्याम्लमिति काञ्जिकम् । विडङ्गगाढैरिति पाठे योगैरित्यस्य विशेषणम् । विरेचनयोगानन्तरमाह क्रिमिजे चेत्यादि ।—विडङ्गकुष्ठचूर्णं प्रक्षिप्य गोमूत्रं विरेकार्थं पिबेत् । विरेचनानन्तरमग्निरक्षार्थं परिशिष्टक्रिमिविनाशार्थञ्चाह यवान्नमित्यादि ।—यवान्नमिति यवपेयादिकम् । सविडङ्गमिति षड्ङ्गविधिना विडङ्गकषायसाधितम् । अतःपरमिति विरेकान्तरमित्यर्थः ॥ १० ॥

बल्लभघृते ।— शुद्धमिति अष्टं हरीतकसौवर्चलञ्च कल्कं घृतस्य प्रस्थः अनेन च पाकः ॥ ११ ॥

श्वदंष्ट्राद्य ।— पलाशः किंशुकः, तस्य सारम् । अन्ये तु पलाशं

सघृतानागरं धात्रीवारिजगन्धात्रिकण्टकान्।
अपिवेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान्॥
सेकावगाहाः शिशिरप्रदेहाग्रैष्मोविधिर्वस्तिपयोविकाराः।
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः॥१॥
कुशः काशः शरोदर्भ इक्षुश्चेति तृणोद्भवम्।
पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम्॥
एतत् सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम्।
शतावरी काशकुशश्वदंष्ट्राविदारिशालीक्षुकशेरुकाणाम्॥
क्वाथं सुशीतं मधुशर्कराक्तं पिवन् जयेत् पैत्तिकमूत्रकृच्छ्रम्॥
हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम्।
क्वाथं पिवेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे।
गुडेनामलकं वृष्यं श्रमघ्नं तर्पणं परम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम्॥
एर्व्वारुबीजं मधुकञ्च दार्व्वीं पैत्ते पिवेत्तण्डुलधावनेन।
दार्व्वीं तथैवामलकीरसेन समाक्षिकां पैत्तिकमूत्रकृच्छ्रे॥२॥
क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदोयवान्नं वमनं निरूहाः।
तक्रं सतिक्तौषधसिद्धतैलान्यभ्यङ्गपानं कफमूत्रकृच्छ्रे॥३॥

---

सप्तोत्तरे मर्म्मशते त्रीणि मर्म्माणि शिरोहृदयवस्तयः प्रधानानि। तत्र हृद्रोगचिकित्सामभिधाय वस्तिरोगचिकित्सामाह अभ्यङ्गेत्यादि। स्थिरादिभिरिति शालपर्ण्यादिभिः पञ्चमूलैः। वातहृद्भिरिति वातहरत्वेनोक्तैः। सघृतेत्यादि।— योगोऽयं क्वाथेन। द्राक्षाविदारीक्षुरसैर्घृतैश्चेति सहार्थे तृतीया॥१॥

कुशइत्यादौ।— तृणोद्भवं पञ्चमूलमिति योज्यम्। शतावरीत्यादौ।— शालीति शालीधान्यमूलम्। हरीतकीत्यादौ।— राजवृक्षः शोनालुफलम्। गुडेनेति गुडामलकफले तुल्यमाने। एर्व्वारुः कर्कटी। समाक्षिकामित्यस्य दार्व्वीमित्यनेनैव सम्बन्धः न तु पूर्व्वया॥२॥

मूलेन सुरया वापि कदलीस्वरसेन वा ।
कफकृच्छ्रविनाशाय श्लक्ष्णां पिष्ट्वा त्रुटिं पिबेत् ॥
तक्रेण युक्तं शितिमारकस्य बीजं पिबेत् कृच्छ्र विनाशहेतोः ।
पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥
श्वदंष्ट्राविश्वतोयं वा कफकृच्छ्रविनाशनम् ॥ ४ ॥
सर्व्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्व्या प्रसमीक्ष्य कार्य्यम् ॥ ५ ॥
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥ ६ ॥
बृहतीधावनीपाठायष्टीमधुकलिङ्गकाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥
तथाभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम् ।

---

क्षारेत्यादि कफकृच्छ्रभेषजं क्षारादिभिर्युक्तमन्नपानम्, ऊषकं त्रिकटुकमिति चक्रः अतएव औषधमिति पाठे शुद्धएव । बाधकेऽपि कफजे वमनस्वेदौ तीक्ष्णोष्णकटुभोजनमित्युक्तत्वात् ॥ ३ ॥

मूलेनेत्यादौ । त्रुटि सूक्ष्मैला वाभटसम्वादात् । कदलीस्वरसेनेति कदलीमूलस्वरसेन च । तक्रेणेत्यादौ शितिमारः शालिञ्चः प्रवालोविद्रुमः ॥ ४ ॥

समकुपितदोषत्रयारब्धमूत्रकृच्छ्रचिकित्सामाह सर्व्वमित्यादि । वातजादिमूत्रकृच्छ्रनिर्द्दिष्टं भेषजं सर्व्वं दृष्टत्रिदोषजे मूत्रकृच्छ्रे मिलितं कार्य्यम् । तत्र वायोः स्थानानुपूर्व्व्या कर्त्तव्यं न तु त्रिदोषजज्वर इव कफस्थानानुपूर्व्व्या समत्रिदोषजारब्धमूत्रकृच्छ्र वातस्थानभवत्वेन प्रथमं चिकित्सा कार्य्या स्यादित्यादिति ॥ ५ ॥

विषमसन्निपातकृच्छ्रचिकित्सामाह त्रिभ्य इत्यादि ।— त्रिभ्य इति छान्दसत्वात् पञ्चम्यर्थे पञ्चमीत्याडः । तेन त्रयाणां मध्य इत्यर्थः ॥ ६ ॥

बृहतीत्यादौ ।— धावनी कण्टकारी । कृच्छ्रदोषत्रयापह इति कृच्छ्रजनकदोषत्रयापह इत्यर्थः । वातकृदोक्रियेति वानाङ्कोक्ता क्रिया ।

मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया॥
स्वेदचूर्णक्रियाभ्यङ्गवस्तयः स्युः पुरीषजे।
क्वाथं गोक्षुरवीजस्य यवक्षारयुतं पिवेत्॥
मूत्रकृच्छ्रं शकृज्जञ्च पीतः शीघ्रं निवारयेत्॥ ७॥
हिता क्रियात्वश्मरिशर्कराभ्यां या मूत्रकृच्छ्रे कफमारुतोत्थे।
तेषां शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम्॥
वृष्यैर्वृंहितधातोश्च विधेयाः प्रमदोत्तमाः॥ ८॥
एलाहिङ्गुयुतं क्षीरं सर्पिर्म्मिश्रं पिवेन्नरः।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत्॥
यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते तत् कारयेच्छोणितमूत्रकृच्छ्रे॥ ९॥
त्रिकण्टकारग्वधदर्भकाशदुरालभापर्व्वतभेदपथ्याः।
निघ्नन्ति पीता मधुनाश्मरीञ्च सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम्॥
अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम्।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः॥
कषायोऽतिबलामूलसाधितः सर्व्वकृच्छ्रजित्।
एलाश्मभेदकशिलाजतुपिप्पलीनाम्॥

स्वेदेत्यादौ चूर्णक्रियेति फलवर्त्तिः कृत्वा विरेचनद्रव्यचूर्णं दत्वा गुदे नलिकया फुत्करणम्॥ ७॥

अश्मरीशर्कराजमूत्रकृच्छ्रचिकित्सामाह हिता क्रियेत्यादि।— अश्मरीशर्कराभ्यामिति चरके पाठः॥ ८॥

एलेत्यादि।— एलाहिङ्गुनी प्रक्षिप्य ससर्पिः क्षीरं पिवेदित्यर्थः॥ ९॥

त्रिकण्टकेत्यादौ।— पर्व्वतभेदः पाषाणभेदः। एषां कषाये मधु प्रक्षेप्यम्। अय इत्यादि मारितपुटितवज्रादिलौहचूर्णं रति ५ मधुमात्रेण लौहपात्रे मर्दयित्वा लेह्यम्। रत्तिकाक्रमेण माषकद्वयपर्य्यन्तम्। त्रिभिर्लेहैरिति दिनत्रयेणेत्यर्थः। कषायेत्यादौ।— अतिबला गोरक्षवला। एलादिचूर्णानि तण्डुलजलेन पातव्यानि किम्वा गुडेन लेह्यानीति।

चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा।
यद्वा गुड़ेन सहितान्यवलिह्य तानि
चासन्नमृत्युरपि जीवति मूत्रकृच्छ्री॥
सितातुल्योयवक्षारः सर्व्वकृच्छ्रनिवारणः।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः॥१०॥

शतावरीघृतं क्षीरञ्च।

शतावरीकाशकुशश्वदंष्ट्राविदारिकेक्षामलकेषु सिद्धम्।
सर्पिः पयोवा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम्॥११

त्रिकण्टकाद्यं घृतम्।

त्रिकण्टकैरण्डकुशाद्यभीरुकर्कारुकेक्षुस्वरसेन सिद्धम्।
सर्पिर्गुड़ार्द्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातहेतोः॥१२॥

सुकुमारकुमारकम्।

पुनर्नवामूलतुला दशमूलं शतावरी।
बला तुरगगन्धा च तृणमूलं त्रिकण्टकम्॥
विदारिगन्धानागाह्वा गुड़ूच्यतिबला तथा।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत्॥

---

निदिग्धिकारस इति।—कण्टकारीस्वरसः। उक्तं हि स्वरसं कण्टकार्य्या वा—पाययेन्माक्षिकान्वितमिति॥१०॥

शतावरीत्यादि।—घृतसाधनपक्षे शतावर्य्यादीनां कल्कं जलं चतुर्गुणं शर्करा तु प्रक्षेप्या॥११॥

त्रिकण्टकेत्यादौ।—कुशादितृणपञ्चमूलं अभीरुः शतावरी। कर्कारुः कुष्माण्डभेदः कुष्माण्डाकृतिः उत्कले प्रसिद्धः। त्रिकण्टकादीनां सर्व्वेषां स्वरसः, तदभावे कषायः। गुड़ार्द्धांशयुतमिति घृतापेक्षया अर्द्धांशोगुड़ इति षोड़शपल इत्यर्थः, गुड़श्च प्रक्षेप्यः। अन्ये तु गुड़ं दत्त्वा एव पाक इत्याहुः॥१२॥

पुनर्नवेत्यादौ।—दशभवस्य मिलिता दशपलानि, तृणमूलं कुश-

तेन पादावशेषेण घृतस्याढ़कं पचेत्।
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पली:॥
द्विपलिकाः पृथग्दद्याद्यमान्याः कुड़वन्तथा।
त्रिंशद्गुड़पलान्यत्र तैलस्यैरण्डजस्य च॥
प्रस्थं दत्वा समालोड्य सम्यङ्मृद्वग्निना पचेत्।
एतदीश्वरपुत्त्राणां प्राग्भोजनमनिन्दितम्॥
राज्ञां राजसमानाञ्च बहुस्त्रीपतयश्च ये।
मूत्रकृच्छ्रे कटिस्तम्भे तथा गाढ़पुरीषिणाम्॥
मेढ़्र वङ्क्षणशूले च योनिशूले च शस्यते।
यथोक्तानाञ्च गुल्मानां वातशोणितकाश्च ये॥
बल्यं रसायनं प्रोक्तं सुकुमारकुमारकम्।
पुनर्नवाशते द्रोणो देयोऽन्येषु तथापरः॥ १२॥

इति मूत्रकृच्छ्रचिकित्सा।

---

## अथ मूत्राघाताधिकारः।

मूत्राघातान् यथादोषं मूत्रकृच्छ्र हरैर्जयेत्।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम्॥

---

पञ्चमूलं एतदपि मिलित्वा दशपलमानं विदारिगन्धा शालपर्णी नामाख्या नागबला, गोरक्षतण्डुला इत्यर्थः। अतिबला श्वेतबला। द्रोण इति द्रव्यतुलाद्वये प्रत्येकं द्रोण इत्यर्थः। द्विपलिका इति पलद्वयमाना इति। गुड़मेरण्डतैलञ्च दत्त्वैव पाकः। देयोऽन्येषु तथा पर इति अन्येषु दशमूलादिष्वपरद्रोण इत्यर्थः। सुकुमारेति सुकुमाराः सुखिनः कुमाराः शिशवः तयोर्हितत्वात् सुकुमारकुमारकसंज्ञा॥ १२॥

इति मूत्रकृच्छ्राधिकारः।

---

कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम्।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते॥१॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि।
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम्॥
पिबेद्गुडोपदंशान् वा लिह्यादेतान् पृथक् पृथक्॥२॥
त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत्।
निदिग्धिकायाः स्वरसं पिबेद्वा तान्तवस्रुतम्॥३॥

---

मूत्रगतविकाराधिकारादनन्तरं मूत्राघातारम्भः।— मूत्रस्याघातोऽभिबन्धः। मूत्राघातमूत्रकृच्छ्रयोरयं भेदः। मूत्रकृच्छ्रे कृच्छ्रत्वमधिकमीषद्विबन्धः, मूत्राघाते तु विबन्धो महान् कृच्छ्रत्वमल्पमिति॥ कल्कमित्यादि।— सुश्रुतस्य। एर्वारुर्दीर्घकर्कटीत्युल्वनः। धान्याम्लं काञ्जिकम्॥१॥

पाटल्या इत्यादि।— सुश्रुतस्य। तिलादपीति तिलनालात्। इहापि वक्ष्यमाणं पृथक् पृथगिति सम्बन्धनीयं तेन पृथक् पाटल्यादीनां क्षारस्रावोदकेन समां मदिरां त्वगेलोषणं प्रक्षिप्य पिबेत्। ऊषणं मरिचं अन्ये तु पाटलीयावशूकयोर्मिलित्वा क्षारः केवलयवक्षारस्यादृष्टत्वात् अतएव वाभटे— आयुर्वेदसारे च पाटलीयावशूकाभ्यां मिलित्वा पच्यते इत्याहुः। चक्रपाणिदत्तोऽप्येवं व्याख्यातवान्। कार्त्तिकस्तु मदिरामित्यस्य स्थाने मतिमानिति पाठं लौकिक्य चूर्णितमिति चाध्याहृत्य व्याचष्टे। पाटल्यादीनां चूर्णं क्षारोदकेन शुष्कक्षारादिना पिबेदिति विश्वामित्रवचनात्। डल्लनस्तु मतिमानिति यत्र मदिरामिति पाठं तथा गुडेन मिश्रान् गुडोपदंशानिति पाठं चानार्षमाह॥२॥

त्रिफलेत्यादि।— सुश्रुतस्य। अत्रापि पानं क्षारोदकेनेत्यनुवर्त्तयति कार्त्तिकः। अन्ये तु अभयामलकाक्षाणां कल्कं बदरसम्मितम्। अम्भसा लवणोपेतं पिबेन्मूत्ररुजापहमिति वचनं मूत्रकृच्छ्रप्रतिषेधे सुश्रुतेनोक्तम्। अतस्तद्दृष्टं नादत्राप्यस्यैवमानं तथा मिलित्वाष्टमाषकं मानञ्चेत्याहुः त्रिफलाकल्कमाषा ६ सैन्धवमाषा २। नि:

जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि।
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्॥४॥
सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः॥५॥
दाड़िमाम्बुयुतं मुख्यमेलाबीजं सनागरम्।
पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते॥६॥
पिबेच्छिलाजतु क्वाथे गणे वीरतरादिके।
रसं दुरालभाया वा कषायं वासकस्य वा।

---

बीजयोगे तालतस्त्वृतमिति चक्रपाणितं मधुयोगादप्ययं योगः पेयः। यदाह वाग्भटः—स्वरसं कण्टकार्य्या वा पाययेन्माक्षिकान्वितमिति॥२॥

जल इत्यादि।—सुश्रुतस्य। अत्र कुङ्कुमं कल्कं शीतकषायविधिना जले पर्य्युषितं प्रातस्त्वस्रुतं सक्षौद्रं पिबेत्। पिबन् कुङ्कुमकर्षं वा मधूदकसमायुतम्। रात्रिपर्य्युषितं प्रातस्तथा सुखमवाप्नुयादिति पाठान्तरम्। सुश्रुतटीकाकृतः पठन्ति व्याख्यानयन्ति च। कुङ्कुमकर्षं मधूदकाभ्यामाप्लाव्य रात्रौ स्थापयित्वा ततः पानमिति। सतैलमित्यादि द्वितीयो योगः सुश्रुतस्यैव वाशब्दः पर्य्यायोगापेक्षया। क्षारवद्वा परिस्रुतमिति सुश्रुतेऽपि मूत्रकृच्छ्रप्रतिषेधे—पलाशक्षारमाहृत्य सम्यक्तस्य परिस्रुतमिति। क्षोदं तैलं दत्त्वा यथामात्रां खादेद्बुभुक्षित इति॥४॥

सुरामित्यादि।—सुश्रुतस्य। पिबेन्नर इत्यन्त एक एवायं योगः। वाग्भटेऽपि सौवर्चलाढ्यां मदिरां पिबेन्मूत्रकृच्छ्रापहामित्येवोक्तम्॥५॥

दाड़िमेत्यादि।—नागरान्तो द्वितीयो योगः। दाड़िमाम्बुयुतमिति दाड़िमरसयुतम्। रसाभावे तु क्वाथः। मुख्यमित्येलाबीजविशेषणम्। पीत्वा सुरां सलवणामिति सर्वेष्ववाम्। वस्तुतस्तु दाड़िमाम्बुयुतां मुख्यामेलाबीजकनागरैरित्यनेन सम्बध्यते मुख्यां सुरामिति पैष्टिकीम्॥६॥

पिबेदित्यादौ।—वीरतरादिगणक्वाथे शिलाजतु प्रक्षिप्य पिबेदित्यर्थः। अत्र व्याधौ शिलाजतुनोऽत्यन्तयौगिकत्वेन दुरालभाक्वाथे वासकक्वाथेऽपि शिलाजतु प्रक्षिपन्ति। त्रिकण्टकेत्यादि योगत्रयम्। यत्तु

त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः ।
गुड़प्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥७॥
नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां ससिताम् ।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः ॥
गोधावत्यामूलं क्वथितं घृततैलगोरसैर्मिश्रम् ।
पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य संघातम् ॥ ८ ॥
जलेन खदिरीवीजं मूत्राघाताश्मरीहरम् ।
मूलं रुद्रजटायाश्च तक्रपीतं तदर्थकृत् ॥
मूत्रे विबद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत् ॥ ९ ॥
शृतशीतपयोन्नाशी चन्दनं तण्डुलाम्बुना ।
पिबेत्सशर्करं श्वेतमुष्णवाते सशोणिते ॥
शीतोऽवगाह आवस्तिमुष्णवातनिवारणः ।
कुष्माण्डकरसश्चापि पीतः सक्षारशर्करः ॥ १० ॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते ।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ॥ ११ ॥

---

प्रगाढमिति पूर्वेण योगद्वयेन सम्बध्यते । त्रिकण्टकादिसिद्धं वा तृणपञ्चमूलसिद्धं पयो गुड़प्रगाढं हितम् । सघृतं पय इति तृतीयो योगः ॥ ७ ॥

नलेत्यादौ ।— शिफा मूलं तच्च नलादिभिः प्रत्येकं सम्बध्यते । कचः बृहस्पतेः पुत्रः । गोधापदी गोहालिया इति ख्याता । गोरसोऽत्र तक्रम् ॥ ८ ॥

जलेनेत्यादौ ।— खदिरीबीजमशोकबीजमित्याहुः । मूत्र इत्यादौ । लिङ्ग इति लिङ्गरन्ध्रे श्लक्ष्णदूर्वाकाण्डादिना च कर्पूररजःप्रक्षेपः । एवं स्त्रीयोनावपि । लिङ्गवचनस्य सामान्यवचनत्वात् ॥ ९ ॥

शृतेत्यादौ ।— श्वेतं चन्दनमिति योज्यं तेन श्वेतचन्दनमित्यर्थः । शृतशीतपयसान्नभोजनशीलः । आवस्तीति वस्तिभागपर्यन्तम् । कुष्माण्डरसः कुष्माण्डमञ्जिकास्वरसः ॥ १० ॥

मूत्रदोषप्रसङ्गेन मूत्रमार्गप्रवृत्तस्य रक्तस्यापि विधानमुपदिश-

खगुम्राफलमृद्वीकाकृष्णेक्षुरसितारजः ।
समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च ।
सर्व्वं सर्प्पिर्विमथ्याक्तमानं लीढ्वा पयः पिबेत् ।
हन्ति शुक्राशयोत्थांश्च दोषान् वन्ध्यासुतप्रदम् ॥ १२ ॥

चित्रकाद्यं घृतम् ।

चित्रकं शारिवा चैव बला कालानुशारिवा ।
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत् ॥
तथैव मधुकं दद्याद्दद्यादामलकानि च ।
घृताढ़कं पचेदेभिः कल्कैरक्षसमन्वितैः ॥
क्षीरद्रोणे जलद्रोणे तत् सिद्धमवतारयेत् ।
शीतं परिस्रुतञ्चैव शर्कराप्रस्थसंयुतम् ॥
तुगाक्षीर्य्याश्च तत् सर्व्वं मतिमान् प्रतिमिश्रयेत् ।
ततोमितं पिबेत् काले यथादोषं यथाबलम् ॥

---

माहक्षीणामित्यादि ।— सुश्रुतस्य । सुश्रुतेऽमुं पन्थं कार्त्तिककुण्डोऽन पठति । शुक्रचर्य्यनिवृत्तोक्तत्वात् । जेज्जटस्तु प्रकरणान्तरत्वात् शिष्यहितैषितया पठति ॥ ११ ॥

खगुम्रेत्यादौ ।— खगुम्राफलं शृङ्गाटकबीजं मृद्विका द्राक्षा । कृष्णा पिप्पली न तु कृष्णेक्षुरकः । सुश्रुते पिप्पलीपाठात् । इक्षुरकः कोकिलाक्षस्तस्य बीजम् । सिता शर्करा रजश्चूर्णम् । अर्द्धभागानि क्षीरक्षौद्रघृतानि चेति समुदितं चूर्णात् क्षीरादीनि प्रत्येकमर्द्धभागानि । सुश्रुते पुनरयं योगोऽन्यथा पठ्यते । क्षौद्रार्द्धभागः कर्त्तव्योभागः स्यात् क्षीरसर्पिषोः । शर्करायाश्च चूर्णानि द्राक्षाचूर्णञ्च तत्समम । कायं गुम्रफलञ्चैव तथैवेक्षुरकस्य च । पिप्पलीनान्तथा चूर्णमर्द्धभागं प्रदापयेदिति ॥ १२ ॥

चित्रमित्यादि ।— सुश्रुतस्य । कालानुशारिवा तगरपादिका । विशाला गोरक्षकर्कटी । चित्रफला गोरक्षकर्कटीभेदः । तुगाक्षीरी

वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत् ।
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगताम् ॥
जीवनीयञ्च वृष्यञ्च सर्पिरेतन्महागुणम् ॥
प्रजाहितञ्च धन्यञ्च सर्वरोगापहं शिवम् ।
सर्पिरेतत्प्रयुञ्जानां स्त्री गर्भं लभतेऽचिरात् ॥
असृग्दोषान् जयेच्चैव योनिदोषांश्च संहतान् ।
मूत्रदोषेषु सर्वेषु कुर्य्यादेतच्चिकित्सितम् ॥ १२ ॥
इति मूत्राघातचिकित्सा ।

## अथाश्मर्य्यधिकारः ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ।
वीरतरः सहचरौ दर्भ वृक्षादनी नलः ॥
गुन्द्रा काशकुशावश्मभेदमोरटटुण्टुकाः ।
कुरुण्टिका च वशिरो वसुकः साग्निमन्थकः ॥
इन्दीवरी श्वदंष्ट्रा च तथा कापोतवक्रकः ।

---

इत्यत्र प्रस्थसंयुतमित्येतत् सकारवर्ज्जितमध्याक्षरं लक्षणीयम् । काके-जीवीतिवत्वचे । यथादोषं यथाबलमिति मिलितदोषाणि यथायुक्तम् ॥ १२ ॥

मूत्राघाताधिकारः ।

---

कृच्छ्रविरोधित्वसामान्यादश्मरीचिकित्सितमुच्यते वरुणस्येत्यादि श्रेष्ठामिति कीटाद्यनुपहतीम् । यवक्षारगुडौ प्रक्षेप्यौ । वीरतर इत्यादि ।— वीरतरः शरः सहचरौ झिण्टीद्वयं पीतनीलपुष्पभेदात् । दर्भः उलुपा तृणं वृक्षादनी वन्दाकः । गुन्द्रा एरकाः, मोरटमिक्षु-

वीरतरादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ १ ॥

कुशाद्यं घृतम् ।

शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ।
अभयारग्वधफलैः क्वाथं कुर्य्याद्विचक्षणः ॥
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ।
अश्मरीं मूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ॥
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ।
पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा ॥
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ।
कपोतवङ्कार्त्तगलकाञ्चनोशीरगुल्मकाः ॥
वृक्षादनी भल्लूकश्च वरुणः शाकजं फलम् ।
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ॥

---

मूलं टुण्टुकः श्योनाकः, कुरुण्टकः झिण्टी, वशिरः सूर्य्यावर्त्तभेदः, वसुकोऽवसुहट्टः, कपोतवङ्कः कङ्कुष्ठ इति ख्यातः स च शिरो-मध्यः खल्वन्वः स्वल्पविटपः गणात्वादनेन सर्वं कल्पना ॥ १ ॥

शुण्ठ्यादौ ।— पाषाणं पाषाणभेदो । पाषाणभेद इत्यादि सुश्रुतस्य श्वनकोटक्षनाटकः कोविदारसदृशपत्रः, आर्त्तगलः आगर इति ख्यातः, गुल्मकाः गुल्मश्चः । कतकं तोयप्रसादनफलं प्रायो मगधे भवति । ऊषकादिप्रतिवापमिति ऊषकादिस्तु वक्ष्यमाणस्तत्कल्कः । एषा-मिति पाषाणभेदादीनाम् । तत्साधनौषधवर्गेण क्षारादयोऽपि साध्या इत्याह । क्षारानिति पानीयक्षारान् । यदि चूर्णावापः क्षारः पीयते तदा वस्तिशोधनद्रवेण मद्यादिना । क्षारोदकपक्षे तु क्षारस्य कर्षं द्विकर्षं वा षड्गुणेन जलेन बहुशः परिस्राव्य द्रुतं पेयम् । पेया इति यूष-ष्षादीनि, पेयांश्चेति पठेऽपि यूषादिनिर्देशः । दूषांश्चेत्यपि पाठान्तरम्, पेयांश्चेति तु पाठः सुश्रुतपुस्तकेषु न दृश्यते, टीकाकृद्भिश्च न व्याख्यातः । भोजनानीति विशेषो भक्तयूषपेयादीनि यवान्नादि इत्यादुपा-

ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम्।
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु॥
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने॥ १॥

ऊषकादिः।

ऊषकं सैन्धवं हिङ्गु काशीशद्वयगुग्गुलु।
शिलाजतु तुत्थकञ्च ऊषकादिरुदाहृतः॥
ऊषकादिः कफं हन्ति गणो मेदोविशोधनः।
अश्मरीशर्कराकृच्छ्रशूलघ्नः कफगुल्मनुत्॥ २॥

कुशाद्यं घृतम्।

कुशः काशः शरो गुन्द्र इत्कटो मोरटोऽश्मभित्।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः॥
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरण्टकाः।
पुनर्नवे शिरीषश्च क्वथितास्तेषु साधितम्॥

दानं प्राधान्यख्यापनार्थम्। वर्गेऽस्मिन् वातनाशन इति पाषाणभेदादिवीरतर्वाद्यन्तस्य द्रव्यवर्गे, ऊषकादिवत्तु प्रतीवापद्रव्यं कल्कद्रव्यमिति शक्तिविशेषसाधनार्थं संयोज्यमानं क्षारादिष्वेव प्रक्षेपविधया देयमित्याहुः। अयमर्थोऽवृन्देनाप्युक्तो यथा।— कुर्य्यात् क्षारादिकं क्वाथे तस्मिन् चोषकवापकैरिति। चोपमिति प्रक्षेपं कल्कापकैरिति कल्कद्रव्यैरल्पैः, छन्दोभङ्गानुरोधाद् ह्रस्वत्वम्। एवं वर्गेऽस्मिन् पित्तनाशन इत्यादावपि व्याख्येयम्॥ १॥

ऊषकादिवर्गमाह ऊषकमित्यादि— सुश्रुतस्य। ऊषकं क्षारमृत्तिका। काशीशद्वयमिति धातुकाशीशं पुष्पकाशीशञ्च तत्राद्यं भस्मबहलं किञ्चिदम्लं कषायरसं द्वितीयस्त्वीषत्पीतं कषायरसम्॥ २॥

कुशइत्यादौ।— मोरट इक्षुमूलं बहुलां गुल्वघ्नः, वाराही वाराहीकन्दस्तदभावे चर्म्मकारालुकम्। भल्लूकः श्योनाकः, पत्तूरः शालिञ्चा, पुनर्नवे पुनर्नवाद्वयम्। एषां सर्व्वेषां क्वाथः शिलाह्वादीनां कल्क

घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च।
त्रपुषैर्व्वारुकाणां वा बीजैश्चावापितं शृतम्॥
भिनत्ति पित्तसम्भूताश्मरीं क्षिप्रमेव तु।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च॥
भोजनानि च कुर्व्वीत वर्गेऽस्मिन् पित्तनाशने॥ ४॥
वरुणादिगणः वरुणादि इतम्।
गण वरुणकादौ च गुग्गुलं लाहरेणुभिः।
कुष्ठमुस्ताह्वमरिचचित्रकैः ससुराह्वयैः॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च।
भिनत्ति कफसम्भूताश्मरीं क्षिप्रमेव तु॥
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्व्वीत वर्गेऽस्मिन् कफनाशने॥
वरुणार्त्तगलः शिग्रुतर्कारीमधुशिग्रुकाः।
मेषशृङ्गीकरञ्जौ च बिल्वाग्निकम्भोरटाः॥
शैरियौ वशिरो दर्भौ वरीवसुकचित्रकौ।

शिलाह्वामधुकबीजैरित्यत्र बीजपदं सर्व्वासम्बद्धमपि इन्दीवरस्येत्यनेन सह सम्बन्धनीयं न तु बीजोबीजकः पीतसारः वाभट सम्बादात्। तथा पिष्टेन त्रपुषादीनां बीजेनेन्दीवरस्य च। मधुकेन शिलाजेन तत्-पित्ताश्मरीनाशनम्। इन्दीवरञ्च चुञ्चकः एतेन मधुकः क्षतहृल्लता-द्वीजोबीजक उच्यते इत्यपि द्वन्द्ववचनमबोधविन्यस्तमेव। अस्यार्थः कुसमधुकशब्देन यष्टिमधुकमेवोच्यते न तु मधूकतरुस्तस्य बीजमव्यव-हारात् बीजोबीजक इति। आवापितं कल्कितम्॥ ४॥ —

गण इत्यादि — सुश्रुतस्य। अत्र "वरुणादिगणेन" इत्यधः शेषेण कल्कः ऊषकादिगणेन च कल्करूपेण सिद्धमित्यर्थः। अजासर्पिरित्यत्र वाभटे तु घृतमेवोक्तम्। आर्त्तगलोऽङ्गोमवदति भानुमतिः। तर्कारी

बिल्वं चैवाजशृङ्गी च बृहतीद्वयमेव च ॥
वरुणादिगणो ह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलं गुल्माद्यन्तरविद्रधीन् ॥ ५ ॥
वरुणत्वक्कषायस्तु पीतस्तु गुडसंयुतः ।
अश्मरीं पातयत्याशु वस्तिशूलनिवारणः ॥
यवक्षारं गुडेनमिश्रं पिबेत् पुष्पफलोद्भवम् ।
रसं मूत्रनिबन्धघ्नः शर्कराश्मरीनाशनम् ॥
पिबेद्वरुणमूलत्वक्क्वाथं तत्कल्कसंयुतम् ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरीपातनः ॥
नागरवरुणगोक्षुरपाषाणभेदकपोतवङ्कजः क्वाथः ।
गुडयावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ।
वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ॥
कषायः क्षारसंयुक्तः शर्कराञ्च भिनत्त्यपि ।
श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम् ॥
एतत् क्वाथवरं प्रातः पिबेदश्मरिभेदनम् ।
मूलं श्वदंष्ट्रेक्षुरकोरुबूकात् क्षीरेण पिष्टं बृहतीद्वयाच्च ॥
आलोड्य दध्ना मधुरेण पेयं दिनानि सप्ताश्मरिभेदनार्थम् ॥ ६ ॥

---

जयन्ती तन्मूलम्, मधुशिग्रु रक्तशोभाञ्जनं करञ्जौ करञ्जलाटाकरञ्जौ मोरटा इक्षुमूलं, अश्मान्तमूलमिति भानुमतिः, इन्तिकर्णपलाश इत्यन्ये। सैरेयौ पीतनीलपुष्पझिण्टीद्वयं दर्भः कुशः वरी शतावरी, वसुकोऽवसुहट्ट इति ख्यातः, अजशृङ्गी आवर्त्तकिका ॥ ५ ॥

पुष्पफलोद्भवं रसमिति पुराणकुष्माण्डरसम् । पिबेदित्यादि — पिबेदश्मरीभेदनमित्यन्तं स्पष्टम् । मूलमित्यादि । बृहतीद्वयान्तपञ्चको योगः। इक्षुरकः कोकिलाक्षः सर्वं मिलित्वा माषकचतुष्टयं दुग्धेन पिष्ट्वा अनन्तरं दध्ना पेयम् ॥ ६ ॥

पक्वेक्ष्वाकुरसः क्षारः सितायुक्तोऽश्मरीहरः ।
पाषाणरोगपीड़ां सौवर्च्चलयुक्ता सुरा जयति ॥
तद्वन्मधुदुग्धयुक्ता चिराय तिलनालभूतिश्च ॥ ७ ॥

एलादिः ।

एलोपकुल्या-मधुकाश्मभेद-कौन्तीश्वदंष्ट्रावृषकोरुबूकैः ।
क्वाथं पिबेदश्मजतुप्रगाढं सशर्करे साश्मरिमूत्रकृच्छ्रे ॥ ८ ॥
त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ।
अवीक्षीरेण सप्ताहं पिबेदश्मरिनाशनम् ॥
शुक्राश्मर्य्यान्तु सामान्यो विधिरश्मरिनाशनः ॥ ९ ॥

पाषाणभेदाद्यं चूर्णं घृतञ्च ।

पाषाणभेदं वृषकं श्वदंष्ट्रा पाठाभयाव्योषशटीनिकुम्भाः ।
हिंस्राखराश्वासितिमारकाणामेर्व्वारुकाच्च त्रपुषाच्च बीजम् ॥
उपकुञ्चिका हिङ्गु सवेतसाम्लं स्याद्द्वे बृहत्यौ हपुषा वचा च ।
चूर्णं पिबेदश्मरिभेदि पक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥१०॥

कुलत्थाद्यं घृतम् ।

कुलत्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम् ।

---

पक्वेत्यादौ इक्ष्वाकुस्तिक्तालाबुस्तस्य मज्जिकाखरसः पाषाणरोगोऽश्मरी, तिलनालभूतिस्तिलनालक्षारः ॥ ७ ॥

एलेत्यादौ — उपकुल्या पिप्पली, अत्र शोधितशिलाजतुनो आषकत्रयं चतुष्टयं वा प्रक्षेप्यमित्याहुः ॥ ८ ॥

शुक्राश्मर्य्यान्तु सामान्योविधिरिति अश्मरीमात्रसाधारणविधिः ॥ ९ ॥

पाषाणभेदमित्यादौ । — निकुम्भा दन्ती, खराश्वा अजमोदा, शितिमारः शालिञ्चः, उपकुञ्चिका कृष्णजीरकम् । चूर्णं पिबेदिति विशेषानभिधानाज्जलेनैव । तैः पाषाणभेदादिभिरेव कल्कद्रव्यैः पक्वं सर्पिश्च पेयमित्यन्वयः ॥ १० ॥

बीजानि कुष्माण्डकगोक्षुराभ्यां घृतं पचेत्ता वरुणस्य तोये।
दुःसाध्यसर्व्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम्।
एतानि सर्व्वाणि निहन्ति शीघ्रं प्ररूढवृक्षानिव वज्रपातः॥११॥

शरादिपञ्चमूल्यादिघृतम्।

शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम्।
अस्य गोक्षुरकल्केन सिद्धमद्यात् सशर्करम्॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम्॥ १२ ॥

वरुणाद्यं घृतम्।

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत्।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत्॥
वरुणं कदलीविल्वं तृणजं पञ्चमूलकम्।
अमृता चाश्मजं देयं बीजञ्च त्रपुषोद्भवम्॥
शतपर्व्वतिलक्षारं पलाशक्षारमेव च।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत्॥
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया।
जीर्णे तस्मिन् पिबेत् पूर्व्वं गुड़ं जीर्णन्तु मस्तुना॥
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत्॥ १३ ॥

---

कुलत्थघृते शीतलो शियालीकोपरः, अन्ये तु शीतली वाचमूलं शिवति यवक्षारः स तु स्फाटिकसैन्धवरूपकाश इत्यर्थः व्यवच्छादस्तु पूर्व्ववैव। शर्करा तु कल्करूपा ॥ ११ ॥

शरादिपञ्चमूलमित्यत्र ।— शरादीति विशेषणात् चरकोक्तं तृण-पञ्चमूलं ग्राह्यं यथा — शरेक्षुदर्भकाशानां शालीनां मूलमेव च। अत्र शर्करा प्रक्षेप्या वाग्भटः पूर्व्वयोगापेक्षया ॥ १२ ॥

वरुणादिघृते ।— कदल्याः फलमामं गृहीत्वा, अश्मजं शिलाजतु त्रपुषं मात्राफलम्. शतपर्व्वा इक्षुस्तस्य ग्रन्थिः भवेत् वा। कालिकाविलिप्ते कृते, पूर्व्वमिति भोजनात् पूर्व्वम् ॥ १३ ॥

वीरतराद्यं तैलम्।

अश्माधिकारे यत्तैलं सैन्धवाद्यं प्रकीर्त्तितम्।
तत्तैलं द्विगुणक्षीरं पचेद्वीरतरादिना॥
क्वाथेन पूर्व्वकल्केन साधितन्तु भिषग्वरैः।
एतत्तैलवरं श्रेष्ठमश्मरीणां विनाशनम्॥
मूत्राघाते मूत्रकृच्छ्रे पिच्छिते मथिते तथा॥
भग्ने श्रमाभिपन्ने च सर्व्वथैव प्रशस्यते॥ १४॥

वरुणाद्यं तैलम्।

त्वक्पत्रमूलपुष्पस्य वरुणात् सविकण्टकात्।
कषायेण पचेत्तैलं वस्तिनास्थापनेन च॥
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रनिवारणम्॥ १५॥
शल्यविज्ञामशाम्यन्तीं प्रत्याख्याय समुद्धरेत्।
पायुं विस्नाङ्गुलीभ्यान्तु गुदमेढ्रान्तरेणताम्॥
सेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्यतु।

अश्माधिकार इत्यादि।— तत्तैलमिति अश्माधिकारोक्तविधिना सिद्धं तत्' पुनरपि द्विगुणं क्षीरं दत्त्वा वीरतरादिक्वाथेन चतुर्गुणेन द्विगुणेन वा, पूर्व्वकल्केनेति सैन्धवाद्यकल्केन पचेत्। अन्ये तु केवलं तैलमेव वीरादिना पचेदिति पठन्ति तत्तु न व्यवहारसिद्धम्। यद्यपि सैन्धवाद्ये तिलतैलमेवाश्मरेऽश्मोक्तं तथापि च एतत् वरुणादौ तिलतैलस्यैव सूत्रस्रोतोनुसारित्वेन यौगिकत्वादुपादानमित्याहुः। पिच्छित इत्यागन्तुकमर्म्मविशेषे, मथित इति चूर्णिते॥ १४॥

त्वक्पत्रेत्यादि।—क्वाथार्थवरुणकस्य यथालाभं त्वक्पत्रमूलपुष्पं पल १२ गोक्षुर पल १२ जल १४ शेष १६ अकल्कमिदं तैलम्॥ १५॥

सव्यपार्श्व इति।—वामपार्श्वे निःशेषमश्मरीं कुर्य्यादिति सुम- ... ... । यतो दक्षिणं निर्हरेदिति वक्ष्यमाणसूत्रमिति वर्षैः।

अयं हत्वाश्मरीमात्रं कर्मैत्तां शल्यतन्त्रवित् ॥
भिन्ने तु वस्तौ त्वज्ञानान्मृत्युः स्यादश्मरीं विना ।
निःशेषामश्मरीं कुर्याद्वस्तौ रक्तञ्च निर्हरेत् ॥
हृताश्मरं कदुष्णाम्भो गाहयेद्भोजयेच्च तम् ।
गुडं मूत्रविशुद्ध्यर्थं मध्वाज्याक्तव्रणं ततः ॥
दद्यात् साज्यां त्र्यहं पेयां साधितां मूत्रशोधिभिः ।
आदशाहं ततो दद्यात् पयसा मृदुमोदनम् ॥
स्वेदयेद्यवमध्वाढ्यैः कषायैः क्षालयेद्व्रणम् ।
प्रपौण्डरीकमञ्जिष्ठायष्टिलोध्रैश्च लेपयेत् ॥
एतैश्च सलिलैः सिद्धं घृतमभ्यञ्जने हितम् ।
अशान्ते तु सप्ताहाद्व्रणे दाहोऽपि चेष्यते ॥
दैवान्नाड्यां तु या लग्ना तां विपाट्यापकर्षयेत् ॥ १६ ॥
इत्यश्मरीशर्कराचिकित्सा ।

---

तथासति [illegible]रच्छजा प्रपूर्यत इति भावः। हृताश्मरीमित्यादौ गुडं भोजयेदित्यन्वयः। मूत्रशोधिभिरिति तृणपञ्चमूलादिभिः। तत इति त्र्यहादूर्द्ध्वं आदशाहं दशाहपर्य्यन्तम्। पयसा दुग्धेन मृदुभोजनं कोमलभक्तं [illegible] तथा स्वेदयेच्च दशाहाभ्यन्तर एव स्वेदोऽप्युक्तः। दशरात्रं [illegible]मप्रमत्तं स्वेदयेदिति। स च स्नेहद्रवस्वेदः रक्तपित्तानुगतत्वाद्वायोरिति गयदासः। यवमध्वाढ्यैरिति मृदुमोदनमित्यस्य विशेषणं यवकृतभक्ष्यप्रधानं मधुप्रधानञ्चेत्यर्थः। कषायैः क्षालयेद्व्रणमिति दशाहादूर्द्ध्वमेव क्षीरिवृक्षकषायैः क्षालनं बोध्यं भोजसम्वादात्। सलिलैरिति घृतसाधनद्रव्यं सम्बध्यते न तु लेप इति सुश्रुतसम्वादात् ॥ ११ ॥

इति अश्मरीरोगचिकित्सा।

# अथ प्रमेहाधिकारः ।

श्यामाककोद्रवोद्दालगोधूमचणकाढ़की ।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा ॥
आढ़कं तिक्तशाकानि यवान्नञ्च समोमधु ।
पारिजातजयानिम्बवह्निगायत्रीणां पृथक् ॥
पाठायाः सागुरोः पीताद्वयस्य शारदस्य च ।
जलेक्षुमद्यसिकताशनैर्लवणापिष्टकान् ॥
सान्द्रमेहान् क्रमाद्घ्नन्ति क्वाथाश्चाष्टौ समाक्षिकाः ॥ १ ॥
दूर्वाकशेरुपूतीककुम्भीकप्लवशैवलम् ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥
त्रिफलारग्वधद्राक्षाकषायो मधुसंयुतः ।
पीतो निहन्ति फेणाख्यं प्रमेहं नियतं नृणाम् ॥
लोध्राभयाकट्फलमुस्तकानां विडङ्गपाठार्जुनधन्वनानाम् ।

---

अश्मर्य्यनन्तरं बस्तिविकृतिसामान्यात् प्रमेहप्रतिकार उच्यते । श्यामाकेत्यादि ।— उद्दालो वनकोद्रवः, आढ़की तुवरी, यवान्नमिति यवशक्त्वादिकम् । पारिजातेत्यादि । पारिजातः पारिभद्रकः, जया जयन्ती, वह्निश्चित्रकः, गायत्री खदिरः । पाठायाः सागुरोरित्येकः क्वाथः । पीता द्वयं हरिद्राद्वयम् । अयमप्येकः । शारदः सप्तपर्णः । पारिभद्रेत्यादयोऽष्टौ क्वाथाः जलाद्यष्टौ मेहान् क्रमाद्घ्नन्तीत्यन्वयः ॥ १ ॥

दूर्वेत्यादौ ।— पूतिकः करञ्जस्य त्वक् । कुम्भीकः पाकलाः, प्लवः कैवर्त्तमुस्तकम् । योगे मधु क्षिपन्ति वृद्धाः सम्प्रदायात् । त्रिफलेत्यादि स्पष्टम् । लोध्रेत्यादि ।— योगद्वयं वाग्भटस्य । कदम्बेत्यादि योगद्वयं चरकस्य चक्रेण प्रतिसंस्कृत्य लिखितम् । धन्वनो धातकी, दीप्यकोऽयमानी, प्रसवः खदिरः, कदम्बस्य इति खदिरस्य संघा

कट्‌फलपाठाऽर्जुनदीप्यकानां विडङ्गपाठालोध्रधवशल्यकानाम्॥
चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः॥२॥

अश्वत्थाच्चतुरङ्गुल्यान्न्यग्रोधादेः फलत्रिकात्।
सजिङ्गीरक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः॥
नीलहारिद्रशुक्लाख्यक्षारमाञ्जिष्ठकक्षयान्।
मेहान् हन्युः क्रमादेते सक्षौद्रो रक्तमेहनुत्॥
क्वाथः खर्जूरकाश्मर्यतिन्दुकास्थ्यमृताकृतः।
लोध्राऽर्जुनोशीरकुचन्दनानामरिष्टसेव्याऽमलकाभयानाम्।
धात्र्यर्जुनारिष्टकवत्सकानां
नीलोत्पलानां तिनिशार्जुनानाम्॥
चत्वार एते विहिताः कषायाः
पित्तप्रमेहे मधुसंप्रयुक्ताः॥ ३॥

---

उक्तं हि—वङ्गग्रन्थस्य संप्रोक्तो याज्ञिकः कुष्ठनाशन इति। तेनैकदेशे-ऽपि संज्ञिनं गमयति यथा भीमो भीमसेनः। उक्तं हि चरके दार्वी विडङ्गं खदिरो धवश्चेति। वाग्भटेऽप्युक्तमेवं अन्ये तु शल्यकं मदनफ-लमाहुः॥ २॥

पित्तमेहस्य याप्यत्वेन यापनार्थं चिकित्सितमाह अश्वत्थादि-त्यादि।—नीलादिषु पञ्चसु मेहेषु क्रमेण एते पञ्च योगा बोध्याः। तत्र अश्वत्थक्वाथेनैको योगः। चतुरङ्गुल्यादिति द्वितीयः न्यग्रोधा-देरिति तृतीयः।। न्यग्रोधादिश्च गणोऽत्र सौश्रुतः। यथा न्यग्रोधो-दुम्बराश्वत्थ-प्लक्ष मधुक-ककुभ जम्बु कदम्ब — पियाल-मधुक रोहिणी वञ्जुल बदर-तिन्दुक-शल्लकी लोध्र-भल्लातक-पलाश-नन्दीवृक्षाश्चेति अत्र प्लक्षो वा कदरः ककुभोऽर्जुनः नन्दीवृक्षो गर्दभाण्डः। अन्ये तु न्यग्रोधादिशब्देन पञ्चवल्कलमाहुः। फलत्रयादिति चतुर्थः। सजि-ङ्गीरक्तसारादिति।—जिङ्गी मञ्जिष्ठा, रक्तसारो रक्तचन्दनम्। पञ्चमः। हन्युरिति यापयेयुरित्यर्थः। किम्वा अनल्पमेदोद्भवात्

छिन्नावह्लीकषायेण पाठाकुटजरामठम्।
तिक्तां कुष्ठञ्च सञ्चूर्ण्य सर्पिर्मेहे पिबेन्नरः॥
कदरखदिरपूगाग्रं क्षौद्राक्तं पिबेत्।
अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत्॥
पाठाशिरीषदुस्पर्शामूर्वाकिंशुकतिन्दुक-
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत्।
काम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि
क्षौद्रेण लिह्यात् कफपित्तमेही॥ ४॥
सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः।
कषायस्त्रिफलादारुमुस्तकैरथवा कृतः॥ ५॥

---

पित्तजानामपि साध्यत्वम्, साध्यास्तु मेदो यदि न प्रदुष्टमिति चरकवचनात्। मूत्राम्लमेहोऽम्लमेहः। सुश्रुते कालमेहस्थानेऽम्लमेहः पठ्यते। रक्तमेहचिकित्सामाह सक्षौद्र इत्यादि। — अत्र खर्ज्जूरकाश्मर्ययोः फलम्, तिन्दुकस्य फलास्थि। लोध्रेत्यादौ। — कुचन्दनं रक्तचन्दनम्, अरिष्टो निम्बः, सेव्यमुशीरम्, मोचोऽपुष्पाणामिक्षव मोचोऽपुष्पकेवा इति पाठान्तरम्, तिनिश आक्रुकः॥ २॥

इदानीमसाध्येष्वपि वातिकमेहेषु यापनार्थं योगानाह छिन्नेत्यादि। — वह्लिक्षिप्रकः। पाठादिकुष्ठान्तानां चूर्णं गुडूचीवल्कलक्वाथे प्रक्षिप्य पिबेत्। कदरो विट्खदिरः, खदिरस्तु तदितरः, पूगं पूगफलम्। पाठेत्यादौ। — तिन्दुककपित्थयोः फलम्, तिन्दुकस्य केन्दुकफलम्। काम्पिल्लेत्यादौ। — चूर्णितानीति विशेष्यपदं द्रष्टव्यं एवं वैभीतकरोहीतकयोरपीति केचित्। अन्ये तु कपित्थपुष्पाणि चेति चकारात् काम्पिल्लादीनां कुसुममित्युपलक्षयन्ति। कफपित्तमेहीति कफमेही चेत्यर्थः॥ ४॥

## न्यग्रोधाद्यं चूर्णम् ।

न्यग्रोधोडुम्बराश्वत्थश्योणाकारग्वधासनम् ।
आम्रजम्बू कपित्थञ्च प्रियालं ककुभं धवः ॥
मधुकं मधुकं लोध्रं वरुणं पारिभद्रकम् ।
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढ़की ॥
करञ्जं त्रिफला शक्रभल्लातकफलानि च ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ।
फलत्रयरसञ्चानु पिबेन्मूत्रं विशुध्यति ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यान्ति योगेन पीड़का न च जायते ॥
न्यग्रोधाद्यमिदं नाम्ना चाम्रजम्बुस्थि रूच्यते ॥

### त्रिकण्टकाद्यं तैलं घृतं यमकञ्च ।

त्रिकण्टकाश्मन्तकसोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः ।
वचापटोलार्जुननिम्बमुस्तैर्हरिद्रया दीप्यकपद्मकैश्च ॥

---

अमरा गुड़ूची अयञ्च पञ्चमोयोगः शालेत्यादि ।— शालस्य सारः मुष्ककी घण्टापारुली तस्या मूलम् । वत्सिलस्य त्वक् ॥ ७ ॥

न्यग्रोधादिचूर्णं । न्यग्रोधो वटः, असनः पीतशालः । आम्रजम्बूकपित्थञ्चेति आम्रजम्ब्वोः फलास्थि कपित्थस्य फलमित्याहुः । ककुभोऽर्ज्जुनः, धवः स्वनामख्यातः, मधुकोमधुकसारः, आढ़की तुवरी करञ्जस्य फलम्, शक्रः कुटजः । त्रिकण्टको गोक्षुरः । अश्मन्तकोमलुआक इति ख्यातः । सोमवल्कः खदिरः सर्व्वैरित्युक्तेः पृथगपि कल्कैः संहत्य साधनं स्यादत आह समस्तैरिति मिलितैरित्यर्थः यथालाभपरिहारार्थमिति । वातकफजं पु मेहेषु तैलं पैत्तिके घृतं मिश्रं त्रिषु कृच्छ्रेष्विति दोषत्रयव्यवधानप्रादुर्भावे सति मिश्रं घृततैलं यमकं भवे-

मञ्जिष्ठपाठागुरुचन्दनैश्च सर्व्वैः समस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद्घृतन्तु पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥ ८ ॥

धान्वन्तरं घृतम् ।

कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम् ।
पित्तमेहघ्ननिर्यूहसिद्धं पित्ते हितं घृतम् ॥
दशमूलं करञ्जौ द्वौ देवदारुहरीतकी ।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥
सुधा नीपकदम्बाश्च बिल्वभल्लातकानि च ।
शटी पुष्करमूलञ्च पिप्पलीमूलमेव च ॥
पृथग्दशपलान् भागान् ततस्तोयार्म्मणे पचेत् ।
यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
त्रिवृतं त्रिफला भार्गी रोहिषं गजपिप्पली ॥
शृङ्गवेरं विडङ्गानि वचा कम्पिल्लकन्तथा ।
गर्भेणानेन तत् सिद्धं पाययेत्तु यथाबलम् ॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम् ।
कुष्ठं गुल्मं प्रमेहांश्च श्वयथुं वातशोणितम् ॥

---

टिप्पणी: । त्रिदोषत्वञ्च कफपित्तप्रमेहेष्वेवानुषङ्गानुबन्धकृतं बलवच्च किम्वा सर्व्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतदोषाविर्भावः कदाचिद्भवतीति ज्ञेयम् ॥ ८ ॥

कफमेहेत्यादौ क्वाथनिर्यूहेति पदोपादानादकल्कत्वं बोध्यम् । दशमूलेत्यादौ ।— करञ्जयोः फलं नतु मूलम्, मेहघ्नत्वं फलस्यैवेति यदुक्तं — करञ्जाङ्कुरकादिफलं जयेत्प्रमेहानुदिति । सुधा स्नुही तस्या मूलम्, नीपकदम्बौ स्वल्पवृहत्कदम्बौ किम्वा कदम्बोभूकदम्बः च चाविलम्बः, तन्त्रान्तरे भूकदम्बपाठात्, नीपस्थाने क्वापि कदम्बः

गोहोदरं तथार्शांसि विद्रधिं पीडकाश्च याः ॥
अपस्मारं च योन्मादं सर्पिरेतन्नियच्छति ।
पृथक् तोयार्म्मणे तत्र पचेद्दशाख्यात्कृतं घृतम् ॥
घृतत्रयाधिके तोयमुत्सर्गक्रमतोभवेत् ॥ ८ ॥

त्र्यूषणादिगुडिका ।

त्रिकटुत्रिफलाचूर्णतुल्ययुक्तन्तु गुग्गुलुम् ।
गोक्षुरक्वाथसंयुक्तां गुडिकां कारयेद्भिषक् ॥
दोषकालबलापेक्षी भक्षयेच्चानुलोमिकीम् ।
न चात्र परिहारोऽस्ति कर्म्म कुर्य्याद्यथेप्सितम् ॥
प्रमेहान् मूत्रघातांश्च वातरोगोदरं जयेत् ॥ १० ॥

शिलाजतुप्रयोगः ।

शालसारादितोयेन भावितं यच्छिलाजतु ।

---

पठ्यते । पृथग्दशपलान् भागानिति दशमूलं प्रत्येकं दशपलम्, अत्र प्रतिशतं तोयार्म्मणादानं शतत्रयाधिके द्रव्ये पुनरुत्सर्गसिद्ध-मष्टगुणमेव जलं देयं अतएव वक्ष्यति, पृथक् तोयार्म्मण इत्यादि, अर्म्मणो द्रोणः, चन्द्रस्त्वाह पाठान्तरमतं तोयं क्वाथ्यादष्टगुणमिष्टमिति । अस्यार्थः एतदेव घृतं तन्त्रान्तरेऽन्यथा पठ्यते तत्र क्वाथार्थ-मष्टगुणन्तोयमुक्तम्, तत् प्रामाण्यादिहाप्यष्टगुणं तोयं देयम् । अयं-प्रकारस्त्वधुना चक्रमतेनैव । निचुलः इज्जलः, रोहिषं गन्धतृणम् ॥ ८ ॥

त्रिकटुकेत्यादि ।— त्रिकटु त्रिफलाचूर्णं कीदृशं तुल्यगुग्गुलु-युतम्, पुनः कीदृशं गोक्षुरक्वाथेन सम्यग्युक्तं भावितं एवं कृत्वा गुडिकां कारयेदित्यर्थः । मिलितत्रिफलाचूर्णं पल १ मिलितत्रिकटुचूर्णं पल १ गुग्गुलु पल २ चूर्णयुक्तगुग्गुलुभावनार्थं गोक्षुरः पल ४ क्वाथार्थं पाक्यम् ॥ एवं बहुवारमातपे भावयेत् ततस्तु षड्टमाषक-मिता वटिकाः कार्य्याः ॥ १० ॥

पिबेत्तेनैव संशुद्धदेहः पिष्टं यथाबलम्॥
माङ्गल्यानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम्।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः॥
मधुमेहं शिलायासौ प्रमेहमश्मरीं तथा।
वपुर्व्वर्णबलोपेतः शतं जीवत्यनामयः॥११॥
मात्रिकं धातुमप्येवं युञ्ज्यात्तस्याप्ययं गुणः।
शालसारादिवर्गस्य क्वाथे तु घनतां गते॥
दन्तीलोध्रशिवाकान्तलौहताम्ररजः क्षिपेत्।
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति॥
व्यायामजातमखिलं भजन्मेहान् व्यपोहति।
पादत्वक्छत्ररहितोभिक्षाशी मुनिवद्यतः॥
योजनानां शतं गच्छेदधिकं वा निरन्तरम्।
मेहान् जेतुं वने वापि नीवारामलकाशनः॥१२॥
शराविकाद्याः पीड़काः साध्यः शोथवद्भिषक्।
पक्वाश्चिकित्सेद्व्रणवत्तासां पाने प्रशस्यते॥

---

शालसारादितोयेनेत्यादि वक्ष्यमाणरसायनविधिना पेयम्। तेनैवेति शालसारादितोयेनैव पिबेत्। संशुद्धदेह इति वमनादिना पिष्टमिति चूर्णितम्, तुलां यावदुपयुञ्जीत इति प्रतिदिनमर्द्धकर्षादिमात्रया। शालसारादिवर्गस्य चतुर्थभागावशिष्टे क्वाथे पुनः पाकाद्घनीभूते दन्त्यादीनां मिलितानां चूर्णं पादिकं प्रक्षेप्यं कुटजलेहवत्। शिवा हरीतकी, मारितपुटितकान्तलौहादिचूर्णं तस्य सर्वं शिलाजतुवत्। व्यायामजनितमिति मल्लयुद्धादिजनितम्। नीवारेऽत्र च यं तेन श्यामाकादिकमपि बोध्यं यदाह सुश्रुतः — महावने वा श्यामाक नीवारामलक-कपित्थ तिन्दुकाश्मन्तकफलमूलाहारो मृगैः सह वसेदिति॥११—१२॥

प्रमेहपीड़काचिकित्सामाह शराविकाद्या इति।—शोथवदिति।

क्वाथं वनस्पतेर्व्वाऽस्य मूत्रस्य व्रणशोधनम्।
एलादिकेन कुर्व्वीत तैलञ्च व्रणरोपणम्॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च।
शालसारादिसेकञ्च भोज्या दश्च कणादिना॥
सौवीरक सुरां शुक्तं तैलं क्षीरं घृतं गुड़म्।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्ज्जयेत्॥ १२॥
इति प्रमेहमधुमेहपिड़काधिकारः।

---

## अथ स्थौल्याधिकारः।

व्योषाद्यसक्तुप्रयोगः।
श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः॥
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्।

---

न्यग्रोधादिरिति वनस्पतिरिति वटादेः, वस्तमूत्रं छागमूत्रम्। एला-दिकेनेत्यादि।— एलादिगणस्य सौश्रुतः कल्कक्वाथावनिर्द्दिष्टौ गणात्तस्माद् समावपेदिति वचनात् एलादिगणस्य क्वाथः कल्कश्च। अन्ये त्वेलादि-गणस्य कल्कोक्तं चतुर्गुणमित्याहुः। आरग्वधादिः सौश्रुतगणः। क्वाथमिति पानार्थं परिषेकार्थञ्च। भोज्यादिमित्यादि यत्नात् पानमपि भोज्यं कणादिनेति पिप्पल्यादिगणेन सौश्रुतेन। निदानपरिवर्जनमाह सौवीरमित्यादि। १२।

इति प्रमेह प्रमेहपीड़का-चिकित्सा।

---

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दुष्टमेदोजत्वाच्च प्रमेहानन्तरं स्थौल्यचिकित्सामाह श्रमेत्यादि। मधुरं वारि यदि

प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ।
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत् ॥
चव्यजीरकव्योषहिङ्गुसौवर्च्चलानलाः ।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥
विड़ङ्गनागरक्षारकाललोहरजो मधु ।
यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः ।
व्योषं विड़ङ्गं शिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥
हिङ्गु केबुकमूलानि यमानीधान्यचित्रकम् ।
सौवर्च्चलमजाजीञ्च हपुषाञ्चेति चूर्णयेत् ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ।
शक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत् ॥
प्रयोगादस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः
प्रमेहामूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः ॥
प्लीहा पाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ।
क्रिमयो ग्रहणीदोषाः श्वैत्यं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च जायते ॥ १ ॥

---

मधुवारि अत्र उष्णत्वं न कार्यं जलमेव यौगिकमिति वृद्धाः । चव्येत्यादि ।— अनलश्चित्रकः । शक्तय इह यवशक्तवः व्योषादिशक्तुप्रयोगन्यायात् सर्व्वचूर्णात् षोड़शगुणाः । अनेन एकवारं भोजनमाहारकल्पत्वादित्याहुः । विड़ङ्गेत्यादौ ।— क्षारो यवक्षारः कालं लौहं वज्रादि, अस्य चूर्णं मारणपुटननिष्पन्नत्वं ग्राह्यं अत्र चव्यचूर्णमेव समभागं ग्राह्यमिति किन्तु लौहस्य महावीर्य्यत्वेन प्राधान्यादितरमिलितचूर्णसमत्वं मधुना चावापवेह इत्यप्याहुः । व्योषमित्यादौ तैलघृतक्षौद्राणां प्रत्येकं मिलितचूर्णसमत्वं शक्तूनाञ्च षोड़शगुणो भागः बहु-

अमृताद्यो गुग्गुलुः ।

बदरीपत्रकल्केन पेया काञ्जिकसाधिता ।
स्थौल्यनुत् स्यात् साग्निमन्थरसं वापि शिलाजतु ॥
अमृतात्रुटिवेल्लवत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं पीडकास्थौल्यभगन्दरं जयेत् ॥ २ ॥

नवकगुग्गुलुः ।

व्योषाग्निस्त्रिफलामुस्तविडङ्गैर्गुग्गुलुं समम् ।
खादन् सर्व्वान् जयेद्व्याधीन् मेदः श्लेष्मामवातजान् ॥ ३ ॥

लौहरसायनम् ।

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम् ।
त्रिवृतालम्बुषा स्नुक् च निर्गुण्डी चित्रकं शटी ॥
एषां दशपलान् भागांस्तोये पञ्चाढके पचेत् ।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥

---

टितचूर्णमेवया । सक्तुपर्णमिति जलालोडितयवसक्तुस्वरूपतया तेन सक्तुपर्णसंज्ञस्यान्नपर्णत्वं ज्ञेयम् । मात्रा चास्य आहारद्रव्यप्रधानत्वाद्भूयसी । यन्त्रं त्रिफलम् ॥ १ ॥

बदरीत्यादि ।— बदरीपत्रं पत्रं पिष्ट्वा काञ्जिकद्रवेण पेया साध्या । साग्निमन्थेत्यादि — द्वितीयो योगः रसः क्वाथः शिलाजतु प्रक्षेपम् । अमृतेत्यादौ ।— त्रुटिः सूक्ष्मैला, वेल्लो विडङ्गः, कलिङ्गो इन्द्रयवः केचिच्छन्दोभङ्गभयात् कान्तिपाठं कुर्व्वन्ति तन्मते कान्तिर्भल्लातकः किन्तु महेश्वरपालकाद्यामपि इन्द्रयव एव व्याख्यातः । तस्मादनन्तत्वाच्छन्दोभागानां नात्र छन्दोभङ्गदोष आशङ्कनीयः । क्रमवृद्धिमिति अमृताया एको भागः द्वौ त्रुटेरित्यादि मधुना आलोड्य देयम् ॥ २ ॥

व्योषेत्यादौ ।—अग्निश्चित्रकः । गुग्गुलुरत्रादि पल पिण्ड

पलद्वादशकं देयं तीक्ष्णलौहं सुचूर्णितम्।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम्॥
पचेत्ताम्रमये पात्रे सुधीते चावतारिते।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम्॥
एलात्वचोः पलार्द्धञ्च विडङ्गानि पलत्रयम्।
मरिचं चाञ्जनं कृष्णा द्विपलं त्रिफलान्वितम्॥
पलद्वयन्तु काश्मीरं सूक्ष्मचूर्णीकृतं बुधैः।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत्॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम्
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा॥
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम्।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम्॥
मूर्च्छामोहविषोन्मादगराणि विविधानि च।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम्॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम्।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम्॥
श्रीकरं पुत्रजननं वलीपलितनाशनम्।
नाश्नीयात् कदलीकन्दं काञ्जिकं करमर्द्दकम्॥
करीरं कारवेल्लञ्च षट्ककाराणि वर्ज्जयेत्॥४॥

---

तत्र युगयुलोः शोधितस्य च क्वाथकरणमय एव क्वाथमध्ये प्रक्षेपः। अवतप्तुषा चुल्लिकरी। पुराणसर्पिर्ह्यत्र वर्षस्थितं यदुक्तगुणगन्धमित्यादि। शिलाजतु पलद्वयन्तु शोधितं भावितञ्च ग्राह्यम्। एलात्वचोर्मिलित्वा पलार्द्धं, मरिचादीनां प्रत्येकं पलद्वयम्, अञ्जनं रसाञ्जनं मधुनस्तु दिनान्तरे प्रक्षेपं मधुनः प्रस्थार्द्धं षोडशपलानि लौहचौ-हपदस्य पाकः लौहान्तरपदस्य मर्द्दनादिक्रिया बोध्या॥१-४॥

## त्रिफलाद्यं तैलम्।

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम्॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम्।
स्थूलतालस्यकण्ड्वादीन् जयेत् कफकृतान् गदान्॥ ५॥
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोहाभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः॥
माषादलरसोलेपाच्छङ्खचूर्णेन संयुतः।
बिल्वपत्ररसैर्वापि गात्रदौर्गन्ध्यनाशनः॥
हरीतकीलोध्रमरिष्टपत्रं चूतत्वचो दाडिमवल्कलञ्च।
एषोऽङ्गरागः कथितोऽङ्गनानां जङ्घाकषायश्च नराधिपानाम्॥
गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम्।
कक्षादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयेन॥

---

त्रिफलातैले इन्द्रसुरा गोरक्षकर्कटी शिग्रुर्वा वा।— सुरसादिरसप्लुतमिति सुश्रुतोक्तसुरसादिगणस्य क्वाथप्लुतं वा। ५॥

मेदोदोषजन्ययोः स्वेददौर्गन्ध्ययोश्चिकित्सामाह शिरीषेत्यादि।— लामज्जकमुशीरं, हेमनागकेशरचूर्णम्, पत्रं तेजपत्रं तमालपत्रमित्यन्ये, अम्बु बालकम्, लोहमगुरुचन्दनं च तचन्दनम्। शङ्खचूर्णेन संयुतमिति दग्धशङ्खचूर्णेन एवं बिल्वपत्ररसोऽपि।

हरीतकीत्यादौ।— अरिष्टपत्रं निम्बपत्रम्, दाडिमवल्कलं त्वचस्य कल्कस्य वा, अङ्गरागो वर्णप्रसाद। जङ्घाकषाय इति गजवाजिवाहनेन विघर्षितजङ्घयोर्वर्णप्रसादनार्थं कषायविलेपनमित्यर्थः। यदुक्तं मेदिनीकरकोषे "कषायो रसभेदे च निर्यासे च विलेपने" इति।

गोमूत्रमित्यादि। योगान्तरं वर्णोज्ज्वलं हरिद्राद्यं कल्कं

चिञ्चापत्रस्वरसमर्दितं कक्षादियोजितं जयति ।
दग्धहरिद्रोद्वर्त्तनमचिराद्देहदौर्गन्ध्यम् ॥
दलजलदलघुमलयाभयविलेपनं हरति देहदौर्गन्ध्यम् ।
बिमलार्याम्लसंहितं पीतमिवाम्बुपाचूर्णम् ॥ ६ ॥
इति स्थौल्यदौर्गन्ध्यचिकित्सा ।

---

## अथोदराधिकारः ।

उदरे दोषसम्पूर्णे कुक्षौ मन्दोऽथतोऽनलः ।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान् ।
पयोमूत्रासवारिष्टमधुसीधु तथा पिबेत् ॥
वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत् ।

---

इत्यन्ये । हरितालं गोमूत्रपिष्टं कुष्ठं हन्ति गोपयसा युक्तमिति पिष्टं तदेव दौर्गन्ध्यहरम्, तथा रजनीद्वयेन सहितं तदेव हरितालं पयोभिः क्षीरैः पीत्वा तिलकदानं वशीकरणं भवतीत्यर्थः ।

चिञ्चेत्यादि ।— चिञ्चापत्रस्वरसेन कक्षयोः कच्छयोस्तटमन्तरं पुटदग्धहरिद्रां पिष्ट्वा उद्वर्त्तनं कार्यमित्यर्थः । जलदेत्यादि दलं तेजपत्रम्; जलं बालकं, लघु अगुरु, मलयजं श्वेतचन्दनम्, अभयमुशीरम्, अम्बुना पुष्करी ॥ ६ ॥

इति स्थौल्याधिकारः ।

---

उदरोऽप्येवबाधस्यापि स्थौल्यानन्तरमुदरचिकित्साकाह उदर इत्यादि । उदरे उदररोगे । वातोदरमित्यादि ननु विरेचनमेव स्नेहपानमजीर्णोदरी म्रियते इति वचनात्, स्नेहपानं न सिद्धं तथा नोदरी नातिदाराग्नेस्त्यादिना स्नेहोऽनिषिद्धः तत् कथमत्र स्नेहस्य दो-

स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम्।
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात्।
सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत्।
विरिक्ते च यथादोषहरैः पेया शृताहिता॥१॥
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम्।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत्॥
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम्॥
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः।
युक्तं प्लीहोदरी जातं सव्योषन्तु दकोदरी॥
बद्धोदरी तु हपुषायवानीजाजिसैन्धवैः।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम्॥
मूत्रयत्यक्षारलवणैर्युक्तन्तु निचयोदरी।
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम्॥
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते॥२॥

---

वरेण: उच्यते अतस्तयोर्निर्बन्धो वाच्यः तत्र शोधनार्थयोः अन्यथा दोषहरणस्य दुष्करत्वात्। परिम्लानं क्षीणं तद्वेति वस्त्रवेष्टनेन। उदरे पुनः पुनः शोधनोपपत्तिमाह दोषातिमात्रेत्यादि।— स्रोतोमार्गं स्रोतोमुखं मार्गं यस्तोदन पुरीषकफमार्गं वायोः। यथादोषहरैरिति। यस्मिन्नुदरे यो दोषः तत्र तद्दोषघ्नस्नेहैः प्रभूतादिभिः॥१॥

यमानीत्यादि।—नातिपेलवमित्यनेनैकोयोगः, नातिपेलवं नातितनु। अन्ये तु कफोदरीत्यनेन एकएवाह:। तत्र यमानीसैन्धवाजाजी मधुयोगैः कफोदरीति वाग्भटविरोधात्। मधुतैलेत्यादौ जातमिति-च्छेदः, जातदधिभवमित्यर्थः। सव्योषन्तु दकोदरीति दकोदरी

वातोदरे पयोऽभ्यासो निरूहो दशमूलिकः ।
सोदावर्त्ते वातघ्नाम्लशृतैरण्डानुवासनः ॥ ३ ॥

सामुद्राद्यं चूर्णम् ।

सामुद्रसौवर्च्चलसैन्धवानि क्षारं यवानामजमोदकञ्च ।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गु विडङ्गञ्चेति समानि कुर्य्यात् ॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलं प्रशस्तम् ।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम् ।
अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः ॥ ४ ॥
पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत् ।
अनुवास्याबलं क्षीरबस्तिशुद्धं विरेचयेत् ॥

---

न प्रकोपं तक्रं पिबेदित्यर्थः । दीप्यकं यमानी । निचयोदरी सन्निपातोदरी । गौरव इत्यादि असंस्कृतस्य केवलतक्रस्यायं गुण इति ॥ २ ॥

वातोदर इत्यादि ।— पयोऽभ्यास इति क्रमेण यथार्थं बलमनागमरं पयोऽभिवर्द्धनीयम् । निरूहो दशमूलिक इति दशमूलक्वाथेन निरूहः कार्य्य इत्यर्थः । अयञ्च तीक्ष्णविरेचनरूक्षयुक्तः कार्य्यः चरकप्रामाण्यात् । सोदावर्त्ते वातोदर इत्यन्वयः । वातघ्नाम्लशृतैरण्डानुवासन इति वातघ्नद्रव्यैः तथा अम्लैश्च काञ्जिकादिभिः शृतेनैरण्डसिद्धैरण्डतैलमनुवासनं यस्य कर्त्तुः स तथा इति, अनुवासनस्य स्नेहरूपत्वात् एरण्डपदेनैरण्डतैलमुच्यते ॥ ३ ॥

सामुद्रेत्यादि ।— यवानां क्षारः यवक्षारः । अत्र हिङ्गुदकबहुप्रयोगः । चूर्णानीत्यत्र संमिश्राणीति शेषः ॥ ४ ॥

पित्तोदरेत्यादि ।—क्षीरप्रधानो बस्तिः, क्षीरबस्तिः, तेन बलिनं पुरुषं पूर्वमिति अनुवासनमकृत्वैव विरेचयेत् । अबलं पुनरादावनुवास्य ततः क्षीरबस्तिशुद्धं विरेचयेत् । विरेकोऽप्यत्र बलाबलमवेक्ष्यैव कार्य्यः । यदुक्तं हि वाभटे—दुर्बलं अनुवास्यादौ शोधयेत् क्षीरबस्तिभिः । याते चाग्निबलं स्निग्धं तथा भूयो विरेचयेदिति । केन विरेचयेदित्याह पयसेत्यादि । अतोऽत्रबहुदोषस्य यदं पाद्यं विरे-

जातं जातं जलं स्राव्यं शास्त्रोक्तं शस्त्रकर्म च
जलोदरे विशेषेण द्रवसेवां विवर्जयेत् ॥ ६ ॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
स्नुहीपयोभावितानां पिप्पलीनां पयोऽशनः ॥
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी ॥ ७ ॥
शिलाजतुनो मूत्राणां गुग्गुलोस्त्रैफलस्य च ।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥
स्नुक्पयसा परिभावितचूर्णैर्निर्मितः पूपः
उदरमुदारं हिंस्याद्योगोऽयं सप्तरात्रेण ।
पिप्पलीवर्द्धमानं वा कल्पदृष्टं प्रयोजयेत् ।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ ८ ॥

---

साध्यमुक्तं तथापि प्रायः शब्देन तस्यासाध्यताभिप्रायस्य दर्शितत्वात् चिकित्सितमिदं यापनार्थम् ।

जाते स्वेदादिक्रमेण कोष्ठस्य छिद्रोदरे कोष्ठशुद्धेऽप्युदके द्रवसेवा निषेधः । शास्त्रोक्तमिति चक्रशास्त्रोक्तम् ॥ ६ ॥

देवदार्वित्यादौ ।— पलाशः किंशुकस्तस्य फलं शास्त्रं उदरहरत्वात् । स्नुहीपयस इत्यादि ।— अत्र एकविंशतिवारान् भावयेत् भावनाविकल्पाभावात् । अथवा सकृदेव भावनया । एतान् पिप्पलीर्दिने दिने पञ्च वा कोष्ठानुरूपं प्रतस्तद्वैकान्तरं द्व्यन्तरं वा विरेचनार्थं क्षीरेण । पिबेत् सहस्रन्तु प्रयुञ्जीतेति - उपयुक्तं पिप्पलीसहस्रं वा यावता कालेन सहस्रं पूर्णं तदुक्तं भवति एतच्चोत्कृष्टवचनं तेन सहस्रादल्पमपि बोध्यम् ॥ ७ ॥

शिलाजतुनेत्यादौ ।— त्रिफलस्येति गुग्गुलोर्विशेषणम् । शिलाजतु तथापि प्रयोगपदं प्रकारान्तराभिधानादिभिः प्रत्येकं सम-

पटोलाद्यं चूर्णम्।

पटोलमूलं रजनी विडङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेत्॥
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततोमुष्टिं गवां मूत्रेण नापिबेत्॥
विरिक्तोजाङ्गलरसैर्भुञ्जीत मृदुमोदनम्।
मण्डं पेयाञ्च पीत्वा च सव्योषं षड़हं पयः॥
शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुनः पुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि॥
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति॥ ९॥

नारायणं चूर्णम्।

यमानी हवुषा धान्यं त्रिफला सोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शटी वचा॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्॥

---

ध्यते स्नुगित्यादौ।—पूपः पिष्टकम्, उदारमिति प्रचुरं कल्कद्रव्यमिति चरकोक्तरसायनविधिदृष्टम्॥ ८॥

पटोलमूलमित्यादौ।—त्वच इति निरस्थित्रिफलाग्रहणार्थम्। षडाद्यान् कार्षिकानिति पटोलमूलादीनां षण्णां प्रत्येकं कर्षभागा इत्यर्थः। त्रींश्च द्वित्रिचतुर्गुणानिति कम्पिल्लादयस्त्रयः क्रमात् कार्षिकभागापेक्षया द्वित्रिचतुर्गुणा इत्यर्थः। नीलिनी निलबुहा तस्याश्च फलं वृद्धवाग्भटसम्वादात्। मुष्टिरिति पलं विरिक्तोजाङ्गलरसैरित्यादि।—विरेचनदिने जीर्णे भेषजे मृद्वोदनमण्डपेयानामन्यतममग्निबलापेक्षया उपयोज्यम्। ततः ऊर्द्ध्वं षड़हं यथोक्तं पयः, ततः सप्तमेऽहनि पुनः पटोलादिचूर्णः पेयः, एवं पुनः पुनः कार्य्यः॥ ९॥

यमानीत्यादौ।—उपकुञ्चिका कृष्णजीरकः, कारवी कृष्णजीरक·

विड़ङ्गञ्च समांशानि दन्त्या भागत्रयन्तथा।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा॥
एष नारायणो नाम चूर्णो रोगगणापहः।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्बुभिरर्शसैः।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम्॥१०॥
दन्ती वचा गवाक्षी च शङ्खिनी तिल्वकं त्रिवृत्।
गोमूत्रेण पिवेत् कल्कं जठरामयनाशनम्॥
सक्षीरं माहिषं मूत्रं निराहारः पिवेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः॥
गवाक्षीशङ्खिनीदन्तीनीलिनीकल्कसंयुतम्।
सर्व्वोदरविनाशाय गोमूत्रं पातुमाचरेत्॥

---

क्षुद्रजीरकं जीरकशब्देन च प्रसिद्धं महज्जीरकं यवजगन्धा[illegible]अजमोदा स्वर्णक्षीरी कङ्कुष्ठः दन्त्याभागत्रयमाद्यभागापेक्षया एवं त्रिवृद्विशाल-योरप्याद्यभागापेक्षया प्रत्येकं द्वैगुण्यं सातला चर्म्मकषा। नाराय-णसंज्ञानिमित्तमाह नैनमित्यादि एतेन नारायणवाधम्यौन्नारायण-संज्ञायुक्तं भवति। यथार्हमिति वचनादन्यैरपि दोषव्याधिविपरीतै-र्द्रव्यैः पानमिदं दर्शयति॥१०॥

दन्तीत्यादौ।—गवाक्षी गोरक्षकर्कटी शङ्खिनी श्वेतवुह्ना। सक्षीरमित्यादौ—माहिषं मूत्रं पलमेकं द्वयं वा पीत्वा विरेको भवति

अर्कपत्रं सलवणमन्तर्धूमं दहेत्ततः।
मस्तुना तत् पिबेत् क्षारं गुल्मप्लीहोदरापहम्॥
पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वितः।
अम्लवेतससंयुक्तः शिग्रुक्काथः ससैन्धवः॥
गृहीत्वा यस्य संज्ञां पाटयित्वेन्द्रवारुणीमूलम्।
प्रक्षिप्यते सुदूरे श्वाम्यते प्लीहोदरं तस्य॥
रोहितकाभयाक्षोदभावितं मूत्रमम्बु वा।
पीतं सर्व्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत्॥११॥
देवद्रुमं शिग्रुमयूरकञ्च गोमूत्रपिष्टामथवाश्वगन्धाम्।
पीत्वाशु हन्यादुदरं प्रवृद्धं क्रिमीन् सशोथानुदरञ्च दूष्यम्॥
दशमूलदारुनागरच्छिन्नरुहापुनर्नवाभयाक्वाथः।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च॥
हरीतकीनागरदेवदारु पुनर्नवाच्छिन्नरुहाकषायः।
सगुग्गुलुर्मूत्रयुतश्च पेयः शोथोदराणां प्रवरः प्रयोगः॥
एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा।

---

गोक्षीरमेव पीत्वा स्थातव्यमित्युपदिशन्ति। अर्कपत्रं सलवणमिति सैन्धवेन तुल्यं परिणतार्कपत्रं गृह्णन्ति पीत इत्यादौ।—पिप्पल्यादिद्रव्यचतुष्टयं प्रक्षेप्यम्। रोहितकहरीतक्योश्च पञ्चकर्षेण पलद्वयपरिमितं गोमूत्रमम्बु वा स्थाप्यमिति केचित् अन्ये तु रोहितकहरीतक्योः क्षोदैः खण्डखण्डरूपैः शिलायां किञ्चिदवक्षुसैः सप्ताहं भावितं मूत्रमम्बु वेत्याहुः। वाग्भटप्रामाण्यात्॥११॥

इदानीं उदरोपद्रवभूतशोथसम्बन्धे सति चिकित्साविशेषमाह देवद्रुमित्यादि। मयूरकमपामार्गम्। मूत्रमत्र योगद्वयेऽपि, मूत्रेण पेषण पानञ्चेत्याहुः। इन्द्रटोप्पनिकायान्तु देवद्रुमादि अश्वगन्धान्त एकोयोगः अथवा शब्दोऽपि पूर्व्वयोगापेक्षया इत्युक्तं व्यवहारस्तु योगद्वयेनेति। दशमूलेत्यादौ।—क्वाथ इत्यत्र युक्त इति पाठे क्वाथ

निहन्ति वातोदरशोथमूलं क्वाथः समूत्रोदशमूलजश्च ॥
पुनर्नवा निम्बपटोलशुण्ठीतिक्ताभयादार्व्वमृताकषायः ।
सर्व्वाङ्गशोथोदरकासमूलश्वासान्वितं पाण्डुगदं निहन्ति ॥

पुनर्नवाष्टकः ।

पुनर्नवां दार्व्वभयां गुडूचीं पिबेत् समूत्रां महिषाक्षयुक्ताम् ।
त्वग्दोषशोथोदरपाण्डुरोगस्थौल्यप्रसेकोर्द्ध्वकफामयेषु ॥
गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम् ।
क्षीरान्नभुक् केवलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु ॥
पुनर्नवा दार्व्वमृता पाठा विल्वं श्वदंष्ट्रिका ।
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम् ॥
समभागानि संचूर्ण्य गवां मूत्रेण ना पिबेत् ।
बहुप्रकारं श्वयथुं सर्व्वगात्रविसारिणम् ॥
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥
पुराणं मानकं पिष्ट्वा द्विगुणीकृततण्डुलम् ।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसं ततः ॥

---

इति शेषः । हरीतक्यादौ ।— प्रतिदिनोपयोगे गुग्गुलोर्म्माषकचतुष्टयं गोमूत्रस्यार्द्धपलं कर्षौ वा प्रक्षेपः । विरेचने तु कर्त्तव्ये प्रभूतत्वमनयोः । अत्यन्तबद्धकोष्ठे तु गोमूत्रेणैव क्वाथं कृत्वा गुग्गुलुमात्रं प्रक्षिप्य व्यवहरन्ति । एरण्डतैलप्रक्षेपाद्यमत्र ह्येकोयोगः, गोमूत्रप्रक्षेपात्त्रिफलाक्वाथ इति द्वितीयः अत्यन्तबद्धकोष्ठे गोमूत्रेणैव त्रिफलाक्वाथ इति वदन्ति । एवं गोमूत्रप्रक्षेपाद्गोमूत्रेण दशमूलक्वाथं कृत्वाऽपि चेत्याहुः । पुनर्नवेत्यादि ।— पुनर्नवादीनां चूर्णं गुग्गुलुसंयुक्तं गोमूत्रेण पेयं तथाच तन्त्रान्तरे— पिबेद्गुग्गुलुसंयुक्तं शोथोदरविनाशनमिति । अत्र हरीतकीगुग्गुलुश्च मिलितचूर्णसम इत्याहुः अन्ये तु पुनर्नवादीनां क्वाथे गोमूत्रं गुग्गुलुञ्च प्रक्षिप्य व्यवहरन्ति । क्षीरं गवां वा त्रिफलाविमिश्रमिति त्रिफलायाः

हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥ १२ ॥

दशमूलषट्पलकं घृतम् ।

दशमूलतुलार्द्धरसे सक्षारैः पञ्चकोलैः पलिकैः ।
सिद्धं घृतार्द्धपात्रं द्विमस्तुकमुदरगुल्मघ्नम् ॥ १३ ॥

चित्रकघृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ १४ ॥

बिन्दुघृतम् ।

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट् ।

---

क्वाथः कल्को वा । क्षीरान्नभुगिति क्षीरमात्रेणान्नभुक् । पुनर्नवेत्यादौ ।—बिल्वस्य मूलं शोथोदराण्यष्टाविति शोथोऽन्यष्टावुदराणीत्यर्थः । पुराणमित्यादि पुराणमानस्य मूलं पलमात्रं दरदलिततण्डुलस्य पलद्वयं क्षीरतोयाभ्यां समाभ्यां साधयित्वा पायसः कार्य्यः तस्योपयोगे परमान्नव्यञ्जनं नाश्नीयादित्याहुः योगोऽयं शोथमात्रेऽपि प्रभवति ॥ १२ ॥

दशमूलषट्पलके ।—दशमूलस्य तुलार्द्धं पञ्चाशत्पलानि तस्य क्वाथ इत्यर्थः घृतस्यार्द्धपात्रमर्द्धाढकं प्रस्थद्वयमित्यर्थः । द्विमस्तुकमिति घृतमपेक्ष्य द्विगुणं मस्त्वित्यर्थः । चरकोक्तदशमूलषट्पलके द्विशब्दः प्रस्थेन तथार्द्धपलिकैरित्यनेन च योज्यः तेन पिप्पल्यादीनां द्विरिति द्विगुणार्द्धपलैः षट्पलानीति भवन्ति तथा प्रस्थेन च द्विप्रस्थात् प्रस्थद्वयं भवतीति एकवाक्यता बोध्या ॥ १३ ॥

चतुर्गुणेत्यादि ।—अत्र क्षार इत्यनेन क्षारस्यापि च पलमेकं देयं अत्रार्थे तन्त्रान्तरं यथा चित्रक्षारपलाभ्यां द्विमूत्रं चतुर्जलं घृतप्रस्थमिति ॥ १४ ॥

अर्कक्षीरेत्यादि ।—श्यामा श्याममूला त्रिवृत् । त्रिदिकर्णिका

पथ्या कम्पिल्लकं श्यामा सम्याकं गिरिकर्णिका॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकन्तथा।
एतेषां पलिकैर्भागैर्घृतमस्थं विपाचयेत्॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत्
यावतोऽस्य पिबेद्बिन्दूंस्तावद्वारान् विरिच्यते॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते॥ १५॥

नाराचघृतम्।

दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपरिकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च॥
स्नुक्क्षीरदन्तीत्रिफलाविड़ङ्गसिंहीत्रिवृच्चित्रककल्कयुक्तम्॥
घृतं विपक्वं कुड़वप्रमाणं तोयेन तस्याक्षमथार्द्धकर्षम्।

---

श्वेतापराजिता, नीलिनी नीलवल्ली अत्र पाकार्थं जलं चतुर्गुणं देयम्, अतएव क्वचित् इन्दसंग्रहे दृश्यते स्नुहार्कयोस्तु पयसा पाकस्यानुपपत्तितः। जलं चतुर्गुणं देयं पाकार्थं बिन्दुसर्पिषीति। मात्रा तु कोष्ठानुरूपा माषकमेकं द्वयं वा प्रचरति मलिन इति मलबद्धे॥ १५॥

दधिमण्डेत्यादि।— तद्वदेति पूर्व्वोक्तप्रकारेणोत्थितादघृतात्। चरके हि क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धसंहितम्। दधीति पूर्व्वयोगे क्षीरद्रोणे सुधाक्षीरप्रस्थार्द्धं प्रक्षिप्य, दधि करणीयं ततः तद्दधि मथित्वा घृतं सम्पादनीयमिति प्रकार उक्त इति। तथा सिद्धमित्यादि।- अत्रापि पूर्व्वोक्तप्रकारनिष्पादितदधिमथ्यनसिद्धं घृतमिति तथा शब्दार्थः। एतयोर्घृतयोरनुपानं तथा विरेकान्तरीयोविधिश्च चरकोक्त

पीत्वोष्णमम्भोऽनुपिबेद्विरिक्तो पेयां सुखोष्णां वितरेद्विधिज्ञः॥
नाराचमेतज्जठरामयानां युक्तोपयुक्तं शमनं प्रदिष्टम्॥ १६॥
इति सर्व्वोदरचिकित्सा।

---

## अथ प्लीहाधिकारः।

यमानिकाचित्रकयावशूकषड्ग्रन्थिदन्तीमगधोद्भवानाम्
प्लीहानमेतद्धि निहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्व्वा॥
पिप्पलीं किंशुकक्षारभावितां संप्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम्॥
विड़ङ्गाग्निसिन्धूत्थशक्तून् दग्ध्वा वचान्विताम्।
पिवेत् क्षीरेण संचूर्ण्य गुल्मप्लीहोदरापहम्॥ १॥
तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशनः।
क्षारं वा विड़कृष्णाभ्यां पुतीकस्याग्निना स्रुतम्॥

---

एवानुसरणीय इति। स्नुहीक्षीरेणादौ।—सिंही कण्टकारी, युक्तोपयुक्तमिति कोष्ठाद्यग्निबलापेक्षया इत्यर्थः॥ १६॥

इत्युदराधिकारः।

---

प्लीहप्रभवत्वात् उदरसम्भवादनन्तरं प्लीहचिकित्सामाह यमानीत्यादि।—षड्ग्रन्थिपिप्पलीमूलं उक्तं हि रत्नकोषे—"ग्रन्थिकं पिप्पलीमूलं षड्ग्रन्थि चटिका शिव" इति। पिप्पलीमित्यादि।—किंशुकः पलाशः तत्क्षारोदके सप्तधा भावितां पिप्पलीम्। पिप्पलीवर्द्धमानक्रमेण योजयेत् दुग्धपानमप्यत्रोपदिशन्ति वृद्धाः। विड़ङ्गेत्यादि।—विड़ङ्गादीनां चूर्णं घृताक्तं कृत्वा अन्तर्धूमं दहेदित्यर्थः। ततः संचूर्ण्य क्षीरेण पिवेत्। अन्ये तु कपाले कृत्वा एवमेव दहेत् न पुनरन्तर्धूममित्याहुः। व्यवहारस्तु पूर्व्वेणैव॥ १॥

तालपुष्पेत्यादावन्तर्धूमक्षार इति। सगुड़ः समगुड़ः। क्षारस्य च माषकचतुष्टयेन व्यवहारः। क्षारं वेत्यादि।—पूतिकस्य चाटाक-

प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम् ।
पातव्योयुक्तितः क्षारः क्षीरेणोदधिमुक्तिजः ॥
पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ १ ॥
भल्लातकाभयाजाजीगुड़ेन सह मोदकः ।
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम् ॥
शोभाञ्जनकनिर्यूहं सैन्धवाग्निकणान्वितम् ।
पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥
तिलान् सलवणांश्चैव घृतं षट्पलकं तथा ।
प्लीहोद्दिष्टां क्रियां सर्व्वां यत्नतः संप्रयोजयेत् ॥
लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत् ।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥
प्लीहजिच्छरपुङ्खायाः कल्कस्तक्रेण सेवितः ।
शरपुङ्खरसं सर्व्वत्र लब्धा पेयाभुजाथवा ॥
शार्द्दूलानिर्यूहः ससैन्धवतिन्तिडीकसंमिश्रः ।

---

रञ्जस्य मूत्रक्षारम् । अम्ल इति काञ्जिकं निस्रुतमिति सप्तधा परिस्रुतं अम्लपरिस्रुतं पूतिकरञ्जक्षारं विड़लवणपिप्पलीप्रक्षेपेण मारयेदित्याह्वः तेन अम्बु नि जले निस्रुतमसदर्थ एव वाशब्दः पूर्व्वयोगापेक्षया उदधिमुक्तिजः मुक्तास्फोटः । युक्तित इति वक्ष्यमाणापेक्षया पयसा वेत्यादि श्लोकार्द्धं वृन्देन पठ्यते तदर्थं नागार्जुनेऽपि केचित् पठन्तिः किन्तु वृन्दे पिप्पलीवर्द्धमानं न पठ्यते । तत्र तत् पाठो न दूष्यत एव इह तु अपरे वर्द्धमानं व्याप्तमेवेति तस्मात् पयसेति श्लोकार्द्धमत्र न पठनीयमेवेति ॥ २ ॥

भल्लातकेत्यादि ।—स्पष्टम् । शोभाञ्जनेत्यादौ निर्यूहः क्वाथः, अग्निश्चित्रकः, पलाशक्षारयुतं वेति पलाशक्षारोदकयुक्तं वृन्दत उक्ताटात् । तिलान् सलवणानिति कृष्णतिलाएव ससैन्धवा भक्ष्याः कञ्चैव तिलनालक्षारोदकं सलवणं पेयमित्याह्वः व्यवहारस्तु पूर्व्वं पैव घृतं षट्पलकमिति स्वरोक्तम् ।

प्लीहघ्नः परमो योगः पक्वाम्ररसोऽथवा समधुः॥
रोहितकाभयाक्वाथे भावितमूत्रमथवा वा।
पीतं सर्व्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत्॥ ३॥
दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक्।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे।
प्लीहानं मर्द्दयेद्गाढ़ं दुष्टरक्तप्रवृत्तये॥ ४॥

माणाद्यगुड़िका।

माणमार्गीस्तुतावासाशिराचित्रकसैन्धवम्।
नागरं तालखण्डञ्च प्रत्यग्रन्तु त्रिकार्षिकम्॥
विड़सौवर्च्चलक्षारपिप्पल्यश्चापि कार्षिकाः।
एतच्च चूर्णितं सर्व्वं गोमूत्रस्याढके पचेत्॥
सान्द्रीभूते गुड़ीं कुर्य्याद्दत्त्वा त्रिपलमाक्षिकम्।
यकृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहरः॥
योगः परिकरो नाम्ना वह्निसन्दीपनः परः॥ ५॥

---

प्लीहघ्नमित्यादौ।—गोमूत्रगण्डूषेणानुपानम्। शरपुङ्खाया इत्यादि शरपुङ्खामूलस्य, शङ्खिनी काकजङ्घा गुञ्जा वा। तिन्तिड़ीकं महार्द्रकम्। पक्वाम्ररसः मधुना वातोल्वने। रोहितकेत्यादौ क्वोदरार्थं गोमूत्रं विरेकार्थं वा तु शमनार्थमिति व्यवस्था॥ ३॥
दध्नेत्यादौ।—दधिभोजनं शोणितोत्क्लेशार्थं वामबाहुमध्ये कुर्परस्याभ्यन्तरात् कण्डरादावस्थितां शिरां चतुरङ्गुलादधः प्लीहानं मर्द्दयेदिति शिरायां विद्धायां तेन प्लीहोद्भूतरक्तं निःसरति॥ ४॥
माणेत्यादौ।—माणोऽपामार्गः शिरा शालपर्णी, प्रत्यग्रमित्यभिनवम्। त्रिकार्षिकमिति प्रत्येकम्। परिकरो नाम्ना इति परिकरोविरेकः॥ ५॥

पिप्पलीवर्द्धमानानि।

पिप्पलीनागरं दन्ती समांशं द्विगुणाभयम्।
चूर्णं पीतं विडार्द्धांशं शीतमम्बुष्णवारिणा॥
क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम्।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा।
पिप्पलीनां प्रयोगोऽयं सहस्रस्य रसायनः॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः।
त्रिपिप्पलिपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः॥
वृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम्।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम्॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः।
पिष्टास्ता बलिभिः पेयाः श्टतामध्यबलैर्नरैः॥
शीतीकृताल्पबलैर्द्दृष्टदोषामयान् प्रति॥ ६॥

पिप्पलीमित्यादौ।—द्विगुणाभया इत्येकभागापेक्षया द्वैगुण्यं एवं विडलवणस्याप्येकभागापेक्षयाऽर्द्धभागत्वं ज्ञेयम्। पिप्पलीवर्द्धमानमाह क्रमेत्यादि।—दशपिप्पल्यो यत्र वर्द्धन्ते तद्दिनं दशपैप्पलिकं तेन दशपिप्पल्यः प्रत्यहं वर्द्धनीया इत्यर्थः। उक्तं हि दशभिर्दशभिः प्रवत् पिप्पलीभिस्तु वर्द्धयेदिति। अतश्चोनविंशतिदिने वृद्धिहानिक्रमेण सहस्रं पूर्णं भवति। पयसा सार्द्धमित्यनेन पयसोऽपि वृद्धिरित्याहुः। केचित्तु चूर्णीकृता इत्यत्र शीतीकृता इति पठित्वा शीतकषायीकृता इति व्याख्यानयन्ति। पिप्पलीवर्द्धमानस्य त्रैविध्यमाह दशपैप्पलिकइत्यादि। षट्प्रकीर्त्तिता इति षड्वृद्ध्या व्यापाद्यकृता इत्यर्थः त्रिपिप्पलीपर्य्यन्त इति तिस्रः पिप्पल्यः पर्य्यन्तो यस्य च तथा तेन पिप्पलीत्रयेण यत्र वृद्धिः प्रयोग उच्यते तत्रैव प्रयोगसमाप्तौ पिप्पलीत्रयावस्थानात्। मध्यभिः पिप्पलीभिस्तु व्यवहार इति प्रतिपादयितुं मध्यः स्वयमनं निर्दिशति पञ्चपिप्पलिक इत्यादि

चित्रकघृतम्।

पिप्पलीचित्रकान्मूलं पिष्ट्वा सम्यग्विपाचयेत्।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम्॥ ७॥

पिप्पलीघृतम्।

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम्।
पचेत् प्लीहाग्निसादादि यकृद्रोगहरं परम्॥ ८॥

चित्रकघृतम्।

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालं तद्द्विगुणं दधिमण्डं चतुर्गुणम्॥
पञ्चकोलकतालीशक्षारैर्लवणसंयुतैः।
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत्॥
प्लीहगुल्मोदराध्मानपाण्डुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्यूरुशूलोदावर्त्तपीनसान्॥
हन्यात् पीतं तदर्शांसि शोथघ्नं वह्निदीपनम्।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति॥ ९॥

रोहितकं घृतम्।

रोहितकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः॥

---

विदेहेऽप्युक्तं — दशभिर्दशभिः शश्वत् पिप्पलीभिस्तु वर्द्धयेत्। पञ्चभिः पञ्चभिर्व्वापि शतादर्वाक् पुनरिति॥ ६॥

पिप्पलीत्यादि।— अत्र पिप्पली च चित्रकश्चेति समासो न कार्य्यः, तथा सति पिप्पलीमूलस्यैव ग्रहणं स्यात् तच्च न व्यवहारसिद्धम्। पिप्पलीघृतं स्पष्टम्॥ ७—८॥

चित्रकघृते तुलाक्वाथ इति षष्ठीतत्पुरुषः। आरनालन्तु द्विगुणमिति घृतापेक्षया एवं दधिमण्डस्यापि चातुर्गुण्यम्, दधिमण्डो-दधिमस्तु, क्षारो यवक्षारः, लवणं सैन्धवम्, अन्ये तु यवक्षारः सर्जि-क्षारः, लवणं पञ्चलवणमाहुः॥ ९॥

अभयादारुमधुकं तिक्ता दन्ती सपिप्पली।
पटोलं चन्दनं ब्राह्मी त्रायमाणेन्द्रवारुणी॥
एषां क्वाथः ससर्पिष्कः श्वयथुज्वरदाहहा।
विसर्पतृष्णासन्तापसन्निपातविषापहा॥
शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत्॥ १॥
पुनर्नवानिम्बविश्वदेवदारुगुग्गुलु शाकपथ्यामरदारुकल्ककम्।
शोथे कफोत्थे महिषाख्ययुक्तं मूत्रं पिबेद्वा सलिलं तथैषाम्॥
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च॥
अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः।
शोथं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधे च॥ २॥

द्वितीयो योगः। अभयेत्यादौ सर्पिः प्रक्षेप्यम्। शीतवीर्य्यैरिति शीतवीर्य्याः काकोल्यादि सारिवाद्युत्पलादिगणाः तत्कृतैः स्नेहादिभिरभ्यङ्गादीन् कल्पयेत्। हिमजलैरिति शीतजलैः॥ १॥

श्लैष्मिकशोथचिकित्सामाह पुनर्नवेत्यादि पुनर्नवादीनां कल्कं गुग्गुलुयुक्तं गोमूत्रेण पिबेत्। सलिलं तथैषामिति एषां पुनर्नवादीनां क्वाथं, गुग्गुलुं गोमूत्रञ्च प्रक्षिप्य पिबेदिति महिषाख्यो गुग्गुलुः। कफेत्यादौ सिकता वालुका, पुराणपिण्याकः पुराणसर्षपखलिः, उमा अतसी एभिर्मूत्रपिष्टैर्लेपः तथा कुलत्थशुण्ठीक्वाथेन तथा गोमूत्रेण कुलत्थशुण्ठीसिद्धेन सेकः कार्य्यः। चण्डा चोरपुष्पी, अनुलेपनं स्नानानन्तरमेव लेपनमिति चक्रः। अजाजीत्यादि वाभटस्य एषां चूर्णमुष्णोदकेन पेयम्। एवं भूनिम्बमहौषधयोरपि। यद्यपि चरकेऽस्मिन् योगे चविकास्थाने गजपिप्पली पठ्यते तथाप्यत्र चविकैव पाठ्या गजपिप्पलीशब्देन चविकाभिधानात् यदुक्तं निघण्टे—"चविकाकोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति। जतूकर्णेनापि चविकैव पठ्यते तस्मात् सैव युक्ता एतेन पिप्पल्यादिगणेनाप्यत्र चविके पठ्यते द्वयम्। योगेऽत्र चविकास्थाने पाठ्या नातक-

पुनर्नवाष्टकः।

पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्वभयाकषायः।
सर्व्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति॥
आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः।
अजाक्षीराशिनां शोघ्रं सर्व्वशोथहरो भवेत्॥
पुनर्नवादारुशुण्ठीक्वाथे मूत्रे च केवले।
दशमूलरसे वापि गुग्गुलुः शोथनाशनः॥
विल्वपत्ररसं पूतं सोषणं श्वयथौ त्रिजे।
विट्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलास्वपि॥
गुड़पिप्पलीशुण्ठीनां चूर्णं श्वयथुनाशनम्।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम्॥
पुरोमतेया सेव्येत पिप्पली वा पयोऽन्विता।
गुड़ेन वाभया तुल्या विश्वं वा शोथरोगिणाम्॥ ३॥
गुड़ार्द्रकं वा गुड़नागरं वा गुड़ाभयं वा गुड़पिप्पलीं वा
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम्॥

---

पिप्पलीति इन्दोक्तमतमपास्तम्। ननु चरके त्रिदोषजशोथस्यासाध्यत्वेनोक्तत्वात् कथं त्रिदोषजं शोथं इन्तोत्युक्तं नैवं चरके अङ्गीनमांसस्येत्यादिना पश्येनैकदोषस्य तथा नवस्य च सुखसाध्यत्वाभिधाने द्विदोषत्रिदोषजयोस्तथा चिरजस्य च कृच्छ्रसाध्यत्वमुक्तं मांसहीने पुनरसाध्यत्वमिति॥ २॥

पुनर्नवेत्यादि।— तिक्ता कटुकी दारु देवदारु इत्येष योगः शोथोदरे पठ्यते। गुड़ेत्यादि।— गुड़ एकभागसमः। पुरं गुग्गुलुः। पिप्पली वा पयोन्वितेति पिप्पलीवर्द्धमानन्यायेन दृतरकल्पवत् । पिप्पलीकल्कः पयसा सेव्यः। विश्वं वेति गुड़ेन तुल्यमित्यत्रापि योज्यम्॥ ३॥

गुड़ार्द्रकं वेत्यादि गुड़ार्द्रकादयश्चत्वारो योगा एते तुल्यभागाः

शोथप्रतिश्यायगलास्यरोगान् सश्वासकासारुचिपीनसांश्च ।
जीर्णज्वरार्शोग्रहणीविकारान्
हन्यात्तथान्यान् कफवातरोगान् ॥ ४ ॥
स्थलपद्ममयं कल्कं पयसा लोड्य पाययेत् ।
श्लीपदामयहरश्चैव सर्वाङ्गकाङ्गशोथजित् ॥
दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित्
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्वशोथजित् ॥
सिंहास्यामृतभण्डाकीक्वाथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः श्वासं कासं वमिं ज्वरम् ॥
भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्वाथः ।
अपहरति नियतमाशु शोथं सर्वाङ्गगं नृणाम् ॥
शोथनुत् कोकिलाक्षस्य भस्म मूत्रेण वाम्भसा ।

---

सन्तः प्रतिदिनं मिलित्वा वर्द्धयितव्याः । एवं द्वादशभिर्दिनैस्त्रिपलं पर्यन्ते तत्त्रिपलं कृत्वा प्रत्यहं पक्षं मासं वा यावत् खादेत् किम्वा प्रथमदिने कर्षमेकं खादेत् ततः कतिपयदिनानि कर्षस्यैवाभ्यासः ततः परमपरकर्षं वर्द्धयेत् तस्यापि पुनरभ्यासः । एवं कर्षेण कर्षेणाभिवृद्ध्या यथा पक्षेण मासेन वा त्रिपलं भवति तथा कार्य्यम् । अन्ये तु ब्रुवते पक्षशब्दोऽप्यर्थापिशब्दो मासमित्यनन्तरं सम्बन्ध च समुच्चयार्थः तेन पक्षं मासञ्च व्याप्य सार्द्धं मासं व्याप्येत्यर्थः सार्द्धमासेन त्रिपलं कर्षोपयोगात् प्रभृति प्रत्यहं माषचतुष्टयाधिकविधिना भवति अस्मिन् व्याख्याने कर्षादारभ्य माषचतुष्टयमेव वृद्धिर्नाधिकं व्यवहारोऽपीत्थमेव ॥ ४ ॥

स्थलपद्ममयं कल्कमिति स्थलपद्मं मायाकन्दः स च पुराणोऽग्राह्यः कल्कमिति चूर्णम् ॥ दार्व्वित्यादि स्पष्टम् । वर्षाभ्वित्यादि चरकयोगो मूत्रेणैव पानम् । सिंहास्यं वासकमूलं भण्डाकी कण्टकारी । भूनिम्बेत्यादौ ।— पेयः पुनर्नवाक्वाथ इत्यनुपानमिदं एतच्च पुनर्नवाकल्कर्षं निक्वाथ्य कार्य्यम् । ततोऽधिकमात्राकरणे भूरिभेषजत्वेनाग्निवधादिदोषः स्यादितिभावः एवं सर्व्वत्र क्वाथेनानुपानं ज्ञेयम् ।

क्षीरं शोथहरं दारुवर्षाभूनागरैः शृतम् ।
पेयं वा चित्रकव्योषविडङ्गदारुमगधाधृतम् ॥ ५ ॥

क्षारगुडिका ।

पुनर्नवामूलकपित्थदारुहिङ्ग्वोग्रगन्धाबिल्वकमूलसिद्धाः ।
रसाश्च यवाग्वश्च पयांसि यूषाः शोथे प्रदेयादशमूलगर्भाः ॥
क्षारद्वयं स्याल्लवणानि चत्वार्य्ययोरजोव्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं मुस्ताजमोदामरदारुबिल्वम् ॥
कलिङ्गकं चित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिङ्गु कर्षं तनुसूक्ष्मचूर्णं द्रोणं तथा मूलकशुण्ठकानाम्
स्याद्भस्मनस्तत्सलिलेन साध्य-
मालोड्य यावद्घनमप्यदग्धम् ।
स्त्यानन्ततः कोलसमाश्च मात्राः
कृत्वा गुडिका विधिना प्रयुञ्ज्यात् ॥
प्लीहोदरश्वित्रहलीमकार्शःपाण्ड्वामयारोचकशोथशोषान् ।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥
सौवर्च्चलं सैन्धवञ्च विडमौद्भिदमेव च ।
चतुर्लवणकमेतत् स्यात् लवणमष्टगुणं भवेत् ॥ ६ ॥

---

शोथहरमित्यादि ।— क्षीरमित्यन्त एको योगः मतो वा कफे, अन्यथा पित्ते । क्षारमित्यन्तो द्वितीयः । चित्रकेत्यादि तृतीयः, अत्रापि क्षीरमिति वाच्यम् ॥ ५ ॥

पुनर्नवेत्यादौ ।— कपित्थस्य फलं पुनर्नवादीनामर्द्धांशकं कृत्वा दशमूलस्यानुरूपं कल्कं दत्त्वा रसादयः साध्या इत्यर्थः । क्षारेत्यादि ।— क्षारद्वयं यवक्षारसर्जिक्षारौ लवणानि चत्वारि इति वक्ष्यमाणानि अयोरजः लौहचूर्णं मारितपुटितं ग्राह्यम् । पलांशमिति प्रत्येकम् । तनुसूक्ष्ममिति सूक्ष्मसूक्ष्मचूर्णमित्यर्थः । मूलकशुण्ठकेनेति क्षारद्रव्याद- द्रव्योपेतया सम्बन्धेन अन्ये लवणमाहुः । अत्र मूलकभस्मद्रो

पुनर्नवाद्यं घृतम्।

पुनर्नवाचित्रकदेवदारुपञ्चौषधक्षारहरीतकीनाम्।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिषूदनञ्च॥

शुण्ठीघृतम्।

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः।
पुनर्नवायाः कल्केन घृतं शोथविनाशनम्॥
पुनर्नवाक्वाथकल्कसिद्धं शोथहरं घृतम्।
विश्वौषधस्य कल्केन दशमूलजले घृतम्॥
हन्तं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुतामयम्॥ ७॥

चित्रकाद्यं घृतम्।

सचित्रकाधान्ययमानीपाठाः सदीप्यकत्र्यूषणवेतसाम्लाः।
बिल्वात् फलं दाडिमयावशूकं सपिप्पलीमूलमथापि चव्यम्।
पिष्ट्वाक्षमात्राणि जलाढकेन पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात्।
अर्शांसि गुल्मान् श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम्॥ ८॥

---

पञ्चकोलं ... भागावशिष्टं क्वाथं ततः परिस्राव्य तत ... चतुर्गुणां क्षारजलं गृहीत्वा पक्तव्यं पाकाच्च घनीभूते जाते क्षारहरीतकीचूर्णप्रक्षेप इत्यादि॥ ६॥

पुनर्नवेत्यादौ। पञ्चौषधं पञ्चकोलम्। रसे इत्यादि।— रसः क्वाथ इत्यर्थः। पञ्चकोलकुलत्थयोरिति द्विवचननिर्देशात् पञ्चकोलस्य मिलित्वा एको भागः अपरश्च कुलत्थस्येति वदन्ति पाण्डुतामयमिति पाण्डुरोगम्॥ ७॥

सचित्रकेत्यादौ।— दीप्यकं जीरकं वेतसाम्लोऽम्लवेतसः बिल्वात् फलमित्यत्र बिल्वात् पलमिति न पाठः वाभटे वाक्यबिल्वं कर्षांशनिरुक्तत्वात्॥ ८॥

प्रत्येकमेककर्षांशं त्रिसुगन्धमितो भवेत् ॥
कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा।
एतस्मादनेन तुल्यत्वं तेन सम्प्रति वर्ण्यते ॥

कंसहरीतकी।

द्विपञ्चमूलस्य पचेत् कषायं कंसेऽभयानाञ्च शतं गुडाच्च।
लेहे सुसिद्धे च विनीय चूर्णं व्योषत्रिसौगन्ध्यमुपस्थिते च ॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥
कासज्वरारोचकमेहगुल्मान् प्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥
अत्र व्याख्यान्तरं नोक्तं व्याख्या पूर्व्वत्र यच्छुभा ॥ १२ ॥

---

अष्टपले क्वाथ्ये जलद्रोणदानात्। चतुर्भागावशेषे इति भावः। पथ्याशतमाकृतिमापेक्षया। व्योषक्षारचतुःपलमिति मिलित्वा निर्द्देशस्य मानप्रधानत्वात् त्रिसुगन्धं प्रत्येकं सुवर्णांशं निर्द्देशस्य द्रव्यप्रधानत्वात् प्रस्थार्द्धं मधुन इति षोडशपलानि। एतद्योगोक्तमानसाम्याद्दाच्चरकोक्तकंसहरीतक्यामपि प्रत्येकद्रव्यमानं कल्पनीयमित्याह प्रत्येकमित्यादि। इति सम्बन्ध्यान्तम् अनेनार्थः। चरके पठ्यतेऽन्यथा इति एतेन पाठभेदं परं न तु योगभेद इत्यर्थः एतेन नामभेदाद्योगभेद इति चन्द्रोक्तमपास्तम्। चरके पठ्यतेऽन्यथेत्युक्तं चरकस्यैव पाठभेदं दर्शयितुं चरकोक्तकंसहरीतकीमाह द्विपञ्चेत्यादि।— लेहाच्च शुक्तिमितप्रयोगम्। व्योषत्रिसुगन्धयोर्यद्यपि मानं नोक्तं तथापि पूर्व्वोक्तदशमूलहरीतकीयुक्त व्याख्यानुसारेणात्रापि कल्पनीयम्। एवं यवक्षारस्यापि। किन्तु यच्चोऽत्राप्यनुक्तवचनः तेन व्योषक्षारयोर्मिलित्वा चतुःपलप्रवेशेऽपि व्योषभागापेक्षया यवक्षारस्यापि किञ्चिन्न्यूनता कल्पनीया इत्यर्थः। चन्द्रस्त्वाह — किञ्चिच्च चूर्णयोः शुक्तिरर्द्धपलं तथा। अविकृतात्मधुना मानं व्योषादेर्न्यं विना त्यक्त च ॥ १२ ॥

शेष इत्यादि योगद्वयम्।

लेपोऽष्टकरशोथं निहन्ति तिलदुग्धमधुनवनीतैः ।
तत्क्षतसमुद्भिन्ना शालदलैर्वा तु न चिरेण ॥
शोथे विषनिमित्ते तु विषोक्ता चरिता क्रिया ।
ग्राम्याब्जानूपपिशितलवणं शुष्कशाकं नवान्नम् ॥
गौडं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम् ।
धानावल्लूरं समशनमथो गुर्व्वसात्म्यं विदाहि ॥
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्ज्जयेन्मैथुनञ्च ॥ १२ ॥

इति शोथचिकित्सा ।

---

## अथ वृद्ध्यधिकारः ।

गुग्गुलुं रुबुतैलं वा गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥ १ ॥

---

ग्राम्येत्यादौ।— पिशितञ्च लवणञ्चेति समाहारः तस्य विशेषणं ग्राम्याब्जानूपमिति ग्राम्य छागादिमांसं ग्राम्यं लवणञ्च यत् पाकेनो-द्भूतं तत् ग्राम्यम् । अब्जं कच्छपादि लवणञ्च सामुद्रं करकचेति ख्यातं तदब्जं अनूपं शूकरादिमांसं लवणञ्च समुद्रतीरजं सर्वाक्षारी। ख्यातं तदानूपं गौडं गुड़विकारं धाना अङ्कुरितभृष्टयवाः । वल्लूरं शुष्कमांसं । समशनं पथ्यापथ्यस्यैकत्र भोजनम् । आरात्राविति दिने॥ १२ ॥

इति शोथाधिकारः ।

---

पूर्वोक्तक्रमेणैव शोथानन्तरं वृद्धिरोगचिकित्सितमुच्यते । वृद्धिः कुरण्डः । गुग्गुलुमित्यादि । गोमूत्रपलद्वये एरण्डतैलपिचुगुग्गुलु-माषकाष्टकं प्रक्षिप्य पेयम् । तथा गोमूत्रपलद्वये एरण्डतैलकर्षमेकं प्रक्षिप्य पिबेत् । इमौ योगौ क्रमात् कफानुबन्धे वाते च योज्यावि-त्याहुः ॥ १ ॥

सक्षीरं वा पिबेत्तैलं मासमेरण्डसम्भवम्।
पुनर्नवायास्तैलं वा तैलं नारायणं तथा।
पाने वस्तौ रुबोस्तैलं पेयं वा दशकाम्भसा ॥२॥
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्।
सर्व्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम्॥
श्लेष्मवृद्धिन्तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम् ॥३॥
स्विन्नं मेदःसमुत्थन्तु लेपयेत् सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥४॥
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत्।
सीवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ॥५॥

---

सक्षीरमित्यादौ।— सुश्रुतस्य अयं योगः पित्तानुबन्धे इत्याहुः। पुनर्नवातैलन्तु पुनर्नवाक्वाथकल्काभ्यां साध्यमित्याहुः। पाने वस्ताविति वक्ष्यमाणे सम्बध्यते। रुबोरेरण्डतैलम्। दशकस्य दशमूलस्य। अम्भसा पेयमिति ॥२॥

पैत्तिकवृद्धेरुपक्रममाह चन्दनमित्यादि।— पद्मं पद्मकेशरम्। रक्तजे रक्तमोक्षणमिति श्रवणात् रक्तजवृद्धौ जलौकाभिः कार्य्यम्। स-चकव्याहारात्। उष्णवीर्य्यैरिति अजगन्धादिभिः सुश्रुतोक्तैः। पीतदारु देवदारु गोमूत्रेणैव देवदारुक्वाथः कार्य्य इत्याहुः। व्यवहारस्तु प्रक्षेपविधया। वाग्भटेऽपि — गोमूत्रेण पिबेत् क्वाथं श्लेष्मजे पीतदारुजमि-त्युक्तम् ॥३॥

स्विन्नमित्यादौ।— सुश्रुतस्य गोमयपिण्डादिना स्वेदितम्। सुरसादिना सुरसादिगणेन। शिरोविरेचनद्रव्यैः पिप्पलीमरिचापामार्गादिभिः। मूत्रयुक्तैरिति मूत्रपिष्टैर्लेपयेदिति पूर्व्वेणान्वयः ॥४॥

कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥
सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसंयुक्तं शोथघ्नं कफवातनुत् ॥
कटोरुबुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥
गव्यं घृतं सैन्धवसंप्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्वं निहन्ति कुरण्डमतिप्रवृद्धम् ॥
ऐन्द्रीमूलभवं चूर्णं रुबुतैलेन मर्द्दितम्।
वराहाङ्गीपयसा पीतं सर्ववृद्धिनिवारणम् ॥
रुद्रजटामूलशिफाकरटव्यङ्कचर्म्मणा।
बद्धा वृद्धिः शमं याति चिरजापि न संशयः ॥
निष्पिष्टमारणालेन रूपिकामूलवल्कलम्।
लेपोऽद्ध्यामयं हन्ति बद्धमूलमपि दृढम् ॥
वचा सर्षपकल्केन प्रलेपो वृद्धिनाशनः ॥ ८ ॥
लज्जालम्बुषकल्काभ्यां लेपो वृद्धिहरः परः ॥ ९ ॥

---

गोमूत्रेत्यादौ।—पक्वं योगापेक्षया अष्टामिति विशेषः। कोष्ण-
मवाप्नुयादिति पाठपक्षे क्रियाविशेषणम्। त्रिफलेत्यादौ।— गो-
मूत्रं प्रलेप्यम्। सरलेत्यादौ।— सरलं सरलकाष्ठं लेपोऽयं योगः।
कट इत्यादि स्पष्टम्। गव्यमित्यादि।— शम्बूकरूपभाण्डे, शम्बूकस्य
वद्यत्वं पात्रं न पुराणमित्याहुः। घृतात् पादिकस्य सेव्यमिति वदन्ति
लेपविषया योज्यमेतत्। ऐन्द्री गोरक्षकर्कटी। रुद्रजटेति।— शाटौ
रुद्रजटाकल्केन शिफा [illegible] कटा इति ख्यातः मक्षकाकारः
प्रायशोऽक्षोपरि तिष्ठति। तस्या चर्म्मणा वा बद्धा वृद्धिरित्यर्थः।
रूपिका अर्कमूलम्। ८ ॥
लज्जेत्यादि।—लज्जा वराहक्रान्ता लम्बुषचित्रोगजं विट। ९ ॥

कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम्।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम्॥
बिल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रतिभ्य च।
पाव्यमेरण्डजं तैलं तैलं वा कफवातनुत्॥
ब्रध्नोदावर्त्तगुल्मार्शः प्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात्॥
घृतं सौरेश्वरं योज्यं ब्रध्नवृद्धिनिवृत्तये॥१२॥
इति वृद्धिब्रध्नचिकित्सा।

---

## अथ गलगण्डाद्यधिकारः।

यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम्।
छर्द्दिं रक्तमुक्तिञ्च गलगण्डे प्रयोजयेत्॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति॥
सर्षपान् शिग्रुबीजानि शणबीजातसीयवान्।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्॥
गण्डानि ग्रन्थयश्चैव गलगण्डाः सुदारुणाः।
प्रलेपात्तेन शाम्यन्ति विलयं यान्ति चाचिरात्॥
जीर्णकर्कारुकरसो विड्सैन्धवसंयुतः।
नस्येन हन्ति तरुणं गलगण्डं न संशयः॥

---

श्यामा। नीलिनी नीलवृक्षः चतुर्गुणजलेन पाकः। तैलं वेति विकल्पेन वा। सौरेश्वरघृतं वक्ष्यमाणम्॥१२॥
वृद्धिब्रध्नाधिकारः।

---

उक्तरूपास्तु गलगण्डादयोऽभिधीयन्ते। तण्डुलोदकेत्यादि हस्तिकर्णपलाशस्य मूलेनेत्यन्वयः सर्वे गलगण्डाः वातकफमेदोभिरा-

जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम्।
पिवेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये॥
सूर्यावर्त्तरसोनाभ्यां गलगण्डोपनाहने।
स्फोटास्रावैः शमं याति गलगण्डो न संशयः॥
तिक्तालावुफले पक्वं सप्ताहमुषितं जलम्।
मद्यं वा गलगण्डघ्नं पानात्पथ्यानुसेविनः॥
कटुफलचूर्णान्तर्गलघर्षो गलगण्डमपहरति।
घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम्॥ १॥
महिषीमूत्रविमिश्रं लौहमलं संस्थितं घटे मासम्।
अन्तर्धूमविदग्धं लिह्यान्मधुनाथ गलगण्डे॥
जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्त्तिताः।
तासां स्थूलशिरे कृष्णे विध्यान्ते च शनैः शनैः॥
वडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान्।
स्रुते रक्ते व्रणे तस्मिन् दद्यात् सगुडमार्द्रकम्॥
भोजनञ्चानभिष्यन्दि यूषः कौलत्थ इष्यते।
कर्णयुग्मस्याधः सन्धिमध्याश्रयो शिरास्तुटेत्॥
उपर्युपरि तच्छेदाद्गलगण्डो शिराशयम्॥ २॥

---

स्यन्ते तु शिरा आशिरमात्रा अतो गलगण्डोक्तलेपाः कोष्णा उपदेया इत्याहुः। लौहकृदः परिकुलिताः, अन्ये तु कुष्माण्डभेद इत्याहुः व्यवहारस्तु पूर्वमेव। तकमिलचिरजातम्। जलकुम्भी पाना तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिवेत्। उपनाहनमुष्णादन्तूलालेपः स्फोटस्तु वैरूपनाहनकृतैः। श्वेतेति श्वेतगिरिकर्णिका श्वेतापराजिता॥ १॥

महिषीत्यादौ।— पुराणलौहमलं महिषीमूत्रे मासं स्थापयित्वा अन्तर्धूमं दग्ध्वा मधुना लिह्यादित्यर्थः। जिह्वायां इत्यादौ कृष्णस्थूलशिरे वडिशेन शनैः शनैः संगृह्य कुशपत्रेण शस्त्रविशेषेण छिन्द्यादित्यर्थः। तस्मिन् व्रणे स्रुतरक्ते सति सगुडार्द्रकं भक्षयेदिति

तुम्बीतैलम्।

विडङ्गक्षारसिन्धूत्थरास्नाग्निव्योषदारुभिः॥
कटुतुम्बीफलरसैः कटुतैलं विपाचयेत्।
चिरोत्थमपि नस्येन गलगण्डं निवारयेत्॥ ३॥

अमृताद्यं तैलम्॥

तैलं पिबेच्चामृतवल्लिनिम्बहंसाह्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी॥ ४॥
माक्षिकाढ्यः सतत् पीतः क्वाथो वरुणमूलजः।
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम्॥
पिष्ट्वा ज्येष्ठाम्बुना पेयाः काञ्चनारत्वचः शुभाः।
विश्वभेषजसंयुक्ता गण्डमालापहाः पराः॥
आरग्वधशिफां क्षिप्रं पिष्ट्वा तण्डुलवारिणा।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत्॥
गण्डमालामयार्त्तानां नस्यकर्म्माणि योजयेत्।

---

अन्ये तु दद्यादिति पठन्ति तन्मते भक्षणार्थमिति भेदः। कर्णमूलम् अधिः सन्धाविति कर्णयोः पृष्ठसमीपे उपर्युपरि स्थितमित्यन्वयः।

तुम्बीतैले।— कथा यथा कटुतुम्बीफलरस इति परिणततिक्तालाबूफलस्य चतुर्गुणस्वरस इत्याहुः। तैलमित्यादि सुश्रुतस्य। अमृतवल्ली गुडूची हंसाह्वा हंसपादी वृक्षकः कुटजः। यदाह वाग्भटः — गुडूचीनिम्बकुटजहंसपादीवचादृढैः। साधितं पाययेत्तैलं सबलादेवदारुभिरिति। अन्ये तु हिंस्राह्वये इति पठन्ति रक्तश्वेतपुष्पभेदेन कटालाबु-द्वाह्वयं व्याख्यानयन्ति। अमृतावल्ल्यादिभिः क्वाथकल्कैरिति चन्द्रिका। अन्ये तु एभिः द्रव्यैः कल्कैः तैलं चतुर्गुणमित्याहुः॥ ३—४॥

अतःपरं गण्डमालाचिकित्सा।— माक्षिकाढ्य इति सकलदिवे-कमारम्। ज्येष्ठाम्बु तण्डुलोदकं काञ्चनारः काञ्चनः। आरग्वधस्य

निर्गुण्ड्याश्च शिफां सम्यग्वारिणा परिपेषिताम् ॥
कोषातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलीसंयुतेन।
तैलेन वारिष्टभवेन कुर्य्यादृक्षोपकुल्ये सह माक्षिकेण ॥ ५ ॥

कुकुन्दरीतैलम्।

ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रयोगतः।
गण्डमालां हरेत् पीतं चिरकालोत्थितामपि ॥
जलम्बुषाद्बलोद्भूतात् स्वरसाद्द्वे पले पिबेत्।
अपच्या गण्डमालाया: कामलायाश्च नाशनः ॥
गलगण्डगण्डमालाकुरण्डांश्च विनाशयेत्।
पिष्टं ज्येष्ठाम्बुना मूलं लेपाद्ब्राह्मणयष्टिजम्।
अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम्।
कुकुन्दर्य्यां विपक्वं तु यथात्तैलवरं ध्रुवम् ॥ ६ ॥

आस्फोटबिम्ब्याद्यतैले।

गण्डमालापहं तैलं सिद्धं आस्फोटकल्कतः।
बिम्बीश्वमारनिर्गुण्डीसाधितञ्चापि नाशनम् ॥ ७ ॥

निर्गुण्डीतैलम्।

निर्गुण्डीस्वरसे चाथ लाङ्गलीमूलकल्कितम्।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम् ॥ ८ ॥

---

शिफा मूलम्। कोषातकीत्यादि चत्वारो योगाः। पिप्पलीसंयुक्तेनेति पदं कोषातकीनां स्वरसेनेत्यनेनापि सम्बध्यते। कोषातकी घोषक-लतायाः स्वरसः एवं तिक्ततुम्ब्या अपि। वारिष्टभवेन निम्बफलजेन तैलेन तृतीयोयोगः अरिष्टभवस्येति पाठान्तरे—अरिष्टफलस्येत्यर्थः। वक्षो-पकुल्य इति।—पिप्पली मधुना नस्यं विधेयमित्यर्थः। ऐन्द्री गोरक्ष-कर्कटी, गिरिकर्णी श्वेतापराजिता, जलम्बुषा मुण्डितिका अलम्बुषो वा। अभ्यङ्गादित्यादौ।—कुकुन्दरी कुकुया इति ख्याता मूषिकाकृतिः तस्याः कल्कं जलं चतुर्गुणम्। गण्डमालापहमित्यादिगास्फोटकः लता स्वरसकल्करूपया सहतैलमुक्तं आस्फोटकल्करसेन सिद्धं तैलं

वनकार्पासिकामूलं तण्डुलैः सह योजितम्।
पक्त्वा तु पूपिकां खादेदपचीनाशनाय तु॥
शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम्।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम्॥
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह।
छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम्॥
अश्वत्थकाष्ठं निचुलं गवां दन्तश्च दाहयेत्।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान्॥
पार्ष्णिं प्रतिद्वादश चाङ्गुलानि
मित्वेन्द्रवस्तिं परिवर्ज्य सम्यक्।
विदार्य मत्स्याण्डनिभानि वैद्यो
निष्कृष्य जालान्यनलं विदध्यात्॥ ९॥

व्योषाद्यं तैलम्।

मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक्।
अङ्गुल्यान्तरितं सम्यगपचीनां प्रशान्तये॥

---

हितं नस्य विरेचनेषु इति। बिम्ब्यौत्यादि योगान्तरं बिम्बी विम्बीरिति ख्याता तेनाकुषा इत्यन्ये। अश्वमारः करवीरः बिम्बादीनां कल्कोऽन्नं चतुर्गुणमिति गयदासः। निर्गुण्डीत्यादौ। निर्गुण्डीस्वरसचतुर्गुणः॥ ५—८॥

अपचीचिकित्सामाह वनेत्यादि नयोभागात्तण्डुलानां भेषजस्यैकः। अश्वत्थेत्यादौ वराहमज्जयोगाद्रूपः पार्ष्णिं प्रतीत्यादि। सुश्रुतस्य। पार्ष्णिं गुल्फस्याधोदेशः पार्ष्णिमारभ्य द्वादशाङ्गुलानि मित्वा परिमाद इन्द्रवस्तिं द्वाङ्गुलं परित्यज्य विदार्यित्वा जालानि मेदोजालानि मत्स्याण्डेन सदृशान्याकृष्याग्निं विदध्यादित्यर्थः। एवमपच्यामूलोच्छेदात् प्रशमः॥ ९॥

कक्षाकर्णरक्षगतापचीषु बाहुगतमेव कर्माह मणिबन्धेत्यादि।—मणिबन्धोऽत्र बाहुसन्धिः अत्र मणिबन्धादूर्द्ध्वमेकं द्वयं वा परि-

इक्ष्वाकीत्पलाभवं मूलं बद्धं पुष्येऽपचीं जयेत् ।
अपामार्गस्य वा छिन्द्याज्जिह्वातलगते सिरे ।
व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ।
तैलमेतैः शृतं नस्यात् कफजामपचीं जयेत् ॥ १० ॥

चन्दनाद्यं तैलम् ।

चन्दनं चाभयालाक्षावचाकटुकरोहिणी ।
एतैस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ ११ ॥

गुञ्जाद्यं तैलम् ।

गुञ्जाहयारिश्यामाकसर्षपैर्मूत्रसाधितम् ।
तैलन्तु दशधा पचात् कणालवणपञ्चक—मरिचै-
श्चूर्णितैर्युक्तं सर्व्वावस्थागतां जयेत् ।
अभ्यङ्गादपचीं नाडीं वल्मीकार्ब्बुदव्रणान् ॥ १२ ॥
ग्रन्थिष्वामेषु कुर्व्वीत भिषक् शोथप्रतिक्रियाम् ।
पक्वानापाट्य संशोध्य रोपयेद्व्रणभेषजैः ॥
हिंस्रा सरोहिणलता च
भार्गी श्योणाकविल्वागुरुकृष्णागन्धाः ।

---

स्यश्च रेखा कार्या। अत्रैव शस्त्रकर्मान्तरमाह छिन्द्यादित्यादि।— व्योषमित्यादौ जलं चतुर्गुणं चन्दनमित्यादौ।— अभया हरीतकी च व अभयमुशीरं लाक्षावचाहरीतकीकटुरोहिणीचन्दनैः। तैलं प्रसादितं पीतं समूलामपचीं जयेदिति वाभटपाठात् । १०—११ ।

गुञ्जेत्यादौ।— हयारिः करवीरः तस्य मूलम्। श्यामा वृद्धदारकः अर्कस्य क्षीरं गोमूत्रं चतुर्गुणं दत्त्वा दशधा पाकः ततः कणालवणपञ्चकं मरिचचूर्णं प्रक्षिप्य प्रयोज्यम्। कणा लवणपञ्चकमरिचैरित्येकपदम्। घृततैलवसामज्जा मैथवारपयोदधि। नाड्याव्रणमतोऽत्रार्व्वादिति ॥ १२ ॥

ग्रन्थिचिकित्सामाह ग्रन्थिष्वित्यादि।— शोथप्रतिक्रियामिति अपक्वशोथविहितविधिं तत्र सशुद्धिव्रणशोधनरोपणादि हिंसाद्यतै-

यश्चोन्नतान्त्र्यप्रभवाननल्पानुद्धृत्य चाग्निं विदधीत वैद्यः ।
क्षारेण चैतान् प्रतिसारयेत्तु संलिख्य संलिख्य यथोपदेशम् ॥ १५ ॥
ग्रन्थ्यर्बुदानां न यतो विशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः ।
ततश्चिकित्सेद्भिषगर्बुदानि विधानविद्ग्रन्थिचिकित्सितेन ॥
वातार्बुदे चाप्युपनाहनानि स्निग्धैश्च मांसैरथवेशवारैः ।
स्वेदं विदध्यात् कुशलश्च नाड्या शृङ्गेण रक्तं बहुशो हरेच्च ॥
स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्बुदे कायविरेचनानि ।
विघृष्य चोडुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गुपत्तङ्गलोध्रार्जुनयष्टिकाह्वैः ।
लेपनं शङ्खचूर्णेन सह मूलकभस्मना ।
कफार्बुदापहं कुर्य्याद्ग्रन्थ्यादिषु विशेषतः ॥ १६ ॥

---

भल्लातकास्थि भल्लातकबीजम् । काशीशं धातुकाशीशं मालवाहिक-कीटः धातकरापद्मकीट इति ख्यातः ॥ १४ ॥

यश्चोन्नतादि ।— सुश्रुतस्य । क्षारेणेति विकल्पदाहापेक्षया तेन वाते वातकफार्शःसु पित्ते च क्षार इति । प्रतिसारयेदिति प्रक्षेपयेत् । यथोपदेशमिति यथाशास्त्रं एतच्चाग्निं विदधीत इत्यनेनापि सम्बध्यते ॥ १५ ॥

ग्रन्थ्यर्बुदे ग्रन्थिचिकित्सितं सोपपत्तिकमतिदिशति ग्रन्थ्यर्बुदानामित्यादि । अविशेष इव अविशेष इह ज्ञेयः तेन सूक्ष्मोऽत्र भेदोऽपि भवत्यत्र ।

अर्बुदानि विधानविदिति दाहादिविधिज्ञः । नाड्येति नाडी-स्वेदविधिना । स्वेदोपनाहा मृदव इति मृदुस्वेदो मृदुस्वेदः । मृदु-रुपनाहस्तु काकोल्यादि मृदुद्रव्यकृतः । कायविरेचनमित्यत्र काय-ग्रहणं शिरोविरेचनव्युदासार्थम् । विघृष्येत्यादौ उडुम्बरः फल्गुः कर्क-शपत्रत्वात् शाकोऽमरकण्टकः गोजी दार्व्विशाकः शाखोटको वा क्षौद्र-युतैरिति सर्जादिभिः सम्बध्यते । पत्तङ्गं रक्तचन्दनं यष्टिकाह्वं यष्टि-मधुकम् ॥ १६ ॥

निम्बार्कपिण्याककुलत्थकल्कैर्मूत्रप्रगाढैर्दधिमर्दितैश्च ।
लेपं विदध्यात् क्रिमयो यथात्र मुञ्चन्त्यपत्यान्यथ मक्षिका वा ॥
अल्पावशिष्टं क्रिमिभिः प्रजग्धं लिखेत्ततोऽग्निं विदधीत पश्चात् ।
यदल्पमूलं त्रपुताम्रसीसैः संवेष्ट्य पत्रैरथ वायसैर्वा ॥ १७ ॥
क्षाराग्निशस्त्राण्यवतारयेच्च मुहुर्मुहुः प्राणमवेक्षमाणः ।
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्यथोक्तम् ॥
उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ।
प्रणश्यन्त्यचिरान्नॄणां पीडकार्बुदजातयः ॥
उपोदिका काञ्जिकतक्रपिष्टा तयोपनाहो लवणेन मिश्रः ।
दृष्टोऽर्बुदानां प्रशमाय कैश्चिद्दिने दिने वा त्रिषु मर्मगाणाम् ॥
लेपोऽर्बुदजिद्रम्भामोचकभस्मतुषशङ्खचूर्णकृतः ।
शरटरुधिरार्द्रं कगन्धयवजविडङ्गनागरे —र्वाथ ॥
चुल्लीगण्डोरिका स्वेदो नाशयेदर्बुदानि च ।

---

निम्बार्केत्यादि ।— सुगमम् । निम्बार्कः श्वेतार्को पिण्याक-खलकल्कः क्रिमयो यथा लेपतः परं उत्पद्यन्त इति शेषः । मुञ्चन्ति अत्र मूर्च्छन्तीति पाठे अपत्यान्यथ मक्षिका वेत्यतः परं मूर्च्छन्तीति शेषः । ततः कर्त्तव्यक्रममाह अल्पावशिष्टमिति ।— सुगमम् । क्रिमिभक्षणादल्पावशिष्टत्वम् । लिखेदिति अल्पावशिष्टं पूतिमांसं शस्त्रेण छिन्द्यात् अल्पावशिष्टस्य च छेदनेन अर्बुदस्य महान् क्षय इति तात्पर्य्यम् । ततोऽग्निं विदधीतेति शस्त्रच्छेदानन्तरमवशिष्टार्बुदमूलस्य सम्यगुच्छेदाय अग्निं विदधीत तप्तशलाकया दहेत् अग्निकर्म्मणि कृतेऽपि यद्यर्बुदस्य मूलं तिष्ठेत् तदा किं कर्त्तव्यमित्याह यदल्पमूलमित्यादि ।— अर्बुदस्य यदल्पमूलं तत् त्रप्वादिधातूनामन्यतमेन निर्मितैः पत्रैः संवेष्ट्य स्थापयेदिति व्याख्येयं तत्र क्षाराद्युपचरणापेक्षया त्रप्वादिपत्रवेष्टनेन च तनुमूलस्यार्बुदस्य संघर्षणात् स्वयमेव उपशमो भवतीति भावः । मधुरक्तम् ॥ १७ ॥

विध्यन्तरमाह क्षाराग्नीत्यादि ।— पाकक्रमेणेति पाकोक्तपाटन-शोधनादिक्रमेण यथोक्तमित्युपचारक्रियाविशेषणम् । पीडकार्बुदः

स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक्।
कृत्वा गुल्फोपरि शिरां विध्येत्तु चतुरङ्गुले ॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्ब्बुदविसर्पवत् ॥ २ ॥
मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम्।
पिष्ट्वारणालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः ॥
पिबेत् सर्षपतैलेन श्लीपदानां निवृत्तये।
पूतीकरञ्जच्छदजं रसं वापि यथाबलम् ॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम्।

---

पेयम्। अथवा श्लीपदाश्रयजङ्घायां रक्तसूत्रेण बन्धनीया। छित्वेत्यादि गोमूत्रपिष्टाश्वयोर्लेपा बोध्याः। सिद्धार्थः श्वेत-सर्षपः ॥ १ ॥

स्नेहेत्यादि सुश्रुतस्य। स्नेहस्वेदाविह शिराव्यधाङ्गभूतौ न तु स्वतन्त्रतया स्नेहो देयः सर्व्वश्लीपदानां कफप्रधानत्वात् विरू-क्षणीयत्वेन। विध्येदिति। अयञ्च गुल्फोपरि पश्चाद्भागे शिरा-व्यधो रक्तदुष्टौ सत्यामेव कार्य्यः।

पैत्तिकश्लीपदचिकित्सामाह गुल्फस्याध इत्यादि-सुश्रु-तस्य पित्तघ्नीञ्च क्रियां कुर्य्यादिति योज्यं चकारात् श्लेष्मघ्नीञ्च श्लीपदानां कफप्रधानत्वात् ॥ २ ॥

मञ्जिष्ठामित्यादि।—हिंस्रा कालाकड़ा। शिरामित्यादि सुश्रुतस्य। सुविदितां व्यक्ताम्। अङ्गुष्ठ इति पदाङ्गुष्ठसन्निधौ क्षिप्रमर्म्मण उपरि द्व्यङ्गुले शिराव्यधः कार्य्यः। क्षिप्रमर्म्म अ-

काञ्जिकेन पिबेच्चूर्णं मूलैर्वा हृद्दारजम् ॥
रजनीं गुड़संयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥
गन्धर्व्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ।
श्लीपदबन्धनमुक्तोभवत्यसौ सप्तरात्रेण ॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम् ॥
गोधावतीमूलयुक्तां खादेन्नाभेरधरीं नरः ।
जयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः ॥ ३ ॥

वृद्धदारकचूर्णम् ।

श्लीपदघ्नोरसोऽथवा गुडूच्यास्तैलसंयुतः ।
त्रिकटुत्रिफलाचव्यं दार्व्वीवरुणगोक्षुरम् ॥
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत् ।
सर्व्वेषां चूर्णमाहृत्य वृद्धदारस्य तत्समम् ॥
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः ।

---

धाञ्च मरणं स्यादिति । सुश्रुतेऽप्युक्तं पादाङ्गुष्ठाङ्गुल्योर्मध्यं क्षिप्रेति मर्म तत्र व्यधे त्वाक्षेपकं मरणमिति ।

कषायाणीति कफहरारग्वधादिगणमुस्तादिगणकृतानि । पूतिकरञ्जच्छदजमिति कण्टकी करञ्जपत्रस्वरसं पलमानं कटुतैलार्द्धं प्रक्षिप्य पिबेत् । अनेनैव विधानेनेति कटुतैलप्रक्षेपेण इत्यर्थः । गन्धर्व्वतैलमरण्डतैलं गोजलेन गोमूत्रेण । तैलसंयुक्तमिति तैलं कटुतैलम् । गोधापदी गोडालियाखता तन्मूलस्यैकोभागः मासस्य भागत्रयम् ॥ ३ ॥

गुडूच्यारस इति स्वरसः क्वाथो वा तैलन्तु कटुतैलम् । त्रिकटुकेत्यादौ ।— अलम्बुषा मुण्डिरी । वृद्धदारस्य तत्सम-

जीर्णे चापरिहारं स्याद्भोजनं सर्व्वकामिकम् ॥
नाशयेत् श्लीपदं स्थौल्यमामवातं सुदारुणम्।
गुल्मकुष्ठानिलहरं वातश्लेष्मज्वरापहम् ॥ ४ ॥

पिप्पल्यादिचूर्णम्।

पिप्पलीत्रिफलादारुनागरं सपुनर्नवाम्।
भागैर्द्विपलिकैरेषां तत् समं वृद्धदारकम् ॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः।
जीर्णे चापरिहारं स्याद्भोजनं सर्व्वकामिकम् ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥ ५ ॥

कृष्णाद्योमोदकः।

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम्।
विंशतिश्च हरीतक्योगुड़स्य तु पलद्वयम् ॥
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥ ६ ॥

सौरेश्वरं घृतम्।

सुरसो देवकाष्ठञ्च त्रिकटुस्त्रिफले तथा।
लवणान्यथ सर्व्वाणि विड़ङ्गान्यथ चित्रकम् ॥

---

मिति त्रिकट्वादि सर्व्वचूर्णसमं वृद्धदारकस्य चूर्णमित्यर्थः सर्व्वकामिकमिति यथेच्छमित्यर्थः ॥ ४ ॥

पिप्पलीत्यादौ।— अग्निञ्च कुरुत इति विरेकेण पित्तहरत्वात्। अन्ये तु वचनादग्निं घोरं कुरुते अतो भस्मकं नियच्छति प्रयाति इत्याहुः ॥ ५ ॥

कृष्णेत्यादौ।— कृष्णादीनां कर्षादिमानं यथाक्रमं ज्ञेयम्। विंशतिश्च हरीतक्य इत्यात्ततिमानात्। मध्वत्र मोदककरणोचितं ज्ञेयम् ॥ ६ ॥

चविकापिप्पलीमूलं गुग्गुलुश्चवुषा वचा ।
अपामार्गश्च पाठा च यन्थिला इन्द्रदारुकम् ॥
कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत् ।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् ।
एकं स्यादुद्धृतं कल्कात् पिबेत् कर्षद्वयं हविः ॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत् ।
मेदःश्रितञ्च पित्तोत्थं हन्यादेव न संशयः ॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथार्बुदम् ।
नाशयेद्ग्रहणीदोषं श्वयथुं गुदजानि च ॥
परमाग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम् ।
घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम् ॥
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम् ॥ ७ ॥

विड़ङ्गाद्यं तैलम् ।

विड़ङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदार्व्वेलकाख्येषु सर्व्वेषु लवणेषु च ॥

---

सौरेश्वरघृते सुरसः पर्य्यासः इन्द्रलिखित तन्त्रान्तरसम्बादात् निर्गुण्डी वा । दशमूली कषायस्य मिलित्वा प्रस्थं जलं चतुर्गुणं शेषं प्रस्थमेकम् । धान्यद्रवेण काञ्जिकेन नतु धान्यक्वाथेन धान्याम्लेनेति तन्त्रान्तर पाठात् व्यवहाराभावाच्च । ननु कयोर्द्रवयोः कियन्मानं ग्राह्यमित्याह प्रस्थमित्यादि । सौरेश्वरमिति सुरसा निर्गुण्डीपर्य्यायवाची तेन सुरेश्वरा निर्गुण्डी तत्कृतत्वात सौरेश्वरमिति संज्ञा । जीवकेनेति जीवो बृहस्पतिः स्वार्थे कः ॥ ७ ॥

विड़ङ्गादितैले ।— भद्रदारु देवदारु एलकाख्यो हिंगुला

तैलं पक्वं पिवेद्वापि श्लीपदानां निवृत्तये ॥ ८ ॥

इति श्लीपदचिकित्सा ।

---

## अथ विद्रध्यधिकारः ।

जलौकापातनं शस्तं सर्व्वेष्वेव विद्रधौ ।
लघुर्विरेको लङ्घनं स्वेदः पित्तोत्तरं विना ॥ १ ॥
वातघ्नमूलकल्कैस्तु वसातैलघृतप्लुतैः ।
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ ॥ २ ॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः ।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ॥ ३ ॥

---

एलवालुकमित्यन्ये । पेटिकेत्यपरे । विडङ्गादीनां कल्कं द्रवं जलं चतुर्गुणम् ॥ ८ ॥

इति श्लीपदाधिकारः ।

---

प्रागुक्तसम्वादादेव विद्रधिचिकित्स्योच्यते । जलौकेत्यादि ।— लघुर्विरेक इति लघुर्व्विरेको बहुधा कार्य्यः गम्भीरधातुगतदोषकृतत्वात् विद्रधेरिति वदन्ति ॥ १ ॥

वातघ्नेत्यादि ।— सुश्रुतस्य । वातघ्नमूलं दशमूलम् । वातघ्नस्थाने सुरङ्गीति पाठे सुरङ्गी शोभाञ्जनकः ॥ २ ॥

स्वेदेत्यादि ।— स्वेदोवेसवारादिभिः । यदाह सुश्रुतः वेसवारैः सकृशरैः पयोभिः पायसैस्तथा । स्वेदयेच्चापि सततमिति । उपनाहोऽपि तत्रैवोक्तः यथा आनूपौदकमांसन्तु काकोल्यादिसतर्पणाः । स्नेहाम्लसिद्धोलवणाः प्रयोज्य उपनाहने इति । सिद्धपिष्टैरिति स्वतन्त्रपिष्टैः ॥ ३ ॥

पुनर्नवादारुविश्वदशमूलाभयाम्भसा ।
गुग्गुलुं रुवुतैलं वा पिवेन्वातविद्रधौ ॥ ४ ॥
पैत्तिके शर्कराला जामधुकैः शारिवायुतैः ।
प्रदिह्यात् क्षीरपिष्टैर्व्वा पयस्योशीरचन्दनैः ॥
पिवेद्वा त्रिफलाक्काथं त्रिवृत्कल्काक्षसंयुतम् ।
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥
यष्ट्याह्वशारिवादूर्व्वानलमूलैः सचन्दनैः ।
क्षीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ॥
इष्टकासिकतालोगोशकृत्तुषपांशुभिः ।
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ५ ॥
दशमूलीकषायेण सस्नेहेन रसेन वा ।
शोथं व्रणं वा कोष्णेन सम्मूलं परिषेचयेत् ॥
त्रिफलाशिग्रुवरुणं दशमूलाम्भसा पिवेत् ।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ॥ ६ ॥
पित्तविद्रधिवत् सर्व्वां क्रियां निरवशेषतः ।
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः ॥

---

पुनर्नवेत्यादौ ।-- अम्भसा क्काथेन ॥ ४ ॥

पैत्तिक इत्यादि ।— सुश्रुतस्य । योगद्वयेऽपि क्षीरेण पेषणं शारिवा अनन्तमूलम् । पयस्या क्षीरकाकोली, इष्टकेत्यादि ।— सुश्रुतस्य । अत्र मूत्रपिष्टैरिति प्रमादः पाठः किन्तु मूत्रैरुष्णैरिति सुश्रुते पठ्यते अन्ये तु लौहं लौहचूर्णं गोशकृत् गोमयं एभिरिष्टक-चूर्णादिभिर्मूत्रपिष्टैरेरण्डदलमन्त्रैः स्वेद इति व्याख्याय मूत्रपिष्टैरिति पाठमेव स्वीकुर्व्वन्ति ॥ ५ ॥

दशमूलीत्यादौ ।—सस्नेहेनेति पूर्व्वेण परेण च सम्बध्यते। रसेन मांसरसेन ॥ ६ ॥

पित्तेत्यादि ।—सुश्रुतस्य । विपुलवचनस्यापि सर्व्वशब्दस्य

शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ।
अचिराद्विद्रधीन् हन्ति प्रातः प्रातर्निषेवितः ॥
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥
श्वेतवर्षाभूनोमूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतिवापं पिबेत् संशमनाय वै ॥
शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम् ।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ।
स्रुतेषूर्द्ध्वं मद्यचैव मैरेयाम्लसुरासवैः ।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथवा ॥ ७ ॥
प्रियङ्गुधातकीलोध्रं कट्फलं तिलिशत्वचम् ।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ ८ ॥

इति विद्रधिचिकित्सा ।

---

दृष्टत्वात् पुनर्निरवशेषत इत्युक्तं क्षतस्रलेपादि विध्यतिदेशार्थम् । शिग्रुमूलमित्यादौ ।— दरपिष्टमीषत्पिष्टम् । वरुणेत्यादि ।— सुश्रुतस्य । वरुणाद्यूषकादिगणौ सौश्रुतौ । स्रुत इत्यादि ।—सुश्रुतस्य । ऊर्द्ध्वं स्रवतामपि कदाचिच्चिकित्सासाध्यता चिकित्साभिधानादनुमन्तव्या । मधुशिग्रु इति रक्तशोभाञ्जनवृक्षस्य मूलम् । मैरेयं मद्यविशेषम् । अम्लं काञ्जिकम् ॥ ७ ॥

प्रियङ्ग्वित्यादि ।— सुश्रुतस्य । तिलिशोऽतिमुक्तकः । त्वचमिति निर्देशात्त्वचशब्दोऽपि नपुंसकलिङ्गोऽकारान्तोऽस्तीति

# अथ व्रणशोथाधिकारः ।

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम् ।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः ॥ १ ॥
मातुलुङ्गाग्निमन्थौ च भद्रदारुमहौषधम् ।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा ॥
कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः ।
सुपर्ण इव नागानां वातशोथविनाशनः ॥

---

गम्यते । चन्द्रटे तु तिलिशं धवमिति पाठोदृश्यते । तिलिसं-ञ्धवमिति पाठान्तरे तिलिः तिलिश एव । प्रियङ्ग्वादिभिः कल्क-द्रव्यं जलं चतुर्गुणं एतच्च तैलं मज्जभवविद्रधौ सुश्रुते पठ्यते ॥८॥
इति विद्रधिचिकित्सा ।

---

विद्रध्युक्तसम्वादात् प्रायेण तुल्योपक्रमत्वाच्चानन्तरं व्रण-शोथचिकित्सामाह । आदौ विम्लापनमिति ।— सुश्रुतस्य । विम्लापनमिह केवलमङ्गुष्ठादिमर्द्दनमात्रे परिभाषितम् । किन्तु विम्लाप्यतेऽनेनेति व्युत्पत्त्या बहिः परिमार्ज्जनरूपे शमने शोथ-विलयनकरप्रलेपपरिषेकाभ्यङ्गादावपि वर्त्तते । अवसेचनमपि शोधनरूपेऽन्तःपरिमार्ज्जने विरेकवमनरक्तमोक्षणादौ च व-र्त्तते । उपनाहोऽपि स्वेदे पाचनपिण्डे च वर्त्तते एवमपरेऽप्यु-पक्रमाः । विम्लापनादयोभाविव्रणविघातप्रयोजकतया व्रणस्ये-त्युक्तम् ॥ १ ॥

मातुलुङ्गेत्यादि ।— सुश्रुतस्य । मातुलुङ्गस्य मूलं अहिंस्रा कुड़कराानि कालाकड़ाभेदः । कल्क इत्यादौ ।— स्निग्ध इति

दूर्व्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्व्वे प्रलेपः पित्तशोथहा॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः।
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्व्वापणः स्मृतः॥
आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः॥ २॥
अजगन्धाश्वगन्धा च काला सरलया सह।
एकैषिकाजशृङ्गी च प्रलेपः श्लेष्मशोथहा॥
मुनर्म्नवाग्निमु दावदाग्नमूलमहौषधैः।
कफवातकृते शोथे लेपः कोष्णोविधीयते॥ ३॥
न रात्रौ लेपनं दद्याद्दत्तञ्च पतितन्तथा।
न च पर्य्युषितं शुष्यमाणं नैवावधीरयेत्॥ ४॥

---

हतेन। शीतलाश्च गणा इति काकोल्याद्युत्पलादिन्यग्रोधादयश्च बोद्धुताः। शोथनिर्व्वापण इति शोथशमन इति। एष एवेति पैत्तिकव्रणशोथविहितः॥ २॥

अजगन्धेत्यादि।— अजगन्धा छागलगन्धा इति भानुमतिः। अन्ये यवयमानिकेत्याहुः। काला अहिंस्रा कालाकोड़भेदः। सरला सरल एव एकैषिका त्रिटदिति भानुमतिः। अन्ये तु सरला त्रिटत् एकैषिका पाठेत्याहुः। अजशृङ्गी कर्कटशृङ्गीति भानुमतिश्चन्द्रिका च॥ ३॥

नरात्रावित्यादि।—न रात्रौ लेपनं दद्यादित्यादिना निषेधविध्युपदर्शनं रात्रौ न सर्व्वथा लेपस्य निषेधार्थं लेपनिषेधेन प्रदेहादिविधानां रात्रावपि सूच्यते। तेन यः प्रदेहोवातकफविषयः स रात्रावपिदेयोऽविरुद्धत्वात् पाचनं लेपनन्तु पाचकत्वादेव दातव्यम्। तथा पित्तजे वातपित्तजे च घृतशीतद्रव्याभ्यक्तं

शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति ।
न चापि मुखमालिम्पेत्तेन दोषः प्रसिच्यते ॥ ५ ॥
स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहैः ।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः ॥

तथा क्षीरशीतजलादिसेकश्च निर्व्वापणतया दीयत एव तथा व्रणकल्कोप्यद्धोरात्नावस्थायी बन्धोऽपि तत्रैव उक्तश्च वैतरणे।— सर्व्वशस्तु निशां प्राप्य लेपनन्तु निवर्त्तयेत् । क्षीरसर्पिःप्रलेपन्तु हित्वा प्रच्छादनन्तथेति । रात्रौ लेपदाने पुनः सुश्रुते दोष उक्तः यथा न चालेपं रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्म-णस्तदनिर्गमाद्विकारप्रवृत्तिरिति । प्रलेपप्रदेहयोस्तु भेदः सुश्रु-तेन दर्शितो यथा प्रलेपः शीतस्तनुरविशोषी च । प्रदेहस्तूष्णः शीतोवा बहलोबहुरविशोषी च ।' बहलइति आर्द्रमहिषच-र्म्मोत्सेधः प्रलेपः । प्रदेहस्तु प्रलेपापेक्षया बहलः। शोथेलेपश्च लोमाभिमुखं देयः । यदाह सुश्रुतः तत्र प्रतिलोममालिम्पेत् न चानुलोमं प्रतिलोमे हि सम्यगौषधमवतिष्ठते अनुप्रविशति च लोमकूपान् स्वेदवाहिभिः शिरामुखैर्वीर्य्यं प्राप्नोति । प्रति-लोममिति लोमाभिमुखम् । नच नैवेति ।— प्रतिषेधद्वयेन अवधीरयेदित्यर्थः अवधीरणञ्च दूरीकरणं तन्त्रान्तरेऽप्युक्तं लेप-श्चोद्धृत्य दातव्यो न यावच्छुष्कतां व्रजेत् । शुष्यमाण भवेच्छुष्को भूयोदोषं करोति स इति ॥ ४ ॥

तस्यैवापवादमाह ।— शुष्यमाणमित्यादि । उपेक्षेतेति यावच्छुष्कतां प्रयाति तावन्न दूरीकुर्य्यादित्यर्थः । पीड़नं प्रतीति व्रणपीड़नमुद्दिश्य यो लेप इत्यर्थः व्रणपीड़नलेपस्तु स एव शुष्कः सन् व्रणमुखं पीड़यित्वा पूयं स्रावयति ॥ ५ ॥

कठिनशोथे पारिभाषिकविस्रावणमाह स्थिरानित्यादि ।

विस्रावणार्थं चद्गीयात्तलेनाङ्गुष्ठकेन वा।
रक्तावसेचनं कुर्य्यादादावेव विचक्षणः॥
शोथे महति संबद्धे वेदनावति च व्रणे।
निवारणाय पाकस्य वेदनोपशमाय च॥
अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम्।
यो न याति शमं लेपस्वेदसेकापतर्पणैः॥
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात्।
एकतश्च क्रियाः सर्व्वा रक्तमोक्षणमेकतः॥
रक्तं हि व्यक्ततां याति तच्चेन्नास्ति न चास्ति रुक्।
स चेदेवमुपाक्रान्तः शोथो न प्रशमं व्रजेत्॥
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते॥६॥
तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका।
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते॥७॥

---

वेणुनाड्या वेणुदण्डेन, तलेन करतलेन। आदावेवेति उत्पन्नमात्रे सुश्रुतेऽप्युक्तं अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणमिति। शोथ इति व्रणपूर्व्वशोथे। संबद्धे सशोथे एतच्च व्रण इत्यनेन योज्यम्। शोथ इत्युक्तापि पुनः संबद्ध इति वचनं तादृशशोथे व्रणे विशेषे च रक्तस्रावविधानार्थम्। सुश्रुतेऽप्युक्तं सशोथे कठिने चाप्ते सरक्ते वेदनावति। संरब्धे विषमे वापि व्रणे विस्रावणं हितमिति। सविषे च विशेषेण जलौकाभिः पदैस्तथा। अन्ये पच्यमानावस्थं व्रणविषयकमिदम्। उपक्रमान्तरापेक्षया रक्तमोक्षणस्य प्राकर्ष्यमाह यो न यातीत्यादि। तस्योपनाहैरिति सोष्णबहुलसबद्धलेपैः। पक्वस्य पाटनमिति पाटनौषधैः शस्त्रैर्वा॥६॥

तानेवोपनाहानाह तैलेनेत्यादि।— तैलेन वाते कफे च

सतिला सातसीवीजा दध्यम्ला शक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्याडुपनाहने॥
बालवृद्धासहक्षीणभीरूणां योषितामपि।
मर्मोपरि च जाते च पक्के शोथे च दारणे॥
गवां दन्तं जले घृष्टं विन्दुमात्रं प्रलेपयेत्।
अत्यर्थकठिने वापि शोथे पाचनभेदनम्॥
कटुतैलाग्नितैलेपात् सर्पनिर्मोकभस्मभिः।
व्रणः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम्।
चिरविल्वाग्निको दन्ती चित्रकोहयमारकः॥
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम्।
क्षारद्रव्याणि वा यानि क्षारो वा दारणः परः॥ ८॥

---

सर्पिषा पित्ते रक्ते च ताभ्यामेवेति तैलसर्पिर्भ्यां मिलिताभ्यां चतुर्थ्येवेति दोषभेदेन विकल्पेन ज्ञेय इत्याहुः॥ ७॥

सतिलेत्यादौ।— किण्वं सुरावीजम्। व्रण इत्युपचयः। गण्डस्य व्रणस्य। प्रकोप इति प्रकोपहेतुः पूयरूपदोषः। चिरविल्वेत्यादि।— सुश्रुतस्य। चिरविल्वोऽत्र नक्तकरञ्जः; अग्निको भल्लातकः हयमारकः करवीरः इत्युवाभटसम्वादात् एतेन चिरविल्वादयोऽव्यस्ताः समस्ता वा योज्याः एतत् सर्वं दारणं सुकुमारविषयत्वेनैवोक्तं असुकुमारविषयस्तु शस्त्रमेवेति यथा सुपक्के पिण्डिते शोथे पीडनैरपपीड़िते। दारणं दारणार्हस्य सुकुमारस्य चेष्यते। गुग्गुलसीतणोदन्तस्वर्णक्षीरिकपोतविट्। क्षारौषधानि क्षाराश्च पक्वशोथप्रभेदेन इति। तथा चरकेऽपि उमाया गुग्गुलुः सौधं पयोदक्षकपोतयोः। विट्पलाशभवक्षारो हेमक्षीरीसुकुलकः। इत्युक्तो भेदनगणः पक्वशोथप्रभेदनः। सुकुमारस्य कष्टस्य शस्त्रन्तु परमुच्यते। अत सुकुमारस्येति पूर्वेण

तिलाष्टकः।

दुग्धानां पिच्छिलानान्तु त्वङ्मूलानि प्रपीड़नम्।
यवगोधूममाषाणां चूर्णानि च समासतः॥
ततः प्रक्षालनं क्वाथः पटोलीनिम्बपल्लवः।
अविशुद्धे विशुद्धे च न्यग्रोधादित्वगुद्भवः॥
मत्र्वत्थलद्वयं वाते न्यग्रोधादिश्च पैत्तिके।
आरग्वधादिकोयोज्यः कफजे सर्व्वकर्म्मसु॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधुकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः॥
निम्बपत्रं तिलादन्तीत्रिवृत् सैन्धवमाक्षिकैः।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी॥
एकं वा शारिवामूलं सर्व्वव्रणविशोधनम्।
पटोली तिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम्॥
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः॥ ९॥

---

सम्बध्यते तच्छ्रुतेत्यत्र च सुकुमारस्य। शस्त्रं परं भेदन इति सम्बन्ध इति दीपिका च। तस्मात् आरद्रव्यं आरञ्च सुकुमारविषये ज्ञेयः॥ ८॥

पीड़नद्रव्याण्याह दुग्धाणामित्यादि।—पिच्छिलानामिति शेलुशाल्मलीप्रभृतीनां दुदञ्च पीडनं मर्म्मादिसमीपस्थसूक्ष्ममुखव्रणविषयं ज्ञेयम्। उक्तं हि वाभटे पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्म्मगानपि। निःस्नेहैः पीड़नद्रव्यैः समन्तात् परिपीड़येदिति। पटोलीपत्रं पटोलपत्रमेव। अविशुद्ध इति च्छेदः। तिलकल्क इत्यादि वचनं स्पष्टम्॥ ९॥

त्रिफलेत्यादौ।— न्यग्रोधादिति। न्यग्रोधोडुम्बराश्वत्थकदम्बप्लक्षवेतसाः। करवीरार्ककुटजाः कषायव्रणरोपणाः। इत्य-

त्रिफला खदिरो दार्व्वी न्यग्रोधादिर्बला कुशा:।
निम्बकोलकपत्राणि कषाय: शोधने हित:॥ १०॥
अपेतपूतिमांसानां मांसस्थानमरोहताम्।
कल्क: संरोपण: कार्य्यस्तिलानां मधुकान्वित:॥ ११॥
निम्बपत्रमधुभ्यान्तु युक्त: संशोधन: स्मृत:।
पूर्व्वाभ्यां सर्पिषा वापि युक्तश्चाप्युपरोपण:॥
निम्बपत्रतिलै: कल्को मधुना व्रतशोधन:।
रोपण: सर्पिषा युक्तो यवकल्केऽप्ययं विधि:॥ १२॥
निम्बपत्रघृतक्षौद्रदार्व्वीमधुकसंयुता।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणम्॥

---

नेन शोधनरोपक्रमं चरकोक्तं ग्राह्यम्। निम्बकोलकेत्यादि।— कोलकपत्राणीति पाठे कोमलनिम्बपत्राणीति दीपिका। अन्ये तु कोलकोबदर इत्याहु: युक्तमिदं वाभटप्रमाणात्। अन्ये तु कुलकपत्राणि पठित्वा पटोलपत्राणीति व्याचक्षते॥ १०॥

अपेतेत्यादि।— वाभटस्य। मधुकान्वितो यष्टिमधुकान्वित:। अत्र तिलजोमधुसंयुक्त इति पाठ: सुश्रुते बहुपुस्तके च दृश्यते वाभटे तु सर्व्वत्रैव मधुकान्वित इति उभयमपि प्रमाणं व्रतिद्वैधवत्॥ ११॥

निम्बपत्रेत्यादि।— पूर्व्वोक्तयष्टिमधुयुक्तस्तिलानां कल्क एव निम्बपत्रमधुभ्यां युक्त इत्यर्थ:। पूर्व्वाभ्यामिति यष्टिमधुयुक्तस्तिलकल्क एव निम्बपत्रमधुभ्यां सर्पिषा च युक्तोरोपण: अपिशब्दात् शोधनोपि भवतीत्यर्थ:। उक्तस्तिलकल्कविधिं यवकल्केऽप्यतिदिशति यवकल्केऽप्ययं विधिरिति॥ १२॥

निम्बपत्रघृतेत्यादि।— एभिर्द्रव्यैर्व्वस्त्रमालिप्य वर्त्ति: कार्य्या वर्त्तिदानविषयोव्रण: सुश्रुते यथा "अन्त:पूयानसृङ्मुखान्

सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं लेपेन ।
मधुयुक्ता शरपुङ्खा सर्व्वव्रणरोपणी कथिता ॥
मानुषशिरःकपालं तदस्थि वा लेपनं मलेन ।
रोपणमिदं क्षतानां योगशतैरप्यसाध्यानाम् ॥ १३ ॥
व्रणान् विशोधयेद्वर्त्त्या सूक्ष्मा सान्तर्मसन्धिगान् ।
अभयात्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥
सुषवीपत्रपत्तूरकर्णमोटकुठारकाः ।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः ॥ १४ ॥
पञ्चवल्कलचूर्णैर्व्वा शुक्तिचूर्णसमन्वितैः ।
धातकीचूर्णलोध्रैर्वा तथारोहन्ति ते व्रणाः ।
सदाहा वेदनावन्तो व्रणा ये मारुतोत्तराः ॥
तेषां तिलानुमांश्चैव भृष्टान् पयसि निर्वृतान् ॥
तेनैव पयसा पिष्टा दद्यादालेपनं भिषक् ।
वातादिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ॥

---

गम्भीरान् मांससंस्थितान् । शोधनद्रव्ययुक्ताभिर्व्वर्त्तिभिः समुपाचरेदिति । तिलानां कल्कोवेति लेपविषया । सप्तदलः सप्तपर्णस्तस्य क्षीरम् । मानुषशिरःकपालमिति पुराणं ग्राह्यमित्याहुः मलेन गोमलेन ॥ १३ ॥

व्रणानित्यादि ।— वाभटस्य । अभयेत्येव पाठो वाभटपुस्तके दृश्यते । सुषवी कारवेल्लः पत्तूरः शालिञ्चः कर्णमोटः स्वनामख्यातः । कुठरिका कुठारिया, कुठेरकः पाठे पर्णासः ॥ १४ ॥

पञ्चवल्कलेत्यादि ।— चरकस्य शुक्तिर्बदरी तस्यास्त्वक् शुक्तिचूर्णसमायुतैरिति पञ्चवल्कल चूर्णैरित्यस्य विशेषणम् । पयसि निर्वृतानिति दुग्धे निर्व्वापितान् । वाताभिभूतानि-

यवाज्यभूर्ज्जमदनश्रीवेष्टकसुराह्वैः।
श्रीवासगुग्गुलगुरुशालनिर्य्यासधूपिताः।
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्रावदेदनाः ॥ १५ ॥
तिलाः पयः सिता क्षौद्रं तैलं मधुकचन्दनम्।
लेपेन शोधयन्दाहरक्तं निर्व्वापयेद्व्रणान् ॥ १६ ॥
पित्तविद्रधिवीसर्पशमनं लेपनादिकम्।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सकः ॥
महाराष्ट्रिजटालेपो दग्धपिष्टावचूर्णनम्।
जीर्णगोहल्लणाश्चूर्णं दग्धव्रणहरं परम् ॥ १७ ॥
जीरककल्कपक्वं सिक्थकसर्ज्जरससमिश्रितं हरति।
घृतमभ्यङ्गात् पावकदग्धदुःखं क्षणार्द्धेन ॥ १८ ॥

---

त्यादि वाभटस्य स्रावावान् अल्पस्रावावान् भूर्ज्जो भूर्ज्जग्रन्थिः। मदनः सिक्थक इति इन्दुटीप्पनी श्रीवेष्टको नवनीतखोटी सुराह्वयं देवदारु। श्रीवासेत्यादि।— श्रीवासो नवनीतखोटी नच पूर्व्वोक्तेन पौनरुक्त्यं अस्य वचनस्य तन्त्रान्तरीयत्वात्। इन्दुटिप्पनीकायान्तु। पौनरुक्त्यमाशङ्क्य पूर्व्वोक्तश्री.वेष्टकशब्देन कुन्दुरुरिति शालनिर्यासो धूनकः ॥ १५ ॥

तिला इत्यादौ।— पयः पेषणार्थं सिता शर्करा क्षौद्रतैलाभ्यां सन्धा.य लेपो देयः ॥ १६ ॥

इदानीं व्रणमभिधाय व्रणसामान्यादस्मिन्नेव व्रणाधिकारे आगन्तुव्रणचिकित्साभिधानार्थं प्रकरणमारभ्यते। तत्र प्रथममग्निदग्धव्रणचिकित्सामाह पित्तेत्यादि।— महाराष्ट्रिजटा महाराष्ट्रिमूलं अयमेको योगः पिष्टं पिष्टकमेव दग्धपिष्टचूर्णेनावचूर्णनमिति द्वितीयः ॥ १७ ॥

जीरकेत्यादि।— जीरकस्य कल्कः जलं चतुर्गुणं पश्चात् सिद्धे च सिक्थसर्जरसयोः प्रक्षेपः ॥ १८ ॥

अन्तर्दग्धकुठारकोद्भवजं लेपान्निहन्ति व्रणम्।
अश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुण्डनात्॥
अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदैः साधितम्।
पिष्ट्वा शाल्मलीवल्कलैर्जलगतः लेपात्तथा वालुका॥ १९॥
सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत्।
यष्टिमधुकयुक्तेन किञ्चिदुष्णेन सर्पिषा॥ २०॥
बद्धागन्तुव्रणं वैद्यो घृतं क्षौद्रसमन्वितम्।
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम्॥
कान्तकामुकमेकं सुश्लक्ष्णं गव्यसर्पिषा पिष्टम्।
शमयति लेपान्नियतं व्रणमागन्तुजं न सन्देहः॥

---

अन्तरित्यादौ।— कुठारकः कुरालिया स च स्यालिमध्ये अन्तर्धूमं दग्धव्यः गुण्डनादित्यवचूर्णनात्। गण्डूपदैः किञ्चुलुकैः कल्कः जलं चतुर्गुणमर्थादिति निश्चलः। जलं विना चटचटाविधिपाक इत्यन्ये। शाल्मलीवल्कलैरिति सहार्थे तृतीया॥१९॥

इदानीं सद्योव्रणचिकित्सामाह सद्य इत्यादि।— समाहाभ्यन्तरे यष्टिमधुयुक्तो यष्टिमधु कल्कीकृत्य चतुर्गुणजलेन यथाविधिघृतं साधनीयम्। यदि पुनस्त्वरया यथाविधि घृतमिदं पक्तुं न शक्यते तदा घृतात् पलद्वयं जलात् षट्पलं यष्टिमधुकस्य कर्षद्वयं किञ्चित् पक्वावतार्य्य व्रणं सेचयेदित्याहुः। नातिशीतेनेति पाठान्तरम्॥ २०॥

बुद्धेत्यादि।— चन्द्राटस्य। बुद्धेत्यत्र बद्धेति पाठः साधुः। बन्धोहि सद्योव्रणेषु सन्धानक्रिया प्रधानः उक्तं हि बद्धप्रधानं तेन शुद्धिव्रणरोपणमस्थि सन्धिस्थैर्यञ्चेति। चन्द्राटादावयमेव पाठो दृश्यते। बुद्धेत्यादि पाठे घृतक्षौद्रसमायुतमित्यन्तरं

अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा ।
सद्योत्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ २१ ॥
कर्पूरपूरितं बद्धं सद्वत्तं संप्ररोहति ।
सद्यः शस्त्रक्षतं पुंसां व्यथापाकविवर्ज्जितम् ॥ २२ ॥
शरपुङ्खा काकजङ्घा प्रथमं महिषीसुत-
मलं लज्जा च सद्यस्कव्रणघ्नं पृथगेव तु ।
शुनोजिह्वाकृतश्चूर्णः सद्यः क्षतविरोहणः ।
चक्रतैलं क्षते विद्धे रोपणं परमं मतम् ॥ २३ ॥
यवक्षारं भक्षयित्वा पिण्डं दद्याद्व्रणोपरि ।
शृगालकोलिमूलेन नष्टशैलं विनिःसरेत् ॥
लाङ्गलीमूललेपाद्वा गवाक्षीमूलतस्तथा ॥ २४ ॥

---

श्लेति शेषः । जिह्वा प्रयुञ्जीतेति क्रियाविशेषणम् । कान्त-कामुकं भद्रमुस्तकं घृतमत्र शतधौतमित्युपदिशन्ति एवं वक्ष्य-माणेऽपि ॥ २१ ॥

कर्पूरेत्यादि । — सद्वृत्तं यथा स्यात् तथा कर्पूरपूरितं तेन कर्पूरचूर्णेन शतधौतघृतमिश्रेण खड्गादिक्षतं प्रपूर्य्य बध्नीया-दित्यर्थः ॥ २२ ॥

शरपुङ्खेत्यादि । — महिषीसुतस्य मलं घृततैलवसामज्जा-वेसवारपयोदधि । मांसधावनतोयाभमितिवत् अयं रोगः समर्थनीयः अभिनवजातमहिषवत्सस्य प्रथमं मलमित्यर्थः । लज्जा लाजालु अन्ये तु वराहक्रान्ता इत्याहुः । चक्रतैलं तत्-कालचक्रोद्धृतमभ्रष्ट सार्षपतैलम् । अन्ये तु चक्रकाष्ठोद्भवं तैल-माहुः ॥ २३ ॥

अन्तःशैल चिकित्सामाह यवक्षारमित्यादि । — तथेत्यन्तेन यवक्षारकर्ष १ उष्णजल पल २ आलोड्य पीत्वा नष्टशल्यव्रणो-परि शृगालकोलीमूलं पिष्ट्वा पिण्डो देयः । शृगालकोली साह-

शोणितस्य निग्रहार्थं तत्कालं विक्षतस्य च।
कषायाः शीतमधुराः स्निग्धालेपादयो हिताः॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते।
पक्वाशयस्थे देयञ्च विरेचनमसंशयः॥ २५॥
क्वाथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदा कृतः।
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक्॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम्॥ २६॥
अत्यर्थमसृजं स्रवति प्रायशो यत्र विक्षते।
ततो रक्तक्षयाद्वायौ कुपितेऽति रुजाकरे॥
स्नेहपानं परिषेकं स्नेहलेपोपनाहनम्।
स्नेहवस्तिञ्च कुर्व्वीत वातघ्नौषधसाधिताम्॥ २७॥

---

कुल इति ख्यातः बदरीभेदः। एवं लाङ्गलीयमूलगोरक्षकर्क्क-टीमूलाभ्यामपि॥ २४॥

क्षतेत्यादि।— वाभटस्य। आमाशयस्थ इति सुश्रुतस्य। आमाशयस्थमपक्वाशयस्थम्। पक्वाशयस्थं रक्तं विरेचनेन सुखेन निःसर्त्तुं शक्यत इत्यभिप्रायेण विरेचनविधानं नतु पित्तप्रत्य-नीकतया पक्वाशयस्य वातस्थानत्वात्। अन्ये तु पक्वशब्देन पाक उच्यते न पक्वाशयः किन्तु पच्यमानाशय इत्यर्थः तत्रै-वहि पित्तस्थानत्वेन विरेचनमुपयौगिकमित्याहुः॥ २५॥

क्वाथ इत्यादौ वंशत्वक् वंशनिलीत्यश्मभित् पाषाणभेदी हिङ्गु सैन्धवन्तु प्रक्षेप्यं अयं योगः प्रभावात् रक्तं स्रावयति॥ २६॥

अत्यर्थमित्यादि।— वाभटस्य। विक्षत इति विविधक्षत-छिन्नभिन्नादि। स्नेहलेपोपनाहनमिति स्नेहयुक्तलेपः स्नेहयु-क्तमुपनाहञ्च किन्तु वाभटे स्वेदोपनाहनमिति पाठः। तन्मते स्वेदोधान्यस्वेदः उक्तञ्च वाभटे धान्यस्वेदांश्च कुर्व्वीत स्निग्धा-

इति साप्ताहिकः प्रोक्तः सद्योव्रणहितोविधिः ।
सप्ताहात् परतो कुर्य्याच्छारीरव्रणवत् क्रियाम् ॥
करञ्जारिष्टनिर्गुण्डीरसोहन्याद्व्रणक्रिमीन् ।
कलायविदलीपत्रं कोषाम्रास्थि च पूरणात् ॥
सुरसादिरसैः सेकोलेपनं स्वरसेन वा ।
निम्बसम्पाकजात्यर्कसप्तपर्णाश्वमारकाः ॥
क्रिमिघ्ना मूत्रसंयुक्ताः सेकालेपनधावनैः ।
प्रच्छाद्य मांसपेश्या वा क्रिमीनपहरेद्व्रणात् ।
लशुनेनाथवा दद्याल्लेपनं क्रिमिनाशनम् ॥ २८ ॥

त्रिफलागुग्गुलुः ।

ये क्लेदपाकस्रुतिगन्धवन्तोव्रणामहान्तः सरुजः सशोथाः ।
प्रयान्ति ते गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलारसेन ॥

वटिकागुग्गुलुः ।

त्रिफलाचूर्णसंयुक्तोगुग्गुलुर्व्वटवीकृतः ।
निर्यन्त्रणोविबन्धघ्नोव्रणशोधनरोपणः ॥ २९ ॥

---

न्यालेपनानि च इति । वातघ्नौषधं भद्रदार्व्वादि ॥ २७ ॥

साप्ताहिकेत्यादि ।— वाभटस्य । करञ्जेत्यादि करञ्जादिपत्रस्वरसः कलायविदली स्वनामख्याता । कोषाम्रः कुसुम्भ इति ख्यातः तस्य फलास्थि आभ्यां संपिष्टाभ्यां प्रत्येकं व्रणावकाशपूरणं सुरसादिगणः सौश्रुतः । सुरसेनेति पर्णासेन । निम्बादौ जात्याः पत्रं निम्बादीनां त्वक् एते च निम्बादयो यथालाभं मूत्रपिष्टाः सेकादौ प्रयोज्याः । मांसपेषी मांसखण्डं तत्रामिषगन्धात् क्रिमय उपर्य्युपरि सञ्चरन्ति इति भावः ॥ २८ ॥

यवक्षार ... दिः परिमार्ज्जनमुक्ता अन्तःपरिमार्ज्जनमाह य इत्या-
परिस्रुता ... कोठानुरूपोऽत्र गुग्गुलुः प्रक्षेप्यः । त्रिफलाचूर्णसंयुक्त
त्रिफलाचूर्णेन समेन युक्तो गुग्गुलुः एतमनुरूपं दत्त्वा

वटिकागुग्गुलुः।

अमृता गुग्गुलुः प्रस्तोन्मितं तैलञ्च वज्रकम्।
विड़ङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना समम्॥
सर्पिषा वटकीकृत्य खादेद्वा हितभोजनः।
दुष्टव्रणापचीमेहकुष्ठनाड़ीव्रणापहः॥

अमृतागुग्गुलु।

अमृतापटोलमूलत्रिफलात्रिकटुक्रिमिघ्नानाम्।
समभागानां चूर्णं सर्व्वसमोगुग्गुलोर्भागः॥
प्रतिवासरमेकैकां गुड़िकां खादेदग्निप्रमाणाञ्च।
जेतुं व्रणान् वातासृग्गुल्मोदरश्वयथुपाण्डुरोगांश्च॥

जात्याद्यं घृतम्।

जातीनिम्बपटोलपत्रकटुकादार्व्वीनिशाशारिवा-
मञ्जिष्ठाभयतुत्थसिक्थमधुकैर्नक्ताह्वबीजैः समैः।
सर्पिः सिद्धमनेन सूक्ष्मवदनाममर्म्माश्रिताः स्राविणो
गम्भीराः सरुजोव्रणाः सगतिकाः शुष्यन्ति रोहन्ति च॥

---

विसृज्य चूर्णञ्च प्रक्षिप्य वटकी कर्त्तव्या एवं सर्व्वत्र वटकविधाने यन्त्रणा आहाराचारनियमश्च॥ २८॥

अमृतागुग्गुलुर्व्वातरक्तोक्तः। वज्रकतैलञ्च कुष्ठे वक्ष्यमाणम्। वटिकागुग्गुलौ गुग्गुलुना सममिति विड़ङ्गादिचूर्णसमेन। अमृता वटिका गुग्गुलुः स्पष्टः। जातीत्यादि।—वाभटस्य। जात्यादीनां त्रयाणां पत्रं दार्व्वी दारुहरिद्रा, निशा हरिद्रा अभयसुशीरं नक्ताह्वबीजं करञ्जबीजं गतिर्नाड़ी। गौराद्ये घृते गौरा हरिद्रा प्रियङ्गुर्व्वा व्यवहारन्तु हरिद्रैव। हरिद्रा दारुहरिद्रा जातीनिम्बपटोलानां पत्रं करञ्जस्य फलं

गौराद्यं घृतम् ।

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च ।
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम् ॥
जातीनिम्बपटोलञ्च करञ्जं कटुरोहिणी ।
मधूच्छिष्टं मधूकञ्च महामेदा तथैव च ॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ।
एष गौरोमहावीर्य्यः सर्व्वव्रणविशोधनः ॥
आगन्तुः सहजाश्चैव सुचिरोत्थाश्च ये व्रणाः ॥
विषमामपि नाड़ीञ्च शोधयेच्छ्रमेव च ।
गौराद्यं जातीकाद्यञ्च तैलमेवं प्रसाध्यते ॥
तैलं सूक्ष्मानने दुष्टे व्रणे गम्भीर एव च ॥

करञ्जाद्यं घृतम् ।

नक्तमालस्य पत्राणि तरुणानि फलानि च ।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ।
मञ्जिष्ठा चन्दनोशीरमुत्पलं शारिवे त्रिवृत् ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम् ॥
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिहेष्यते ॥

---

मधुकं मधुकपुष्पं मधुकञ्चेत्यस्य स्थाने समधुकमिति पाठे यष्टि-मधुकस्य भागद्वयम् । पञ्चवल्कलस्य तोयेन क्वाथेन एष गौर इति भीमोभीमसेन इतिवत् गौराद्योयं महावीर्य्य इत्यपि पाठः । उक्तघृतद्वयविधिना तैलद्वयमपि साध्यमित्याह गौराद्यमित्यादि तैलविषयमाह तैलमित्यादि ।— नक्तमालस्येत्यादौ । पत्राणि इत्यन्वयः । सुमनाः जाती । उत्पलं नीलोत्पलं शा-

प्रपौण्डरीकाद्यं घृतम्।

प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः।
सहरिद्रैः शृतं सर्पिः सक्षीरं व्रणरोपणम्॥ ३०॥

तिक्ताद्यं घृतम्।

तिक्तासिक्थनिशायष्टीनक्ताह्वफलपल्लवैः।
पटोलमालतीनिम्बपत्रैर्व्रण्यं घृतं पचेत्॥

विपरीतमल्लतैलम्।

सिन्दूरकुष्ठविषहिङ्गुरसोनचित्र
बाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम्।
प्रासादमन्त्रयुतफुत्कृतगुञ्जफेणो-
द्भूतव्रणप्रशमनो विपरीतमल्लः॥
खड्गाभिघातगुरुगण्डमहोपदंश
नाडीव्रणव्रणविचर्च्चिककुष्ठपामाः।
एतान्निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टशयनासनभोजनस्य॥ ३१॥

---

रिवेऽनन्तमलश्यामकाते प्रपौण्डरीकमित्यादौ क्षीरमेव चतु-
र्गुणम्॥ ३०॥

तिक्तेत्यादौ पत्रशब्दः त्रिभिः सम्बध्यते जलञ्च चतुर्गुणम्।
तैलान्याह सिन्दूरेत्यादि। चित्रकोरक्तचित्रकः बाणाङ्घ्री
शरपुङ्खामूलं न तु झिण्टीमूलं जलं चतुर्गुणं तैलञ्च सार्षपं
तन्त्रान्तरसम्वादात्। उक्तञ्च सिन्दूरहिङ्गुविषकुष्ठरसोनबाण-
पुष्पारुणानलहयाह्वयमूलकल्कैः। एतच्चतुर्गुणजले विधिवत्
सुसिद्धं सिद्धार्थतैलमिति सिद्धफलं प्रदिष्टमिति। प्रसादमन्त्रो
महेश्वरमन्त्रः ओं हां हूं ह्रैं ह्रौं शिवाय स्वाहेति पठित्वा
फुत्कारेण फेणमालोड्यम्॥ ३१॥

अङ्गारकं तैलम् ।

कुठारकात् पलशतं साधयेन्नल्वनेऽम्भसि ।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत् ॥
कल्कैः कुठारापामार्गप्रोष्ठिकामक्षिकायुतैः ।
एतदङ्गारकं नाम व्रणशोधनरोपणम् ॥
नाड़ीषु परमाऽभ्यङ्गोनिजास्वागन्तुकीषु च ॥

प्रपौण्डरीकाद्यं तैलम् ।

प्रपौण्डरीकं मधुकं काकल्यौ द्वे सचन्दने ।
सिद्धमेभिः समं तैलं तत्परं व्रणरोपणम् ॥ ३१ ॥

दूर्व्वाद्यं घृतं तैलम् ।

दूर्व्वास्वरससिद्धं वा तैलं कम्पिल्लकेन च ।
दार्व्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत् ॥ ३२ ॥

---

कुठारकेत्यादि ।— कुठारः कुरालिया; नल्वनो द्रोणः प्रोष्ठिका शफरीमत्स्यः । मक्षिका कीटविशेषः ॥ ३१ ॥

दूर्व्वेत्यादि ।— योगद्वयम् । अत्र दूर्व्वा एव कल्कोबोध्यः चकारद्वयात् कम्पिल्लदार्व्वीत्वचोर्मिलित्वा कल्कः पाकश्च जलेन चारपाणिसम्वादात् । अन्ये तु दूर्व्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वेति पठित्वा दूर्व्वास्वरसेन अकल्कमेव तैलं साध्यं कम्पिल्लकरसेन दार्व्वीकल्केन वा जलेन द्रवेणापरं तैल-द्वयमित्याहुः । तैलसाधनविधिं घृतेऽप्यतिदिशति येनेत्यादि । अयञ्च सर्व्वतैलविध्यतिदेशः । अन्ये तु दूर्व्वातैलविध्यतिदेश इत्याहुः ॥ ३२ ॥

मञ्जिष्ठाद्यं घृतम्।

मञ्जिष्ठां चन्दनं मूर्व्वां पिष्ट्वा सर्पिर्व्विपाचयेत्।
सर्व्वेषामग्निदग्धानामेतद्रोपणमिष्यते॥

पाटलीतैलम्।

सिद्धं कषायकल्काभ्यां पाटल्याः कटुतैलकम्।
दग्धव्रणरुजास्रावदाहविस्फोटनाशनम्॥

चन्दनाद्यं यमकम्।

चन्दनं वटशुङ्गञ्च मञ्जिष्ठामधुकं तथा।
प्रपौण्डरीकं दूर्व्वा च पत्तङ्गधातकी तथा॥
एभिस्तैलं विपक्वव्यं सर्पिः क्षीरसमन्वितम्।
अग्निदग्धव्रणेऽभ्यङ्गं व्रणशाद्रोपणं परम्॥ ३४॥
मनःशिलाले मञ्जिष्ठा सलाक्षारजनीद्वयम्।
प्रलेपः सघृतक्षौद्रस्त्वग्निशुद्धिकरः परः॥
चयोरजः सकाशीशं त्रिफलाकुसुमानि च।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि॥ ३५॥
कालीयकलताम्राश्थिहेमकालारसोत्तमैः।
लेपः सगोमयरसः सवर्णकरणः परः॥

---

मञ्जिष्ठामित्यादौ।— जलं चतुर्गुणम्। चन्दनाद्ययमके तैलघृताभ्यां समाभ्यां मिलित्वा प्रस्थः। पत्तङ्गं रक्तचन्दनं क्षीरमेवात्र चतुर्गुणं तैलमिति तिलतैलमेव सर्व्वत्र विशेषोक्तिं विना॥ ३४॥

मनःशिलेत्यादिना।— सावर्ण्यमुपक्रममाह। चयोरज इत्यादौ।— काशीशं त्रिफलाकुसुमानि हरीतक्यादीनां कुसुमानि। कुसुमाभावे फलम्॥ ३५॥

चतुष्पदां हि त्वग्रोमखुरशृङ्गास्थिभस्मना।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः॥
व्रणग्रन्थिं ग्रन्थिवच्च जयेत् क्षारेण वा भिषक्॥ ३६॥

इति व्रणशोथसद्योव्रणचिकित्सा।

---

## अथ नाड़ीव्रणाधिकारः।

नाड़ीनां गतिमन्विष्य शस्त्रेणापाद्य कर्म्मवित्।
सर्व्वंव्रणक्रमं कुर्य्याच्छोधनं रोपणादिकम्।
नाड़ीं वातकृतां साधु पाटितां लेखयेद्भिषक्॥
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत्॥ १॥

---

कालियेत्यादि।—कालियकं कालियाकाष्ठं लता प्रियङ्गुः। दूर्व्वेत्यन्ये। कालामञ्जिष्ठा; रसोत्तमः पारदः घृतमित्यन्ये। चतुष्पादामित्यादि सुगमम्॥ ३६॥

इति व्रणशोथाधिकारः।

---

व्रणत्वसामान्यान्नाड़ीव्रणचिकित्सामाह नाड़ीनामित्यादि।— गतिमिति पूयगतिं आदिशब्देनोत्सादनावसादनसवर्णीकरणादयो गृह्यन्ते। साधुपाटनमुपनाहपूर्व्वकं वाभटसम्वादात्। प्रत्यक्पुष्पी अपामार्गः तस्य वीजं सैन्धवयोगादयं लेपोबोध्यः। लेखयेदिति क्षारेण प्रतिसारयेदित्यर्थः। एतच्च लेखनयोग्यव्रणं प्रतिवोध्यं उक्तं हि— उत्सृतान् मूलपर्य्यन्तान् प्रसन्नान् कठिनान् व्रणान्। क्लिन्नाग्राणि सकुष्ठानि विलिखेल्लेख्यानि बुद्धिमान् इति॥ १॥

पैत्तिकीमित्यादौ।— नागदन्ती स्थूलमूलादन्त्येव। निशाह्वयैरित्यत्र निशायुतैरिति केचित् पठन्ति तन्न विशेष्यात्

पैत्तिकीं तिलमञ्जिष्ठानागदन्ती निशाद्वयैः ॥ २ ॥
श्लैष्मिकं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥ ३ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥ ४ ॥
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ५ ॥
घोण्टाफलत्वक् लवणं सलाक्षां पूगात् फलञ्चालवणाच्च पत्रम् ।
स्नुह्यर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥ ६ ॥

---

तथा वाभटे निशाद्वयैरित्येव पाठः । वृन्देऽपि तथा । सुश्रुते हरिद्राद्वयव्यतिरेकेणाप्ययं योगः ॥ २ ॥

श्लैष्मिकीमित्यादौ ।— निकुम्भो दन्ती अरिष्टो निम्बः अत्र यष्ट्याह्वस्थाने सौराष्ट्रीयोगादप्ययं योगः । उक्तं हि वाभटे— श्लेष्मिकां तिलसौराष्ट्रीनिकुम्भारिष्टसैन्धवैरिति ॥ ३ ॥

शल्यजामित्यादि ।— वाभटस्य । छिन्नशोधितामिति आदौ छिन्नामिति पाटितां पश्चात् शल्यं निर्हृत्य शोधितामित्यर्थः सुश्रुते युक्तं नाड़ीन्तु शल्यप्रभवां विदार्य्य निर्हृत्य शल्यं परिशोध्य मार्गम् । संशोधयेत् क्षौद्रघृतप्रगाढ़ैस्तिलैस्ततो रोपणमस्य कुर्य्यादिति ॥ ४ ॥

आरग्वधेत्यादि ।— आरग्वधस्य पत्रं काला कालाकड़ा नतु मञ्जिष्ठा अस्यैकस्यैव दुष्टव्रणहन्तृत्वात् । सूत्रवर्त्तिरिति गोमूत्रकृता वर्त्तिः । एषां प्रत्येकं चूर्णं मा ८ घृत मधु कर्ष २ गोमूत्र पल १ एतत् सर्व्वं पक्वा मधुसैन्धवयोर्व्वर्त्तिवत् कार्य्येत्याह्नः । पाकमन्तरेण वर्त्तिकरणस्याशक्यत्वात् । सूत्रवर्त्तिरिति पाठे एभिर्लिप्ता सूत्रवर्त्तिरित्यर्थः । वृद्धास्तु पूर्व्वेणैव व्यवहरन्ति ॥ ५ ॥

घोण्टेत्यादि ।—सुश्रुतस्य । घोण्टा अरण्यवदरं तस्याः

वर्त्तीकृतं माक्षिकसंप्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा।
दुष्टव्रणे यद्विहितश्च तैलं तत् सेव्यमानं गतिमाशु हन्ति ॥ ७ ॥
जात्यर्कसम्पाककरञ्जदन्तीसिन्धूत्थसौवर्च्चलयावशूकैः।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्क्षीरपिष्टा सह चित्रकेण॥८॥
माक्षिकद्धिकोद्रवान्नमिश्रितं हरति चिरविरूढाञ्च।
भुक्तं कङ्गुनिकामूलचूर्णमतिदारुणां नाड़ीम् ॥ ९ ॥

---

फलत्वक्। लवणं सैन्धवं लाक्षा प्रसिद्धैव। पूगात् फलमिति शुष्कपूगफलं आलवणञ्च पत्रमिति अलवणा ज्योतिष्मती तस्याः पत्रं आलवणं वाभटेऽप्युक्तं घोण्टाफलत्वक् लवणञ्च लाक्षां पूगात् फलञ्चालवणञ्च पत्रम्। स्नुहार्कदुग्धान्वित एव कल्को वर्त्तीकृतोहन्त्यचिरेण नाड़ीमिति। अन्ये तु लाक्षां ज्योतिष्मतीपत्रं न पठन्ति मदनफलञ्च पठन्ति यथा घोण्टाफलत्वक् मदनात् फलानि पूपस्य च त्वक् लवणञ्च मोचम्। स्नुहार्कदुग्धेन सहैव कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीमिति। एतत् सर्व्वं समभागं कृत्वा किञ्चित् सैन्धवं दत्त्वा स्नुहीक्षीरैरर्कक्षीरैर्जलैराप्लाव्य पक्त्वा वर्त्तिः कार्य्या ॥ ६ ॥

वर्त्तीकृतमित्यादि। सुश्रुतस्य लवणोत्तमं सैन्धवं वर्त्तिकरणञ्च मधुसैन्धवयोरग्नौ पाकात् अन्यथा वर्त्तिर्नस्यात्। दुष्टव्रणे यद्विहितन्तु तैलमिति सौश्रुतारग्वधतैलादि ॥ ७ ॥

जातीत्यादि।— जात्याः पत्रं अर्कस्य मूलं सम्पाकः आरग्वधस्तस्यापि पत्रं करञ्जस्य बीजं दन्ती दन्तीमूलं अत्र स्नुहीक्षीरेणैव सह किञ्चिज्जलं दत्त्वा पक्त्वा च वर्त्तिः कार्य्येत्याहुः ॥ ८ ॥

माक्षिकेत्यादौ।— कोद्रवस्तृणधान्यविशेषः तस्य भक्तम्।

अथ दुर्ब्बलभीरूणां गतिर्म्मर्म्माश्रिता च या।
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्।
सूचीं विदध्याद्‌गत्यन्ते चोन्नाम्याशु निर्हरेत्॥
सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत्।
तत: क्षीणबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत्॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गति:।
भगन्दरेऽप्येषविधि: कार्य्योवैद्येन जानता॥
अर्ब्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत्।
सूचीभिर्यववक्राभिराचितं वा समन्तत:॥
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम्॥ १०॥

---

कुक्कुनिका कायोमोति एतन्मूलचूर्णं माक्षिकदधिकोद्रवभक्ताभ्यां मिश्रितं कृत्वा भुक्तं स्यादित्यर्थ:॥ ९॥

अथेत्यादि।— सुश्रुतस्य। अथ: क्षीणमांस: दुर्ब्बलो हीनबल:। क्षारसूत्रेण छेदनविधिमाह एषण्येत्यादि। क्षारसूत्रेण सन्तानुसक्तं शीलं यस्या: एतादृशीं सूचीं उन्नाम्य उत्क्षिप्य सूच्यग्रेण गतिप्रान्तं विद्धा सूचीं निर्हरेदिति भाव:। अत्र यदि गतिर्दीर्घाभवति तदा द्व्यङ्गुले त्र्यङ्गुले वा बद्धा क्रमेण गतिमानेन छेदयेत् न पुनरेकदैव गतिप्रमाणेन बद्धा: छेद: कार्य्य: सूत्रच्छेदभयात् पीड़ातिशयजनकत्वाच्च इत्याह:। क्षाराक्तमिति सूत्रविशेषणम्। अर्ब्बुदादिषु बन्धनविशेषमाह अर्ब्बुदादिष्विति अर्ब्बुदादिकं यदि सुतनुमूलं भवति तदा उत्क्षिप्यैव मूले सूत्रेण बध्नीयादित्यर्थ:। स्थूलमूले तु सूत्रस्थैर्य्यार्थं मूले समन्तत: सूचीभिराचितं यथा स्यात्तथा बध्नी-

सप्ताङ्गगुग्गुलु ।

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः ।
नाड़ीदुष्टव्रणशूलभगन्दरविनाशनः ॥ ११ ॥

स्वर्ज्जिकाद्यं तैलम् ।

स्वर्ज्जिकासिन्धुदन्त्यग्निरूपिकानलनीलिका ।
खरमञ्जरीवीजेषु तैलं गोमूत्रपाचितम् ॥
दुष्टव्रणप्रशमनं कफनाड़ीव्रणापहम् ॥ १२ ॥

कुम्भीकाद्यं तैलम् ।

कुम्भीकखर्ज्जूरकपित्थविल्ववनस्पतीनान्तु शलाटुवर्गैः ।
कृत्वा कषायं विपचेत्तु तैलमावाप्य मुस्तसरलप्रियङ्गु ॥

---

यात् । यवपत्राभिरिति यववन्मध्यस्थूलपत्राभिः यवपत्राश्च सूचीनां दारनार्थम् । छिन्ने चोपचरेद्व्रणमिति द्विव्रणीयोक्तविधिनेति शेषः ॥ १० ॥

गुग्गुल्वित्यादौ ।— त्रिफलाव्योषैरिति विशेषणे तृतीया । त्रिफलादीनान्तु मिलित्वा गुग्गुलुसमत्वम् । आज्ययोजित इति घृतपिष्टितः घृतञ्च तावद्देयं यावता वटिका भवति ॥ ११ ॥

स्वर्जिकेत्यादौ ।— अग्निश्चित्रकः रूपिका श्वेतार्कः नलश्च स्वनामख्यातः नीलिका नीलीति प्रसिद्धा नीलवृक्षेत्यन्ये । खरमञ्जरी अपामार्गः गोमूत्रं पाकार्थं चतुर्गुणम्; सुश्रुतेप्येवमुक्तं यथा — सुवर्चिकासैन्धवचित्रकेषु निकुम्भनीलीनलरूपिकासु । वीजेष्वपामार्गभवेषु चैव कुर्य्यात् समूत्रेषु हिताय तैलमिति ॥ १२ ॥

कुम्भीत्यादि ।— सुश्रुतस्य । कुम्भिका कुम्भारलता दाड़िमसमफला स्थूलदन्तीत्यन्ये । वनस्पतयो वटादयः एषां

सौगन्धिकामोचरसाहिपुष्पलोध्राणि दत्त्वा खलु धातकीञ्च ।
एतेन शल्यप्रभवा हि नाड़ी रोहेद्व्रणोवै सुखमाशु चैव ॥ १३ ॥

भल्लातकाद्यं तैलम् ।

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विड़ङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाड़ीं कफानिलकृतामपचीं व्रणांश्च ॥

निर्गुण्डीतैलम् ।

समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाड़ीदुष्टव्रणापहम् ॥
हितं पामापचीनान्तु पानाभ्यञ्जननावनैः ।
विविधेषु च स्फोटेषु तथा सर्व्वव्रणेषु च ॥

हंसपादादितैलम् ।

हंसपाद्यरिष्टपत्रं जातीपत्रं ततोरसैः ।
तत् कल्कैर्व्विपचेत्तैलं नाड़ीव्रणविरोहणम् ॥ १४ ॥

इति नाड़ीव्रणचिकित्सा ।

---

शलाटुः कोमलफलम्, सौगन्धिका अनन्तमूलं मोचरसः शा-
ल्मलीनिर्यासः अहिपुष्पं नागकेशरपुष्पम् ॥ १३ ॥

भल्लातकेत्यादि ।— सुश्रुतस्य । मार्कवोभृङ्गराजस्तस्य
स्वरसश्चतुर्गुणः । निर्गुण्डीतैले सममिति सहार्थे तेन निर्गु-
ण्डीस्वरसश्चतुर्गुण एव ग्राह्यः चकस्तु समशब्दस्य तुल्यार्थ-
तामाह अकल्कमिदं तैलं हंसपादीतैले हंसपादी स्वनाम-
ख्याता अरिष्टपत्रं निम्बपत्रं ततोरसैरिति तेषां रसैरित्यर्थः
मध्यनन्तात्तसि । व्रणशायां रसोमिलित्वा चतुर्गुणः ॥ १४ ॥

इति नाड़ीव्रणचिकित्सा ।

## अथ भगन्दराधिकारः ।

गुदस्य श्वयथुं ज्ञात्वा विशोष्य शोधयेत्ततः ।
रक्तावसेचनं कार्य्यं यथा पाकं न गच्छति ॥ १ ॥
वटपत्रेष्टकाशुण्ठीगुडूच्यःसपुनर्नवाः ।
सुपिष्टाः पीड़कारम्भे लेपः शस्तोभगन्दरे ॥
पीड़कानामपक्वानामपतर्पणपूर्व्वकम् ।
कर्म्मकुर्य्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रियाम् ॥
एषणीपाटनं क्षारवह्निदाहादिकं क्रमम् ।
विधाय व्रणवत् कार्य्यं यथादोषं यथाक्रमम् ॥ २ ॥
त्रिवृत्तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा ।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥ ३ ॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ।
त्रिवृत्तेजोवती दन्ती कल्कोनाड़ीव्रणापहः ॥
कुष्ठं त्रिवृत्तिलादन्तीमागध्यः सैन्धवं मधु ।
रजनी त्रिफला तुत्थं हितं व्रणविशोधनम् ॥ ४ ॥

---

नाड़ीव्रणत्वसामान्याद्भगन्दरमाह गुदस्येत्यादि ।—विशोष्येत्युपवासादिना । शोधयेदिति विरेचयेत् ॥ १ ॥

वटपत्रेत्यादि ।— वटस्य कोमलपत्रं इष्टका च पार्न ये चिरमुषिता ग्राक्षेति इङ्का व्यवहरन्ति । अतर्पणपूर्व्वकं कर्म्म कुर्य्याद्विरेकान्तमिति अतर्पणादयोविरेकान्ता एकादशोपक्रमाद्व्रणीयोक्ताः कर्त्तव्या इत्यर्थः । एषणीत्यादौ ।— कार्य्यमित्यत्र चिकित्सितमिति शेषः ॥ २ ॥

त्रिवृदित्यादौ ।— उत्सादनमिह शोधनलेपः ॥ ३ ॥

रसाञ्जनमित्यादि ।— सुश्रुतस्य । तेजोवती ज्योतिष्मती

स्नुह्यर्कदुग्धदार्व्वीभिर्व्वर्त्तिं कृत्वा विचक्षणः ।
भगन्दरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः ॥
एषा सर्व्वशरीरस्थां नाडीं हन्यान्न संशयः ।
तिलाभयाकुष्ठमरिष्टपत्रं निशे वचा लोध्रमगारधूमः ॥
भगन्दरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोऽयम् ॥ ५ ॥

नवकार्षिकोगुग्गुलुः ।

खदिरापक्वभूनागचूर्णलेपोभगन्दरम् ।
हन्ति दन्त्यग्निप्रतिविषालेपस्तद्वच्छुनोऽस्थि वा ॥
त्रिफलारससंयुक्तं विडालास्थिप्रलेपनम् ।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम् ॥
त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता ॥
गुडिका शोथगुल्मार्शोभगन्दरवतां हिता ॥ ६ ॥

सप्तविंशतिकोगुग्गुलुः ।

त्रिकटुत्रिफलामुस्तविडङ्गामृतचित्रकम् ।

---

अन्ये तु चवीत्याहुः । शोधनरोपणोऽयं कल्कः । कुष्ठमित्यादि ।— सुश्रुतस्य स्पष्टम् ॥ ४ ॥

स्नुहेत्यादि ।— स्नुह्यर्कयोः क्षीरेण दारुहरिद्राचूर्णं पक्वा वर्त्तिः कार्य्येत्यर्थः । तिलेत्यादौ कुष्ठस्थाने लोध्रेति पाठे लोध्रद्वयं ग्राह्यम् । निशे हरिद्रे द्वे ॥ ५ ॥

खदिरेत्यादि ।— गर्द्दभरक्तपक्वगण्डूपदचूर्णलेप इत्यर्थः । दन्तीत्यादि द्वितीयोयोगः । अग्निश्चित्रकः । शुनोस्थि कुक्कुरस्यास्थि । अत्र त्रिफलारसोऽपि पेषणार्थं ज्ञेयम् । नवकार्षिके त्रिपञ्चैकांशयोजित इति अंश इह कर्षरूपोभागः तेन त्रिफलायाः प्रत्येकं कर्षः गुग्गुलोः पञ्चकर्षाः । कृष्णाया एककर्ष इति नवकर्षत्वमस्य योगस्य ॥ ६ ॥

शृंग्ये लापिप्पलीमूलं चबुणा सुरदारु च ॥
तुम्बुरपुष्करं चव्यं विशाला रजनीद्वयम् ।
विडं सौवर्च्चलं क्षारौ सैन्धवं गजपिप्पली ॥
यावन्त्येतानि चूर्णानि तावद्द्विगुणगुग्गुलुः ।
कोलप्रमाणां गुड़िकां भक्षयेन्मधुना सह ॥
कासश्वासं तथा शोथमर्शांसि सभगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च अन्त्रवृद्धिं तथा क्रिमीन् ।
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ॥
आनाहञ्च तथोन्मादं कुष्ठानि चोदराणि च ।
नाड़ीदुष्टव्रणान् सर्व्वान् प्रमेहं श्लीपदं तथा ॥
सप्तविंशतिकोह्येष सर्व्वरोगनिसूदनः ॥
शम्बूकस्य च मांसानि भक्षयेद्व्यञ्जनादिभिः ।
अजीर्णवर्जी मासेन मुच्यते ना भगन्दरात् ॥
पञ्चतिक्तं घृतं शस्तं पञ्चतिक्तश्च गुग्गुलुः ।
न्यग्रोधादिगणो यस्तु हितः शोधनरोपणः ॥
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ ७ ॥

विष्यन्दनं तैलम् ।

चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ ।
सुधां वचां लाङ्गलिकीं हरितालं सुवर्च्चिकाम् ॥

---

त्रिकटुत्यादौ ।—क्षारौ यवक्षारस्वर्जिकाक्षारौ । एतेन गुग्गुलुं विना सप्तविंशतिद्रव्याणीति निश्चलः । ये तु यवक्षारसौवर्च्चलमिति पठन्ति तन्मते गुग्गुलुना सह सप्तविंशतिकल्कोऽयम् । तत्पक्वमिति न्यग्रोधादेः क्वाथकल्काभ्यां पक्वम्॥७॥

चित्रकेत्यादि ।— सुश्रुतस्य । चित्रकादीनां कल्कोनक्कं

ज्योतिष्मतीञ्च संहृत्य तैलं धीरोविपाचयेत्।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे॥
शोधनं रोपणञ्चैव सवर्णकरणन्तथा॥ ८॥

करवीराद्यं तैलम्।

करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः।
मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगन्दरे।

निशाद्यं तैलम्।

निशार्कक्षीरसिन्धग्निपुराश्वहनवत्सकैः।
सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम्॥
व्यायाम मैथुनं युद्धं पृष्ठयानं गुरूणि च।
सम्वत्सरं परिहरेदुपरूढव्रणो नरः॥ ९॥

इति भगन्दरचिकित्सा।

---

## अथोपदंशाधिकारः।

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः।
जलौकःपातनं वा स्यादूर्द्ध्वाधः शोधनं तथा॥
पाकोरक्ष्यः प्रयत्नेन शिश्नक्षयकरोहि सः॥ १॥

---

चतुर्णाम्। मलयू: काकोडुम्बरः तस्य मूलं रक्तपित्तादौ तु फलम्। विष्यन्दयति पूयं स्रावयति विष्यन्दनं शोधनम्॥ ८॥

करवीराद्ये मातुलुङ्गस्य मलं वत्साह्वः कुटजस्तस्य त्वक् अन्ये तु तत्फलमाहुः। निशेत्यादौ।— पुरोगुग्गुलुः अश्वहनः करवीरस्तस्य मूलम्॥ ९॥

इति भगन्दराधिकारः।

---

स्थानप्रत्यासत्तेरुपदंशमाह ध्वजमध्य इत्यादि।— ध्वजमध्ये मेढ्रमध्ये शिराव्यधश्च रक्तदुष्टौ महत्यां अल्पायान्तु जलौकःपातनम्॥ १॥

प्रयोगत्रयम् ।

पटोलनिम्बत्रिफलागुडूचीक्वाथं पिवेद्वा खदिराशनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा सर्व्वोपदंशापहरः प्रयोगः ॥
प्रपौण्डरीकं मधुकं रास्नाकुष्ठं पुनर्नवा ।
सरलागुरुभद्राह्वैर्व्वातिके लेपसेचने ॥ २ ॥
गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलेपयेत् ॥
निम्बार्ज्जुनाश्वत्थकदम्बशालजम्बूवटोडुम्बरवेतसेषु ।
प्रक्षालनालेप घृतानि कुर्य्याच्चूर्णानि पित्तास्रभवोपदंशे ॥
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥
दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।
उपदंशे प्रलेपोऽयं सद्योरोपयति व्रणम् ॥ ३ ॥

भूनिम्बाद्यं घृतम् ।

रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम् ।
सक्षौद्रं वा प्रलेपेन सर्व्वलिङ्गगदापहम् ॥

---

पटोलेत्यादि ।— पटोलादिक्वाथं गुग्गुलुं त्रिफलाचूर्णं प्रक्षिप्य पिबेत् । एवं खदिराशनक्वाथमपि अशनः पीतशालः । अन्ये तु क्वाथद्वये यथासंख्यं गुग्गुलुत्रिफलाचूर्णयो प्रक्षेपमाहुः । अपरे तु केवलक्वाथेन योगद्वयं तदेव गुग्गुलोस्त्रिफलाचूर्णस्य प्रक्षेपेणापि योगद्वयमिति वदन्ति । व्यवहारस्तु पूर्व्वेणैव ॥ २ ॥

गैरिकाञ्जनमित्यादौ ।— स्निग्धैरिति घृतधौतघृतैः । निम्बेत्यादौ प्रक्षालयेदिति कृत्यादेश । घृतञ्च निम्बादिक्वाथकल्काभ्यां साध्यम् ॥ ३ ॥

बब्बोलदलचूर्णेन दाड़िमत्वग्भवेन वा ।
गुण्डनं शङ्खचूर्णेन उपदंशहरं परम् ॥
लेपः पूगफलेनाश्वमारमूलेन वा तथा ।
सेवेद्बिल्वं यवान्नञ्च पानीयं कौपमेव च ॥
जयाजात्यश्वमारार्कसम्याकानां दलैः पृथक् ।
कृतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥
भूनिम्बनिम्बत्रिफलापटोलकरञ्जजातीखदिराशनानाम् ।
सतोयकल्कैर्घृतमाशु पक्वं सर्व्वोपदंशापहरं प्रदिष्टम् ॥ ४ ॥

करञ्जाद्यं घृतम् ।

करञ्जनिम्बार्ज्जुनशालजम्बूवटादिभिः कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥

आगारधूमाद्यं तैलम् ।

आगारधूमरजनीसुराकिण्वञ्च तैस्त्रिभिः ।
भागोत्तरैः पचेत्तैलं कण्डुशोथरुजापहम् ।
शोधनं रोपणञ्चैव सवर्णकरणं तथा ॥ ५ ॥

---

रसाञ्जनमित्याद्दि योगद्वयम् । पत्र पथ्या गुडूची । बब्बो-लेति बब्बोलस्य दलं पत्रं गुण्डनमवचूर्णनम् । अस्थि मनुष्य-कपालास्थि चन्द्राटेऽपि नृकपालास्थि इत्युक्तत्वात् ॥ ४ ॥

करञ्जाद्यघृते करञ्जस्य मूलं वटादिभिरिति क्षीरिवृक्षैः । घृतस्यास्य पानं प्रक्षालनेन कार्य्यम् । आगारधूमेति आगा-रधूमोऽलन्धुकः । किण्वं सुराबीजं भागोत्तरैरिति तैलप्रस्थे आगारधूमपल १ कर्ष १ माषा ५ रत्ति ३ । हरिद्रापल २ कर्ष २ माषा १० रत्ति ६ । सुराबीजपल ३ कर्ष ३ माषा १५ रत्ति ८ । एवं स्नेहपादिकत्वं कल्कस्य पाकस्तु जलेनैव ॥ ५ ॥

अर्शसां छिन्नरुग्धानां क्रिया कार्य्योपदंशवत् ॥ ६ ॥

इत्युपदंशचिकित्सा ।

---

## अथ शूकदोषाधिकारः ।

हितश्च सर्पिषः पानं पथ्यञ्चापि विरेचनम् ।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम् ॥
सर्षपौ लिखितौ सूक्ष्मैः कषायैरवचूर्णयेत् ।
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम् ॥
क्रियेयमधिमन्थेऽपि रक्तस्रावं तथोभयोः ॥ १ ॥
अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।
कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ॥

---

चिकित्सासामान्यादत्रैव लिङ्गार्शश्चिकित्सामाह अर्शसामि-त्यादि ॥ ६ ॥

इत्युपदंशाधिकारः ।

---

समानस्थानत्वाच्छूकदोषचिकित्सितमुच्यते । शूकोजल-शूकः सविषजन्तुः तत्कृतोदोषः शूकदोषः । हितमित्यादि सुश्रुतस्य । सर्पिष इति यथादोषं संस्कृतस्य । विरेचनमपि पथ्यं हितमित्यर्थः । सर्षपौमित्यादि वाभटस्य । कषायैरिति रसभेदे यः कषायवर्गोक्तैश्च पथ्या विभीतकी शिरीषादिभिः शो-धनादिगणसंग्रहोक्तन्यग्रोधादिगणैश्च सूक्ष्मैरिति सूक्ष्मचूर्णी-कृतैः । सुश्रुते तु सूक्ष्मैरित्यत्र सम्यगिति पाठः । तैरेवेति पूर्ब्बोक्तकषायैः क्वाथकल्कैः । उभयोरिति सर्षप्यधिमन्थयोः ॥१॥

अष्ठीलायामित्यादि । वाभटस्य । वातआयामष्ठीलायां शूकदूषितरक्तस्यावरकस्य निर्हरणं जलौकादिभिरुचितमेव । कुम्भिकायां हरेद्रक्तमित्यामावस्थायाम् । तैलञ्च रोपणमिति

तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम्।
अलज्यां स्रुतरक्तायामयमेव क्रियाक्रमः॥ २॥
स्वेदयेद्ग्रथितं स्निग्धं नाडीस्वेदेन बुद्धिमान्।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत्॥ ३॥
उत्तमाख्यान्तु पिडकां संछिद्य बडिशोद्धृताम्।
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत्॥ ४॥
क्रमः पित्तविसर्पोक्तः पुष्करीमूढयोर्हितः।
त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत्॥ ५॥

---

उक्ततिन्दुकादिकल्कसिद्धम्। अलज्यामिति अयमेव कुम्भिको-क्तः॥ २॥

स्वेदयेदिति सुश्रुतस्य। ग्रथितमिति ग्रथिताख्यं शूकदोषम्। स्निग्धमिति तैलयोगात्। स्वेदेनेति स्वेदनद्रव्याणि चरको-क्तानि यथा वीरणाकतकैरण्डशिग्रुमूलकसर्षपैः। वासावंशक-रञ्जार्कपत्रैरश्मन्तकस्य च। शोभाञ्जनकशैरीयमालतीसुरसा-र्जकैः। पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेदिति। सुखो-ष्णैरुपनाहैरिति कफहरद्रव्यकृतैः ग्रथितस्य कफकृतत्वात्। सुस्निग्धैरिति तैलयोगात्॥ ३॥

उत्तमाख्यमित्यादि।— वाभटस्य। कषायाणामित्यादि कषायवर्गपठितानां पथ्यादीनां न्यग्रोधादीनां वा। उपाचरे-दिति प्रलेपेन॥ ४॥

क्रम इत्यादि।— वाभटस्य। त्वक्पाकेस्पर्शहान्याञ्चेति पूर्व्वेण सम्बध्यते तेनैतयोरपि पित्तविसर्पोक्तक्रमः कार्य्यः। मृदितं पुनः बलातैलेन सेचयेदिति योज्यम्। मधुरैरिति का-

रसक्रिया विधातव्या लिखिते शतपोनके ॥ ६ ॥
पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम् ।
रक्तविद्रधिवच्चापि क्रिया शोषितजेऽर्बुदे ॥
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम् ।
शोधने रोपणे चैव वीच्य वीच्यावतारयेत् ॥ ७ ॥

---

कोल्यादिभिः किम्वा जीवनीयगणैः । अत्र तैलं वाभटे वातव्याधावुक्तम् ॥ ५ ॥

रसक्रियेत्यादि ।— सुश्रुतस्य । रसक्रिया तु अवस्थायां वीच्य शोधनीया रोपणीया वा देया । अत्र शोधनीया यथा । सालसारादिसारेषु पटोलत्रिफलासु च । रसक्रिया विधातव्या शोधनी शोधनेषु च इति । रोपणीया यथा ।— त्वक्सु न्यग्रोधवृक्षस्य त्रिफलायास्तथैव च । रसक्रिया रोपणार्थे विधातव्या यथाक्रममिति ॥ ६ ॥

पृथक्पर्ण्यादीत्यादि ।— पृथक्पर्ण्यादि मिश्रकोक्तघृतसाधनद्रव्यं तद्यथा — पृथक् पर्ण्यात्मगुप्ता च हरिद्रे मालती सीता । काकोल्यादिश्च योज्यः स्याद्भिषजा रोपणे घृत इति । अत्र सिता शर्करेति चक्रः श्वेतदूर्व्वेति ब्रह्मदेवः । एतच्च घृतं तैलं वा पृथक् पर्ण्यादिना क्वाथेन कल्करूपेण च साध्यमिति वदन्ति । शर्करा तु कल्करूपेणैव देया क्वाथानर्हत्वात् । अनन्तरमिति रसक्रियायादानन्तरं रक्तविद्रधिवदित्यादौ ।— वीच्य वीच्येति द्विव्रणीयोक्तामवस्थां निरूप्य यदि शोधनं कर्त्तव्यं भवति तदा शोधनीयानि कषायादीन्यवचारयेत्; यदा तु रोपणं कर्त्तव्यं भवति तदा रोपणीयानि कषायादीन्यवचारयेदित्यर्थः ॥ ७ ॥

अर्बुदं मांसपाकञ्च विद्रधिं तिलकालकम्।
प्रत्याख्याय प्रकुर्व्वीत भिषक् तेषां प्रतिक्रियाम्॥ ८॥
इति शूकदोषचिकित्सा।

## अथ भग्नाधिकारः।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम्॥
सुश्रुतोक्तञ्च भग्नेषु वीक्ष्य बन्धादिमाचरेत्॥ १॥
अवनामितमुन्नह्येदुन्नतञ्चावनामयेत्।
आञ्छेदतिक्षिप्तमधोगतञ्चोपरि वर्त्तयेत्॥

---

अर्ब्बुदमित्यादि।— असाध्यत्वेनोक्तेषु अर्ब्बुदादिषु कदाचिद्‌पूर्णत्वखिल्लादिना साध्यता याप्यता वा संभवतीति प्रत्याख्याय तत्र क्रिया कर्य्येति शेषः॥ ८॥
इति शूकदोषाधिकारः।

---

आगन्तुसामान्याद्भग्नचिकित्सामाह आदौ भग्नमित्यादि। कुशान्वितमित्यादि कुशेति भग्नास्थिबन्धनसाधनकदम्बादित्वचः संज्ञा। उक्तं हि वाभटे — कदम्बोदुम्बराश्वत्थसर्ज्जार्ज्जुनपलाशजैः। सुश्लक्ष्णैः सुप्रतिष्टम्भैः वल्कलैः सकलैरपि। कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेदिति॥ १॥

अवनामितमित्यादि।— अवनामितं अवनतं कर्कटाख्यभग्नं वक्रञ्च उन्नह्येत् उन्नमेत्। उन्नतमश्वकर्णादि। अतिक्षिप्तं अधजङ्घं वा अतिनिर्गतम्। आञ्छेदिति प्रसारयेत् आछि-आयामे इत्यस्य रूपम्। अधोगतमधःक्षिप्तादि उपरि वर्त्तयेत् आकर्षयेत्। आलेपनार्थमित्यादि सुश्रुतस्य अन्न-

आलेपनार्थं मञ्जिष्ठा मधुकं चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ २ ॥
सप्तरात्रात् सप्तरात्रात् सौम्येष्वृतुषु मोक्षणम् ।
कर्त्तव्यं स्यात्त्रिरात्राच्च तथा ग्रीष्मेषु जानता ॥
काले च समशीतोष्णे पञ्चरात्राद्विमोचयेत् ।
न्यग्रोधादि कषायञ्च सुशीतं परिषेचने ॥
पञ्चमूलीविपक्वन्तु क्षीरं दद्यात् सवेदने ।
सुखोष्णमवताय्यं वा चक्रतैलं विजानता ॥ ३ ॥
मांसं मांसरसः सर्पिः क्षीरं यूषः सतीनजः ।
वृंहणं चान्नपानञ्च देयं भग्ने विजानता ॥ ४ ॥

---

पेषितमिति काञ्जिकपिष्टम् । शतधौतघृतोन्मिश्रमिति पूर्व्वेण परेण च योज्यमिति चक्रः ॥ २ ॥

सप्तरात्रादित्यादि ।— सुश्रुतस्य सौम्येषु शीतेषु जानता वैद्येनेति शेषः । समशीतोष्णे काले चेति शरद्वसन्तकाले । पञ्चमूलीत्यादि । पञ्चमूली चात्र स्वल्पेति वदन्ति एतत्पक्वञ्च क्षीरं पित्तवातोत्तरे भग्ने, अत्रापि परिषेचनमिति योज्यम् । चक्रतैलमिति सद्यःपीड़िततैलं किम्वा सौश्रुतवातव्याधिचिकित्सोक्ततैलविधानेन गृहीतं तैलम् । शीतोपचारोचितेऽपि भग्ने सुखोष्णस्य विधानमनिले वलीयसीति ज्ञेयम् । अतएव विजानतेत्युक्तम् ॥ ३ ॥

भग्नहितमन्नपानमाह मांसमित्यादि ।—सुश्रुतस्य । क्षीरमिहाव्रणभग्ने सन्धानीयतया हितम् । यत् पुनर्नवधान्यादिवर्गे क्षीरं निषिद्धं तद्व्रणविषये वेति न विरोधः । अन्ये तु क्षीरसर्पिरिति पठित्वा क्षीरादुत्थितं घृतमिति व्याचक्षते ।

गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥
सघृतेनास्थिसंहारं लाक्षां गोधूममर्ज्जुनम् ।
सन्धियुक्तेऽस्थिभग्ने च पिबेत् क्षीरेण मानवः ॥
रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥
पीतवराटिकाचूर्णं द्विगुञ्जं वा त्रिगुञ्जकम् ।
अपक्वक्षीरपीतं स्यादस्थिभग्नप्ररोहणम् ॥ ५ ॥
क्षीरं सलाक्षामधुकं ससर्पिः स्याज्जीवनीयञ्च सुखावहञ्च ।
भग्नः पिबेत्त्वक्पयसार्ज्जुनस्य गोधूमचूर्णं सघृतेन वाथ ।
लाक्षास्थिसंहृत्ककुभाश्वगन्धाचूर्णीकृतानागबलापुरश्च ॥

लाक्षागुग्गुलुः ।

संभग्नयुक्तास्थिरुजं निहन्यादङ्गानि कुर्य्यात् कुलिशोपमानि ।

---

सतीनो वर्त्तुलकलायः स च यद्यपि वातजनकस्तथापि सन्धानीयत्वादिहोक्त इति ॥ ४ ॥

गृष्टिक्षीरमित्यादि ।— गृष्टिरेकवारप्रसूता धेनुः तस्याः क्षीरं मधुरौषधं काकोल्यादिगणस्तैः साधितं सर्पिः लाक्षे प्रक्षेप्ये । सघृतेनेत्यादि सघृतेन क्षीरेणास्थिसंहारादिकं व्यस्तं समस्तं वा पिबेदित्याहुः ॥ ५ ॥

क्षीरमित्यादौ ।— जीवनीयमित्यारोग्यहेतुत्वात् प्राणधारणत्वाच्च । त्वक्पयसार्ज्जुनस्येति अर्ज्जुनस्य त्वचा साधितं पयस्त्वक्पयः अर्ज्जुनत्वक् पयसा सघृतेन गोधूमचूर्णं पेयमिति योज्यं अन्ये तु त्वक्शब्दो नपुंसकलिङ्गोऽप्यस्तीति अर्ज्जुनस्य त्वचं पिबेदित्याहुः ।

लाक्षेत्यादौ ।— अस्थिसंहृत् अस्थिसंहारः । ककुभोऽ-

अत्रान्यतोऽपि इष्टत्वात्तुल्यचूर्णेन गुग्गुलुः ॥

आभागुग्गुलुः ।

आभाफलत्रिकैर्व्योषैः सर्व्वैरेभिः समीकृतैः ।
तुल्योगुग्गुलुरायोज्योभग्नसन्धिप्रसाधकः ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ।
प्रतिसार्य्य कषायैश्च शेषं भग्नवदाचरेत् ॥
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ।
वातव्याधिविनिर्द्दिष्टान् स्नेहानत्र प्रयोजयेत् ॥ ६ ॥

गन्धतैलम् ।

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवैव संशोष्य क्षीरेण परिभावयेत् ॥
तृतीयं सप्तरात्रञ्च भावयेन्मधुकाम्बुना ।

---

र्जुनः । नागबला गोरक्षतण्डुला । पुरः गुग्गुलुः स च मिलितलाक्षादिचूर्णसमः । वक्ष्यमाणाभादिगुग्गुलौ इष्टत्वादिति चक्रः । तद्देवाह आभेत्यादि । आभा बाहेति ख्याता ।

सव्रणभग्नचिकित्सामाह सव्रणस्येति प्रतिसार्य्य कषायैरिति न्यग्रोधादिकषायद्रव्यकृतवल्कैः प्रतिसार्य्य प्रलिप्य, कार्त्तिकस्तु कषायैरिति मधुरौषधक्वाथैः प्रतिसार्य्य प्रतिषिच्य इति व्याचष्टे धातुनामनेकार्थत्वात् । शेषमित्याहारादिकम् ॥ ६ ॥

रात्रावित्यादि सुश्रुतस्य । अस्थिरे जले इति स्रोतोजले, चतुःशरावतैलोचितकृष्णतिलान् गृहीत्वा वस्त्रेण पोट्टलीं बद्धा स्रोतोजले निःक्षिप्य रात्रौ स्थापयेत् ततो दिवसे आतपे शोषयेत् एवं सप्तदिनानि यावत् । ततः तिलतुल्यपरिमाणगव्यक्षीरे रात्रौ तिलान् निःक्षिप्य दिवा आतपे शोषयेत्

ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिश्वदंष्ट्राश्च मञ्जिष्ठां शारिवां तथा।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पाञ्च संचूर्ण्य तिलचूर्णेन योजयेत्।
पीड़नार्थञ्च कर्त्तव्यं सर्व्वगन्धैः शृतं पयः ॥
चतुर्गुणेन पयसा तत्तैलं विपचेत् पुनः।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुशारिवाम्।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम्।
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्व्वकर्म्मसु।
आक्षेपके पक्षाघाते चाङ्गशोषे तथार्द्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे।

---

एवं सप्तदिनानि यावत्। तदनु तिलतुल्यपरिमाणयष्टिमधु गृहीत्वा अष्टगुणोदके पक्त्वा अष्टभागावशिष्टक्वाथे तिलान् रात्रौ प्रक्षिप्य दिवातपे शोषयेत् एवं सप्तदिनानि यावत्। पुनरपि तिलतुल्य परिमाणे गव्यक्षीरे रात्रौ तिलान् निःक्षिप्य दिवा सूर्य्यातपे शोषयेत् एवं सप्तदिनानि यावत् तदनु तिलान् निस्तुषीकृत्य चूर्णयेत्। ततश्चैषां तिलचूर्णानां चत्वारोभागाः भागश्चैकः काकोल्यादिशतपुष्पान्तमिलितचूर्णस्य। एतस्यैव चूर्णस्य पीड़नार्थमुत्पादने कर्त्तव्ये आर्द्रताकरणार्थं सर्व्वगन्धद्रव्यशृतं क्षीरं तावन्मात्रं ग्राह्यं यावता क्षीरेण चूर्णमार्द्रं भवति। सर्व्वगन्धैरित्येलादिगणेन क्षीरपरिभाषयैव दुग्धं साध्यं

बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ।
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु योजयेत् ।
ग्रीवास्कन्धोरसां वृद्धिरनेनैवोपजायते ॥
मुखञ्च पद्मप्रतिमं स्यात् सुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्व्ववातविकारनुत् ॥
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः ।
तिलचूर्णचतुर्थांशं मिलितं चूर्णमिष्यते ॥ ७ ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नोरुक्षान्नमेव च ॥
इति भग्नचिकित्सा ।

---

## अथ कुष्ठाधिकारः ।

वातोत्तरेषु सर्पिर्व्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षोरक्तस्य विरेचनं चाग्रम् ॥

---

एलादिगणश्च सौश्रुतः । एवमुक्तप्रकारेण गृहीततैलस्य चत्वारः शरावाः, पाकार्थञ्च गव्यदुग्धषोड़शशरावाः ग्राह्या इत्यर्थः । अंशुमती शालपर्णी, कालानुशारिवा, तगरं क्षीरशुक्ला क्षीरविदारी अनन्ता अनन्तमूलं, मधुलिकामर्कटहस्ततृणं अन्ये तु गोधूमभेद इत्याहुः । प्रागुक्तानीति काकोल्यादिशतपुष्पान्तानि एभिः कल्कैरित्यर्थः क्षुद्रंष्ट्राह्वमित्यत्र च यष्ट्याह्वमिति पाठः सुश्रुतटीकासु व्याख्यातः । अस्मिंश्च पाठे यष्टिमधुनोभागद्वयं काकोल्यादिगणमध्येऽपि यष्टिमधु पाठात्॥७॥

इति भग्नाधिकारः ।

---

रक्तदुष्टत्वग्गतसाधर्म्म्यात् कुष्ठचिकित्सितमुच्यते । वातोत्तरेष्विति सर्पिरित्युपलक्षणं तेन तैलाभ्यङ्गोऽपि बोध्यः वर्ज्जं

पुच्छनमल्पे कुष्ठे महति च शस्तं शिराव्यधनम् ।
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ॥ १ ॥

पञ्चकषायः ।

वचावासापटोलानां निम्बस्य फलिनीत्वचः ।
कषायोमधुना पीतोवान्तिकृन्मदनान्वितः ॥
विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ २ ॥
ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम् ॥
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ३ ॥
मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः ।
करञ्जबीजैडगजः सकुष्ठोगोमूत्रपिष्टश्च वरः प्रदेहः ॥ ४ ॥

---

हि वाभटे तत्र वातोत्तरे तैलं घृतं वा साधितं हितमिति । अग्रमिति सर्पिरादिषु योज्यं तेन वातोत्तरादिषु सर्पिरग्रं प्रथमं कार्य्यं तदनु वक्ष्यमाणा चिकित्सा कार्य्येत्याशयः अथग्रमिति पाठे प्रधानमित्यर्थः । बहुश इति बलरक्षार्थं स्तोकं स्तोकं दोष निर्हरणेन पुनः पुनः शोध्यः । एकदा हि भूरीदोषहरणेन बलक्षयः प्राणात्ययश्च स्यादिति ॥ १ ॥

वचेत्यादि ।— वचादीनां त्रयाणां मूलं फलिनी प्रियङ्गुः कषाय इति वमनार्थक्काथविधया यथा क्काथद्रव्यस्य कुडवं श्रपयित्वा जलाढके । चतुर्भागावशिष्टन्तु वमनेष्ववचारयेदिति परिभाषया कार्य्यः ।

विरेचनमिति त्रिफलाक्काथे त्रिवृद्दन्तीमूले प्रक्षिप्य अथवा दन्तीमूलत्रिवृतालताचूर्णं प्रतिमा च त्रिफलाक्काथेन पेयम् ॥ २ ॥

येलेपा इत्यादि ।— निर्गतोऽस्रगतो दोषो येषां ते तथा निर्गतास्रदोषाः ॥ ३ ॥

मनःशिलेत्यादावालं हरितालम् । तैलं सार्षपं कुष्ठहरः स्यात् । आर्कं पयोऽर्कक्षीरम ॥ ४ ॥

पत्राणि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ५ ॥
आरग्वधः सैड़गजः करञ्जोवासा गुडूची मदनं हरिद्रे ।
श्याह्वः सुराह्वः खदिरोधवश्च निम्बोविड़ङ्गं करवीरकश्च ॥
ग्रन्थिश्च भौर्ज्जोलशुनः शिरीषः सलोमशोगुग्गुलुकृष्णगन्धे ।
फणिज्झकोवत्सकसप्तपर्णौपीलूनि कुष्ठं सुमनः प्रवालः ॥
वचा हरेणु स्त्रिवृता निकुम्भोभल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला काशीशलोध्रार्ज्जुनमुस्तसर्ज्जाः ॥
इत्यर्द्धरूपैर्विहिताः षड़ेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहाभिषजा प्रयोज्याः ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिमं सदद्रुम् ।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्ता अचिरान्नराणाम्॥६॥
मनःशिलात्वक् कुटजात् सकुष्ठात् सलोमशः सैड़गजः करञ्जः ।
ग्रन्थिश्च भौर्ज्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥

---

पत्राणीत्यादौ ।— चतुरङ्गुलः शोनालुः अश्वहनच्छदः करवीरपत्रं एतदन्त एक एव योगः । योगद्वित्वे चरकोक्तद्वार्त्ति शत्प्रदेहसंख्यावृद्धिः स्यादिति ॥ ५ ॥

आरग्वध इत्यादिना षड्भिः श्लोकैकार्द्धैः षड् योगाः आरग्वधस्य पत्रं श्याह्वः नवनीतखोटी करवीरकः करवीरस्य त्वक् । ग्रन्थिश्च भौर्ज्ज इति भूर्ज्जपत्रग्रन्थिः । लोमशो धातुकाशीशं तमालपत्रं वा कृष्णगन्धा शोभाञ्जनकः, फणिज्झकः पर्णाशभेदः, पीलु औत्तरपथिकं फलम्, निकुम्भोदन्ती अञ्जनं रसाञ्जनम्, अर्द्धरूपैरिति अर्द्धश्लोकैः, गोपित्तपीता इति गोपित्तभावनया पीता पीतवर्णा भावना च सप्ताहम् ॥ ६ ॥

मनःशिलेत्यादौ त्वक् कुटजादिति कुटजस्य त्वक् लोमशो-धातुकाशीशं तुषोदकं सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जि-

पलाशनिर्दाहरसेन वापि कर्षोद्धृतान्याढ़कसम्मितेन।
दद्यात्प्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठविनाशनाय॥ ७॥

कुष्ठाद्यम्।

कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारुशिग्रु।
ससर्षपं तुम्बुरुधान्यवन्यचण्डाश्च दूर्व्वाश्च समानि कुर्य्यात्।
तैस्तक्रपिष्टैः प्रथमं शरीरं तैलाक्तमुद्वर्त्तयितुं यतेत।
तथास्य कण्डूः पिड़काः सकोठाः कुष्ठानि शोथाश्च शमं प्रयान्ति॥ ८॥
धात्र्यक्षपथ्याक्रिमिशत्रुवह्निभल्लातकावल्गुजलौहभृङ्गैः।
भागाभिवृद्धैस्तिलतैलमिश्रैः सर्व्वाणि कुष्ठानि निहन्ति लेपः॥ ९॥

---

कम्। पलाशनिर्द्दाहरसेनेति पलाशवृक्षस्य प्रधानमूलं छित्वा तदधः कुम्भं स्थापयित्वा उपरि वृक्षदाहात् यः स्वरसोगलति स पलाशनिर्द्दाहरसः अन्ये तु पलाशक्षारोदकमाहुः॥ ७॥

कुष्ठमित्यादौ।—सुरसः पर्णाशः तुम्बुरु स्वनामख्यातं वन्यं कैवर्त्तमुस्तकम्। चण्डा चोरपुष्पी प्रथमं तैलाक्तमिति योज्यम्। इह तैलं सार्षपम्॥ ८॥

धात्रीत्यादौ।—अक्षोविभीतकं क्रिमिरिपुर्व्विड़ङ्गसारः वह्निश्चित्रकः लौह इति वज्रादिलौहचूर्णं नतु गुरु। भृङ्गमिति भृङ्गराजस्य चूर्णं नतु गुड़त्वक् तन्त्रान्तरसम्वादात्। तथा लेप इति प्रमादात् पाठः किन्तु लेह इति। उक्तं हि तन्त्रान्तरे धात्री विभीतकं पथ्या विड़ङ्गाग्निमरुष्करम्। वागुजीलौहभृङ्गञ्च संचूर्णमत्र वर्द्धितम्। तिलतैलान्वितं लिह्यात् श्रेष्ठमेतद्रसायनमिति। तेनायं योगः लेखकदोषाल्लेपप्रकरणे पठितः॥ ९॥

विड़ङ्गेत्यादौ।—शशिरेखा सोमराजीबीजं गोजलोगो-

विड़ङ्गसैन्धवशिवाशशिरेखासर्षपकरञ्जरजनीभिः ।
गोजलपिष्टोलेपः कुष्ठहरो दिवसनाथसमः ॥
विड़ङ्गैड़गजाकुष्ठनिशासिन्धूत्थसर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः ॥
दूर्व्वाभयासैन्धवचक्रमर्द्दकुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरतिबद्धमूलं दद्रुञ्च कण्डूञ्च रुजाञ्च हन्यात् ॥ १०॥
तुल्योरसः सालतरोस्तुषेण सचक्रमर्द्दोऽप्यभयाविमिश्रः ।
पानीयभक्तेन तदम्बुपिष्टोलेपः कृतोदद्रुगजेन्द्रसिंहः ॥११॥
प्रपुन्नाड़स्य वीजानि धात्री सर्ज्जरसः स्नुहा ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥
चक्रमर्द्दकवीजानि जीरकञ्च समांशकम् ।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम् ॥
लेपनाद्भक्षणाच्चैव त्वयकं दद्रुनाशनम् ।

---

मूलं दिवसनाथः सूर्य्यः । दूर्व्वेत्यादौ ।— चक्रमर्द्द एड़गजवीजं कुठेरकः पर्णासभेदः । काञ्जिकतक्रपिष्टाः काञ्जिकतक्रयोरन्यतरेन पिष्टा इत्यर्थः । एभिर्लेपैरित्यनेन शीघ्रप्रशमनकारितां दर्शयति न तु नियमोऽयम् ॥ १० ॥

तुल्ये इत्यादौ ।— शालतरोरसः धुनकः तुषेणेति धान्यत्वचा, धूनकादीनां पानीयभक्तान्तानां समोभागः । तदम्बुपिष्ट इति पानीयभक्तजलेन पिष्टः ॥ ११ ॥

प्रपुन्नाड़स्येति प्रपुन्नाड़ः एड़गजः स्नुहायाः क्षीरं अन्ये मूलमाहुः सौवीरं काञ्जिकम् । स्तोकं सुदर्शनामूलमिति मिलितचक्रमर्द्दजीरकापेक्षया पादिकम् । लेपनादिति त्वयकं तिलाशाष इति ख्यातं यूथीपन्नगेति यूथीपन्नगमूलं स्वनामख्यातम् । कासमर्द्देति सौवीरेण पिष्ट्वा रात्रौ स्थाप्यं प्रातस्त्वा-

शुथीपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम् ॥
कासमर्द्दकमूलञ्च सौवीरेण च पेषितम्।
दद्रुकिटिमकुष्ठानि जयेदेतत् प्रलेपनात् ॥
शिखरिरसेन सुपिष्टं मूलकवीजं प्रलेपतः सिध्म।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥
गन्धपाषाणचूर्णेन यवक्षारेण पेषितम्।
सिध्मनाशं व्रजत्याशु कटुतैलयुतेन वा ॥
कासमर्द्दकवीजानि मूलकानां तथैवच।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥
धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तथा शुतश्च।
भवन्ति सिध्मानि यथा न भूयस्तथैवमूद्वर्त्तनकं करोति ॥१२॥
कुष्ठं मूलकवीजं प्रियङ्गवः सर्षपास्तथा रजनी।
एतत् केशरषष्ठं निहन्ति बहुवार्षिकं सिध्म ॥
नीलकुरुण्टकपत्रं स्वरसेनालिप्य गात्रमतिबहुशः।
लिम्पेन्मूलकवीजैः पिष्टैस्तक्रेण सिध्मनाशाय ॥

---

काकहते लेपोविधेय इत्युपदिशन्ति। शिखरिरसेन अपामार्गरसेन क्षारेण वा कदल्या इति कदलीक्षारोदकेन पिष्टमित्यर्थः। वाशब्दो विकल्पार्थवाची तेन पक्षान्तरे क्षारमपि योज्यं गन्धपाषाणो गन्धकः, मूलकानान्तथैव चेति मूलकानां वीजानीति शेषः। धात्रीरसः आमलकीरसः पाक्यो यवक्षारः विड़लवणमित्यन्ये। तदन्वितमिति सौवीरेणैव दिनत्रयं संभावितं पूतिकृतं दिवसत्रयमिति योगान्तरदर्शनात्। धात्रीरसस्थाने धात्रीफलमिति चन्द्रटः पठति ॥१२॥

कुष्ठमित्यादौ।—केशरं नागकेशरं नीलकुरुण्टकः नीलाझिण्टी चक्रमदृजमेड़गजवीजम् ॥१३॥

चक्राह्वयं स्नुहीक्षीरभावितं मूत्रसंयुतम्।
रवितप्तं हि किञ्चित्तु लेपनात् किटिमापहम्॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत्।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च॥१३॥
बीजानि वा मूलकसर्षपाणां लाक्षारजन्यौ प्रपुन्नाड़बीजम्।
श्रीवेष्टकव्योषविड़ङ्गकुष्ठं पिष्टा च मूत्रेण तु लेपनं स्यात्॥
दद्रूणि सिध्मं किटिमानि पामां कपालकुष्ठं विषमञ्च हन्यात्॥१४॥
एड़गजकुष्ठसैन्धवसौवीरसर्षपैः क्रिमिघ्नैश्च।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः॥ १५॥
स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः।
लेपाद्विचर्च्चिकां हन्ति रागवेग इव त्रपाम्॥ १६॥
स्नुक्काण्डे सुषिरे दग्धा गृहधूमं ससैन्धवम्।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्च्चिकाम्॥
एड़गजातिसर्षपकुष्ठरागधिकालवणतदमस्तु।

---

बीजानीत्यादौ।— लाक्षारजन्याविति द्वन्द्वः नतु हरिद्राद्वयमन्ये आहुः। श्रीवेष्टको नवनीतखोटी॥१५॥

एड़गजेत्यादौ।— सौवीरकं सौवीराञ्जनं अत्र विशिष्टद्रव्यानुक्तत्वात् गोमूत्रमेव कुष्ठहरतया ग्राह्यमिति वदन्ति। अपरे तु सौवीरशब्दस्य काञ्जिकार्थतां परिकल्प्य तेनैव पेषणमित्याहुः॥१५॥

स्नुक्काण्ड इत्यादि।— वाभटस्य कुकूलानलः करीषाग्निः स्नुक्काण्डमध्ये गर्त्तं कृत्वा पिष्टश्वेतसर्षपेण तत् प्रपूर्य्य स्नुहीकाण्डान्तरेणाच्छाद्य कुशादिभिर्बद्ध्वा मृत्तिकया प्रलिप्य गोमयाग्निना दहेत्। तत आदाय तेन कल्केन लेपः॥१६॥

स्नुक्काण्डसुषिर इत्यादि।— स्नुक्काण्डं कोरयित्वा

पूतीकृतं दिवसत्रयमेतद्धन्ति विचर्च्चिकदद्रु सकुष्ठम् ।
उन्मत्तकस्य बीजेन माणकक्षारवारिणा ।
कटुतैलं विपक्तव्यं शीघ्रं हन्याद्विपादिकाम् ॥ १७ ॥
नारिकेलोदके न्यस्तस्तण्डुलः पूतितां गतः ।
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥
सर्ज्जरसः सिन्धुसम्भवगुड़मधुमहिषाक्षगैरिकं सघृतम् ।
सिक्थकमेतत् पक्वं पादस्फुटनापहं सिद्धम् ॥ १८ ॥
अवल्गुजं कासमर्द्दं चक्रमर्द्दं निशायुतम् ।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥
कच्छुं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट् ।
कोमलसिंहास्यदलं सनिशं सुरभिजलेन संपिष्टम् ॥
दिवसत्रयेण नियतं क्षपयति कच्छुं विलेपनतः ॥ १९ ॥

---

तं विवरं स्वर्ज्जमसैन्धवाभ्यां पूरयित्वा स्थालीमध्ये तन्निक्षिप्य तदुपरि शरावं दत्त्वा मृत्तिकया शरावसन्धिं पिधायान्तर्धूमं दहेत् तदनु कटुतैलेन संमिश्र्य लेपः । एड़गजेत्यादौ ।—लवणत्रयं सौवर्च्चलसैन्धवविड़लवणं उन्मत्तस्य धुस्तूरस्य बीजकल्कः माणकक्षारस्रुतजलं चतुर्गुणं पाकार्थम्, विपादिका पादस्फोटनम् ॥ १७ ॥

नारिकेलोदक इत्यादौ ।—नारिकेलस्य सजलशस्यं शस्यग्राह्यम् । सर्ज्जरसेत्यादौ सिन्धुसम्भवं सैन्धवम् । महिषाक्ष इति गुग्गुलुः । एतत् सर्व्वं समभागमेकीकृत्य मनाक् पक्तव्यं यथा सिक्थकाकृतिर्भूत्वा लेपयोग्यं भवति ॥ १८ ॥

अवल्गुजमित्यादि ।— अवल्गुजं सोमराजीबीजं माणिमन्थं सैन्धवं मस्तुकाञ्जिकपेषितमिति मस्तुकाञ्जिकयोरन्यत-

हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम् ।
पिवेन्नरः कामचारी कच्छुपामाविनाशनम् ॥
शोथपाण्ड्वामयहरी गुल्ममेहकफापहा ।
कच्छुपामाहरी चैव पथ्या गोमूत्रसाधिता ॥२०॥
पिवति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तं पामलो यः पलार्द्धम् ।
त्रिदिन तदनु सिक्तः क्षीरभोजी च शीघ्रं
भवति कनकदीप्त्या कामयुक्तोमनुष्यः ॥२१॥

---

रेण । कोमलेत्यादौ ।— सिंहास्योवासकः तस्य पत्रं सुरभी-जलं गोमूत्रम् ॥ १९ ॥

हरिद्रेत्यादौ ।—हरिद्राकल्ककर्षस्य प्रक्षेपः कर्षश्चूर्णस्येति वचनात् व्यवहारस्तु हरिद्राचूर्णस्याष्टौ माषकाः गोमूत्रस्य पलद्वयम् । पथ्या गोमूत्रसाधितेति गोमूत्रोत्स्विन्ना हरीतकी ॥ २० ॥

पिवतीत्यादौ ।— पलार्द्धमिति उत्तमबलानलं प्रति प्रात्याहिकी मात्रा किम्बा पलार्द्धं त्रिदिनं यः पिवतीति योज्यं त्रिदिनेत्यनुस्वारस्य लोपश्छान्दसत्वात् । तेन पलार्द्धं दिनत्रयं विभाज्यं तेन किञ्चिदधिकसप्तमाषकाः प्रत्यहं भवन्ति । व्यवहारस्तु शोधितगन्धचूर्णस्य माषकचतुष्टयं कटुतैलस्य तु कर्ष इति तेन सतैलगन्धचूर्णेन अभ्यक्तगात्रः । क्षीरभोजीति क्षीरासहत्वे मण्डेन व्यवहारः । दिनत्रयं सप्ताहं वा प्रयोगावधिवातातपवर्जनमिति । कनकदीप्त्येति उपलक्षणे तृतीया । कनकगौर इति च पाठः ॥ कामयुक्त इति उपचितशुक्रधातुः कामतुल्य इति च पाठः ॥ २१ ॥

निशासुधारग्वधकाकमाचीपत्रैः सदार्वीप्रपुनाड़बीजैः ।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिपूर्ब्बर्त्तनमेतदिष्टम् ॥२२॥
सिन्दूरमरिचचूर्णं महिषीनवनीत संयुतं बहुशः ।
लेपाद्विनिहन्ति पामां तैलं करवीरसिद्धं वा ॥
मांसीचन्दनसम्पाककरञ्जारिष्टसर्षपम् ।
यष्टिकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः ॥२३॥
भल्लातकद्वीपिसुधार्कमूलं गुञ्जाफलं त्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकाञ्च पक्वा ॥
स्नुहार्कदुग्धे घनमाथसन्थं शलाकया तत् विदधीत लेपम् ।
कुष्ठे किलासे तिलकालके च मषेषदुर्नामसु चर्म्मकीले ॥२४॥
विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्व्वाः क्षीरमर्कस्नुहाभ्याम् ।

---

निशेत्यादि ।— निशादिचतुष्टयस्य पत्राणि अन्ये तु निशाहरिद्रैव सुधादीनामेव पत्राणीत्याहुः ॥ २२ ॥

सिन्दूरेत्यादौ ।— करवीरक्वाथकल्काभ्यां सिद्धं कटुतैलमित्यर्थः । मांसीत्यादौ सम्पाकस्य फलं अरिष्टोनिम्बः तस्य पत्रं यष्टीति यष्टिमधु । कण्डूमित्यत्र कुष्ठमिति केचित् पठन्ति किन्तु चरकेऽस्मिन् गणे दर्शमानि कण्डूघ्नानीतुग्रक्तम् ॥ २३ ॥

भल्लातकेत्यादि ।— वाभटस्य टिप्पी चित्रकः, भल्लातकस्य मूलं बीजं वा चित्रकादितया तां मूलं एषां भल्लातकादीनां लाङ्गलिकान्तानां चूर्णं स्नुहार्कक्षीराभ्यां मिलित्वा चूर्णमपेक्ष्य चतुर्गुणाभ्यां लौहपात्रे लेपयोग्यतां यावत् पाकः ॥ २४ ॥

विषेत्यादि ।— विषं स्थावरविषं अनलोभल्लातकः । अत्रापि पूर्व्वचूर्णादिमानं अर्कस्नुहीक्षीराभ्यां पाकविधिश्चेति वदन्ति शशाङ्कलेखेत्यादि ।— वाभटस्य शशाङ्कलेखा सोम-

दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥
शशाङ्कलेखा सविडङ्गसारा सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला सर्व्वाणि कुष्ठानुपहन्ति लीढ़ा २५

नवकषायः ।

तीव्रेण कुष्ठेन परीतदेहो यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां ससोमराजीं वपुषातिशेते ॥
घर्म्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
क्षीरभोजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥
एकस्तिलस्य भागौ द्वौ सोमराज्यास्तथैव च ।
भक्ष्यमाणमिदं प्रातर्गुह्यदद्रु विनाशनम् ॥
अवल्गुजाद्वीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्व्वकुष्ठ प्रणाशनम् ॥
त्रिफलापटोलरजनीमञ्जिष्ठारोहिणीवचानिम्बैः ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥२६॥
छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम् ।

---

राजी हुताशश्चित्रकः अयोमलं शोधित मण्डूरम् । अस्मान्मिलितचूर्णान्माषकत्रयं चतुष्टयं वा गृहीत्वा तिलतैलेन लेह्यम् ॥ २५ ॥

तीव्रेतत्रादौ ।— सोमराजीकृष्णतिलयोः प्रत्येकं माषकत्रयं चतुष्टयं वा व्यवहरन्ति । सोमराजीमिति चन्द्रश्रेणीं घर्म्मसेवी आतपसेवी । वागुजीसोमराजीबीजं अस्य च माषकचतुष्टयमुष्णोदकेनालोड्य पिबेत् । एक इतत्रादावपि उष्णोदकमनुपेयम् । त्रिफलेतत्रादि स्पष्टम् ॥ २६ ॥

छिन्नाया इतत्रादि ।—छिन्ना गुड़ूची । पटोलेतत्रादौ ।-

जीर्णे घृतेन भुञ्जीत स्वल्पं यूषोदकेन वा ॥
अतिपूतिशरीरोऽपि दिव्यरूपी भवेन्नरः ।
पटोलखदिरारिष्टत्रिफलाकृष्णात्रेतजम् ॥
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति ॥२७॥
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ।
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः ॥
विड़ङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं क्रिमीन् मेहान् नाड़ीव्रणभगन्दरान् ॥ २८ ॥
इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम् ।
तच्चूर्णं मधु सर्पिर्भ्यां लिहेत् क्षीरघृताशनः ॥
हत्वा च सर्व्वकुष्ठानि जीवेद्वर्षशतद्वयम् ।
यः खादेदभयारिष्टं मरिचामलकानि वा ॥
स जयेत् सर्व्वकुष्ठानि मासादूर्द्ध्वं न संशयः ।
दह्यमानाच्च्युतः कुम्भे मूलगे खदिराद्रसः ॥
साज्यधात्रीरसक्षौद्री हन्यात् कुष्ठं रसायनम् ॥ २९ ॥
वायस्येड़गजाकुष्ठकृष्णाभिर्गुड़िका कृता ।
बस्तमूत्रेण संपिष्टा लेपाच्छ्वित्रविनाशिनी ॥

---

कृष्णात्रेतं कालियालतेति ख्यातम् । तिक्ताशन इति तिक्तभ-यिष्ठाहारः ॥ २७ ॥

तिलेत्यादौ सप्तसमेति संज्ञाबलात् मिलितत्रिफलैव ति-लाद्येकभागसमा एवं व्योषमपि ॥ २८ ॥

इन्द्राशनमित्यादौ ।—चूर्णमिति माषद्वयं त्रयं वा देयम् । यः खादेदित्यादौ अरिष्टो निम्बः । दह्यमानमित्यादौ खदिर-रसधात्रीरसौ तुल्यौ । घृतक्षौद्रे तु प्रक्षेप्ये ॥ २९ ॥

वायसीत्यादि ।— वायसी काकमाची । पूतीत्यादि ।—

पूतिकार्कस्नुङ्नरेन्द्रद्रुमाणां मूत्रैः पिष्टाः पल्लवाः सौमनाश्च।
लेपात् श्वित्रं घ्नन्ति दद्रुव्रणांश्च कुष्ठान्यर्शांस्युग्रनाड़ीव्रणांश्च॥
गजचित्रव्याघ्रचर्म्ममसीतैलविलेपनात्।
श्वित्रं नाशं व्रजेत् किं वा पूतिकीटविलेपनात्॥
कुड़वोऽवल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः।
मूत्रेण गवां पिष्टः सवर्णकरणः परः श्वित्रे॥
धात्रीखदिरयोः क्वाथं पीत्वावल्गुजसंयुतम्।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः॥ ३०॥
क्षारे सु दुग्धे गजलण्डजे च गजस्य मूत्रेण बहुस्रुते च।
द्रोणप्रमाणं दशभागयुक्तं दत्त्वा पचेद्वीजमवल्गुजस्य॥
एतद्यदा चिक्कणतामुपैति तदा सुसिद्धां गुड़िकां प्रयुञ्ज्यात्।
श्वित्रं विलिम्पेदथ तेन घृष्टं तदा व्रजत्याशु सवर्णभावम्॥३१॥

---

सुश्रुतस्य। पूतिकोलताकरञ्जः। नरेन्द्रद्रुमः आरग्वधः। एषां पल्लवा इत्यर्थः। तथा सौमनाश्च पल्लवा इत्यर्थः। गजेत्यादौ चित्रव्याघ्रः चित्रचर्म्मव्याघ्रः केवलगजचर्म्ममसीलेपश्च श्वित्रहरो यथा श्वेतजयन्त्यङ्घ्रिमूलं चीरं श्वित्रविनाशनम्। गजचर्म्ममसीलेपोऽनेत्यादि। पूतीकीटजः पादकुरा कीट इति लोके ख्यातः॥ ३०॥

क्षार इत्यादि सुश्रुतस्य। गजलण्डं गजपुरीषं गजलण्डे चेति पाठे गजलण्डासमठः गजस्य मूत्रेण इत्यनन्तरं पक्व इति शेषः। बहुस्रुत इति एकविंशतिवारं सप्तवारं वा परिस्रुते दशभागयुक्तमिति द्रोणस्य दशमांशेन युक्तमित्यर्थः। प्रथमे गजलण्डाक्षारस्य द्रोणमेकं पाकार्थं गजमूत्रं क्षारपरिभाषया षड्गुणं दीयमानं द्रोणत्रयं भवति न द्विगुणगणनया तु षड्द्रोणानि स्युः। प्रायस्त्रिभागावशेषेऽस्मिन्निति वचनेन

श्वेतजयन्तीमूलं पिष्टं पीतञ्च गव्यपयसैव।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा॥ ३२॥

पञ्चनिम्बः।

पुष्पकाले तु पुष्पाणि फलकाले फलानि च।
संचूर्ण्य पिचुमर्द्दस्य त्वङ्मूलानि दलानि च॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत्।
त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्कराग्निकाः॥
विड़ङ्गसारवाराही लोहचूर्णाश्रुताः समाः।
हरिद्राद्वयवागुजीव्याधिघाताः सशर्कराः॥
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम्।
खदिरासननिम्बानां घनक्काथेन भावयेत्॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन तु।
स्निग्धशुद्धतनुर्धीमान् योजयेच्च शुभे दिने॥
मधुना तिक्तहविषा खदिरासनवारिणा।
लेह्यमुष्णाम्बुना वापि कोलवृद्ध्या पलं पिबेत्॥
जीर्णे च भोजनं कार्य्यं स्निग्धं लघु हितञ्च यत्।

---

तृतीयभागावशेषात् द्वैगुण्येन द्रोणमेकं ग्राह्यं तस्य दशमांश-मवल्गुजबीजं गृह्णन्ति। ततोवतार्य्य पिष्ट्वा चिक्कणतामुपगते सति गुड़िका कार्य्या। इष्टमिति फल्गुपलञ्चरीषादिना॥३१॥

श्वेतजयन्तीत्यादि। तत्र गोपयसैवपिष्टं पीतञ्चेत्यर्थः॥३२॥

पुष्पकाले चेत्यादौ।— पञ्चनिम्बानां प्रत्येकं भागद्वयं त्रिफलादीनाञ्च प्रत्येकमेकोभागः त्रिफलात्र्यूषणयोरपि प्रत्येकं भागः अग्निश्चित्रकः। वाराही वाराहीकन्दः व्याधि-घातः सोनालुः। खदिरासननिम्बानां घनक्काथेनेति खदिरा-दीनां प्रत्येकमष्टभागावशेषेण क्काथेन भावना असनः पीत-

विचर्च्चिकोडुम्बरपुण्डरीककपालदद्रुकिटिमालसादीन् ॥
शताहविस्फोटविसर्पपामां कफप्रकोपं त्रिविधं किलासम्।
भगन्दरश्लीपदवातरक्तं जातान्ध्यनाड़ीव्रणशीर्षरोगान् ॥
सर्व्वान् प्रमेहान् प्रदरांश्च सर्व्वान् दंष्ट्राविषं मूलविषं निहन्ति।
स्थूलोदरः सिंहकृशोदरश्च सुश्लीष्टसन्धिर्मधुनोपयोगात् ॥
समोपयोगादपि ये दृशन्ति सर्पादयोयान्ति विनाशमाशु।
जीवेच्चिरं व्याधिजराविमुक्तः शुभे रतश्चन्द्रसमानकान्तिः ॥२२॥

एकविंशतिको गुग्गुलुः।

चित्रकत्रिफलाव्योशमजाजीं कारवीं वचाम्।
सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम् ॥
विड़ङ्गान्यजमोदाश्च मुस्तान्यमरदारु च।
यावन्त्येतानि सर्व्वाणि तावन्मात्रन्तु गुग्गुलुम् ॥
संचुद्य सर्पिषा सार्द्धं गुड़िकां कारयेद्भिषक्।
प्रातर्भोजनकाले च भक्षयेत्तु तथा वलम् ॥
हन्त्यष्टादशकुष्ठानि क्रिमीन् दुष्टव्रणानि च।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥
गृध्रसीमथभग्नञ्च गुल्मञ्चाशु नियच्छति।
व्याधीन् कोष्टगतांश्चान्यान् जयेद्विष्णुरिवासुरान् ॥
पञ्चभल्लातकांश्छित्वा साधयेद्विधिवज्जले।
कषायं तं पिवेच्छीतं घृतेनाक्तौष्ठतालुकः ॥
पञ्चवृद्ध्या पिवेद्यावत् सप्ततिं ह्रासयेत्ततः।

---

शालः तिक्तहविषेति वक्ष्यमाणतिक्तषट्पलादिना। खदिराश-नवारिणेति खदिराशनक्वाथेन। कोल इत्यत्रेति कोलः कर्षार्द्धं समोपयोगादिति वर्षोपयोगात् ॥ २२ ॥

चित्रकेत्यादि स्पष्टम्। पञ्चेत्यादौ विधिवदिति क्वथवि-

जीर्णेऽद्यादोदनं शीतं घृतक्षीरोपसंहितम् ॥
एतद्रसायनं मेध्यं वलीपलितनाशनम्।
कुष्ठार्शः क्रिमिदोषघ्नं दुष्टशुक्रविनाशनम् ॥ ३४ ॥

तिक्तषट्पलकं घृतम्।

तैलं भल्लातकानाञ्च पिवेन्मासं यथाबलम्।
सर्व्वोपतापनिर्म्मुक्तो जीवेद्वर्षशतं दृढ़ः ॥
प्रलेपोद्वर्त्तनस्नानपानभोजनकर्म्मणि।
शोणितं खादिरं वारि सर्व्वत्वग्दोषनाशनम् ॥
निम्बं पटोलं दार्व्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्य्यादर्द्धपलांशान् पर्प्पटकं त्रायमाणाञ्च ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च ॥
मुस्तकवत्सकबीजं कल्कीकृतमर्द्धकार्षिकान् भागान्।
नव सर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम् ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्डामयश्वयथून् हन्ति।
पामाविसर्पपिड़का कण्डुगलगण्डनुत् सिद्धम् ॥ ३५ ॥

---

धिना पिप्पलीवर्द्धमानवदत्रापि वृद्धिह्रासौ ॥ ३४ ॥

तैलमित्यादि।— भल्लातकतैलं भूयन्त्रेण ग्राह्यम्। निम्बेत्यादि यद्यपि सर्पिश्चानवं हितमिति वचनात् पुराणसर्पिष एव सर्व्वत्र यौगिकत्वं तथाप्यत्र योगमहिम्ना नव सर्पिष एव प्रयोजनत्वमिति वचनादुन्नीयते। सर्पिष इति पदं षट्-पलमानग्रहणार्थं द्वितीयन्तु घृतमिति पदं पेयमित्युपदर्शनार्थम्। तथा प्रथमं सिद्धं पक्वम्, द्वितीयन्तु प्रसिद्धं चोपकम्॥३५॥

पञ्चतिक्तकं घृतम् ।

निम्बं पटोलं व्याघ्रीञ्च गुडूचीं वासकं तथा ।
कुर्य्याद्दशपलान् भागानेकैकस्य सुकुट्टितान् ॥
जलद्रोणे विपक्तव्यं यावत् पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम् ।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति ।
दुष्टव्रणक्रिमीनर्शः पञ्चकासांश्च नाशयेत् ॥ ३६ ॥

तिक्तकं घृतम् ।

त्रिफलाद्विनिशावासायासपर्प्पटकुलकान् ।
त्रायन्तीकटुकानिम्बान्प्रत्येकं द्विपलोन्मितान् ॥
क्राथयित्वा जलद्रोणे पादशेषेण तेन तु ।
घृतप्रस्थं पचेत् कल्कैः पिप्पलीघनचन्दनैः ॥
त्रायन्तीशक्रभूनिम्बैस्तत् पीतं तिक्तकं घृतम् ।
हन्ति कुष्ठज्वरार्शांसि श्वयथुं ग्रहणीगदम् ॥
पाण्डुरोगं विसर्पञ्च क्लीवानामपि शस्यते ॥ ३७ ॥

महातिक्तकं घृतम् ।

सप्तच्छदं प्रतिविषां सम्पाकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥

---

पञ्चतिक्तघृते ।— चत्वारिंशच्च पैत्तिकानिति भेदभिन्ना योजना कार्य्या अन्यथा द्वितीया स्यात् ॥ ३६ ॥

त्रिफलेत्यादौ ।— कुलकं पटोलपत्रं शक्रः कुटजस्तस्य फलम् ॥ ३७ ॥

महातिक्तके ।—उपकुल्येत्येकवचनोपन्यासो न युक्तः; चा-

षड्ग्रन्थां सविशालां शतावरीशारिवे चाभे ॥
वत्सकबीजं वासां मूर्वामसृतां किराततिक्तञ्च कल्कान्
कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥
कल्कस्तु चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणोऽष्टतात् प्रदेयस्तत् सर्पिः पाययेत् सिद्धम् ॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि ।
विसर्पमम्लपित्तं वातासृक् पाण्डुरोगञ्च ॥
विस्फोटकान् सपामानुन्मादकान् कामलां ज्वरं कण्डूम् ।
हृद्रोगगुल्मपिड़कामसृग्दरं गण्डमालाञ्च ॥
हन्यादेतत् सद्यः पीतं काले यथाबलं सर्पिः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तकम् ॥ १८ ॥

महाखदिरकं घृतम् ।

खदिरस्य तुलाः पञ्च शिंशपाशनयोस्तुले ।
तुलार्द्धाः सर्व्व एवैते करञ्जारिष्टवेतसाः ॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा ।

---

युर्व्वेदसारवाभटादौ द्वितीयपिप्पलीपाठात् । कल्कस्य चतु-र्भाग इति घृताच्चतुर्भागः । एतच्च सामान्यपरिभाषया सद्धार्थं तूच्यते । षड्ग्रन्था वचा श्रीकण्ठस्तु पिप्पलीमूलमाह । तन्न वाभटे वचापाठात् । अमृताफलानामित्यामलकीफलानां अत्राप्येकं सर्पिः पदं कल्कविभागार्थं द्वितीयं पेयमित्युपदर्शनार्थम् । तृतीयं महातिक्तक संज्ञार्थम् ॥ १८ ॥

महाखदिरक घृते ।— शिंशपाशिशुया इति ख्यातसारः अशनः स्वनामख्यातः नतु पीतशाल इत्याह्नः । एतयोस्तुले

हरिद्रे कृतमालञ्च गुडूचीत्रिफलात्रिवृत् ॥
सप्तपर्णस्तु संक्षुणोदशद्रोणे च वारिणः।
अष्टभागावशेषन्तु कषायमवतारयेत् ॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेत्।
महातिक्तककल्कैश्च यथोक्तैः पलसम्मितैः॥
निहन्ति सर्व्वकुष्ठानि पानाभ्यञ्जननिषेवणात्।
महाखदिरमित्येतत् परं कुष्ठविनाशनम् ॥ ३८ ॥

पञ्चतिक्तघृतगुग्गुलुः।

निम्बामृतावृषपटोलनिदिग्धिकानाम्
भागान् पृथग् दशपलान् विपचेद्धटेऽपाम्।
अष्टांशशेषितजलेन सुनिःसृतेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः॥

---

मिलित्वा। तुलार्द्धः सर्व्व एवैत इति करञ्जादि सप्तपर्णान्ताः। प्रत्येकं तुलार्द्धाः। दशद्रोणे च वारिणः इत्यनन्तरं पचेदिति शेषः। तुल्यां मिलित्वाढ़कमानमित्यर्थः। चक्रस्तु धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेदिति ग्रन्थं न पठति। तथा यथोक्तैः पलसम्मितैरित्यत्र तैलन्तु साधयेदिति पठति व्याचष्टे च साधयेदित्यत्र सर्पिरिति शेषः। अत्र यद्यपि घृतमानं नोक्तं तथापि क्वाथशेषस्याढ़काधिकद्रोणस्य नियतत्वात् तत् क्वाथचतुर्थांशं प्रस्थाधिकाढ़कमानं भवति स्नेहस्य, कल्कस्य स्नेहपादिकत्वं सामान्यपरिभाषयासिद्धमेवेति। केचिन्महाखदिरघृतमिदमनार्षमित्याहुः॥ ३८॥

निम्बाद्यमित्यादि। वाभटस्य घट इति द्रोणे। पिचुः कर्षरूपोभागो येषां कल्कानां तैः। मिषि शतपुष्पा मतु मधु-

पाठाविड़ङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिसिचव्यकुष्ठैः।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः॥
मञ्जिष्ठयातिविषया वरया यमान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः।
तत् सेवितं विषमतिप्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक्॥
नाड़ीव्रणार्ब्बुदभगन्दरगण्डमाला-
जत्रूर्द्ध्वसर्व्वगतगुल्मगुदोत्थमेहान्।
यक्ष्मारुचिश्वसनपीनसकासशोषदृत्
पाण्डुरोगगलविद्रधिवातरक्तम्॥ ४०॥

वज्रकं घृतम्।

वासागुड़ूचीत्रिफलापटोलकरञ्जनिम्बाशनकृष्णवेत्रम्।
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रवत् कुष्ठहरं प्रदिष्टम्॥
विशीर्णकर्णाङ्गुलिहस्तपादः क्रिम्यर्द्दितोभिन्नगलोऽपि मर्त्यः।
पौराणिकीं कान्तिमवाप्य जीवेद्वर्षाण्हतो वर्षशतञ्च कुष्ठी॥४१॥

आरग्वधाद्यं तैलम्।

आरग्वधं धवं कुष्ठं हरितालं मनःशिलाम्।

---

रिका द्रव्यग्रहारात्। तेजोवती ज्योतिष्मती। दीप्यकं जीरकम्। वत्सकं कुटजफलं अग्निश्चित्रकः कणामूलं पिप्पलीमूलम्। वरया त्रिफलया॥ ४०॥

वासेत्यादौ।—कृष्णवेत्रं कालियालता, वज्रवदिति वज्रसदृशः, अभ्यर्थशक्तिकत्वात्॥ ४१॥

आरग्वधमित्यादौ।— तैलमिति सार्षपतैलादावन्यतमं

रजनीद्वयसंयुक्तं पचेत्तैलं विधानवित् ॥
एतेनाभ्यञ्जयेच्छ्वित्री क्षिप्रं श्वित्रं विनश्यति ॥ ४२ ॥

तृणकं तैलम् ।

मञ्जिष्ठावल्गुनिम्बाचक्रमर्दारग्वधपल्लवैः ।
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु ॥

महातृणकं तैलम् ।

हरिद्रात्रिफलादारुद्वयमारकचित्रकम् ।
सप्तच्छदश्च निम्बत्वक्करञ्जौ वालकं नखी ।
कुष्ठमेडगजाबीजं लाङ्गलीगन्धिकारिका ॥
जातीपत्रञ्च दार्व्वी च हरितालं मनःशिला ।
कपित्थतिलपत्रञ्च अर्कक्षीरञ्च गुग्गुलुः ॥
गुड़त्वक्सारिवञ्चैव कुङ्कुमं ग्रन्थिपर्णकम् ।
सर्ज्जपर्णीयखदिरविड़ङ्गं पिप्पली वचा ॥
चमरैरण्डलतायष्टिकेशरं ध्यामकं विषम् ।
त्रिकट्फलमञ्जिष्ठाबोलस्तुम्बीफलं तथा ॥
स्नुहीसम्पाकयोः पत्रं वागुजीबीजमांसिके ।

---

कुष्ठहितत्वात् । उक्तं हि चरके तैलानि सर्षपाणां करञ्जकोषातकीङ्गुदीनाञ्च । कुष्ठेषु हितान्याहुः तैलं यच्चापि खदिरस्येति । अन्ये तु सामान्यश्रुतौ प्रधानकल्पत्वेन तिलतैलमेव ग्राह्यं यत्र तु सार्षपादिविशेषोक्तिस्तत्रैव सार्षपादिग्रहणमित्याहुः । अन्यत्राप्येवं ज्ञेयम् ॥ ४२ ॥

मञ्जिष्ठेत्यादौ ।— वक् कुष्ठं तृणकं गन्धतृणम् । हरिद्रेत्यादौ ।—लाङ्गली विषलाङ्गलीति ख्याता । कलिङ्ग इन्द्रयवः । चोरं चोरपुष्पी ग्रन्थिकं ग्रन्थिपर्णी ध्यामकं गन्धतृणं बोलं गन्ध-

एला ज्योतिष्मतीमूलं शिरीषोगोमयाद्रसः ॥
चन्दने कुष्ठनिर्गुण्डीविशालामल्लिकाद्वयम् ।
वाशाखुकर्णी ब्राह्मी च अग्राह्वं चम्पकात्फलम् ॥
एतैः कल्कैः पचेत्तैलं तुवकस्वरसद्रवम् ।
सश्वेत्वग्दोषहरणं महातुवकसंज्ञितम् ॥ ४३ ॥

वज्रकतैलम् ।

सप्तपर्णकरञ्जार्कमालतीकरवीरजम् ।
मूलं स्नुहाशिरीषाभ्यां चित्रकास्फोतयोरपि ॥
करञ्जबीजं त्रिफलां त्रिकटुं रजनीद्वयम् ।
सिद्धार्थकं विड़ङ्गञ्च प्रपुन्नाड़तिलैः सह ॥
मूत्रपिष्टैः पचेत्तैलमेभिः कुष्ठविनाशनम् ।
अभ्यङ्गाद्वज्रकं नाम नाड़ीदुष्टव्रणापहम् ॥ ४४ ॥

मरिचाद्यं तैलम् ।

मरिचालशिलाब्दार्कपयोऽश्वारिजटाशिवृत् ।
शकृद्रसविशालावङ्निशायुग्दारुचन्दनैः ॥

---

रसः तुम्बीफलं तिक्तालावुफलं मल्लिकाद्वयं मल्लिका वनमल्लिका च अग्राह्वा नवनीतखोटी चम्पकफलं चम्पककलिका । तुवकस्वरसो द्रवरूपः । अत्रान्तरे सोमराजीतैलं केचित् पठन्ति तन्न सम्मतं टीकाकृताम् ॥ ४३ ॥

सप्तपर्णेत्यादि ।— सुश्रुतस्य । मूत्रपिष्टैः पचेत्तैलमिति पाकोऽपि गोमूत्रेणैव आस्फोता श्वेतार्कमूलमिति केचित् । तैलमत्र सार्षपम् ॥ ४४ ॥

स्वल्पमरिचाद्ये ।— आलं हरितालं शिला मनःशिला । अर्कपयोऽर्कक्षीरं अश्वारि करवीरं जटा जटामांसी चन्द्राटा-

कटुतैलात् पचेत् प्रस्थं द्रव्यैर्विषदलान्वितैः।
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्चित्रविनाशनम्॥
सर्व्वेष्वपि च कुष्ठेषु तैलमेतत् प्रशस्यते॥ ४५॥

बृहन्मरिचाद्यं तैलम्।

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः।
देवदारुहरिद्रे द्वे मांसी कुष्ठं सचन्दनम्॥
विशालाकरवीरश्च हरितालं मनःशिला।
चित्रकोलाङ्गलाख्या च विडङ्गं चक्रमर्द्दकम्॥
शिरीषं कुटजो निम्बं सप्तपर्णस्नुहाम्रताः।
सम्पाको नक्तमालोऽब्दः खदिरं पिप्पली वचा॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत्।
आढ़कं कटुतैलस्य गोमूत्रन्तु चतुर्गुणम्॥
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत्।
पक्वा तैलवरं ह्येतन्म्रक्षयेत् कौष्ठिकान् व्रणान्॥
पामाविचर्च्चिकादद्रुकण्डूविस्फोटकानि च।
वलयः पलितं छायानीलीव्यङ्गस्तथैव च॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते।
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते॥
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम्।
बलीवर्द्दस्तुरङ्गो वा गजो वा वायुपीड़ितः॥

---

दिषु मांसीदर्शनात् व्यवहाराच्च। शकृद्रसोगोमयरसः। अयमपि कल्कः विशाला गोरक्षकर्कटी रक्त कुष्ठं निशायुक् हरिद्राद्वयम्। प्रस्थपरिमितं तेन समानाधिकरणं न विरुद्धं गोमूत्रमत्र चतुर्गुणं बोध्यम्॥ ४५॥

बृहन्मरिचाद्ये।— शकृद्रसं पूर्व्ववत्, कुटजो कुटजस्य

एभिरभ्यञ्जनैर्गाढं भवेन्मारुतविक्रमः॥ ४६॥

विषतैलम्।

नक्तमालं हरिद्रे द्वे अर्कं तगरमेव च।
करवीरं वचाकुष्ठमास्फोतारक्तचन्दनम्॥
मालती सप्तपर्णञ्च मञ्जिष्ठासिन्धुवारिका।
एषामर्द्धपलान् भागान् विषस्यापि पलन्तथा॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत्।
श्वित्रविस्फोटकिटिभकीटलूताविचर्च्चिकाः॥
कण्डूकच्छुविकाराश्च ये व्रणा विषदूषिताः।
विषतैलमिदं नाम्ना सर्व्वव्रणविशोधनम्॥ ४७॥

करवीराद्यं तैलम्।

श्वेतकरवीररसोगोमूत्रं चित्रकं विडङ्गञ्च।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतोभिषजाम्॥ ४८॥

श्वेतकरवीराद्यं तैलम्।

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे।

---

फलमित्याहुः। स्नुक् स्नुहीक्षीरम्। प्रथमे वयसीति वयः सन्धौ॥ ४६॥

विषतैले नक्तमालं करञ्जबीजं अर्कं अर्कस्य क्षीरम्। तगरं तगरपादुका मालती जाती तस्याः पत्रं सिन्धुवारिका निर्गुण्डी॥ ४७॥

श्वेतकरवीरेत्यादौ।— करवीररसगोमूत्रयोर्म्मिलित्वा चतुर्गुणत्वम्। शेषस्य तु कल्कत्वम्॥ ४८॥

श्वेतकरवीरमूलमित्यादि।— श्वेतं करवीरस्य मूलं दल इति विटस्य तैलविशेषणता ज्ञेया। विषांशसाधितमिति विष-

चर्मदलपामासिध्मविस्फोटक्रिमिकिटिभजित्तैलम् ॥ ४९ ॥

सिन्दूराद्यं तैलम्।

सिन्दूरार्द्धपलं पिष्ट्वा जीरकस्य पलं तथा।
कटुतैलं पचेन्मानी सद्यः पामाहरं परम् ॥ ५० ॥

महासिन्दूराद्यं तैलम्।

सिन्दूरं चन्दनं मांसी विडङ्गं रजनीद्वयम्।
प्रियङ्गुपद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥
जात्यर्कत्रिवृतानिम्बकरञ्जविषमेव च।
कृष्णावेत्रफलोभस्य प्रपुन्नाडस्य संहरेत् ॥
चूर्णपिष्टानि सर्व्वाणि योजयेत्तैलमात्रया।
अभ्यङ्गेन प्रयुञ्जीत सर्व्वकुष्ठविनाशनम् ॥
पामाविचर्च्चिकाकण्डूविसर्पादिविनाशनम्।
रक्तपित्तोत्थितान् हन्ति रोगानेवं विधान् बहून् ॥ ५१ ॥

---

स्यांशश्चतुर्थोभागः स च करवीरमूलापेक्षया इति केचित्। अन्ये तु गतविषतैले विषस्य पलमुक्तं तदपेक्षया कर्षमाहुः तन्त्रान्तरीयैकवाक्यत्वात्। अन्ये पुनरंशोभागः तेन विषकरवीरमूलयोः समभागयोः स्नेहपादिकत्वेनैव कल्कत्वं व्यवहारोऽप्यनेनैव ॥ ४९ ॥

स्वल्पसिन्दूराद्ये।— मानीमित्यष्टौ पलानि वृन्दे तु कटुतैलं पचेदाभ्यां सद्यः पामाहरं परमिति पठ्यते। तन्मते वृद्धवैद्यव्यवहारादेवाष्टपलं ग्राह्यम् ॥ ५० ॥

महासिन्दूराद्ये।— जात्याः पत्रं करञ्जस्य फलं चकस्य पत्रम्। तैलमात्रया प्रस्थमात्रया ॥ ५१ ॥

आदित्यपाकं तैलम्।

मञ्जिष्ठात्रिफलालाक्षानिशाशिलालगन्धकैः।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम्॥ ५२॥

दूर्व्वाद्यं तैलम्।

स्वरसेन च दूर्व्वायाः पचेत्तैलं चतुर्गुणम्।
कच्छुविचर्च्चिकापामा अभ्यङ्गाद्विनाशयेत्॥ ५३॥

अर्कमनःशिलातैले।

अर्कपत्ररसे पक्वं कटुतैलं निशायुतम्।
मनःशिलायुतं वापि पामाकच्छ्वादिनाशनम्॥ ५४॥

गण्डीराद्यं तैलम्।

गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वक्लवणैः समूत्रैः।
तैलं पचेन्मण्डलदद्रुकुष्ठदुष्टव्रणारुःकिटिमापहारि॥ ५५॥

---

आदित्यपाकतैले।— जलं तैलसमं दत्वा जलशोषपर्य्यन्तमातपे स्थाप्यम्। जलं विना पाकानुपपत्तेः एवमिन्द्रलुप्तादित्य पाकोऽपि गुडूचीरसमेव तैलसमं व्यवहरन्ति वृद्धाः। अन्ये तु द्रवानुक्तावद्रव एवादित्यपाकः॥ ५२॥

दूर्व्वातैलेचतुर्गुणं यथास्यात्तथा दूर्व्वास्वरसेन पचेत्। दूर्व्वास्वरसेन चतुर्गुणेन पचेदित्यर्थः। वृन्देपि स्वरसेपि च दूर्व्वायाः पचेत्तैलं चतुर्गुणे इति पाठः॥ ५३॥

अर्कतैले कल्कभेदात् योगद्वयं स्वरसश्च चतुर्गुणः कल्कश्चाष्टांश एव स्वरसस्याश्रवत्वात्॥ ५४॥

गण्डीरिकेत्यादि गण्डीरिका स्नुही तस्याः क्षीरं एवमर्कस्यापि, द्रुमः सोनालुसस्य त्वक्लवणं सैन्धवं अन्ये तु गण्डीरिका मञ्जिष्ठा द्रुमः कुटजस्तस्य त्वगित्याहुः॥ ५५॥

पृथ्वीसारतैलम् ।

चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः ।
माढ़ीचबीजाद्विषतः काञ्जिपिष्टं पलं पलम् ॥
करञ्जतैलाष्टपलं काञ्जिकस्य पलं पुनः ।
मिश्रितं सूर्य्यसंपक्वं तैलं कुष्ठव्रणास्रजित् ॥ ५६ ॥
पक्षात् पक्षाच्छर्दनान्यभ्युपेयान्मासान्मासात् स्रंसनं चाप्यधस्तात् ।
त्र्यहात्त्र्यहान्नस्ततश्चावपीड़ान्मासेष्वस्रञ्मोचयेत् षट्सु षट्सु ॥
योषिन्मांससुरात्यागः शालिमुद्गयवादयः ।
पुराणास्तिक्तशाकञ्च आङ्गलं कुष्ठिनां हितम् ॥ ५७ ॥

इति कुष्ठचिकित्सा ।

---

## अथोदर्द्दकोठशीतपित्ताधिकारः ।

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः ।

---

चित्रकेति ।— अत्यन्तोत्कृष्टत्वात् पृथ्वी सारेति संज्ञा ॥ ५६ ॥

पक्षादित्यादि सुश्रुतस्य । स्रंसनं विरेचनम् । नस्तत इति नासापुटयोरवपीड़ान्नस्य विशेषान् दद्यात् । अवपीड़शब्देन वक्ष्यमाण सर्पिः प्रयोगोऽप्युच्यते तन्निरासार्थं नस्तत इति पदम् । योषिदित्यादौ ।— मांसमानूपं निषिद्धं जाङ्गलस्य विधानात् ॥ ५७ ॥

इति कुष्ठाधिकारः ।

---

प्रायस्तुल्यचिकित्सितत्वात् उदर्द्दादिचिकित्सामाह अभ्यङ्ग इत्यादि । सेक इत्यत्र स्वेद इत्यपि पाठः । अतएवोक्तमन्यत्र

उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा ॥
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ॥ १ ॥
त्रिफलां क्षौद्रसहितां पिबेद्वा नवकार्षिकम्।
विसर्पोक्तममृतादि भिषगत्रापि योजयेत् ॥
सितां मधुकसंयुक्तां गुडमामलकैः सह।
सगुडं दीप्यकं यस्तु खादेत् पथ्यान्नभुङ्नरः ॥
तस्य नश्यति सप्ताहादुदर्दः सर्व्वदेहजः।
सिद्धार्थरजनीकल्कैः प्रपुन्नाडतिलैः सह ॥
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं हितम्।
दूर्व्वानिशायुतो लेपः कच्छुपामाविनाशनः ॥
क्रिमिदद्रुहरश्चैव शीतपित्तहरः परः।
अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ॥
शीतपित्तोदर्द्दकोठान् सप्ताहादेव नाशयेत्।
कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च ॥
उदर्द्दोक्तां क्रियाञ्चापि कोठरोगे समासतः।
सर्पिः पीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम् ॥
निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात्।

---

अभ्यङ्गः कटुतैलेन। स्वेदनं कोष्णवारिणेति। पटोलारिष्टवारिणेत्यादावनुक्तमपि मदनफलकल्कं प्रक्षेप्यम्। त्रिफलायाः कषायः गुग्गुलुः पिप्पल्योः प्रक्षेपश्च। व्यवहाराद्गुग्गुलोर्द्दश-माषकाः पिपल्यास्तु षण्माषका इति ॥ १ ॥

त्रिफलां क्षौद्रसहितामिति त्रिफलायाः कषायः क्षौद्रन्तु प्रक्षेप्यम्। नवकार्षिकं वातरक्तोक्तम्। विसर्पोक्तममृतादिकं अमृतवृषपटोलमुस्तकमित्यादिना उक्तं शीतपित्तहन्तृत्वात्

विस्फोट कोठचत शीतपित्तं कफप्रपित्तं सहसा च जह्यात् ॥
क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत् ।
गाम्भारिकाफलं पक्कं शुष्कमुत्स्वेदितं पुनः ॥
क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना ।
तैलोद्वर्त्तनयोगेन योज्य एलादिकोगणः ॥
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ।
भोजनं सर्व्वदा कार्य्यं लावतित्तिरिजेन वा ॥
शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक् ।
उष्णानि वा यथा कालं शीतपित्ते प्रयोजयेत् ॥ २ ॥

इत्युदर्दकोठशीतपित्तचिकित्सा ।

---

## अथाम्लपित्ताधिकारः ।

वान्तिं कृत्वाम्लपित्ते तु विरेकं मृदु कारयेत् ।

---

न पुनरत्रतत्रषपटोलं निम्बकल्कैरुपेतमित्यादिकम् । सितां मधुकसंयुक्तामित्यत्र सितां कटुकया युक्तमिति केचित् पठन्ति । दीप्यकं यमानी । उदर्द्दचिकित्सा कोठेऽप्यतिदिशति उदर्द्देत्यादि । निम्बस्येत्यादि योगद्वयं अन्ये त्वेनमेवाहुः । गाम्भारिकेति सुपक्कं गाम्भारीफलं गव्यदुग्धं दत्त्वा उत्स्विद्य खादेत् । तैलेत्यादि सुश्रुतस्य एलादिकोगणः तैलयोगेन उद्वर्त्तनतया च योज्य इत्याहुः ॥ २ ॥

इत्युदर्द्दाधिकारः ।

---

उक्तसङ्गत्यैव अम्लपित्तमुच्यते । वान्तिं कृत्वेति । वमनञ्च अरिष्टादिभिः अतएव तन्त्रान्तरे यथा प्रागम्लपित्तरोगार्त्तं कुल-

सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम्॥
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया॥ १॥
क्रियाशुद्धस्य शमनी ह्यनुबन्धव्यपेक्षया।
दोषसंसर्गजे कार्य्या भेषजाहारकल्पना॥
ऊर्द्ध्वगे वमनैर्धीमानधोगे रेचनैर्हरेत्।
तिक्तभूयिष्ठमाहारं पानं वापि प्रकल्पयेत्॥ २॥
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्ज्जिताः।
यथास्वं लाजशक्तून् वा सितामधुयुतान् पिबेत्॥
निस्तुषयववृषधात्रीकाथस्त्रिसुगन्धिमधुयुतः पीतः।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण॥ ३॥

दशाङ्गः।

कफपित्तरमीकण्डूज्वरविस्फोटदाहहा।
पाचनोशोधनः क्वाथः श्कृन्नेरपटोलयोः॥

---

कादिष्टवारिभिः। सक्षौद्रपाठसिन्धूत्थैर्वमनं कारयेद्भिषक्॥१॥

क्रियेत्यादि।— दोषसंसर्गजे अनुबन्धव्यपेक्षया अनुबन्धभूतदोषविरोधेन शमनी संशमनरूपा भेषजाहारकल्पना क्रिया कार्य्येत्यर्थः उक्तवमनविरेचनयोर्विषयमाह ऊर्द्ध्वग इत्यादि ऊर्द्ध्वगे बद्धकफे वमनं अधोगेऽम्लपित्ते सविबन्धे विरेचनम्॥ २॥

यवगोधूमेति।— यवगोधूमौ हि सरत्व मधुरत्वादिना अम्लपित्ते हितौ। तयोः पेयादयः तीक्ष्णसंस्कारवर्जिता इति कटुलवणादि संस्कारयोगरहिताः यथा स्वमिति पिवेदित्यनेन योज्यं तेन दोषसंसर्गाद्यपेक्षया तत्तदोषप्रत्यनीकेन द्रवेण पिवेदित्यर्थः। त्रिसुगन्धियुतमिति त्रिसुगन्धि त्वगेलापत्रं तच्च सौगन्ध्यमात्रकारकम्। मधु तु प्रक्षेपन्यायेन योज्यम्॥ ३॥

पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत् ।
कण्डुपामार्त्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥
पटोलविश्वामृतरोहिणीशृतं जलं पिबेत् पित्तकफोच्छ्रये तु ।
शूलभ्रमारोचकवह्निमान्द्यदाहज्वरच्छर्द्दिनिवारणं तत् ॥
यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत् ।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिन्तथा ॥
वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः ।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ ४ ॥
फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः ।
पीतः क्लीतकमध्वाक्तोऽम्बरच्छर्द्यम्लपित्तजित् ॥ ५ ॥

वासादिगुग्गुलुः ।

पथ्याभृङ्गरजश्चूर्णं युक्तं जीर्णगुडेन तु ।
जयेदम्लपित्तजन्यां छर्द्दिमन्नविदाहजाम् ॥
वासानिम्बपटोलत्रिफलाघनयासयोजितो जयति ।
अधिककफाम्लपित्तं प्रयोजितोगुग्गुलुः क्रमेण ॥ ६ ॥
छिन्नाखदिरयष्ट्याह्वदार्व्वीरम्भो वा मधुद्रवम् ॥ ७ ॥

---

कफेत्यादौ ।— शृङ्गवेरः शुण्ठी ॥ ४ ॥

फलत्रिकमित्यादौ ।— तिक्तेत्यतः परमेषामिति शेषः, तेन त्रिफलादीनि यान्येतानि एषां क्वाथ इत्यर्थः । क्लीतकं यष्टिमधु, सिताक्लीतकमधूनि इह प्रक्षेप्याणि ॥ ५ ॥

पथ्येत्यादौ ।— भृङ्गरजश्चूर्णं भृङ्गराजस्य चूर्णम् । वासेत्यादौ ।— घनः मुस्तः यासः पीतशालः यासोदुरालभा वासादीनां चूर्णं गुग्गुलुसमं गुग्गुलोः प्राधान्यात् । क्रमश इत्यभ्यासेन ॥ ६ ॥

छिन्नेत्यादौ ।— मधुद्रवमिति बहुव्रीहिः । तेनाम्भ इत्यस्य विशेषणम् । मध्वत्र प्रक्षेप्यम् ॥ ७ ॥

सद्राक्षामभयां खादेत् सक्षौद्रां सगुड़ाश्वताम्।
कटुकासितावलेह्यापटोलविम्बश्च क्षौद्रसंयुतम्॥
रक्तस्रुती च युक्ता वा खण्डकुष्माण्डकं अष्ठम्।
पटोलत्रिफलानिम्बशृतं मधुयुतं पिवेत्॥
पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये।
सिंहास्यामृतभण्टाकीक्वाथं पीत्वा समाक्षिकम्॥
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम्॥ ८॥
वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च।
अम्लपित्ते प्रयोक्तव्यं गुड़कुष्माण्डकं तथा॥
पंक्तिशूलापहा योगास्तथा खण्डामलक्यपि।
पिप्पलीमधुसंयुक्ता चाम्लपित्तविनाशिनी॥ ९॥
जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम्।
गुड़पिप्पलीपथ्याभिस्तुल्याभिर्मोदकीकृतः॥
पित्तश्लेष्मापहः प्रोक्तोमन्दमग्निञ्च दीपयेत्॥ १०॥

---

सद्राक्षामित्यादि।— योगत्रयमेतत्। कटुकासिता चेति कटुरोहिणी ससिता लेह्येत्यर्थः। पटोलविम्बञ्च मधुसंयुतमिति पटोलविम्बयोः क्वाथं मधु प्रक्षिप्य पिवेदित्यर्थः॥ ८॥

वासाघृतं रक्तपित्तोक्तं तिक्तकघृतं कुष्ठोक्तं महातिक्तकं तत्रैव अम्लपित्तहन्तृत्व श्रुतेः। पिप्पलीघृतन्तु परिणामशूलोक्तम्। एतच्च यद्यपि पैत्तिकशूलापहमित्यनेनैव लभ्यते तथापि विशेषार्थमुक्तं तथा गुड़कुष्माण्डकं तथा खण्डामलकी च योज्या। पिप्पलीमधुसंयुक्तेति अवलेहविधया॥ ९॥

जम्बीरेत्यादि — पक्वजम्बीरफलरसः अयञ्च वातोल्बने द्रष्टव्यः॥ १०॥

हिङ्गु च कतकफलानि चिञ्चात्वचोघृतञ्च पुटदग्धम् ।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तरं द्विगुणम् ॥
कान्तपात्रे वराकल्कोव्युषितोऽभ्यासयोगतः ।
सिताक्षौद्रसमायुक्तः कफपित्तहरः स्मृतः ॥ ११ ॥

पञ्चनिम्बादिचूर्णम् ।

एकोऽंशः पञ्चनिम्बानां द्विगुणोवृद्धदारकः ।
शक्तुर्दशगुणोदेयः शर्करामधुरीकृतः ॥
शीतेन वारिणा पीतः शूलं पित्तकफोत्थितम् ॥
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदारुणम् ॥ १२ ॥

क्षुधावतीगुड़िका ।

शाल्युभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहारखण्डकर्णरसैरथ ॥

---

हिङ्गित्यादौ कतकफलं जलप्रसादनफलं प्रायोमगधे भवति । यथोत्तरं द्विगुणमिति हिङ्गुपेक्षया कतकफलं द्विगुणं कतकफलापेक्षया तिन्तिड़ीत्वक्, तिन्तिड़ीत्वगपेक्षया घृतमिति । एतत् सर्व्वं स्थालीमध्ये निःक्षिप्य शरावेण पिधायान्तर्धूमं दग्ध्वा माषकचतुष्टयमुपयोज्यम् । तप्तजलमनुपेयं तन्त्रान्तरसम्बादात् । कान्तपात्र इति । कान्ताख्यलौहपात्रविशेषे प्रक्षिप्य स्थितत्रिफलाकल्क इत्यर्थः । शर्करामधुनी प्रक्षेप्ये ॥ ११ ॥

एकोंऽश इत्यादि ।—पञ्चनिम्बानामिति निम्बस्य त्वक्पत्रपुष्पमूलफलानां मिलितानामेकोभागः । शक्तुर्दशगुण इति निम्बभागापेक्षया, मात्रा चास्य पलमर्द्धपलं वा आहारद्रव्यशक्तुबाहुल्यात् ॥ १२ ॥

इदानीं क्षुधावती वाच्या तत्र प्रथममाशुभक्तेत्यादिना-

तण्डुलीयञ्च शालिञ्च कालमारिषजेन च।
हस्तीरहस्तीभृङ्गलक्ष्मणाकेशराजजैः॥
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशोभिषक्।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः॥
स्वर्णमाक्षिकशालिभ्यां ध्मातं निर्व्वापितं जले।
तैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः॥
वृहत्पत्रकरीकर्णत्रिफलावृद्धदारजैः।
माणकन्दास्थिसंहारशृङ्गवेरभवैरसैः॥
दशमूलीमुण्डितिकातालमूलीसमुद्भवैः।
पुटितं साधु यत्नेन शुद्धिमेवमथोव्रजेत्॥
वशिरं श्वेतवाट्यालं मधुपर्णीमयूरकम्।
तण्डुलीयञ्च वर्षाह्वं दत्त्वाधश्चोर्द्ध्वमेव च॥
पाच्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम्।
अन्तर्व्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम्॥
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता।

---

अभ्रकशुद्धिमाह। आशुधान्यभेदः। तत्राभ्रकं कृष्णाभ्रकं ग्राह्यं श्रेष्ठत्वात्, तच्चैकपत्रीकृत्य उदूखलादिषु सञ्चूर्ण्य आशुभक्तकाञ्जिके अहोरात्रं स्थापयित्वा तेनैव काञ्जिकेन पेषणीयं ततः कन्दादीनां व्यस्तसमस्तानां स्वरसेन पुनः पेषणं भावनं पुटनं बहुधा कुर्व्वीत यावन्निश्चन्द्रकत्वमभ्रस्येत्यर्थः। तत्र कन्दो वन्यशूरणः खण्डकर्णः खारकोन इति ख्यातः। तण्डुलीयकालमारिषयोः स्वल्पपत्रवृहत्पत्रभेदेन भेदः। हस्तीरः पुनर्नवा, भृङ्गो भृङ्गराजः, लक्ष्मणा स्वनामख्याता। विहायस इत्यभ्रस्य। लौहशुद्धिमाह स्वर्णमाक्षिकेत्यादि पिष्टाभ्यां स्वर्णमाक्षिकशालिञ्चाभ्यां कान्तादिलौहं लिप्त्वा ततोभस्त्रया वह्नौ ध्मातं ततो-

जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन तु॥
वायस्याश्चानुपूर्व्वेवं मर्द्दनं रसशोधनम्।
गन्धकं नवनीताख्यं चुद्रितं लौहभाजने॥
त्रिगा चण्डातपे शुष्कं भृङ्गराजरसान्वितम्।
ततोवह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम्॥
यत्नाद्भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति।
गगणाद्द्विपलं चूर्णं लौहस्य पलमात्रकम्॥
लौहकिट्टपलार्द्धञ्च सर्व्वमेकत्र संस्थितम्।
मण्डूकपर्णीवशिरतालमूलीरसैः पुनः॥
वरीभृङ्गकेशराजकालमारिषजैरथ।
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम्॥
रसगन्धकयोः कर्षौ प्रत्येकं ग्राह्यमेकतः।
तन्मर्द्दनाच्छिलाखल्वे यत्नतः कज्जलीकृतम्॥
वचा चव्यं यमानी च जीवके शतपुष्पिका।

---

वक्ष्यमाणाम्रुतसारविधिना कथितत्रिफलाक्वाथेन निर्व्वापित-मित्यर्थः। तदेव निरुत्थमारितं लौहचूर्णं प्रक्षाल्य भानुपाकादिना शोषितं हृत्पत्रकारिकर्णीत्रिफलादिपुटमद्रव्येषु मध्ये येषां स्वरसः प्राप्यस्तेषां स्वरसोग्राह्यः। येषान्तु स्वरसो न लभ्यते तेषां पुटनीयलौहसमं गृहीत्वाष्टगुणं जलं दत्त्वाष्टभागावशेषेण क्वाथेन पुटनं कर्त्तव्यमिति। वशिरमित्यादिना लौहमलशुद्धि-माह। वशिरः श्वेतसूर्य्यावर्त्तः। मधुपर्णी गुडूची। मयूरकोप-मार्गः। तण्डूलीयकः चुद्रमारिषः। वर्षाभू पुनर्नवा सुजी-र्णमण्डूरं पुराणमण्डूरम्। वशिरादीनां मूलत्वक्पल्लवान् स्था-लीमध्ये पातयित्वा तदुपरि जीर्णमण्डूरं दत्त्वा तैरेव पल्लवा-दिभिराच्छाद्य गोमूत्रं दत्वा दिवसत्रयं व्याप्य दग्धं यथास्था-

शोथं मुस्तं विड़ङ्गञ्च ग्रन्थिकं खरमञ्जरी।
त्रिवृताचित्रकोदन्ती सूक्ष्मैलत्तैः सितस्तथा॥
भङ्गमाणककन्दञ्च खण्डकर्णक एव च।
दण्डोत्पलाकेशराजकालावक्रड़कोऽपि च॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम्।
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च॥
एतत् सर्व्वं समालोड्य लौहपात्रे तु भावयेत्।
आतपे दण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा॥
तद्द्रवेण शिलापिष्टं गुड़िकां कारयेद्भिषक्।
बदरास्थिनिभां शुष्कां सुनिगुप्तां निधापयेत्॥
तत् प्रातर्भोजनादौ तु सेवितं गुड़िकात्रयम्।
अम्लोदकानुपानञ्च हितं मधुरवर्ज्जितम्॥

---

तथा पाकोविज्ञेयः। तदनु शरावेण पिधायान्तर्वाष्पं यथा स्यात्तथा दिवसत्रयं स्थाप्यम्। तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति मण्डूरशुद्धिः। अथ रसशुद्धिमाह जयन्त्या इत्यादि।- वर्द्धमान एरण्डः वायसी काकमाची। गन्धकशुद्धिमाह गन्धकमित्यादि। चुट्टितमिति तण्डुलकणापरिमितं कृत्वा लौहभाजने स्थापयित्वा भृङ्गराजरसेनाप्लाव्य चण्डातपे शोषयेत् एवमपरवारत्रयमपि। तदनु प्रक्षाल्यातपे संशोध्य लौहपात्रे स्थापयित्वा ज्वलद्बदराङ्गारोपरि दत्त्वा नविकया सञ्चाल्य यदा तैलवद्द्रवीभवति तदा भृङ्गराजस्वरसपरिपूरितपात्रे घृताक्तसूक्ष्मवस्त्रेण पिहितमुखे त्वरितं ढालयेत् एवं पुनरपि कुर्य्यात्। तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति। अतो यथोक्तगणलौहमण्डूरचूर्णान्येकीकृत्य मण्डू-

दुग्धञ्च नारिकेलञ्च वर्ज्जनीयं विशेषतः ।
भोज्यं यथेष्टमिष्टञ्च वारिभक्तान्नकाञ्जिकम् ॥
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम् ।
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान् ॥
यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम् ।
प्लीहानं श्वासमानाहमामवातं सुदारुणम् ॥
गुड़ी क्षुधावती सेयं विख्याता रोगनाशिनी ॥ १२ ॥

जीरकाद्यं घृतम् ।

पिष्ट्वाऽजाजीं सधन्याकं घृतप्रस्थं विपाचयेत् ।
कफपित्तारुचिहरं मन्दानलवमिं जयेत् ॥

---

कपर्द्यादिस्वरसेनैकस्थालीपाकः कर्त्तव्यः । वरीति शतावरी । ततः शतावर्य्यादिकालमारिषरसेनापि द्वितीयः स्थालीपाकः । तदनु त्रिफला भद्रमुस्ताभिरनन्तरोक्तक्वाथविधिकृतक्वाथेन तथैव तृतीयस्थालीपाक इति । निश्चलस्तु मण्डूकपर्ण्यादेः तालमूल्यन्तरसेन पुटदानमाह । तत्तु न सम्यक् पुटदान श्रुतेः । पुटदानस्य तु रसशोधनादिग्रन्थेन व्यवधानम् । चूर्णितमिति अनन्तरं पुनर्लौहशिलायां चूर्णीकर्त्तव्यमित्यर्थः । एतदनन्तरं यद्विधेयं तदाह रसगन्धकयोः कर्षौ प्रत्येकमिति च्छेदः । तन्मिलितरसगन्धककर्षचतुष्टयमेकीकृत्य कज्जलीकृतं ग्राह्यमिति योज्यम् । वचाचव्यमित्यादिना प्रक्षेप्य चूर्णद्रव्याण्याह । खरमञ्जरी अपामार्गः । सूर्य्यावर्त्तः जामातृसूर्य्यावर्त्तः प्रत्येकं त्रिफलायाश्चेति प्रत्येकमर्द्धपलं तेन मिलित्वा त्रिफलाया सार्द्धं पलं भवतीत्यर्थः । वदराण्यीति अत्रोपदेशात् कलायपरिमाणम् । अत्र क्षीरादिवर्ज्जनं तथा अम्बोदकादिविधानञ्च प्रयोगसात्मत्वात् । अचिन्त्याहि योगशक्तिरिति॥१२॥

पटोलशुण्ठीघृतम्।

पटोलशुण्ठयोः कल्काभ्यां केवलं कुलकेन वा।
घृतप्रस्थं विपक्वं स्यात् कफपित्तहरं परम्॥

पिप्पलीघृतम्।

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम्।
पिबेत्तत् प्रातरुत्थाय अम्लपित्तनिवृत्तये॥ १४॥

द्राक्षाद्यं घृतम्।

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत् सर्पिरपेतमेभिः॥
भुञ्जीत मात्रां सह भोजनेन सर्वेष्वनुपानेऽपि भिषग्विदध्यात्।
श्वासमपित्तं ग्रहणीं प्रवृद्धां कासाग्निसादं ज्वरमम्लपित्तम्॥
सर्वं निहन्याद्घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च॥ १५॥

शतावरीघृतम्।

शतावरीमूलकल्कं घृतप्रस्थं पयः समम्।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम्॥
नाशयेदम्लपित्तञ्च वातपित्तोद्भवान् गदान्।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च॥ १६॥

इत्यम्लपित्तचिकित्सा।

---

पिप्पल्यादौ — जलं चतुर्गुणं पिप्पलीघृते मधुप्लुतमिति सिद्धे घृते घृतपादिकं मधु संमिश्रणीयम्॥ १४॥

द्राक्षेत्यादौ।—शक्रः कुटजः तस्य फलं पद्मं पद्मकाष्ठकम्॥ १५॥

शतावरीघृते पयः सममिति पयः शब्देनेह पयःसाधर्म्यात् शतावरीरसो ग्राह्यः नतु क्षीरं तस्य पृथगुपादानात्। एवं घृतेन सह तुल्यम्॥ १६॥

इत्यम्लपित्ताधिकारः।

## अथ विसर्पविस्फोटाधिकारः ।

विरेकवमनालेपसेचनासृग्विमोक्षणैः ।
उपाचरेद्यथा दोषं विसर्पानविदाहिभिः ॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च ।
विसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह ॥ १ ॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं विसर्पज्वरशान्तये ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ॥ २ ॥
तृणवर्ज्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ।
प्रदेहसेकसर्पिर्भिर्व्विसर्पे वातसम्भवे ॥ ३ ॥

---

प्रायस्तुल्यचिकित्सितत्वादम्लपित्तानन्तरं विसर्पचिकित्सा-मुच्यते । अविदाहिभिरित्यन्नपानैरिति शेषः । पटोलेत्यादि ।— पटोलपिचुमर्दाभ्यामित्येकोयोगः । पिप्पल्या मदनेन चेति द्वितीयः इन्द्रयवैः सह इति उभयत्र सम्बध्यते इति केचित् । अन्ये तु पटोलनिम्बयोः क्वाथः पिप्पल्यादित्रयं प्रक्षेप्यमित्याहुः व्यवहारः पुनरनेनैव ॥ १ ॥

त्रिफलेत्यादि ।— त्रिफलायाः क्वाथं सर्पिस्त्रिवृते प्रक्षिप्य पिबेत् । रसमित्यादावपि रेचनार्थमिति सम्बध्यते ॥ २ ॥

तृणवर्जमिति तृणपञ्चमूलं वर्जयित्वा स्वल्पमहत्पञ्चमूल-द्वयं प्रसिद्धमेव कण्टकी पञ्चमूलं वल्लीपञ्चमूलञ्च यथा मेषशृङ्गी हरिद्रा च विदारी सारिवामृता वल्लग्राख्या कण्टकाख्या च श्वदंष्ट्राभीरुसैर्य्यकैः । अहिंस्रा करमर्दश्च सर्व्वदोषहरा हि ते । अत्र अभीरुः शतावरी, सैर्य्यकोझिण्टी, अहिंस्रा कालाकटुः । करमर्द्दः स्वल्पमधुफला चोरीति ख्याता इति सुश्रुत टीका । तृणपञ्चमूलस्य वर्जनमिह पित्तहरत्वेन वाते यौगिकत्वात् ॥ ३ ॥

कुष्ठं शताह्वासुरदारुकत्वावाराहीकुस्तुम्बुरुकृष्णगन्धाः।
वातेऽर्कवंशार्त्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु ॥
प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः।
सयष्टीन्दीवरैः पित्ते चीरपिष्टैः प्रलेपयेत् ॥
कशेरुश्टङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्द्दमाश्च।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥
प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः।
पद्मकोशीरमधुकचन्दनैर्व्वा प्रशस्यते ॥ ४ ॥
पित्ते तु पद्मिनीपङ्कं पिष्टं वा शङ्खशैवलम्।
गुन्द्रामूलन्तु शुक्तिर्व्वा गैरिकं वा घृतान्वितम् ॥ ५ ॥

---

कुष्ठमित्यादि सुश्रुतस्य। वाराही वाराहीकन्दः तदभावे चर्म्मकारालुकः। कुस्तुम्बुरु धन्याकं कृष्णगन्धा शोभाञ्जनं तस्य मूलं अन्ये तु वीजं अर्कोऽर्कस्य मूलं वंशा वंशनेली। आर्त्तगलः आगड़ामूलं अर्ज्जुनवल्कलं वा प्रपौण्डरीकेत्यादौ। — इन्दीवरं नीलोत्पलम्। कशेर्व्वित्यादि सुश्रुतस्य। पद्मकं पद्मकाष्ठं गुन्द्रा गुडूची उत्पलं नीलोत्पलं कर्द्दमः, पद्मिनीस्थानगतकर्द्दमः, वस्त्रान्तरा वस्त्रेणान्तरिताः एवं सति पित्तविसर्पे त्वगाद्युपघातो न स्यात्। लेपा इति बहुवचननिर्द्देशादेकैकशोऽप्येते योज्या इति वदन्ति।

पञ्चवल्कलैरिति कपीतनवटाश्वत्थप्लचोडुम्बरवल्कलैः॥ ४ ॥

पित्तेत्वित्यादि। — स्रोऽपादैश्चत्वारोयोगाः, शङ्खश्च शैवलञ्चेति समाहारः, गुन्द्रा गुडूची, शुक्तिर्मुक्तोत्पत्तिभाण्डः शीतवीर्य्यत्वात् मौक्तिकमपीति केचित्। घृतान्वितमिति योगचतुष्टयेऽपि योज्यम् ॥ ५ ॥

न्यग्रोधपादास्तरुणा च कदलीगर्भ एव च ।
विसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः ।
पृथक् पृथक् प्रदेहाः स्युः सर्व्वे वा सर्पिषा सह ॥ ६ ॥
द्राक्षारग्वधकाश्मर्य्यत्रिफलैरण्डपीलुभिः ।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥ ७ ॥
गायत्रीसप्तपर्णाब्दवासारग्वधदारुभिः ।
कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥ ८ ॥
अजाश्वगन्धाश्मरणाथ काला सैकेषिका वाप्यथ वाजश्टङ्गी ।
गोमूत्रपिष्टोविहितः प्रलेपो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥

---

न्यग्रोधेत्यादि ।— वाभटस्य । न्यग्रोधस्य पादाः प्ररोहाः, अन्ये तु मूलानीत्याहुः । तरुणा इत्यभिनवाः । तरुणा इत्यत्र गुन्द्रेति न पाठः वाभटे चरके च तरुणा इति पाठात्, कदलीगर्भोगर्भस्था कदलीमञ्जरी, विषग्रन्थिर्मृणालग्रन्थिः, हरेणवो वर्त्तुलकलायाः ॥ ६ ॥

द्राक्षेत्यादौ ।— आरग्वधः आरग्वधस्य फलं, एरण्ड एरण्डस्य वीजं विरेकत्वात्, पीलु पौत्तरापथिकफलं क्वाथेन कल्केन वा योगद्वयमिदं तत्र पीलून्त एकोयोगः, हरीतक्यन्तश्च द्वितीयोयोग इति ॥ ७ ॥

गायत्रीत्यादौ ।— अत्र आरग्वधस्य पत्रं कुटन्नटं कैवर्त्तमुस्तकम् । अयं योगोवासास्थाने धवस्य कुटन्नटस्थाने कुरुण्टकस्य प्रक्षेपादपि बोध्यः । यदाह चरकः खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम् । कुरुण्टकं देवदारु दद्यादालेपनं भिषगिति॥८॥

अजेत्यादि सुश्रुतस्य अजगन्धा कोकन्दीति ख्याता अश्मरणा त्रिवृत्, काला कालाकडः, एकेषिका पाठा, अजश्टङ्गी कर्क-

मदनं मधुकं निम्बं वत्सकस्य फलानि च।
वमनञ्च विधातव्यं विसर्पे कफसम्भवे ॥ ९ ॥
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पकामाची हिता लेपावचूर्णने॥
मुस्तारिष्टपटोलानां क्वाथः सर्व्वविसर्पनुत्।
धात्रीपटोलमुद्गानामथवा घृतसंस्रुतः ॥ १० ॥

नवकषायगुग्गुलुः।

अमृतविषपटोलं निम्बकल्कैरुपेतम्।
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्॥
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तम्।
जयति विषविसर्पान् कुष्ठमष्टादशाख्यम् ॥ ११ ॥

---

टश्वङ्गी, अजगन्धादिरजश्वङ्ग्यन्त एकोयोगः। उक्तं हि वाभटे-काला च श्वङ्गीशरणा वस्तगन्धा हयाह्वया। एकैशिका च लेपः स्यात् श्लेष्मथावेकगालज इति। विहिम इति हिमविपरीतः कोष्ण इति शेषः॥ ९ ॥

त्रिफलेत्यादि।—वाभटस्य समङ्गा वराहक्रान्ता, करवीरकमित्यत्र करवीरजमिति पाठे मूलम्। अनन्ता अनन्तमूलं अयं लेपस्तथा वक्ष्यमाणोऽप्यारग्वधादिः,स्वल्पघृतयोगेन स्निग्धः कार्य्यः एतदनन्तरं प्रदेहाः सर्व्वत्रैव एते देयाः। स्वल्पघृताप्लुत इति चरक वचनात्। श्लेष्मातकोबहुवारः कामाची काकमाची सर्व्वविसर्पनुदिति प्रत्येकदोषजसर्व्वविकारनुदिति सन्निपात विसर्पस्यासाध्यत्वात् ॥ १० ॥

अमृतेत्यादौ त्रिफलं त्रिफला व्याधिघातं शोनालुफलम्। गुग्गुलोर्भागयुक्तमिति प्रत्यक्षोपयोगे प्रक्षेपपरिभाषयैव देयम्।

अमृतादिः ।

अमृतवृषपटोलं मुस्तकं सप्तपर्णम् ।
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे ॥
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च ॥ १२ ॥
पटोलामृतभूनिम्बवासकारिष्टपर्पटैः ।
खदिराब्दयुतैः क्वाथो विस्फोटार्त्तिज्वरापहः ॥ १३ ॥
पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः ।
समूर्व्वा रोहिणी पाठा रजनी सदुरालभा ॥
कषायं पाययेदेतत् श्लेष्मपित्तज्वरापहम् ।
कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥
भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः ।
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत् कषायः ॥
सकफे पित्तयुक्ते तु त्रिफलां योजयेत् पुरैः ।
दुरालभां पर्पटकं पटोलं कटुकान्तथा ॥
सोष्णं गुग्गलुसंमिश्रं पिवेद्वा खदिराष्टकम् ॥ १४ ॥

---

विरेके कर्त्तव्ये प्रक्षेपमानापेक्षया द्वैगुण्येनेत्याहुः ॥ ११ ॥

अमृतेत्यादौ ।— असितवेत्रं कालियालता तस्य मूलं, अत्रापि विरेके कर्त्तव्ये गुग्गुलुं प्रक्षिपन्ति वृद्धाः ॥ १२ ॥

पटोलेत्यादिना विस्फोटचिकित्सामाह ॥ १३ ॥

पटोलत्रिफलेत्यादौ समूर्व्वा रोहिणी पाठा रजनी सदुरालभेत्यतः परं एभिरिति शेषः तेन एभिः कृतं कषायं पाययेदित्यर्थः । त्रिफलां योजयेत् । पुरैरिति त्रिफलाक्वाथे गुग्गुलुः प्रक्षेपः । दुरालभामित्यादावपि दुरालभादीनां क्वाथे गुग्गुलुः प्रक्षेपः । सोष्ण इति सह शब्दः ईषदर्थे । खदिराष्टकं मसूर्य्यां वक्ष्यमाणं इदमपि गुग्गुलुयुतमेव ॥ १४ ॥

कुण्डली पिचुमर्दाम्बुखदिरेन्द्रयवाम्बु वा।
विस्फोटं नाशयत्याशु वायुर्जलधरानिव ॥
चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे।
शिरीषवल्कलं जातीलेपः स्याद्दाहनाशनः ॥ १५ ॥
शुक्रतरुनतमाची रजनी पद्मा च तुल्यानि।
पिष्ट्वा निशीततोयेन लेपः स्यात् सर्व्वविस्फोटे ॥ १६ ॥
शिरीषमूलमञ्जिष्ठाचव्यामलकयष्टिकाः।
सजातीपल्लवक्षौद्रा विस्फोटे कवड़ग्रहाः ॥
शिरीषोडुम्बरौ जम्बु सेकालेपनयोर्हिताः।
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः ॥ १७ ॥

दशाङ्गः।

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठबालैः।
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकुष्ठज्वरशोथहारी ॥ १८ ॥

चतुःसमम्।

शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद्द्रुतम्।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ १९ ॥

---

कुण्डलीत्यादि।— योगद्वयं कुण्डली गुड़ूची अम्बु क्वाथः चन्दनमित्यादौ शारिवा अनन्तमूलं जातप्रास्तु पत्रम् ॥ १५ ॥

शुक्रतर्व्वित्यादि।— वाभटस्य। शुक्रतरुः शिरीषः नतं तगरपादिका। माची देवदारु। पद्मा ब्राह्मणयष्टिका ॥ १६ ॥

शिरोषेत्यादि।— शिरीषमूलेत्यत्र शिरीषपूगेति पाठे पूगं पूगमूलम्। अत्र बहुवचननिर्द्देशात् प्रत्येकमप्येते कवड़े योज्या इति वदन्ति। जातीपत्रं क्षौद्रञ्च सर्व्वत्र ज्ञेयम्। आश्च्योतनं सर्व्वत्र चक्षुषि द्रवौषधिदानम् ॥ १७ ॥

शिरीषेत्यादौ।— यष्टि यष्टिमधु बालं ह्रीवेरम् ॥ १८ ॥

वृषाद्यं घृतम् ।

वृषखदिरपटोलपत्रनिम्बत्वगमृतामलकीकषायकल्कैः ।
घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदान् सकुष्ठगुल्मान् ॥२०॥

पञ्चतिक्तघृतम् ।

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम् ।
तत् पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डू ॥२१॥

पद्मकं घृतम् ।

पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम् ।
द्वे हरिद्रे विडङ्गानि सूक्ष्मैला तगरं तथा ॥
कुष्ठं लाक्षा पत्रकञ्च चिकुथकं तुल्यमेव च ।
वज्रक्षारः शिरीषश्च कपित्थफलमेव च ॥
तोयेनालोड्य तत् सर्वं घृतप्रस्थं विपाचयेत् ।
यांश्च रोगान्निहन्त्याशु तान्निबोध महामुने ॥
सर्पकीटाखुदष्टेषु लूतान्त्रक्षतेषु च ।
विविधेषु स्फोटकेषु तथा कुष्ठविसर्पिषु ॥
नाड़ीषु गण्डमालासु प्रभिन्नासु विशेषतः ।

---

शिरीषेत्यादौ ।— नागाह्वं नागकेशरचूर्णं किंवा काला-कड़ा ॥ १८ ॥

वृषाद्यघृते ।— निम्बत्वगमृतामलकीकषाय कल्कैरित्यस्य स्थाने छन्दःपूरणार्थं निम्बत्वगमृताधात्रीकल्कयुक्तमिति केचित् पठन्ति । अन्ये तु त्वगमृता कामलकीति पठन्ति कश्चित्तु तामलकीपाठः तन्न व्यवहाराभावात् ॥ २० ॥

पञ्चतिक्तघृते त्रिफलायाश्च कल्कः शेषाणाञ्च कषाय इति व्यवहरन्ति वृद्धाः ॥ २१ ॥

भगस्त्रविहितं धन्यं पद्मकन्तु मयाहृतम् ॥ २२ ॥
रोगस्तु स्नायुकाख्योयः क्रिया तत्र विसर्पवत् ।
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥
पिबेत् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ।
शोभाञ्जनमूलदलैः काञ्जिकपिष्टैः सलवणैर्लेपः ॥
हन्ति स्नायुकरोगं यद्वा मोचकत्वचोलेपः ॥ २३ ॥
इति विसर्पविस्फोटचिकित्सा ।

---

पद्मकष्टते ।— नागपुष्पस्य केशरमिति नागकेशरचूर्णमित्यर्थः ॥ २२ ॥

स्नायुकचिकित्सामाह रोगस्त्वित्यादि । स्नायुकरोगो लेहेड़िया नाम्ना पश्चिमदेशे ख्यातः । अयञ्च वृन्दमाधवेनोक्तः । चन्द्रेन पुनरुक्तो यथा — शाखासु कुपितोवायुः शोफं कृत्वा विसर्पवत् । भित्त्वैव तं क्षते तत्र सोष्मा मांसं विशोष्य च । कुर्य्यात्तन्तुनिभं सूत्रं तत् पिण्डैस्तक्रयकृजैः । क्षिप्तं शनैः क्षतादेति छेदात्तत्कोपमावहेत् । तत्पातात् शोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत् । रोगः स्यात् स्नायुकोनाम्ना तन्तुकश्च प्रकीर्त्तित इति । शाखास्विति अङ्गादिषु, तदिति सूत्रं, तक्रयकृजैः पिण्डैर्लिप्तं सत्क्षतादेति निःसरति । छेदादिति कदाचिदभिघातादिना सूत्रस्य स्वयमेव पातनात् । पिबन्निश्चत पीत इति पाठे कर्त्तरि क्तः । मोचत्वचोलेप इति मोचं कदलीफलं तस्य त्वक् ॥ २३ ॥

इति विसर्पविस्फोटाधिकारः ।

## अथ मसूर्य्यधिकारः ।

सर्व्वासां वमनं पथ्यं पटोलारिष्टवासकैः ।
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥
सक्षौद्रं पाययेद्‌ब्राह्म्या रसं वा हैलमोचिकम् ।
वान्तस्य रेचनं देयं शमनञ्चाबले नरे ॥
सुषवीपत्रनिर्य्यासं हरिद्राचूर्णसंयुतम् ।
रोमान्तीज्वरविस्फोटमसूरीशान्तये पिवेत् ॥
उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः ।
निर्व्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ १ ॥
कण्टाकुष्माण्डमूलं कथनविधिकृतं हिङ्गुमाषैकयुक्तम् ॥
पीतं वीजं जयायाः सघृतमुषितवाः पीतमङ्घ्रिः शिवछ्याः ॥

---

विस्फोटभेदात् प्रायस्तुल्यचिकित्सितत्वाच्च मसूरीचिकित्सितमुच्यते । सर्व्वासामित्यादि । वासकैरित्यत्र कृतैरिति शेषः । कषायैरित्यनेन सामानाधिकरण्यं न विरुध्यते । वत्सकः इन्द्रयवः । फलं मदनफलम् । सक्षौद्रमित्यादि रसमिति स्वरसम् । एतच्च वामकं विरेचकञ्च । सुषवी कारवेल्लं, एतद्रसोऽप्युभ अ गदरः । उभाभ्यामिति वमनविरेचनाभ्याम् ॥ १ ॥

मुष्टी प्रयोगमाह ।—कण्टेत्यादि कण्टा कुष्माण्डलता स्वनामख्याता । हिङ्गुमाषैकयुक्तं पीतमिति पूर्व्वेण सम्बध्यते । वीजं जयायाः सघृतमुषीतवाः पीतमिति द्वितीयो योगः । जया जयन्ती अस्याश्च वीजं उपदेशादेकाधिकषड्गण्डकं सघृतं पर्य्युषितजलेन पीतमित्याहुः, ये तु उषितवाः पीतमिति पदं जयावीजमित्यनेन सह न योजयन्ति तन्मते पीतमिति नपुंसकनिर्द्देशो नोपपद्यते इति साकाङ्क्षविशेषणाभावेन योजना कष्टकल्पनैव । अङ्घ्रिः शिवछ्या इति । तृतीयो योगः शलाप्य-

माध्या मूलं शिफा वा मदनकुसुमजासोषणा वाय पूतिः।
योगावाश्वबुनेते प्रमथमथगदे हश्यमाने प्रयोज्याः ॥ २ ॥
उद्धृत्य मुष्टिमाच्छाद्य भेषजं यत् प्रयुज्यते।
तन्मुष्टियोगमित्याहुर्मुष्टियोगपरायणाः ॥
उष्ट्रकण्टकमूलं वाप्यनन्तामूलमेव वा।
शिधिमृद्धोतं ज्येष्ठाम्बुपीतं हन्ति मसूरिकाम् ॥
तद्वच्छृगालकण्टकमूलञ्च व्युषिताम्भसा ॥ ३ ॥
मसूरीं मूर्च्छिता हन्ति गन्धकार्द्धस्तु पारदः ॥ ४ ॥
निशाचिञ्चाच्छदे शीतवारिपीते तथैव तु ॥ ५ ॥

---

षितवाः पीतमिति विल्वविपरिनामेन सम्बध्यते। चक्रि रिति-मूलं सिन्नटी खनामख्याता। माध्या चपि तथैव च। मघा गुवाकस्य मूलम्। सोषणा समिरचा। एतञ्च पूतिरित्यनेनैव सम्बध्यते पूतिश्च चट्टासिका। अन्ये तु मदनकुसुमजा शिफा सोषणा, पूति खटाकरञ्जोपि सोषणा इति वदन्ति। अत्र मरिचमेनाधिकषड्गुणकमित्युपदिशन्ति। प्रमथः पापरोगः मसूरीपर्य्याय एव ॥ २ ॥

मुष्टियोगस्वरूपमाह उद्धृत्येत्यादि। उष्ट्रकण्टकं खनामख्यातम्। डङ्कुर इति केचित् ॥ ३ ॥

मूर्च्छित इति कज्जलीकृतः शोधितगन्धकः कर्ष १ शोधितरस मा ८ कज्जली कर्त्तव्या अतोमाषकचतुष्टयं षट्कं वा पर्णे कृत्वा खाद्यमिति व्यवहारः ॥ ४ ॥

निशेत्यादौ। छदशब्दस्य नपुंसकत्वं छान्दसत्वात् किम्वा निशाचिञ्चाच्छदाविति पाठः। द्विवचनदर्शनात् पत्रद्वयं ग्राह्यमिति केचित् ॥ ५ ॥

यावत्संख्या मसूर्य्यङ्के तावद्भिः श्वेतुलैर्जलैः ।
छिन्नैरातुरनाम्ना तु गुणोव्येति न वर्द्धते ॥
व्युषितं वारि सक्षौद्रं पीतं दाहगुणोदयम् ॥ ६ ॥
श्वेतुलत्वक्कृतशीताम्भः सेकं वा कायशोषणे ॥ ७ ॥
उग्राज्यवंशनीलीयवदृषकार्पासकीकसब्राह्मी
सुरसमयूरकलाक्षाधूपो रोमान्तिकादिहरः ॥
तर्पणं वातजायां प्राक् लाजचूर्णैः सशर्करैः ।
भोजनं तिक्तयूषैश्च मद्गुदानां रसेन वा ॥ ८ ॥
द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा ।
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम् ॥
गुडूचीं मधुकं रास्नां पञ्चमूलं कनिष्ठकम् ।
चन्दनं काश्मर्य्यफलं बलामूलं विकङ्कतम् ॥
पाककाले मसूर्य्यास्तु वातजायां प्रयोजयेत् ॥ ९ ॥

---

यावदित्यादौ । श्वेतुर्ब्बङ्कवारः, मसूरिकां गणयित्वा तावत् संख्यया आतुरनाम्ना मलाणि छिन्द्यादित्यर्थः ॥ ६ ॥

श्वेतुलत्वगित्यादौ ।— शीताम्भः शीतकषायः, कायशोषणमिति उच्छूनगात्रप्रदेश शोषणनिमित्तमित्याहुः । कायशोधनमिति पाठे शरीरमलक्लेदनिरासार्थमित्यर्थः किम्वा कायशब्देनोपचारान्मसूरिकैवोच्यते ॥ ७ ॥

उग्रेत्यादि ।— उग्रा वचा, वृषस्य वासकस्य मूलं, कार्पासकीकसं कार्पासास्थि, सुरसः पर्णासः मयूरकोऽपामार्गः । तर्पणमिति द्रवे यालोड़िताः शक्तवः । तिक्तयूषैरिति तिक्तद्रव्यकृतयूषैः मद्गुदाः पारावतादयः ॥ ८ ॥

द्विपञ्चमूलमित्यादि ।— योगोऽयं क्वाथेन एवं गुड़ूच्यादिकमपि ॥ ९ ॥

द्राक्षाकाश्मर्य्यखर्ज्जुरपटोलारिष्टवासकैः ।
लाजामलकदुःस्पर्शैः सितायुक्तैश्च पैत्तिके ॥
शिरीषोडुम्बराश्वत्थश्लेष्मान्यग्रोधवल्कलैः ।
प्रलेपः सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥
दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम् ।
स्नैग्धिक्यां पित्तजायां वा पाने निःक्वाथ्य दापयेत् ॥

निम्बादि ।

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम् ।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥
एष निम्बादिकः ख्यातः पीतः शर्करया युतः ।
हन्ति त्रिदोषमसूरीं ज्वरविसर्पसम्भवाम् ॥
उत्थिता प्रविशेद्या तु पुनस्तां बाह्यतो नयेत् ॥
पटोलकुण्डलीमुस्तवृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥
मसूरीं शमयेदामां पक्वाश्चैव विशोषयेत् ।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥ १० ॥
पटोलमूलारुणतण्डुलीयकं पिबेद्धरिद्रामलकल्कसंयुतम् ।
मसूरिकास्फोटविदाहशान्तये तदेव रोमान्तिवमिज्वरापहम् ॥
पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम् ।
पिबेज्जलं सुक्वथितं सुशीतलं मसूरिकारोगविनाशनं परम् ॥ ११ ॥

---

द्राक्षेत्यादौ ।— सितायुक्तमित्यनन्तरं कषायमितिशेषः । निम्बादिरपि क्वाथविधयादेयः । पटोलेत्यादौ — कुण्डली गुडूची, यवासः दुरालभा ॥ १० ॥

पटोलमूलेत्यादि ।— क्वाथे हरिद्रामलकचूर्णं प्रक्षिप्य अनुलोमनार्थं पिबेत् । अरुणतण्डुलीयकं लोहिततण्डुलीय-

खदिराष्टकः ।

खदिरत्रिफलारिष्टपटोलाश्चतवासकैः ।
क्वाथोऽष्टकाङ्गो जयति रोमान्तिकमसूरिकाः ॥
कुष्ठवीसर्पविस्फोटकण्ड्वादीनपि पानतः ॥ १२ ॥
अमृतादिकषायस्तु जयेत् पित्तकफात्मिकाम् ।
सौवीरेण तु संपिष्टं मातुलुङ्गस्य केशरम् ॥
प्रलेपात् पातयत्याशु दाहश्चाशु नियच्छति ।
पाददाहं प्रकुरुते पिड़कापादसम्भवा ॥
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना ॥ १३ ॥
पाककाले तु सर्व्वासां विशोषयति मारुतः ।
तस्मात् संवृंहणं कार्य्यं न तु पथ्यं विशोषणम् ॥ १४ ॥
गुडूचीमधुकं द्राक्षा मोरटं दाड़िमैः सह ।
पाककाले तु दातव्यं भेषजं गुड़संयुतम् ॥
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ।

---

कम् । धात्रीखदिरेण संयुतमिति धात्रीखदिरावपि पटोलम-
स्तावपातगड्डूचीयाभ्यां सह कथनीयौ ॥ ११ ॥

खदिरेत्यादौ ।— अष्टकाङ्ग इति खदिराष्टक इति संज्ञा
अत्र शोधने कर्त्तव्ये गुग्गुलमपि प्रक्षिपन्ति ॥ १२ ॥

अमृतादि कषायो विसर्पोक्तोदशद्रव्यस्तस्यैव मसूरीहरत्व-
श्रुतेः न तु ज्वराधिकारोक्तोऽमृतादिरिति । सौवीरेणेति का-
ञ्जिकेन ॥ १३ ॥

पाककाले वायुप्रशमनार्थं वृंहणाहारमाह पाकेत्यादि ।—
विशोषणेन पाकोन्मुखस्य दोषस्यान्तःप्रवेशाद्बलाधिकं स्यादिति
भावः ॥ १४ ॥

गुड़ूचीत्यादौ मोरटमिक्षुमूलं एषां क्वाथः गुड़स्तु प्रक्षेप्य ।

त्रिफेडा बादरं चूर्णं पाचनार्थं गुडेन तु ॥
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः।
शूलाध्मानपरीतस्य कम्पमानस्य वायुना ॥
धन्वमांसरसाः शस्ताः ईषत्सैन्धवसंयुताः।
दाड़िमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः ॥
पिबेदम्भस्तप्तशीतं भावितं खदिरासनैः।
शौचे वारि प्रयुञ्जीतगायत्रीबहुवारजम् ॥
जातीपत्रं समञ्जिष्ठं दार्व्वीपूगफलं शमीम्।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते।
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ १५ ॥
मधुकं त्रिफला मूर्व्वा दार्व्वीत्वङ्नीलमुत्पलम्।
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ॥
नश्यन्त्यनेन दृग्जाता मसूर्य्यो न द्रवन्ति च ॥ १६ ॥
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत्।

---

धन्वमांसरसा इति जाङ्गलपक्षिमांसरसाः। पिबेदम्भस्तप्तशीत मित्यर्द्धश्रृतं शीतञ्च एवं वक्ष्यमाणयोगेऽपि। भावितं खदिरा-सनैरिति खदिरासनैः साधितं क्वाथमित्यर्थः। असनः पीत-शाल असनएव इत्यन्ये। गायत्री खदिरः। गवेधुमधुकाम्बु-नेति।— गवेधुकोगुल्मश्च अनयोः कल्कं कर्पटे बद्धा प्रपीड्या-क्षिसेकः कार्य्यः ॥ १५ ॥

मधुकमित्यादौ।— हिता इति बहुवचननिर्द्देशात् व्यस्तैः समस्तैर्मधुकादिभिः प्रलेपः। अर्द्धस्तैश्च तैराश्च्योतन-मित्याहुः। आश्च्योतनं परिषेकः ॥ १६ ॥

भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥
क्रिमिपातभयाच्चापि धूपयेच्छरलादिना ।
वेदनादाहनाशार्थं स्रुतानाञ्च विमुक्तये ॥
सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ।
कृष्णाभयारजोलिह्यान्मधुना कण्ठशुद्धये ॥ १७ ॥
अथाष्टाङ्गावलेहोवा कवड़श्चार्द्रकादिभिः ।
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ॥
कुर्य्याद्व्रणविधानञ्च तैलादीन् वर्ज्जयेच्चिरम् ।
विषघ्नैः सिद्धमन्त्रैश्च मन्त्रज्याच्च पुनः पुनः ॥
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ १८ ॥
निशाद्वयोशीरशिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः ।
संस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥
विम्ब्यतिमुक्तकाऽशोकप्लक्षवेतसपल्लवैः ।
निशि पर्य्युषितः क्वाथो मसूरीभयनाशनः ॥
मसूरीस्फोटयोरन्ते कूर्परे मणिबन्धके ।
मुखांशफलके शोथो जायते यः सुदारुणः ॥
व्रणशोथहरैर्योगैर्ज्ञातघ्नैश्च जलौकसा ।

---

पञ्चवल्कलेत्यादौ । केचिदनौ केचयुक्ता मसूरौ भस्मनेति शुष्कगोमयभस्मना । गोमय रेणुनेति गोमयचूर्णेन वस्त्रका-नितेन । सरलादिभिरिति, सरलागुरुगुग्गुलुप्रभृतिभिः । सगु-ग्गुलुमित्यादि ।— गुग्गुलुमित्युभयत्रापि सम्बध्यते ॥ १७ ॥

अष्टाङ्गावलेहार्द्रकादिकवड़ौ ज्वराधिकारोक्तौ । पञ्चतिक्त-घृतं कुष्ठोक्तम् ॥ १८ ॥

निशाद्वयेत्यादौ ।— भद्रश्रियं श्वेतचन्दनम् । विम्बी-त्यादि ।— विम्बी डुमरीति श्रीकण्ठः । अतिमुक्तकोमाधवी-

हन्तव्यस्तैलभृष्टस्य वृश्चिकस्यावलेपनैः ॥
चैत्रासितभूतदिने रक्तपताकान्विताम्बुजीभवने।
धवलितकलसन्यस्ता पापरजोदूरतोऽस्ते ॥ १८ ॥
इति मसूरीचिकित्सा।

## अथ क्षुद्ररोगाधिकारः।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ॥ १ ॥
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः।
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ॥

लता। योगोऽयमनागतमसूरीनिवारणार्थं चैत्रे मासि पेयः
चैत्रासितभूतदिन इति चैत्रकृष्णचतुर्दश्याम् ॥ १८ ॥
इति मसूर्य्यधिकारः।

विसर्पादीनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षुद्रहेतुलक्षणचिकित्सितानां रोगाणां पारिशेष्यात् क्षुद्ररोगचिकित्सितमुक्तम्। ननु यदि क्षुद्रत्वमेषां हेतुलक्षणचिकित्सितात्पत्वेन तर्हि अग्निरोहिणीवल्मीकादीनां त्रिदोषजत्वेन हेत्वादिबाहुल्यात् तत् कथं क्षुद्रत्वं नैवं बाहुल्येन तच्छब्दात् छत्रिणो गच्छन्तीतिवत् किंवा वान्तरभेदविरहत्वं क्षुद्रत्वं ये नात्र वक्तव्यानामजगल्लिकादीनां न दोषदूष्यादिकृतभूरिसङ्ख्याभेदेन व्रणज्वरादिवन्निर्द्देशः किन्तु प्रत्येकं स्तोकसंख्ययाभिधानं तेषाम्। अजगल्लिका आचलीति लोके आमामित्यपक्कां वाभटेऽपि अपक्कामित्युक्तम् ॥ १ ॥

शुक्तीत्यादि शुक्तिर्मुक्तोत्पत्तिभाण्डं सौराष्ट्रिका सौराष्ट्र-

श्लेष्मविद्रधिकल्पेन जयेदगुग्रयौं भिषक् ।
विहतामिन्द्रहृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ॥
इरिवेल्लिं गन्धमाला जयेत् पित्तविसर्पवत् ।
मधुरौषधसिद्धेन सर्पिषा शमयेद्व्रणान् ॥
रक्तावसेकैर्ब्बङ्कभिः स्वेदनैरपतर्पणैः ।
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥
पनसिकां कच्छपिकामनेन विधिना भिषक् ।
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान् ॥
अन्त्रालजीं कच्छपिकां तथा पाषाणगर्द्दभम् ।
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत् ॥
कफमारुतशोथघ्नोलेपः पाषाणगर्द्दभे ।
शास्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ॥ ६ ॥

---

वत्, सुश्रुते तु सौराष्ट्रीस्थाने स्फटिका,पठ्यते स्फटिका सर्ज्जि-क्षारः। क्षारोयवक्षार इति। क्षारयोगैरिति घण्टापारल्या-दियोगैः। मधुरौषधं काकोल्यादिगणः। व्रणानिति विहतादी-नेव गन्धमालान्तान् पाकेन व्रणभावमापन्नान् मधुरौषधसि-द्धेन सर्पिषा शमयेदित्यर्थः। सुश्रुतेऽप्युक्तं विहतामिन्द्रहृद्धां गर्द्दभिकां जालगर्द्दभमिरिवेल्लिकां गन्धमालां विस्फोटकञ्च पित्तविसर्पविधानेनोपाचरेत्। पक्वांश्च मधुरौषधसिद्धेन सर्पि-षेति। रक्तावसेकैरित्यादिना विदारिकाचिकित्सा। अनेन विधानेनेति विदारिकोक्तेन। अन्यान् शोथानिति पाषाणग-र्द्दभादीन्। दोषसम्भवानिति योग्यतया कफवातजान् साध-येत्। पाषाणगर्द्दभो "गाणठाङ्गया" इति ख्याता ॥ २ ॥

मनःशिलेत्यादौ ।— आलं हरितालं निम्बतैलमिति निम्बवीजभवतैलम्। वङ्कक्षवमिति वङ्कक्षावम्। सुश्रुते आल-स्थाने पिप्पली योगादप्ययं योगः पठितः।

मनःशिलालमञ्जातसूक्ष्मैलागुरुचन्दनैः।
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत् ॥
वल्मीकं नाशयेत् तद्धि बहुच्छिद्रं बहुस्रवम्।
पाददारीषु च शिरां व्यधयेत्तलशोधनीम् ॥
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः।
मधूच्छिष्टवसामज्जघृतक्षारैर्विमिश्रितैः ॥ ३ ॥
सर्ज्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृतासुतम्।
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्ज्जनम् ॥

उपोदिकाक्षारतैलम्।

उपोदिकासर्षपनिम्बमोचककारुकैर्वारुकभस्मतोये।
तैलं विपक्वं लवणांशयुक्तं तत् पाददारीं विनिहन्ति लेपात्॥४॥

---

तलशोधनमिति पादतलगामिनीं स्नेह स्वेदोपपन्नावित्यनन्तरं कृत्वेति शेषः। अन्ये तु शिराव्यधाङ्गीभूतस्नेहस्वेदौ कृत्वा शिरां व्यधयेदिति बोध्यम्। एवमन्तरेण शिराव्यधस्यापत्तौ स्नेहस्वेदोपपन्नावित्यादिना तु पश्चात् कर्म्मोपदेशः दोषक्षयार्थं रक्तास्रुतिजनितवातक्षयार्थं वेति आलेपयेन्मधूच्छिष्टादिभिरित्यन्वयः। अत्र क्षीरविमिश्रितैरित्यपपाठः, सुश्रुते यवक्षारैरिति पाठात् ॥ ३ ॥

सर्ज्जेत्यादि।— सर्ज्जो धूनकः, तैलाक्तमिति कटुतैलयुक्तं यथास्यात्तथा पादप्रमार्ज्जनार्थं किम्वा चूर्णविशेषणम् ॥

उपोदिकेत्यादि,— उपोदिकानालं ग्राह्यं मोचकः कदलीकण्टः, कारुकः कुष्माण्डभेदः; एर्व्वारुः कर्कटी, अनयोर्नाड़ी एषां क्षारोदके चतुर्गुणे सैन्धवकल्केन तैलं पक्तव्यम्। लेपादित्यतिघनत्वात्। अलसः पाकोमाना इति ख्यातः। अम्लैरिति काञ्जिकैः अरिष्टनिम्बः ॥ ४—५ ॥

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत् ।
पटोलारिष्टकाश्मीर्य्यत्रिफलाभिर्मुहुर्मुहुः ॥
करञ्जवीजं रजनी काश्मीर्य्यं मधुकं मधु ।
रोचनाहरितालञ्च लेपोऽयमलसे हितः ॥ ५ ॥
लाक्षाभयारसालेपः कार्य्यं वा रक्तमोक्षणम् ।
जातीपत्रञ्च संमर्द्य दद्यादलसके भिषक् ॥
वृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान् ।
शिलारोचनकाशीशचूर्णैर्व्वा प्रतिसारयेत् ॥
दहेत् कदरमुत्कृत्य तैलेन दहनेन वा ।
चिप्पमुष्णाम्बुना स्विन्नमुत्कृत्याभ्यज्य तं व्रणम् ॥
दत्त्वा सर्जरसं चूर्णं बद्धा व्रणवदाचरेत् ।
स्वरसेन हरिद्रायाः पात्रे कृष्णायसे भयाम् ॥
घृष्टा तज्जेन कल्केन लिम्पेच्चिप्पं पुनः पुनः ॥ ६ ॥
चिप्पे सटङ्कणास्फोतामुललेपोमयप्रदः ।

---

लाक्षेत्यादौ ।— रसो गन्धरसः । वृहतीत्यादि ।- वृहती कण्टकारी तस्याः स्वरसः, तैलञ्च सार्षपं सुश्रुतसम्वादात् । प्रतिसारयेदिति घर्षयेत् । दहेदित्यादि कदरं शस्त्रेणोत्कृत्य तप्ततैलेन दहनेन वा दहेदित्यर्थः । दहनेनेत्यत्र मदनेनेति पाठे मदनः सिक्थकः तेनापि तप्तेन । चिप्पमिति चिप्पमिह कुनखमभिप्रेतं नत्वङ्गुलीवेष्टनम् । उक्तरूपचिकित्सायास्तत्रानार्हत्वादिति केचित् उष्णाम्बुना स्वेदनमिह मार्द्दवजननार्थं मृदुत्वे सत्येव कुनखोत्कर्त्तनं कर्त्तुं शक्यमिति । बद्धेति व्रणोक्तबन्धनविधिना व्रणवदाचरेदिति व्रणहितैराचारादिभिरित्यर्थः । कान्तलौहपात्रे ॥ ६ ॥

निम्बोदकेन वमनं पद्मिनीकण्टके हितम् ॥
निम्बोदकक्षतं सर्पिः सक्षौद्रं पानमिष्यते।
पद्मनालकृतः क्षारः पद्मिनीं हन्ति लेपतः॥
निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम्।
नीलीपटोलमूलाभ्यां साज्याभ्यां लेपनं हितम् ॥
जालगर्द्दभरोगे तु सद्यो हन्ति च वेदनाम्।
अहिपूतनके धात्र्याः पूर्व्वं स्तन्यं विशोधयेत् ॥
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा ॥ ७ ॥
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥
गुदभ्रंशे गुदं स्नेहैरभ्यज्याशु प्रवेशयेत्।
प्रविष्टे स्वेदयेच्चापि वस्त्रं गोष्मणया भृशम् ॥
कोमलं पद्मिनीपत्रं यः खादेच्छर्कराम्बितम्।
एतन्निश्चित्य निर्द्दिष्टं न तस्य गुदनिर्गमः ॥

---

पिटस्य इत्यादौ आस्फोता आस्फोरमाली, योगोऽयं व्यस्तसमस्ततया व्यवह्नीयते वृद्धैः। निम्बोदकेन निम्बक्वाथेन मदनफलादियुक्तेनेत्याहुः।

निम्बेत्यादि।— निम्बारग्वधकषायश्चोत्सादन इति यत् सुश्रुतेनोक्तं अत्रापि कषायशब्दस्य कल्क एवार्थः नीली नीलवृक्षा। स्तन्यं विशोधयेदिति पित्तश्लेष्महरैः स्तन्यशोधनद्रव्यैरित्यर्थः। उक्तं हि तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैरिति ॥ ७ ॥

करञ्जेत्यादौ।— तिक्तश्चरकोक्तस्तिक्तकगणः। अन्ये तु पटोलपत्रमाहुः। गुदभ्रंश इत्यादौ स्नेहैरिति बहुवचनात् चतुर्भिरेव स्नेहैरित्यर्थः किम्बा गव्यवसया स्वेदयेदिति वक्ष्य-

वृषाम्लानलचाङ्गेरीबिल्वपाठायवाग्रजम् ।
तक्रेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम् ॥
गुदञ्च गव्यवसया म्रक्षयेद्विशङ्कितः ।
दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः ॥
मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम् ।
स्विन्नमूषिकमांसेन चाथवा स्वेदयेद्गुदम् ॥ ८ ॥

चाङ्गेरीघृतम् ।

चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् ।
घृतमुत्कथितं पेयं गुदभ्रंशरुजापहम् ॥
शुण्ठीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते ॥ ९ ॥

मूषिकाद्यं तैलम् ।

क्षीरे महत्पञ्चमूलं मूषिकामन्त्रवर्ज्जिताम् ।

---

मात्रायोगदर्शनादिति अत्रापि स्नेहशब्देन गव्यवसैव ग्राह्या गोस्तथा ह्यविशेषः स हि सुश्रुते व्रणालेपबन्धविधौ व्यक्तः । उक्तं हि वर्च्चो गमनार्थं सच्छिद्रेण चर्म्मणास्य कौपीनबन्धः कार्य्य इति । वृषाम्लं महार्द्रकम् । अनलश्चित्रकः एषां कल्कं तक्रेण पिबेत् । स्विन्नमूषिकमांसेनेत्यत्र काञ्जिकेन स्विन्नं घृतेन भृष्टमित्याहुः ॥ ८ ॥

चाङ्गेरीघृते चाङ्गेर्य्याः स्वरसः, कोलस्य शुष्कबदरस्य क्वाथः अम्लं दधि दध्यम्लम् । एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यं किम्वा चाङ्गेरी स्वरसः स्नेहसमः । स्वरसे क्षीरवद्विधिरिति वचनात् । दधिकोलरसौ तु मिलित्वा त्रिगुणौ पूर्ब्बेण व्यवहारः । नागरक्षारौ कल्कौ ॥ ९ ॥

क्षीर इत्यादौ ।— मूषिकाशुड़कमेकं ग्राह्यं पञ्चमूलस्य

पक्वा तस्मिन् पचेत्तैलं वातघ्नौषधसाधितम् ॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत् ॥ १० ॥
स्वेदोपनाहं परिकर्त्तिकायां कृत्वा समभ्यज्य घृतेन पश्चात् ।
प्रवेशयेद्यो शनैः प्रविष्टे मांसैः सुखोष्णैरुपनाहयेच्च ॥
स्वेदस्तथैवैनां चिकित्सेदवपाटिकाम् ।
निरुद्धप्रकशेनार्ड्रां इक्षुखौ कनकादिनाम् ॥
छिन्नाभ्यक्ता चुक्रकादिस्नेहेन परिषेचयेत् ।
तैलेन वा वचादारुगन्धैः छिन्नेन च त्यक्तात् ॥
पुनः स्थूलतरा नाडी देयास्रोतोविवृद्धये ।

---

मिलित्वा प्रस्थ एकः, क्षीरस्यापि प्रस्थ एकः, तोयस्य प्रस्थ-द्वयम् । एवं मिश्रणाय शेषः क्षीरप्रस्थः स्थाप्यः अनेन तैलकुडवः साध्य इति कश्चित् । अन्ये तु द्रवद्यादष्टगुणं क्षीरं साधयित्वा चतुर्गुणम् । क्षीरमित्यादिपरिभाषया क्षीरं साधयित्वा चतुर्गुणेन तैलकुडवः साध्य इत्याहुः । चक्रस्त्वाह अन्त्रवर्जितामिति ग्रहणयोग्यतोपदर्शनार्थं तेन मूषिकमांसस्य पलान्यष्टौ पञ्चपलस्यापि क्षीरस्य प्रस्थः तोयस्य प्रस्थत्रयः शेषः क्षीरप्रस्थः, तेन कुडवः साध्यः एवमन्यत्रापि पक्वेन क्षीरेण स्नेहसाधने एषैव व्यवस्थेति व्यवहारप्रायः प्रथमव्याख्यैव । वातघ्नौषधं भद्रदार्व्वादिगणः स च कल्कः ॥ १० ॥

स्वेदेत्यादौ परिकर्त्तिकायां सर्पिषा अभ्यज्य अनन्तरं वातघ्नैर्माषादिभिः स्वेदं कृत्वा शाल्वणादिना च उपनाहनं कृत्वा च परिवर्त्तितं चर्म यथोक्तस्वेदादिना मृदुभूतं प्रवेशयेत् अभ्यन्तरं नयेदित्यर्थः । प्रविष्टे च सुखोष्णैर्मांसैरुपनाहयेत् । सुश्रुतेऽप्येवमेवोक्तम् । तथैवैनामित्यनेनावपाटिकायामप्युपनाहं चर्म्मा-वनयनञ्चातिदिशति ।

शस्त्रेण सेवनीं त्यक्त्वा भित्त्वा व्रणवदाचरेत् ॥
स्निग्धञ्च भोजनं बद्धे गुदेऽप्येष क्रियाक्रमः ।
चर्म्मकीलं जतुमणिं मसकांस्तिलकालकान् ॥
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ।
ववुनालस्य चूर्णेन घर्षोमसक्नाशनः ॥
निर्म्मोकभस्मघर्षाद्वा मसः शान्तिं व्रजेत् सदा ।
युवानपिड़कान्यच्छनीलिकाव्यङ्गशर्कराः ॥
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ।
लोध्रधान्यवचालेपस्तारुण्यपिड़कापहः ॥
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपतः ।
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ॥
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम् ॥ ११ ॥

---

निरुद्धेत्यादौ कनकादीत्यादिना शस्त्रपूतप्रभृतीनां ग्रहणम् । चुच्चुकी शुशू इति ख्यातो जलजन्तुः । आदिशब्दात् वराहादयः । नाड्यादित्यत्र वीप्सा बोध्या तेन नाड्यात्' त्यहात् प्रागुक्तनाड्यपेक्षया पुनः पुनः स्थूलतरा नाड़ी देया स्रोतो विशुद्धय इत्यत्र स्रोतोविवृद्धय इति पाठः । यदाह सुश्रुतः एवमस्य स्रोतोद्वारं वर्द्धयेदिति । व्रणवदिति सद्यो व्रणवत् । स्निग्धञ्च भोजनमित्याचरेदित्यनेन सम्बध्यते । सुश्रुतेऽपि "निरुद्धप्रकशे स्निग्धमाहारमुपसेवते" इत्युक्तम् । एष क्रम इति निरुद्धप्रकशोक्तविधिः । जतुमणिर्जडुः । क्षाराग्निभ्यामिति अनवगाढ़क्षारेण अवगाढ़े त्वग्निना । ववुरेरण्डस्तस्यानालेन कृतं यच्चूर्णमिति शङ्ख चूर्णं तेन घर्षोघर्षणमित्यर्थः । निर्म्मोक इति कृष्णसर्पनिर्म्मोकः यूनामाननपीड़का युवानपी-

व्यङ्गेषु चार्ज्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका।
लेपः स नवनीता वा श्वेताश्वखुरजामसी ॥ १२ ॥
रक्तचन्दनमञ्जिष्ठालोध्रकुष्ठप्रियङ्गवः।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥
व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च।
केवलान् पयसा पिष्ट्वा तीक्ष्णान् शाल्मलिकण्टकान् ॥
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम्।
मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोन्वितैः ॥
सप्ताहाच्च भवेत् सत्यं पुण्डरीकदलप्रभम्।
मातुलुङ्गजटासर्पिः शिलागोशकृतोरसः ॥
मुखकान्तिकरो लेपः पिडकातिलकालजित्।
नवनीतगुडक्षौद्रकोलमज्जप्रलेपनम् ॥
व्यङ्गजिद्वटत्वग्वा छागक्षीरप्रपेषिता।
जातीफलककल्कलेपो नीलिव्यङ्गादिनाशनः ॥

---

ङ्क्ता वर्णागम इत्यादिनिरुक्तविधिना वर्णलोपः। धान्यं धनियकम् ॥ ११ ॥

व्यङ्गेष्वित्यादौ — वाभटस्य। समाक्षिकेति अर्ज्जुनत्वक् चापि सम्बध्यते अर्ज्जुनत्वक् वृक्षसम्बन्धादेव स्वयं शुष्का ग्राह्या। श्वेता श्वेतापराजिता, अश्वखुरः अश्वस्य घोटकस्य खुरः, तयोर्मसी भस्म; अन्ये तु धवलघोटकखुरमसीत्याहुः ॥ १२ ॥

रक्तचन्दनेत्यादौ बहुवचनात् वयस्तसमस्तमिति वदन्ति। वटाङ्कुरा अभिनवपत्रमुकुलाः। तीक्ष्णानित्यभिन्नान्। मसूरैरित्यादौ सर्पिषेति विशेषणे तृतीया। पिष्टैरित्यर्थात् पयसैव पिष्टैरित्यर्थः। पिष्टैरित्यत्र भृष्टैरित्यपि केचित् पठन्ति। वाभटेप्युक्तं "क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः।

नायश्च कटुतैलेनाभ्यङ्गोवक्त्रप्रसादनः ॥ १३ ॥
कालीयकोत्पलामयदधिसरवदराखिमध्यफलिनीभिः ।
लिप्तं भवति च वदनं शशिप्रभं सप्तरात्रेण ॥
तुषरहितमसूरयवचूर्णसयष्टीमधुकलोध्रलेपेन ।
भवति मुखं परिनिर्ज्जितचामीकरचारुसौभाग्यम् ॥
रक्षोघ्नशर्व्वरीद्वयं मञ्जिष्ठागैरिकाज्यवत्सपयः ।
सिद्धेन लिप्तमाननमुद्यद्विधुबिम्बवद्विभाति ॥
परिणतदधिशरपुंखैः कुवलयदलकुष्ठचन्दनोशीरैः ।
मुखकमलकान्तिकारी भ्रुकुटितिलकालकान् जयति ॥ १४ ॥

द्विहरिद्राद्यं तैलम् ।

हरिद्राद्वययष्ट्याह्वकालीयककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठापद्मपद्मककुङ्कुमैः ॥
कपित्थतिन्दुकप्लक्षवटपत्रैः पयोन्वितैः ।
लेपयेत् कल्कितैरेभिस्तैलं वाभ्यञ्जनं चरेत् ॥
पिडकं नीलिकाव्यङ्गं तिलकान् मुखदूषिकाम् ।

---

मधुरा इति मातुलुङ्गस्य जटा मूलं शिला मनःशिला कोल-मज्जा वदरमज्जा । वत्सात्वचेति द्वितीयोयोगः ॥ १३ ॥

कालीयकेत्यादौ उत्पलं नीलोत्पलं आमयः कुष्ठं, वदरा-स्थिमध्यं मज्जा, फलिनीप्रियङ्गुः । रक्षोघ्नः श्वेतसर्षपः, आज्यं घृतं, वत्सपयः सिद्धेनेति समासपदं रक्षोघ्नादिसिद्धेन लेपेने-त्यर्थः ।

परिणतेत्यादि ।— परिणतदधि प्रभृतिभिर्लेपः । भ्रुकुटी ललाटे वलीरूपा ॥ १४ ॥

हरिद्रेत्यादौ कुचन्दनं चन्दनभेदः, पद्मं पद्मपुष्पं पद्मकः कपित्थादिभिः प्रत्येकं सम्बध्यते । लेपपक्षे पयसैव पेषणम् ।

नित्यसेवी जयेत् क्षिप्रं मुखं कुर्य्याच्च मनोरमम् ॥ १५ ॥

कणकतैलम्।

मधुकस्य कषायेण तैलस्य कुड़वं पचेत्।
कल्कैः प्रियङ्गुमञ्जिष्ठाचन्दनोत्पलकेशरैः ॥
कणकं नाम तत्तैलं मुखकान्तिकरं परम्।
अभीरुनीलिकाव्यङ्गशोधनं परमर्च्चितम् ॥ १६ ॥

मञ्जिष्ठाद्यं तैलम्।

मञ्जिष्ठामधुकं लाक्षा मातुलुङ्गं सयष्टिकम्।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं तथा ॥
आजं पयस्तद्द्विगुणं शनैर्म्मृद्वग्निना पचेत्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ॥
मुखं प्रसन्नोपचितं वलीपलितवर्ज्जितम्।
सप्तरात्र प्रयोगेन भवेत् कणकसन्निभम् ॥ १७ ॥

कुङ्कुमाद्यं तैलम्।

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम् ॥
न्यग्रोधपादाः प्लक्षस्य शुङ्गाः पद्मस्य केशरम्।

---

तैलपाकपक्षे हरिद्रादीनां कल्कः क्षीरन्तु चतुर्गुणम्। विप्रव-मिति जटुलम् ॥ १५ ॥

मधुकस्येत्यादौ केशरं नागकेशरम्। अभीरु जटुलम् ॥ १६ ॥

मञ्जिष्ठेत्यादौ मातुलुङ्गस्य मूलं मधुकं सयष्टिकमिति पद-द्वयोपादानात् जलस्थलभेदेन यष्टिमधुद्वयमिह ग्रहणमिति ज्ञेयम् ॥ १७ ॥

कुङ्कुममित्यादौ न्यग्रोधस्य वटस्य पादाः शुङ्गाः प्लक्षोला-क्षी कषायैरिति कषायसाधनैः कुङ्कुमरक्तचन्दनादिभिः पञ्च-

द्विपञ्चमूलसहितैः कषायैः पल्लिकैः पृथक् ॥
जलाढ़कं विपक्तव्यं पादशेषमथोद्धरेत् ।
मञ्जिष्ठामधुकं लाक्षा पत्तङ्गं मधुयष्टिका ॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं तथा ।
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम् ॥
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ।
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम् ॥
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्म्मितं पुरा ॥ १८ ॥

कुङ्कुमाद्यं तैलम् ।

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका ।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत् ॥
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ।
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम् ॥
नीलिकापीड़काव्यङ्गानभ्यङ्गादेव नाशयेत् ।
सप्तरात्र प्रयोगेण भवेत् काञ्चनसन्निभम् ॥
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्म्मितं पुरा ।

कुङ्कुमाद्यं तैलम् ।

कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनम् ।

---

वल्कलैरित्यन्ये । पत्तङ्गं रक्तचन्दनम् । द्विपञ्चमूलसहितैरित्यत्र पद्मकिञ्जल्कसहितैरिति केचित् पठन्ति वाभटेऽपि दशमूलं विना योगोऽयं दृश्यते एवं चन्द्रटेऽपि तेनापि योगान्तरत्वम् ॥ १८ ॥

द्वितीयकुङ्कुमाद्यं तैलमाह कुङ्कुममित्यादि । स्पष्टं तृतीयकुङ्कुमाद्यतैले किंशुकः पलाशस्तस्य पुष्पं ग्राह्यम् । मातुलुङ्ग

काळीयकं पद्मकञ्च मातुलुङ्गं सकेशरम् ॥
कुसुम्भं मधुयष्टिकं फलिनीमदयन्तिका।
निशे द्वे रोचनापद्मन्तुत्पलञ्च मनःशिला ॥
काकोल्यादिसमायुक्तै रेतैरक्षसमैर्भिषक्।
लाक्षारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत् ॥
कुङ्कुमाद्यमिदं तैलं चाभ्यङ्गात् काञ्चनोपमम्।
करोति वदनं सद्यः पुष्टिलावण्यकान्तिदम् ॥
सौभाग्यलक्ष्मीजननं वशीकरणमुत्तमम् ॥ १८ ॥

वर्णकं घृतम्।

मधुकं चन्दनं कङ्गु सर्षपं पद्मकं तथा।
कालकेयं हरिद्रा च लोध्रमेभिश्च कल्कितैः ॥
विपचेद्धि घृतं वैद्यस्तत्पक्कं वस्त्रगालितम्।
पादांशं कुङ्कुमं सिक्थं क्षिप्त्वा मन्दानले पचेत् ॥
तत्सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत्ततः।
तदेतद्वर्णकं नाम घृतं वर्णप्रसादनम् ॥
अनेनाभ्यासलिप्तं हि वलीपलितनाशनम्।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतीमुखम् ॥ २० ॥

---

सकेशरमिति मातुलुङ्गस्य मूलं केशरञ्चेत्याहुः, मदयन्ती मल्लिकाभेदः। काकोल्यादिः सौश्रुतगणः, अष्टवर्ग इत्यन्ये, लाक्षारसपयसी मिलित्वा तैलाच्चतुर्गुणे ॥ १८ ॥

मधुकमित्यादौ कङ्गु कायोनीसंज्ञकं तृणधान्यम्। वस्त्रगालितमिति किञ्चिज्जलसम्बन्धे सत्येव वस्त्रेण गालनीयं ततोमिलित्वा घृतात् पादांशं कुङ्कुमं सिक्थकञ्च कल्कं प्रक्षिप्य मृद्वग्निना पुनरप्यवधानेन जलक्षयपर्य्यन्तं पक्तव्यं यथा सिक्थकदाहो न स्यात्, सिद्धे च तद्घृतपात्रं शीतलजले निःक्षिप्य

अरुंषिकायां रुधिरेऽवसिक्ते शिराव्यधेनाथ जलौकसा वा।
निम्बाम्बुसिक्ते शिरसि प्रलेपो देयोऽश्ववर्च्चोरससैन्धवाभ्याम्॥
पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य वा।
सूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम्।
अरुंषिघ्नं भृष्टकुष्ठचूर्णं तैलेन संयुतम्॥

द्विहरिद्राद्यं तैलम्।

हरिद्राद्वयभूनिम्बत्रिफलारिष्टचन्दनैः।
एतत्तैलमरुंषीणां सिद्धमभ्यञ्जने हितम्॥ २१॥
दारुणे तु शिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम्।
अवपीडाशिरोवस्तीनभ्यङ्गांश्चावचारयेत्॥
कोद्रवाणां तृणक्षारपानीयं परिधावने।
काश्मर्य्योदारुणके मूर्द्धि प्रलेपो मधुसंयुतः॥
पियालबीजमधुककुष्ठमिश्रैः ससैन्धवैः।
काञ्जिकस्था त्रिसप्ताहं माषा दारुणकापहा॥
सह नीलोत्पलकेशरयष्टीमधुकतिलैः सहाश्ममामलकम्।
चिरजातमपि शीर्षे दारुणरोगं शमं नयति॥

---

शीतीभूते चाकर्षयेत्, तथा सति सिक्थकस्य दाहो न स्यादिति भावः॥ २०॥

अरुंषिकायामित्यादौ निम्बाम्बु अर्द्धसृतनिम्बक्वाथः। पुराणमित्यादि योगद्वयं अतएव वाशब्दः। पिण्याकत्रिलाजली एकयोगताप्याशुर्व्वेदसम्वादात्। भृष्टकुलत्थचूर्णमिति कपाले भृष्ट्वा दग्ध्वा चूर्णं कर्त्तव्यमित्यर्थः॥ २१॥

दारुण इति कक्षयिकायाम्। अवपीड़ा नस्यभेदः शिरोवस्तिश्च द्विहरिद्रातैलेन देय इत्याहुः। पियालबीजमधुकुष्ठानि मिश्राणि चेति विग्रहं कृत्वा समाधेयम्। मिश्रैरित्यत्र स्थाने

त्रिफलाद्यं तैलम्।

त्रिफलायास्त्रयोयष्टिमार्कवोत्पलशारिवैः।
सतैलभवैः पचेत्तैलमभ्यङ्गाद्रुक्षिका जयेत्॥ ११॥

चित्रक तैलम्।

चित्रकं दन्तिमूलञ्च कोषातकीसमन्वितम्।
कल्कं पिष्ट्वा पचेत्तैलं केशदद्रुविनाशनम्॥

गुञ्जा तैलम्।

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु।
कण्डूदारुणहृत्कुष्ठकपालव्याधिनाशनम्॥

भृङ्गराज तैलम्।

भृङ्गराजत्रिफलोत्पलशारि लौहपुरीषसमन्वितकारि।
तैलमिदं पचदारुणहारि कुञ्चितकेशघनस्थिरकारि॥ १२॥

---

माषैरित्यपि पाठान्तरम्। सहेत्यादौ नीलोत्पलस्य केशरं किञ्जल्कः। सदृशमिति तुल्यम्। त्रिफलेत्यादौ मार्कवो भृङ्गराजः, उत्पलशारिवा अनन्तमूलं छान्दसत्वाद्‌ह्रस्वः अन्ये तु उत्पलं नीलोत्पलं शारिवा च द्वन्द्वाङ्गः॥ ११॥

चित्रकमित्यादौ कोषातकी घोषकः। भृङ्गराजरसेनेति चतुर्गुणेनेत्यर्थः।

भृङ्गरज इत्यादौ—भृङ्गरजो भृङ्गराजस्य रसश्चतुर्गुणः। पाकार्थत्वात्, भृङ्गरजः शब्दोऽप्यस्ति तथा ये माषमेकं स्वरसं पिबन्ति च दिने दिने। भृङ्गरजसमुत्थमिति। त्रिफलादीनां कल्कः। उत्पलं नीलोत्पलं शारि शारिवा अनन्तमूलसमन्वितकारः सहकारः समन्वितशब्दस्य सहार्थत्वात् यस्य च फलमज्जं ग्राह्यं केश्यत्वात् कृष्णीकरणत्वाच्च। भृङ्गराजादिसमन्वितकारान्तं द्रव्यमस्मिन्नस्तीति द्वन्द्वम् तैलमित्येषणमेतत्। अन्ये तु

प्रपौण्डरीकाद्यं तैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुड़वं तैर्द्विरामलकीरसः ॥
साध्यः स प्रतिमर्षः स्यात् सर्व्वशीर्षगदापहः ॥ २४ ॥

मालत्याद्यं तैलम् ।

मालतीकरवीराग्निनक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥
इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम् ॥ २५ ॥
धात्र्याम्रमज्जलेपात् स्यात् स्थिरोदक् स्निग्धकेशता ॥ २६ ॥
इन्द्रलुप्ते शिरां विद्धा शीलाकाशीशतुत्थकैः ।
लेपयेत् परितः कल्कैस्तैलञ्चाभ्यञ्जने हितम् ॥

---

भृङ्गराजादि सर्व्वं द्रव्यं कल्कं जलेन पाकः, उत्पल शारिवा अनन्तमूलं भृङ्गरजः समन्वयं कर्त्तुं शीलमस्येति तैलविशेषणमिति व्यवहारस्तु पूर्व्वव्याख्ययैव । कुञ्चितकेशघनस्थिरकारीति केशस्य कुञ्चितत्वघनत्वस्थिरत्वकारीत्यर्थः कुञ्चितशब्दः पूर्व्वनिपातश्छान्दसत्वात् ॥ २३ ॥

प्रपौण्डरीत्यादौ तैलापेक्षया द्विगुणेनामलकीरसेनैव पाकः । प्रतिमर्षो नस्यभेदः । स प्रतिमर्ष इति प्रतिमर्षविधिना उपयुक्त इत्यर्थः ॥ २४ ॥

मालतीत्यादि मालती जाती अग्नि चित्रकः । अत्र गोमूत्रेण पाक इति श्रीकण्ठः । धात्रीत्यादौ मज्जशब्देनाम्रेणैव सम्बन्धः, आम्रमज्जा तु वाताम्रास्थि ॥ २५—२६ ॥

इन्द्रलुप्त इत्यादौ शिरामिति इन्द्रलुप्तसन्निहितां शिराम् । तैलञ्चाभ्यञ्जने हितमिति । कुटन्नटादिकरवीरान्तैः कल्कैः सिद्धं तैलमित्यर्थः । कुटन्नटमिति कुटन्नटं कैवर्त्तमुस्तकं शिखी चि-

कुटन्नटशिखीजातीकरञ्जकरवीरजैः।
अवगाढ़पदञ्चैव प्रच्छयित्वा पुनः पुनः॥
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समन्ततः॥ १७॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते लेपात् पाणितलेष्वपि॥
भल्लातकबृहतीफलगुञ्जामूलफलैश्च एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति॥
बृहतीफलरसपिष्टं गुञ्जाफलमूलं चेन्द्रलुप्तस्य।
कणकानिघृष्टस्य सतोदातव्यं प्रच्छितस्य सदा॥
घृष्टस्य कर्कशैः पत्रैरिन्द्रलुप्तस्य गुण्ठनम्॥ १८॥

---

लकः। अन्ये तु कुटन्नटमिति छेदः विच्छेदपाठात् कुटन्नटं विनापि चित्रकादिद्रव्यचतुष्टयेन तैलसाधनं सूचयन्ति व्याख्यानयन्ति। शिखीति दीर्घपाठश्छान्दसत्वात् समर्थनीयः। अन्ये तु कुटन्नटादिभिरपि लेप एव तैलन्तु पूर्व्वोक्तमालतीकरवीरादिसिद्धमेव बोध्यमित्याहुः। अवगाढ़मित्यादि अवगाढ़पदमिति गम्भीरपदं यथास्यात्तथा सूचीनखरञ्जन्यादिभिः प्रच्छयित्वा रक्तगुञ्जाफलैः पुनः पुनर्लिम्पेत्॥ १७॥

हस्तिदन्तेत्यादौ मुख्यमित्यकृत्रिमं तेन दार्व्वीक्वाथोद्भवरसाञ्जननिषेधः अत्र जलेन पेषणं बोध्यं द्रवान्तरस्यानुक्तेः। अतएव वक्ष्यमाणेन छागीक्षीररसाञ्जनेत्यादिना अस्य न पौनरुक्त्यम्।

भल्लातकेत्यादौ — भल्लातकबृहतीफलयो रसः उक्तं हि वाभटे सक्षौद्रक्षुद्रवार्त्ताकुफलरसेन रसेन वा। धुस्तूरस्य च पत्राणां भल्लातकरसेन वा इति। बृहतीत्यादौ पक्वबृहतीफलरसकेन पिष्टं गुञ्जायामूलं फलं वा। कणकानिघृष्टस्येति

चूर्णितैर्मरिचैः कार्य्यमिन्द्रलुप्तनिवारणम् ।
छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमसीलिप्ताः ॥
जायन्ते सप्तरात्रात् खल्वग्रामपि कुञ्चिताश्चिकुराः ।
मधुकेन्दीवरमूर्व्वातिलाज्यगोक्षीरभृङ्गलेपेन ॥
अचिराद्भवन्ति घनकेशा दृढमूलायतास्त्वृजवः ॥

स्नुगाद्यं तैलम् ।

स्नुक्षीपयः पयोऽर्कास्य मार्कवो लाङ्गलीविषम् ।
मूत्रमाजं सगोमूत्रं रक्तिकेन्द्रवारुणी ॥
सिद्धार्थन्तीक्ष्णतैलञ्च गर्भं दत्त्वा विपाचितम् ।
वह्निना मृदुना पक्कं तैलं खालित्यनाशनम् ॥
कूर्म्मपृष्ठसमानापि रुक्षा या रोमतस्करी ।
दिग्धा सानेन जायेत ऋक्षयारीर लोमशी ॥ २८ ॥

---

कणकं सुवर्णं धूस्तूरस्य मूलं वा; प्रच्छितस्येति मण्डलाग्न्यादिना विलिखितस्य गुल्मवनमित्यवचूर्णनम् ॥ २८ ॥

मधुकेत्यादौ इन्दीवरं नीलोत्पलं भृङ्गोभृङ्गरजः। ऋजवः कुटिलाः। स्नुहेत्यादौ मार्कवोभृङ्गराजः लाङ्गलीविषं विषलाङ्गलिशाम्नूलाख्यं विषं किम्वा लाङ्गली च विषञ्चेति द्रव्यद्वयं, रक्तिका गुञ्जिका तस्या मूलं फलमित्यन्ये, इन्द्रवारुणी गोरक्षकर्कटी सिद्धार्थं श्वेतसर्षपः तीक्ष्णतैलं सार्षपतैलं ज्योतिष्मतीमूलं फलमित्यन्ये। सिद्धार्थ तीक्ष्णतैलमिति समस्तपाठपक्षे तीक्ष्णेति तैलविशेषणं अभर्जितस्य सर्षपस्य तैलं चैवं अजामूत्रगोमूत्रे मिलित्वा चतुर्गुणे, शेषः कल्कः दिग्धा इति लिप्ता ऋक्षस्य भल्लूकस्य यारी योषिका इव ॥ २८ ॥

आदित्यपाकगुडूचीतैलम्।

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम्।
गुडूचीस्वरसे तैलं चाभ्यङ्गात् केशरोपणम्॥ ३०॥

चन्दनाद्यं तैलम्।

चन्दनं मधुकं मूर्व्वा त्रिफला नीलमुत्पलम्।
कान्तावटावरोहश्च गुडूचीबिसमेव च॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च।
मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत्॥
शिरस्सु पतिताः केशा जायन्ते घनकुञ्चिताः।
दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः॥
नस्येनाकालपलितं निहन्यात्तैलमुत्तमम्॥ ३१॥
तैलं सयष्टीमधुकैः क्षीरे धात्रीफलैः शृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ॥
त्रिफलानीलिनीपत्रं लौहं भृङ्गरजः समम्॥ ३२॥
त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिक्षिपेत्।

---

वटावरोहेत्यादौ केशिनी भूतकेशी मांसी वा एतयोश्चूर्णं तैलात् पादिकं कल्कत्वात् गुडूचीरसस्तु तैलसमः आदित्यपाकत्वात्॥ ३०॥

चन्दनेत्यादौ।— कान्ता प्रियङ्गुः, बिसं मृणालं केशी भूतकेशी मार्कवरसश्चतुर्गुणः॥ ३१॥

तैलमित्यादौ।— क्षीरमेव चतुर्गुणं द्रवान्तराभावात्।

त्रिफलेत्यादौ।— नीलिनी लतावेणीति प्रसिद्धा तस्याः पत्रं लौहभृङ्गरजसोश्चूर्णमित्यर्थः। अविम्लतेण संयुक्तमिति भावितं शिरोलेपोयं प्रहरद्वौ त्रीन् वा धार्य्यः। एवमन्यत्रापि शिरोलेपनधारणम्॥ ३२॥

ईषत्पक्के नारिकेले भृङ्गराजरसान्विते ॥
मासमेकन्तु निक्षिप्य सम्यग्गर्भात् समुद्धरेत् ।
ततः शिरोमुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत् सप्तमेदिने ।
क्षालयेत् त्रिफलाक्वाथैः क्षीरमांसरसाशिनः ॥
कपालरञ्जनञ्चैतत् कृष्णीकरणमुत्तमम् ॥ ३३ ॥
उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत् ।
केशानां कृष्णकरणं स्नेहनञ्च विधीयते ॥
भृङ्गपुष्पं जवापुष्पं मेषीदुग्धप्रपेषितम् ।
तेनैवालोड़ितं लौहपात्रस्थं भूम्यधःकृतम् ॥
सप्ताहादुद्धृतं पश्चात् भृङ्गराजरसेन तु ।
आलोड्याभ्यज्य च शिरोवेष्टयित्वा वसेन्निशाम् ॥

---

त्रिफलेत्यादौ — गर्भादिति नारिकेलोदरात् गर्त्तादिति च पाठे स एवार्थः ॥ ३३ ॥

उत्पलमित्यादौ — उत्पलं नीलोत्पलं मासं भूमौ निधापयेदिति लौहपात्रे कृत्वा भूम्यधः स्थापयेदित्यर्थः । अभ्यज्येति भृङ्गराजरसालोड़ितेन भृङ्गराजपुष्पादिना म्रक्षयित्वेत्यर्थः । वेष्टयित्वा इति कदलीपत्रेणेति शेषः । शिरः प्रक्षालनञ्च त्रिफला क्वाथेन वदन्ति । वालाम्रं वालाम्रवीजं शङ्खः शङ्खनाभी एवमित्यनेन सिन्दूरादित्रयेपि पूर्ववन्मेषदुग्धपेषणादिकमिति दिशन्ति । भृङ्गरसैरिति भृङ्गराजरसोऽपि आलोड़नार्थं एवं तच्च यद्यपि एवमित्यतिदेशेनैव लभ्यते तथापि स्पष्टार्थमुक्तम् । नरेत्यादि अत्र किञ्चित् पारदं गृहीत्वा आवर्त्तमाने सीसके प्रक्षिपेत् ततस्तेन सह एकीभूतं सीसकं दद्यात्

प्रातस्तु क्षालनं कार्य्यमेवं स्यान्मूर्द्धरञ्जनम्।
एवं सिन्दूरवाराम्रयष्टिभृङ्गरसैः क्रिया॥
नरदुग्धयष्टिचूर्णं काञ्जिकसिक्तं हि सीसकं दृष्ट्वा।
लेपात् कचान् करवावबद्धान् शुभ्रान् करोति नीलतरान्॥३४॥
लौहमलामलकल्कैः सजवाकुसुमैर्नरः सदा स्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकानि॥
निम्बस्य वीजानि हि भावितानि भृङ्गस्य तोयेन तथाशनस्य।
तैलन्तु तेषां विनिहन्ति नस्याद् दुग्धान्नभोक्तुः पलितं समूलम्॥
निम्बस्य तैलं प्रकृतिस्थमेव नस्तेनिषिक्तं विधिना यथावत्।
मासेन गोक्षीरभुजो नरस्य जराप्रभूतं पलितं निहन्ति॥
क्षीरात् समार्कवरसात् द्विप्रस्थे मधुकात् पले।
तैलस्य कुड़वं पक्वं नस्यं पलितापहम्॥३५॥

महानील तैलम्।

आदित्यवल्ल्या मूलानि कृष्णशैरीयकस्य च।

---

शिरसि लेपोदेय इत्युपदिशन्ति वृद्धाः। अर्कदलावनद्धमित्यर्कपत्रेण पिधाय बन्धनमित्यर्थः॥३४॥

लौहमलेत्यादौ — आमलकं धात्रीफलं जवाकुसुमं ओड्रपुष्पम्। निम्बस्येत्यादि अशनः पीतशालः, भावना च प्रत्येकं सप्ताहं निम्बतैलं निम्बवीजस्य तैलं प्रकृतिस्थमेवेति भृङ्गराजरसादिभावनारहितम्। विधिनेति नस्योक्तविधिना। जराप्रभूतमिति — जरागमनसूचकम्। क्षीरादित्यादि — क्षीरभृङ्गराजरसयोर्मिलित्वा प्रस्थद्वयं निर्द्देशस्य मानप्रधानत्वात्। मधुकात्पले इति सप्तम्येकवचनं न तु प्रथमायाद्विवचनम्। जतुकर्णसम्वादात्॥३५॥

महानीलतैले — आदित्यवल्ली सूर्य्यावर्त्तः, आदित्य-

सुरसस्य च पत्राणि फलं कृष्णायसस्य च ॥
मार्कवं काकमाची च मधुकं देवदारु च ।
पृथक्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम् ॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थिकर्द्दमः कृष्णोत्तपालीरक्तचन्दनम् ॥
नीलीभल्लातकास्थीनि कासीसं मदयन्तिका ।
सोमंराज्यशनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥
पुष्पाण्यर्ज्जुनकाश्मर्य्योश्चाम्रजम्बुफलानि च ।
पृथक्पञ्चपलैर्भागैः सुपिष्टैराढ़कं पचेत् ॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्कोभवेद्‌द्रवः ॥
लौहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्तक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्व्वरोगनुत् ।
महानीलमितिख्यातं पलितघ्नमनुत्तमम् ॥ ३६ ॥

---

पर्णीति पाठे स एवार्थः । कृष्णाशैरीयका नीलझिण्टी, सुरसः पर्णासः, अञ्जनं रसाञ्जनं कृष्णकर्द्दमो नलिनीमूलस्थितकर्द्दमः सुश्रुतेपि “पङ्केन नलिनी भवेन” इत्युक्तम् । नीली नेलीतिख्याता लता, अशनः पीतशालः शस्त्रं काललौहचूर्णं पिण्डीतोमदनः, कृष्णाविति कृष्णपुष्पौ, पुष्पाण्यर्ज्जुनकाश्मर्य्योरीति अर्ज्जुनकाश्मरीभवानि पुष्पाणि अर्ज्जुन काश्मर्य्योरित्यपि पाठः । लौहपात्रेऽग्निना पचेदादित्यपाकं वा कुर्य्यादिति योज्यम् । आदित्यपाकस्तु आदित्यरश्मिसम्बन्धादेव द्रवशोषविधिः । अत्र भागैरिति बहुवचनादेव पृथग्भागे लब्धे पृथगिति पदं न्यायसिद्धस्यापि त्रिफलायाः पृथग्भागस्य द्योतकार्थं कल्कभूयस्त्वञ्च वचनादेव मदच्चविकल्पनीयम् ॥३६॥

भृङ्गराजघृतम्।

भृङ्गराजरसे पक्वं शिखिपित्तेन कल्कितम्।
घृतं मयूरग पलितं हन्यात् सप्ताहयोगतः॥ ३७॥

काश्मिकपिष्टशेलुमज्जनिसच्छिद्रलौहगे।
यदर्कतापात्पतति तैलं तन्नस्यनस्ययात्॥
केशा नीलालिसङ्काशाः सद्यः स्निग्धा भवन्ति च।
नयनश्रवणग्रीवादन्तरोगांश्च हन्त्यदः॥ ३८॥

काशीशरोचनातुल्यं हरितालं रसाञ्जनैः।
अम्लपिष्टैः प्रलेपोऽयं वृषकच्छूविपूतयोः॥

पटोलाद्यं घृतम्।

पटोलपत्र त्रिफलारसाञ्जनविपाचितम्।
पीतं घृतं निहन्त्याशु कच्छूमप्यविपूतनाम्॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणातुल्यम्।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम्॥ ३९॥

इति क्षुद्ररोगचिकित्सा।

---

भृङ्गराजेत्यादौ — शिखी मयूरः घृतन्तु कुडवमानमत्र प्रसप्रयोगत्वात्॥ ३७॥

काञ्जीत्यादौ — शेलुर्श्लेष्मवारः। सच्छिद्रलौहग इति बहुच्छिद्रलौहपात्रस्थे। नीलालिसंकाशा इति नीलपदं पिङ्गलभ्रमरनिरासार्थम्॥ ३८॥

काशीशमित्यादौ — एतैरिति शेषः काशीशरोचनातुल्यहरितालरसाञ्जनैरित्यपि पाठः।

वराहदशनाह्वमिति वराहदन्तमिति प्रसिद्धम्॥ ३९॥

इति क्षुद्ररोगाधिकारः।

# अथ मुखरोगाधिकारः।

## ओष्ठरोग चिकित्सा।

ओष्ठप्रकोपे वातोत्थे शाल्वनेनोपनाहनम्।
मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम्॥
स्वेदोऽभ्यङ्गस्नेहपानं रसायनमिहेष्यते।
श्रीवेष्टकं सर्ज्जरसं गुग्गुलुं सुरदारु च॥
यष्टिमधुकचूर्णञ्च विदध्यात् प्रतिसारणम्॥ १॥
वेधं शिरायां वमनं विरेकं तिक्तस्य पानं रसभोजनञ्च।
शीतान् प्रलेपान् परिषेचनञ्च पित्तोपसृष्टेष्वधरेषु कुर्य्यात्॥
पित्तरक्ताभिघातोत्थान् जलौकाभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः॥
शिरोविरेचनं धूमः स्वेदः कवड़धारणम्।

---

क्षुद्ररोगास्तु चतुश्चत्वारिंशत् मुखरोगास्तु पञ्चषष्टिः अतो रोगगणत्वसामान्यात् क्षुद्ररोगचिकित्सितप्रसङ्गान्मुखरोगचिकित्सितमुच्यते।

ओष्ठेत्यादि।— सुश्रुतस्य। मस्तिष्के चैवेति मस्तिष्कः शिरोवस्तिः स्नेहोक्तपिचुधारणं वा। वातहरैरिति भद्रदार्व्वादिभिः। रसायनमिहेष्यत इति रसायनं च्यवनप्राशादि। श्रीवेष्टकमित्यादि सुश्रुतस्य। श्रीवेष्टकं नवनीतखोटिः। प्रतिसारणं घर्षणम्। वाभटे तु श्रीवेष्टकस्थाने मधुच्छिष्टं पठ्यते॥ १॥

वेधमित्यादि शिरा च ओष्ठसमीपगत बोध्या। तिक्तस्येत्यत्र सर्पिष इति शेषः। शिर इति सुश्रुतस्य। धूमोऽत्र वैरेचनीकः कफयोग्यत्वात् एवं कवलधारणमिति कफहरद्रव्य-

हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥
शिरोविरेको धूमश्च स्वेदः कवल एव च ।
हृते रक्ते प्रयोक्तव्यमेतच्च प्रतिसारणम् ॥ २ ॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ।
सर्ज्जरसकणकगैरिकधन्याकघृततैलसिन्धुसंयुतम् ॥
सिद्धं सिक्थकमधरे स्फुटितोच्चटिते व्रणं हरति ॥ ३ ॥

इत्योष्ठगतचिकित्सा ।

---

दन्तरोगचिकित्सा ।

शीतादे हृतरक्ते तु तोये नागरसर्षपान् ।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम् ॥
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम् ।
कुष्ठं धात्रीमधुलोध्रं समङ्गा पाठा तिक्ता तेजनी पीतिका च ॥

---

तत् वाभटेऽप्युक्तं धूमस्वेदन गण्डूषाः प्रयोज्याश्च कफच्छिदा इति ॥ २ ॥

मेदोज इत्यादि — सुश्रुतस्य । शोधित इति मेदोहरणेन विशुद्धे । ज्वलन इति अग्निकर्म्म ।

सर्ज्जेत्यादौ — कणकगैरिकं उत्कृष्ट गैरिकमित्यर्थः । एतच्च सर्ज्जरसादिचूर्णं सिक्थकान्तं खोलके किञ्चिदग्नावुष्णीकृत्य प्रलेपयोग्यं पश्चादवतार्य्य अधरे धारणीयम् ॥ ३ ॥

दन्तरोगचिकित्सामाह शीताद इत्यादि सुश्रुतस्य नाग-

शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्व्वाश्च शीतलाः ॥ ८ ॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
क्रिमिदन्तकवच्चात्र विधिः कार्य्योविजानता ॥
छित्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ।
पाठा वचातेजोवतीसर्ज्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलनिम्बत्रिफलाकषायश्चात्र धावने ॥
शिरोविरेकश्च हितोधूमोवैरेचनश्च यः ।
नाड़ीव्रणहरं कर्म्मदन्तनाडीषु कारयेत् ॥

---

रश्च शीतक्रियाः क्षारकुपितपित्तरक्तनिर्व्वापणार्थं ताश्च नस्य-गण्डूषादयः । उक्तं हि वाभटे क्षारं दद्यात्ततो नस्यं गण्डूषादि च शीतलमिति ॥ ८ ॥

उद्धृत्येत्यादि सुश्रुतस्य । अग्निदाहोत्र रक्तादिस्रुतिनिषेधार्थम् । क्रिमिदन्तोद्विविधः अचलश्चलश्च तत्र यश्चलः स उद्धार्य्य स्तद्विधिरेवात्रातिदिश्यते । उद्धार्य्यत्वेन समानत्वात् नत्वचलस्य तस्यानुद्धार्य्यत्वात् चल एव क्रिमिदन्ते उद्धरणदाहौ युक्तौ । अधिदन्ते पुनरचलेपि तद्विधानार्थमिह क्रिमिदन्तकविध्यतिदेशलब्धयोरप्युद्धरणदाहयोरभिधानम् । छित्वेत्यादि सुश्रुतस्य तेजोवती चवी कवलग्रहोऽयम् । क्षौद्रद्वितीया पिप्पल्य इति क्षौद्रालोड़ितपिप्पलीकवलः । वैरेचनीकधूमसाहचर्य्यात् शिरोविरेकोऽपि तीक्ष्णोत्र बोध्यः । यस्य दन्तस्य समीपे नाड़ी स्यात् तं दन्तं चलमचलम्वा शस्त्रेण दन्तावरकमांसं छित्वा उद्धरेत् । यदिनोपरिजो भवेदित्युद्धरणस्यापवादः । अधोगतदन्तानुद्धरणे दोषानाह गतिरित्यादि गतिर्नाड़ी ब-

यं दन्तमधिजायेत नाड़ी तद्दन्तमुद्धरेत्।
छित्वाधिमांसं शस्त्रेण यदि नोपरिजो भवेत्॥
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा।
गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षिते॥
तस्मात् समूलं दशनमुद्धरेद्भग्नमस्थि च॥९॥
उद्धृते तूत्तरे दन्ते शोणितं संप्रसिच्यते।
रक्तातियोगात् पूर्व्वोक्ता घोरारोगा भवन्ति च॥
चलमप्युत्तरं दन्तमतोनापहरेद्भिषक्।
कषायं जातीमदनकटुकास्वादुकण्टकैः॥
लोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि यत् कृतम्।

हन्वस्थि कपोलसमीपास्थि दारयति। दशनेसमुपेक्षिते सत्यनुद्धृते सतीत्यर्थः। किम्वा गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षितेति पाठान्तरे दन्ते गतिरुपेक्षितेऽर्थः। भग्नमस्थि चेति चास्य-मुद्धृतदन्तस्य भग्नशेषमस्थि चेत्यर्थः किम्वा गतिविशोषित-हन्वस्थिभग्नास्थीत्युच्यते॥९॥

उपरिजदन्तानुद्धरणे हेतुमाह उद्धृत इत्यादि। उत्तर इत्युपरिजाते संप्रसिच्यते अतिस्रवतीत्यर्थः। पूर्व्वोक्ता इति शोणितवर्णनीयोक्ता आक्षेपकादयः।

कषायमित्यादि — सुश्रुतस्य। जात्याः पत्रं मदनं मदन-कण्टकं कटुका कटुरोहिणी। स्वादुकण्टकः विकङ्कतः एतैः कृतं कषायं मुखधारणकवलः कार्यः दन्तगतां गतिं हन्यात्तथा लोध्रादिभिश्च यथाख्यातैः कल्करूपैर्यत् कृतं तैलं तदपि दन्त-गतिं हन्यादित्यर्थः। अन्ये तु कषायमित्यतःपरं कृत्वेति शेषः, तेन जात्यादिभिः कषायं कृत्वा लोध्रादिकल्केन च कृतं यत् तैलमिति व्याचक्षते। वृन्देनाप्यनुमतोऽयमर्थः व्यवहारोऽप्यने-

तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥
कषायं परतः कृत्वा पिप्पल्याद्यादिकल्कितम्।
कण्टकीमदनोयोज्यः स्वादुकण्टोविकङ्कतः ॥ १० ॥
सुखोष्णाः स्नेहकवडाः सर्पिषस्त्रैवृतस्य वा।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्द्दनाः ॥
स्नैहिकश्च हितोधूमोनस्यं स्नैहिक मेवच।
अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥

---

नैव धावनम्। जातीमदनस्वादुकण्टकखदिरमित्यधिकं श्लोकार्द्धं पठित्वातदनन्तरमेव कषायं जातीमदन इत्यादिकं पठति व्याचष्टे चकषायमिति पदं धावनमित्यनेन सम्बध्यते तेन जात्यादि द्रव्यचतुष्टयकषायेण धावनं परेण तु जातीमदनकादिद्रव्याष्टकेन कल्केन तैलं साधनीयमिति। अतएव तन्मतानुयायी वाभटेपि धावनं जातीमदनखदिरस्वादुकण्टकैरित्युक्तत्वात्। अन्ये तु कषायशब्दं समासे विभक्तिरहितं पठन्ति तेषां मते कषायमामपूगफलं, विस्राव्याध्यायोक्तशङ्क्व्यादि शोधनकषायद्रव्यं वा, अस्मिन् पक्षे कषायद्रव्यादिभिः यथाक्रान्तैस्तैलपाकः कषायद्रव्यान्तर्गताया अपि जात्याः पृथगभिधानं भागद्वयग्रहणार्थमितरपि वदन्ति ॥ १० ॥

दन्तमूलगतचिकित्सितमभिधाय दन्तगतव्याधिचिकित्सामाह सुखोष्ण इत्यादि — सुश्रुतस्य। स्नेहाः सर्पिस्तैलवसामज्जा नलेषां व्यस्तानां समस्तानाञ्च, कवलाः गण्डूषाः। सर्पिषस्त्रैवृतस्य वेति त्रैवृतसर्पिरपतानकचिकित्सायां सुश्रुतेनोक्तम्। अनिलघ्नानामिति भद्रदार्व्वादिदशमूलादीनां निर्यूहः काथः।

वाचाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ।
दन्तहर्षक्रियाश्चापि कुर्य्यान्निरवशेषतः ॥
कपालिका: कृच्छ्रसाध्यास्तत्राप्येषा क्रिया शिवा ।
जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ॥
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ।
भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ॥ ११ ॥
हिङ्गु कोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत् ।
इन्द्रवारुणिमूलं वा कपर्दकाङ्कोलकण्टकारिकाक्वाथः ॥
गण्डूषस्तैलयुक्तः क्रिमिदन्तकवेदनाशमनः ।
नीलीवायसजङ्घास्नुक्दुग्धीनान्तु मूलमेकैकम् ॥
सञ्चर्व्व्य दशनविधृतं दशनक्रिमिपातनम् ।
प्राह: । चलमुद्धृत्य वा स्थानं दहेत् शुषिरस्य वा ॥

---

परिहिंसन्नितयादि — सुश्रुतस्य दन्तमूलहिंसया हि अभिघातजा दन्तनाडी दन्तशालस्य स्यात् । कृच्छ्रसाध्येतयनेन कपालिकायाः शीघ्रप्रतिकर्त्तव्यता सूचयति । एषा क्रियेति दन्तहर्षोक्ता कपालिकाया अपि वातजत्वात् शर्करोक्तेत्यन्ये । विस्रावणैरिति विस्रावणं क्रिमिदुषितरक्तस्य । अवपीडोनस्यभेदः । वातघ्नैरिति वातघ्नद्रव्यकृतैरपीति चक्रः । अन्ये तु अवपीडो यद्यपि वातहरस्तथापि स्थानानुरोधात् क्रियते विस्रावणादिकुपितरक्तशान्त्यर्थं वातहरं कर्म्म कर्त्तव्यमिति दर्शयितुं वातघ्नैरिति स्नेहगण्डूषादिविशेषणं कृतं वाभटेऽप्येवमेवोक्तम्॥११॥
हिङ्ग्वित्यादौ कोष्णमिति ईषदुष्णं भूमिकदम्बोऽलम्बुषः । पञ्चाङ्गुल एरण्डः, स्नुक् स्नुही दुग्धी क्षीराह्व ।
चलमित्यादि सुश्रुतस्य वाशब्दोऽवधारणे । स्थानमिति उद्धृतदन्तस्य समग्रस्थानं शुषिरस्येति क्रिमिकृतछिद्रस्य याव-

उपजिह्वां प्रशान्त्यर्थमेतैस्तैलं विपाचयेत् ॥
छिन्नां घर्षेद्गलशुण्डीं व्योषोग्राक्षौद्रसिन्धुजैः ।
कुष्ठोषणवचासिन्धुकणापाठाप्लवैरपि ॥
सक्षौद्रैर्भिषजा कार्य्यं गलशुण्ड्याविघर्षणम् ॥ १४ ॥
उपनासाव्यधो हन्ति गलशुण्डीमशेषतः ।
गलशुण्डीहरं तद्वच्छेफालीमूलचर्व्वणम् ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ।
निःक्वाथ्य पिचुमर्द्दञ्च कवलं तत्र योजयेत् ॥ १५ ॥
इति जिह्वागता चिकित्सा ।

---

अथ कण्ठगता चिकित्सा ।

क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः ।
तुण्डीकेर्य्यध्रुषे कूर्म्मे संघाते तालुपुप्पुटे ॥
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि ।

---

चतुर्गुणम् । छिन्नामित्यादौ — उग्रा वचा, कुष्ठोषणेत्यादौ-उषणं मरिचं प्लवः कैवर्त्तमुस्तकः सिन्धुकणेत्यत्र सिन्धुरुणेति केचित् पठन्ति, अरुणा अतिविषा वाभटेऽप्युक्तं मरिचातिविषा पाठा वचाकुष्ठकुटन्नटम् । छिन्नायां सपटुक्षौद्रैर्घर्षणमिति, एवं सुश्रुतेऽप्यायुर्व्वेदसारेऽपि ॥ १४ ॥

उपनासाव्यध इति ।— नासासमीपवर्त्ती शिराव्यध इत्यर्थः । नासायां शिराश्चतुर्व्विंशतिः । तन्मध्ये नासिकाया अतिसन्निहिताश्चतस्रः परिहार्य्याः । उक्तं हि सुश्रुते द्विदशनासायां तासामौपनासिकाश्चतस्रः परिहार्य्या इति । वचामित्यादि सुश्रुतस्य । पिचुमर्द्दो निम्बः ॥ १५ ॥

क्षारसिद्धेष्विति मुष्कापामार्गादिक्षारोदकसिद्धेषु । तुण्डिकेर्य्यध्रुष इत्यादि सुश्रुतस्य । कूर्म्म इति कच्छपरोगे ।

तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ॥
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ १६ ॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम् ।
छर्द्दनं धूमपानञ्च गण्डूषो नस्यकर्म्म च ॥
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत् ॥
सुखोष्णान् स्नेहकवलान् धारयेत् चाप्यभीक्ष्णशः ।
पतङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत् ॥
द्राक्षापरूषकक्वाथो हितश्च कवलग्रहे ॥ १७ ॥
आगारधूमकटुकैः कफजां प्रतिसारयेत् ।
श्वेताविडङ्गदन्तीषु सिद्धं तैलं ससैन्धवम् ॥
नस्यकर्म्मणि दातव्यं कवलञ्च कफोच्छ्रये ॥ १८ ॥
पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ।
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ।

---

एष एवेति गलशुण्ड्युक्तविधिविशेषः । शस्त्रकर्म्माणीति तुण्डिकेरीतालुपुप्पुटौ भेद्यौ, अपरे छेद्या इति शेषः । पित्तनाशनं पित्तव्रणनाशनमित्यर्थः ॥ १६ ॥

साध्यानामित्यादि — सुश्रुतस्य साध्यानामित्यादिना सन्निपातजाया असाध्याया व्यवच्छेदः । लवणैरिति पञ्चभिः । पतङ्गं रक्तचन्दनम् ॥ १७ ॥

आगारधूमेत्यादौ ।— श्वेता कटभी अपराजिता वा श्वेतादि सैन्धवान्तः कल्कः कवलश्चेति श्वेतादिसैन्धवान्तसिद्धं तैलमेव कवलमप्यर्थः ॥ १८ ॥

पित्तवदिति पित्तरोहिणीवदित्यर्थः । विस्राव्यमित्यत्र रक्तमिति शेषः । एतच्च पूर्व्वेण सम्बध्यते । सावयेत्तुण्डिकेरी-

उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ॥
उन्नाम्य जिह्वामाकृष्य बडिशेनाधिजिह्विकाम् ।
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्लवणादिभिः ॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ।
शिलायुञ्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ॥ १९ ॥
असमर्मस्थं सुपक्वञ्च भेदयेत्तलविद्रधिम् ॥ २० ॥

---

वदिति तुण्डिकेर्य्यामपि गलशुण्डिका विध्यतिदेशात् साधयेत् गलशुण्ठीवदिति वाच्ये तुण्डिकेरी विध्यतिदेशो निःशेषच्छेदनार्थः तेन गलशुण्ठीवदत्र त्रिभागच्छेदोन कार्य्य इति बोधयति।

छेदयेदित्यादि ।— वाभटस्य तीक्ष्णोष्णैर्लवणादिभिरित्यत्र उपाचरेदिति शेषः। आदिशब्दात् कवडादिपरिग्रहः॥

एकवृन्दमित्यादि सुश्रुतस्य। विस्राव्येति जलौकादिभी रक्तं विस्राव्यमित्यर्थः। शोधनमिति गलगतदोषशोषनं प्रतिसारणशिरोविरेककवलादिकं तथा कायशोधनञ्च वमनादिकं तत्रापि कायशोधनेन शिरोगतदोषस्यापि शोधकत्वात्। तञ्च शस्त्रेण साधयेदिति कठिनमल्पवेदनमपक्वं शिलायुं छेदयेत् पक्वन्तु भेदयेत्। पूयनिःसारणार्थं ततोव्रणीयोक्तविधिना शोधनादिरत्रापि बध्यते ॥ १९ ॥

असमर्मस्थमित्यादि सुश्रुते गलविद्रधिरयं त्रिदोषविद्रधितुल्यत्वेनोक्तोऽपि चिकित्सितोपदेशात् साध्य इति ज्ञेयः। अन्ये तु गलविद्रधेस्त्रिदोषजविद्रधितुल्यत्वेनोक्तत्वेऽपि चिकित्साविधानं कृच्छ्रसाध्यत्वं ज्ञेयम् । यस्तु सर्व्वं गलं व्याप्य समुत्थितोऽय इत्यभिधानेन सर्व्वव्यापकोऽपि गलगतमर्म्मणि महत्त्वादविरत्वादमर्म्मेण इत्युच्यते विना असमर्मस्थमिति क्रियाविशेष-

कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णनस्यादि कर्म्म च।
क्वाथपानन्तु दार्व्वीत्वक् निम्बतार्क्ष्यकलिङ्गजम्॥
हरीतकीकषायो वा पेयो माक्षिकसंयुतः।
कटुकातिविषादारुपाठामुस्तकलिङ्गकाः॥
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः॥

कालकं चूर्णम्।

गृहधूमो यवक्षारः पाठाव्योषरसाञ्जनम्।
तेजोह्वात्रिफलालोहचित्रकश्चेति चूर्णितम्॥
सक्षौद्रं धारयेदेतत् गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तजिह्वास्यरोगनुत्॥ २१॥

पीतकं चूर्णम्।

मनःशिलायवक्षारोहरितालं ससैन्धवम्।
दार्व्वीत्वक चेति तच्चूर्णं माक्षिकेण समायुतम्॥

---

थाम्। अगम्भीरत्वेन मर्म्माभ्यन्तरास्पर्शीयं यथा स्यात्तथा भेदयेदित्यर्थः॥ २०॥

सामान्यकण्ठरोगचिकित्सामाह कण्ठरोगेष्वित्यादि वाभटस्य वाभटे क्वाथः पाने तु दार्व्वीत्वक् निम्बतार्क्ष्यकलिङ्गजः इति पाठः। दार्व्व्यास्त्वक् तार्क्ष्यं रसाञ्जनम्।

कालकचूर्णे तेजोह्वा चवी लौहं काललौहचूर्णं अशुद्ध वा व्यवहारस्तु पूर्व्वेणैव लौहस्थाने लोध्रमिति केचित् पठन्ति। अस्य योगस्य लौहचूर्णरसाञ्जनचूर्णयोगात् कृष्णत्वेन कालक इति संज्ञा एवं वक्ष्यमाण पीतकचूर्णेऽपि मनःशिलादि योगात् पीतत्वेन पीतकसंज्ञा विज्ञेया॥ २१॥

पीतकचूर्णे — दार्व्वीत्वगिति षष्ठीसमासः मूर्च्छितमित्यालोडितं एतच्चूर्णं तथा कालकचूर्णं सर्व्वेष्वेव मुखरोगे

मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकल्याम कीर्त्तितम् ॥ २२ ॥
यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां सकृष्णाम् ।
क्षौद्रेण कुर्य्याद्गुडिकां मुखेन तां धारयेत् सर्व्वगलामयेषु ॥
दधमस्तं पिबेदुष्णां यूषं मूलककुलत्थयोः ।
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः ॥
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ २३ ॥

क्षारगुड़िका ।

पञ्चकोलकतालीशपत्रैलामरिचत्वचः ।
पलाशमुष्ककक्षारयवक्षारश्च चूर्णिताः ॥
गुड़े पुराणे क्वथिते द्विगुणे गुड़िकाः कृताः ।
कर्कन्धूमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥
कण्ठरोगेषु सर्व्वेषु धार्य्याः स्युरमृतोपमाः ॥ २४ ॥

इति कण्ठगता चिकित्सा ।

---

धार्य्यम् । अतएवोक्तं चरके योगराजत्रयः प्रोक्ता वातपित्त-कफापहा इति प्रत्येकमेव कालकादयस्त्रिदोषहरा इति चक्र-व्याख्या ॥ २२ ॥

यवाग्रजमिति ।— तेजोवती ज्योतिष्मती चवी इत्यन्ये । दारुनिशा दारुहरिद्रा । दधमस्तकेति मस्तं मूलकशुण्ठकम् । क्षीरेत्यादि सुश्रुतस्य क्षीरादिभिः प्रत्येकं यथा दोषं कवड़ाः कार्य्याः । एवं तैलघृतैरपि ॥ २३ ॥

पञ्चकोलेत्यादौ ।— पत्रं तेजपत्रं त्वक् गुरत्वक् । मुष्क-कोघण्टापारुली । अत्र समुदितचूर्णात् द्विगुणोगुड़ः । क्वथित इति वह्निसंयोगात् द्रवीभूते कर्कन्धुमात्राः अष्टमाषक-मानाः ॥ २४ ॥

सामान्यमुखरोग चिकित्सा।

मलस्विन्नां शिवां तुल्यां मधुरीकुष्ठतालकैः।
अभ्यस्य मुखरोगांस्तु जयेद्विरसतामपि ॥ २५ ॥
वातां सर्व्वसरञ्चूर्णैर्लावणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवड़नस्ययोः ॥
पित्तात्मके सर्व्वसरे शुद्धकायस्य देहिनः।
सर्व्वपित्तहरः कार्य्योविधिर्म्मधुरशीतलः ॥ २६ ॥
प्रतिसारणगण्डूषान् धूमं संशोधनानि च।
कफात्मके सर्व्वसरे क्रमं कुर्य्यात् कफापहम् ॥
मुखपाके शिरावेधः शिरः कायविरेचनम्।
कार्य्यश्च बहुधा नित्यं जातीपत्रस्य चर्व्वणम् ॥
जातीपत्रामृताद्राक्षायासदार्व्वीफलत्रिकैः।
क्वाथः क्षौद्रयुतः शीतोगण्डूषोमुखपाकनुत् ॥ २७ ॥

---

मलेत्यादौ शिवा हरीतकी मधुरी मधुरीकैव अभ्यस्यन्निति भक्षणविधया विरसता वैरस्यम् ॥ २५ ॥

वातादित्यादि सुश्रुतस्य सर्व्वसरोमुखपाकः लावणैश्चूर्णैरिति सैन्धवचूर्णैः अन्ये तु लवणा ज्योतिष्मती तद्भवं लावणमित्याहुः निश्चलस्तु पञ्चलवणचूर्णैरित्याह। वातहरैः सिद्धमिति भद्रदार्व्वादिभिः कल्कक्वाथरूपैः। शुद्धकायस्येति विरेकेन वमनेनापि कफस्थानगतत्वेन पित्तस्यापि वमनार्हत्वात्। मधुरशीतल इति विशेषणार्थमुक्तः ॥ २६ ॥

प्रतिसारण इत्यादिना कफजसर्व्वसरचिकित्सामाह क्रमं कुर्य्यात् कफापहमिति अनुक्तकफापहमिति अनुक्तकफहरविधिसंग्रहार्थमुक्तम्। मुखपाके शिराभेद इति शिराभेदस्तु तालुनि अधोजिह्विकायां वा कार्य्यः। शिरोविरेचनं कायविरेचनञ्च

पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवाः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥
पञ्चवल्ककषायो वा त्रिफलाक्काथ एव वा ।
मुखपाकेषु सक्षौद्रः प्रयुज्यो मुखधावने ॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया ।
सक्षौद्रा मुखरोगास्रग्दोषनाडीव्रणापहा ॥
सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्व राजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य ॥
पटोलशुण्ठीत्रिफलाविशालात्रायन्तितिक्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति मुखे स्थितश्चास्यगदानशेषान् ॥ २८
क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥ २९ ॥

---

बहुधा कार्य्यमिति योज्यम् । नित्यमिति तु परेण सम्बध्यते । जातीपत्रेति जाती मालती तस्याः पत्रं अमृता गुडूची यासो दुरालभा दार्व्वी दारुहरिद्रा । यासस्थाने पाठेति केचित् पठन्ति ॥ २७ ॥

पटोलेत्यादि ।— पटोलादीनां पल्लवाः पञ्चवल्केत्यादौ ।- सक्षौद्र इत्युभयत्रापि सम्बध्यते । स्वरस इत्यादि ।— अयं योग आस्ये धार्य्यः वाभटेपि गैरिकमप्यत्र योगे पठ्यते यथा स्वरसः क्वथितो दार्व्व्या घनीभूतः सगैरिकः । आस्यस्थः समधु-मर्व्वक्पाकनाडीव्रणापह इति । सप्तच्छदेति सप्तच्छदः शारदी तिक्तरोहिणी कटुकी राजद्रुम आरग्वधः ॥ २८ ॥

क्वथिता इत्यादौ ।— निषेव्या इति पानगण्डूषाभ्यामुपयोज्या इत्यर्थः । भक्षणीयेति परेण सम्बध्यते । तेन लेहादि-विधया त्रिफलाभक्षणीया वेत्यर्थः ॥ २९ ॥

तिलानीलोत्पलं सर्पिः शर्कराक्षीरमेव च।
सक्षौद्रोदग्धवक्त्रस्य गण्डूषोदाहपाकनुत् ॥
तैलेन काञ्जिकेनाथ गण्डूषश्चूर्णदाहहा।
घनकुष्ठैलाधान्यकयष्टिमधूलवालुकाकवडः ॥
वदनेतिपूतिगन्धं हरति सुराख्यशुनगन्धञ्च।

महासहचरतैलम्।

तुलां शतां नीलसहाचरस्य द्रोणेऽम्भसः संश्रपयेद्यथावत्।
पूर्व्वां चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रयुक्तैः ॥
कल्कैरनन्ताखदिरैरिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम्।
तत्तैलमाश्वेव धृतं मुखेन स्थैर्य्यं द्विजानां विदधाति सद्यः ॥३०॥

इरिमेदाद्यतैलम्।

इरिमेदत्वक् पलशतमभिनवमापोथ्य खण्डशः कृत्वा।
तोयाढ़कैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥
तेन क्वाथेन मतिमान् तैलस्यार्द्धाढ़कं विपचेच्छनैः।
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥

---

तिला इत्यादि।— एतैर्गण्डूष इत्यर्थः। सक्षौद्रा इति प्रत्येकमसौ सक्षौद्रा योगा इति निश्चलः। दग्धवक्त्रस्येति शस्त्र-कषायकटुचूर्णादिनेत्यर्थः। अत्र घनकुष्ठेनेत्यादि योगमत्र केचित् पठन्ति तदयुक्तं दग्धाधिकारे अस्य योगस्य वक्ष्यमाणत्वात् निश्चलेन तु भ्रमादुभयत्रायं योगः पठितः व्याख्यातश्च तुला-मित्यादि नीलसहाचरोनीलझिण्टी चतुर्भागरस इति चतु-र्थभागरसे। अनन्ता अनन्तमूलं इरिमेदो विट्खदिरः तद-भावे खदिरमेव द्विगुणं गृह्णन्ति ॥ ३० ॥

इरिमेदत्वगित्यादौ।— पद्मेति पद्मकाष्ठं जाती जाती-कोषः फलं जातीफलं पतङ्गं रक्तचन्दनं वराङ्गं गुड़त्वक् गज-

इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला ।
कर्पूरागुरुपद्मकलवङ्गकक्कोलजातीफलानाम् ॥
पत्तङ्गगैरिकवराङ्गजकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्णदन्तविद्रधिशैशिरशीतादहर्षेषु ।
क्रिमिदन्तदालनचलितप्रहृष्टमांसावशीर्णेषु ।
मुखदौर्गन्ध्येऽत्र कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥ ३१ ॥

लाक्षाद्यं तैलम् ।

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत् ।
चतुर्गुणेरिमक्काथे द्रव्यैश्च पलसम्मितैः ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणम् ॥
दालनं दन्तचालञ्च हनुमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ॥
हन्यादाशुगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥ ३२ ॥

---

कुसुमं नागकेशरं परिशीर्णदन्तो दन्तरोगभेदः । विद्रधिर्गलविद्रधिः दालनो दालनवद्व्यथा योगात् । प्रहृष्टमांसोऽधिमांसः अवशीर्णोऽवशीर्णमांसः ॥ ३१ ॥

तैलमित्यादौ ।— लाक्षायारसः क्वाथः । इरिमक्वाथ इति इरिमेदक्वाथः षड्गुणोयं पाकः हनुमोक्षोदन्तरोगविशेषः । उक्तं हि सुश्रुते वातेन तैस्तैर्भावैस्तु हनुसन्धौ विघट्टिते । हनुमोक्ष इति ज्ञेयो व्याधिरर्द्दितलक्षण इति । अयञ्च दन्तदेशसामीप्यात् दन्तपीडाजनकत्वाच्च दन्तरोगमध्ये सुश्रुतेन पठितः चन्द्राटे हनुमोक्ष इत्यप पाठः ॥ ३२ ॥

बकुलाद्यं तैलम्।

बकुलस्य फलं लोध्रं वज्रवल्लीकुरण्टकम्।
चतुरङ्गुलवव्वोलवाजिकर्णैरिमाशनम्॥
एषां कषायकल्काभ्यां तैलं पक्वं मुखे धृतम्।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च॥ २३॥

सहकार गुडिका।

एलालतालवनिकाफलशीतकोष-
कोलद्विकानि खदिरस्य कृते कषाये।
तुल्यांशकानि दशभागमिते निधाय-
प्रोज्झितकैतकपुटे पुटवह्निपाच्य॥
प्रागंशतुल्यशशिनाथ तदेकसंस्थं
पिष्ट्वा नवेन सहकाररसेन कल्कौ।
क्षिप्त्वा यथाभिलषितां गुडिकां विदध्यात्।
स्त्रीपुंसयोर्व्वदनसौरभबन्धुभूताम्॥ २४॥

---

बकुलाद्ये वज्रवल्ली अस्थिसंहारः कुरण्टको नीलझिण्टी चतुरङ्गुलः आरग्वधः वव्वोलः तुलसी वाबूर इति ख्यातः वाजिकर्णः शालभेदः अशनः पीतशालः चलतामिति षष्ठीबहुवचनम्॥ २३॥

एलेत्यादि लता लताकस्तुरी लवनिका लवङ्गः फलं जातीफलं शीतं कर्पूरं कोषोजातीकोषः। कोलं कक्कोलं द्विकम-गुरु। एलादीनां तुल्योंऽशः एषां मिलितानां एकभागापेक्षया दशभागपरिमिते खदिरक्वाथ इत्यर्थः। प्रोज्झितकेतकपुट इति विकसितकेतकपत्रकृतपुटके खदिरक्वाथालोडितमेलादिचूर्णं निधाय पुटविधिना मनाक् विपाच्य ततः शीतीकृत्य प्रथमग्टही-तकर्पूरमानवदपरस्य तत्कृत्वा नेन पुटपक्वचूर्णपिण्डेन सह

स्वल्पखदिर वटिका।

खदिरस्य तुलां सम्यक् जलद्रोणे विपाचयेत्।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत्॥
जातीकर्पूरपूगानि कक्कोलकफलानि च।
इत्येषा गुड़िका कार्य्या मुखसौभाग्यवर्द्धिनी॥
दन्तौष्ठमुखरोगेषु जिह्वाताल्वामयेषु च॥ ३५॥

बृहत् खदिरवटिका।

गायत्रीसारतुलयेरिमवल्कलानां
सार्द्धं तुलायुगलमम्बुघटैश्चतुर्भिः।
निक्काथ्य पादमवशिष्टं सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवड़ग्रहभागिकानाम्।

---

एकीकृत्य पिष्ट्वा कल्कं स्थाप्यम्। ततोऽभिनवचूतदन्तनिर्य्यासेन हस्तौ लिप्त्वा यथेष्टं गुड़िकाः कार्य्या इति॥ ३४॥

खदिरस्येत्यादौ।—जाती जातीकोषः पूगं पूगफलं फलानि जातीफलानि। एषां चूर्णानां प्रत्येकं पलं वक्ष्यमाण खदिरवटिकायां पलांशिकानीति दर्शनात्। अन्ये तु वक्ष्यमाणखदिरवटिकायां तुलात्रय निष्पाद्यक्काथे यावच्चूर्णमुक्तं तावतोमिलित चूर्णात् तृतीयभागेनैषां मिलितानां ग्राह्यं एतत्क्काथस्य तुलैकनिष्पाद्यत्वादित्याहुः॥ ३५॥

गायत्रीत्यादौ।—गायत्रीसारः खदिरसारः तस्य तुलया सार्द्धं इरिमेदवल्कलानां विट्खदिरत्वचां तुलायुगलमित्यर्थः। घटो द्रोणः कवड़ग्रहभागिकानामिति प्रत्येकं कर्षमाणानां प्रपौण्डरीकं मधुकं चन्दनं रक्तचन्दनं अम्बु वालकं श्यामा प्रियङ्गुः

एलालवङ्गलसितचन्दनचन्दनाम्बु-
श्यामातमालविकषा घनलोहयष्टी ॥
लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटङ्कटकट्फलानाम् ।
पद्माम्बुलोध्रवटरोहयवासकानां
मांसीनिशासुरभि वल्कलसंयुतानाम् ॥
कक्कोलजातीफलकोषलवङ्गकानि
चूर्णीकृतानि विदधीत पलांशकानि ।
शीतेऽवतार्य्य घनसारचतुःपलञ्च
क्षिप्त्वा कषायघनशीर्वटिकाः प्रकुर्य्यात् ॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलौष्ठरसनाद्विजतालु जाताम् ।
कुर्य्युर्मुखे सुरभितामथ चिरञ्च हन्याद्
स्थैर्य्यं परं दशनगं वदनापटुत्वम् ॥ ३६ ॥

इति मुखरोगचिकित्सा ।

---

तमालं तमालपत्रं विकषा मञ्जिष्ठा घनं मुस्तकं लोहमगुरुं यष्टि यष्टिमधु लज्जा वराहक्रान्ता इभो नागकेशरं श्रीपुष्पं पुण्डरिकं कटङ्कटो दारुहरिद्रा पद्माम्बु पद्मकाष्ठं सुरभिः शल्लकी वेष्टकं कुन्दुरिति ख्यातं रास्नेत्यन्ये मूर्व्वामपरे वल्कलं गुड़त्वक् जातीफलकोष इति जातीफलं जातीकोषश्च । घनसारं कर्पूरं अपटुत्वं जाड्यरहितम् ॥ ३६ ॥

इति मुखरोगाधिकारः ।

## अथ कर्णरोगाधिकारः।

कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ १ ॥
शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ २ ॥
लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
समुद्रफेणचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥ ३ ॥

---

मुखरोगेषु जिह्वाश्रयरोगा उक्ताः जिह्वा चेन्द्रियाधिष्ठानमत इन्द्रियाधिष्ठानगतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सितमुच्यते। कपित्थेत्यादि।— सुश्रुतस्य कपित्थस्य फलं एवं मातुलुङ्गस्यापि अम्लेति विशेषणात् सुपक्वफलं ग्राह्यं वा शब्दस्य कपित्थादिभिरन्वयः एते च त्रयोयोगाः ॥ १ ॥

शृङ्गवेरमित्यादि।—शृङ्गवेरस्वरसमाषकचतुष्टयं मधुनो-माषकद्वयं सैन्धवरक्तिकैका तैलं तिलजं माषकद्वयं गृहीत्वा सर्व्वमालोड्य कदुष्णं कृत्वा कर्णं पूरयेत् ॥ २ ॥

लशुनेत्यादि सुश्रुतस्य। सुरङ्गी रक्तशोभाञ्जनं कदली कदलीकाण्डं तस्याः स्वरसः। एते च लशुनस्वरसादयो व्यस्ताः समस्ता वा बोध्याः। पूर्व्वोक्तस्याप्यार्द्रकरसस्यापि पुनरुपादानं समस्तपक्षे सम्प्रयोजनमेव। युक्त्येति प्रथमं तैलेन कर्णं म्रक्षयित्वा ततोऽवचूर्णनमिति युक्त्यर्थ इति केचित् अन्ये तु शुक्तेन कर्णौ पूरयित्वा ततो समुद्रफेणेनावचूर्णनमिति युक्त्यर्थमाहुः। उक्तञ्चैतत् तदाह वाभटः शुक्तेन पूरयित्वा सिन्धुफेनेन वावचूर्णयेत्। अतएव समुद्रफेणेन युक्तेनेति पाठा-

आर्द्रकस्य च वर्त्तशोभाञ्जनमूलकस्वरसाः।
मधुतैलसैन्धवयुता पृथग्युक्ताः कर्णशूलहराः॥ ४॥
शोभाञ्जनकनिर्य्यासस्तिलतैलेन संयुतः।
व्यक्तोष्णः पूरणः कर्णे कर्णशूलोपशान्तये॥
अष्टानामपि मूत्राणां मूत्रेणान्यतमेन च।
कोष्णेन पूरयेत् कर्णौ कर्णशूलोपशान्तये॥ ५॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम्।
तैलाक्तमङ्गारपूर्णं विदध्याच्छ्रवणोपरि॥
यत्तैलं च्यवते तस्मात् खल्लादङ्गारतापितात्।
तत्प्राप्तं श्रवणस्रोतः सद्योऽग्टह्णाति वेदनाम्॥ ६॥
अर्कपत्रपुटे दग्धस्नुहीपत्रभवोरसः।

---

ठान्तरं सुश्रुते केचित् पठन्ति। तन्मते समुद्रफेणयुक्तेनेति पदं पूर्व्वोक्तशुक्तविशेषणं सुश्रुते हि एतस्मात् पूर्व्वं कर्णौ कोष्णेन शुक्तेन पूरयेत् कर्णशूलिन इत्युक्तं अस्मिन् पक्षे युक्तेति अस्य मात्रया इत्यर्थः॥ ३॥

आर्द्रकेत्यादौ।— शोभाञ्जनं शोभाञ्जनमूलं मूलकन्तु मूलककन्दं एते कदुष्णीकृत्योपयोज्याः। अतएव पृथग्युक्ता इत्यत्र पृथगुष्णा इति पाठान्तरं केचित् पठन्ति॥ ४॥

शोभाञ्जनेत्यादि।— शोभाञ्जननिर्य्यासः शोभाञ्जनस्वरसः॥ ५॥

अश्वत्थेत्यादि सुश्रुतस्य अश्वत्थपत्रैर्ब्बहुभिस्तैलाक्तैश्चुञ्चिकां कृत्वा सरन्ध्रां कृत्वा तदुपरि ज्वलदङ्गारं विन्यस्य कर्णयोरुपरि धारयेत् ततः पतिततैलेन कर्णपूरणम्। पित्तानुबन्धे तु सर्पिर्हैय तैलस्थाने विदेहसंवादात्॥ ६॥

अर्कपत्रेत्यादि।— स्नुहीपत्रमर्कपत्रेण वेष्टयित्वा तदनु

कटुष्णः पूरणादेव कर्णशूलनिवारणः ॥ ७ ॥

दीपिका तैलम् ।

महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥
यत्तैलं च्यवते तेभ्यः सुखोष्णं तत् प्रयोजयेत् ।
ज्ञेयं तद्दीपिकातैलं सद्योगृह्णाति वेदनाम् ॥
एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारले ।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ८ ॥
अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखिनावतप्तम् ।
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनस्य ॥ ९ ॥

---

स्नुहीपत्रं दग्ध्वा क्षोदयित्वा तद्रसेन कर्णयोः पूरणमित्युपदेशः ॥ ७ ॥

महत इत्यादि सुश्रुतस्य पञ्चमूलस्येति विल्वादिनामन्यतमस्य अष्टाङ्गुलानीति अग्रभागे अष्टाङ्गुलानि व्याप्य क्षौमेन वेष्टनं कार्य्यमित्यर्थः। तेन तत्काष्ठं अष्टाङ्गुलाधिकं कार्य्यं इहास्तु अष्टादशाङ्गुलमिति पञ्चमूलकाष्ठं गृहीत्वा तस्याग्रभागेऽष्टाङ्गुलं व्याप्य तैलाक्तं वस्त्रं बद्धा प्रज्ज्वाल्य ततो गलिततैलेन कर्णपूरणं कुर्व्वन्ति स्वल्पवाभटे तु अष्टाङ्गुलादिपरिमाणं नोक्तं यथा महतः पञ्चमूलस्य काष्ठात् क्षौमेन वेष्टितात्। तैलसिक्तात् प्रदीपाग्रात् स्नेहः सद्यरुजापह इति ॥८॥

अर्कस्येत्यादौ।—परिणामपीतमिति कालप्रकर्षेण पाकवशात् पीतवर्णं शिखिना वह्निना अवतप्तं खिन्नमित्यर्थः। तोयमिति रसः बहुवेदनमिति नानाविधतोदभेदादिवेदनायुक्तम् ॥ ९ ॥

तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि।
बस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेनावचूर्णितम्॥
वंशावलेखसंयुक्ते मूत्रे वाजाविके भिषक्।
तैलं पचेत्तेन कर्णं पूरयेत् कर्णशूलिनः॥ १०॥
हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम्।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते॥

क्षारतैलम्।

बालमूलकशुण्ठीनां क्षारो हिङ्गुसनागरम्।
शतपुष्पा वचा कुष्ठं दारुशिग्रुरसाञ्जनम्॥
सौवर्च्चलं यवक्षारः सर्जिकोद्भिदसैन्धवम्।
भूर्जग्रन्थिविड़ं मुस्तं मधुशुक्तं चतुर्गुणम्॥
मातुलुङ्गरसश्चैव कदल्यारस एव च।
तैलमेभिर्विपक्वं कर्णशूलहरं परम्॥

---

वंशेत्यादि सुश्रुतस्य वंशावलेखो वंशावलेखनी तस्याः कल्कं मूत्रे चाजाविके इति आजे वा आविके मूत्रे वा पचेदित्यर्थः, यदाह वंशावलेखकल्केन मूत्र आजे तथाविके। पचेत् तैलं रुजः शान्त्यै कर्णयोः पूरणं भिषगिति। विदेहवचनात् घृतमप्यनेन विधिना पक्तव्यम्॥ १०॥

हिङ्गित्यादौ।— साध्यमिति जलं चतुर्गुणेन। बालकेत्यादौ मधुशुक्तश्चतुर्गुणमिति मधूपलक्षितं शुक्तं मधुशुक्तं एतेन प्रस्थं तण्डुलतोयत इत्युक्तस्य मधुरहित शुक्तस्य निषेधः प्रस्थन्तु यन्मस्वादिशुचौ भाण्ड इत्यादिनोक्तस्य तथा जम्बीरस्य फलमित्यादिना अनन्तरमेव वक्ष्यमाणस्य वा ज्ञेयम्। एतदेव मधुप्रधानं शुक्तमित्यादिना वक्ष्यति अन्ये तु मध्विति छेदः तेन मधुनः कल्कत्वं शुक्तस्य चतुर्गुणत्वञ्चेत्यर्थः। अपरे तु

बाधिर्य्यं कर्णनादञ्च पूयास्रावञ्च दारुणः।
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात्।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्॥
मधुप्रधानं शुक्तन्तु मधुशुक्तं तथापरम्।
जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम्॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम्॥ ११॥
कर्णनादे कर्णक्ष्वेडे कटुतैलेन पूरणम्।
नादबाधिर्य्ययोः कुर्य्याद्वातघ्नूलोक्तमौषधम्॥

---

मधुचतुर्गुणं शुक्तञ्च चतुर्गुणमिति व्याचक्षते। एतन्मतद्वयमपि नोपपद्यते समानतन्त्रे जतूकर्णे तु मधुनोऽप्यपाठत्वात्। मातुलुङ्गकदलीबागुरास्वरसौ तु तैलसमौ जतूकर्णसंवादात् अतः षड्गुणः पाकः। अन्ये तु वाभटसंवादात् मातुलुङ्गकदलीस्वरसयोः प्रत्येकं चतुर्गुणत्वमाहुः अतो हि मधुशुक्तं चतुर्गुणं मातुलुङ्गरसञ्च तद्वत् कदलीरसञ्चेत्युक्तं उभयमपि प्रमाणं श्रुतिद्वैधवत्। व्यवहारस्तु पूर्ब्बणैव। जम्बीरस्येति जम्बीरफलरसस्य द्वात्रिंशत्पलानि पिप्पलीमूलस्य चत्वारि मधुनोऽष्टौ पलानि इति वृद्धवैद्योपदेशात् मामकम्॥ ११॥

कर्णनाद इत्यादौ।— कटुतैलं सार्षपतैलम्। मार्गेत्यादि।— मार्गोऽपामार्गः अपामार्गक्षारपलानि षोडश द्रवद्वैगुण्यात् जलस्य चतुर्व्विंशतिशरावाः एकविंशतिधारान् परिस्राव्य अतः क्षारजलात् षोडशशरावा ग्राह्याः। तत्कृतकल्केनेति अपामार्गकृतक्षारकल्केन सच तैलशेषभयाज्जलेनालोड्य तैले देयः यदा तु पिण्डीभूतात् कल्कं तैल सम्यक् पृथगभूतं

अपामार्गक्षारतैलम्।

मार्गक्षारजले तत्स्तत्कल्केन साधितं तिलजम्।
अपहरति कर्णनादं बाधिर्य्यञ्चापि पूरणतः॥ १२॥

सर्ज्जिकाद्यं तैलम्।

सर्जिकामूलकं शुष्कं हिङ्गुकृष्णामहौषधम्।
शतपुष्पा च तैस्तैलं पक्वं शुक्तचतुर्गुणम्॥
प्रणादशूलबाधिर्य्यं स्रावश्चाशु व्यपोहति॥

दशमूलीतैलम्।

दशमूलीकषायेण तैलप्रस्थं विपाचयेत्।
एतत् कल्कं प्रदायैव बाधिर्य्ये परमौषधम्॥

विल्वतैलम्।

फलं विल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत्।
साजाक्षीरं तद्धि हरेद्बाधिर्य्यं कर्णपूरणे॥ १३॥
एष एव विधिः कार्य्यः प्रणादे नस्यपूर्व्वकः।
शुण्ठनागरतोयेन नस्यं स्यादुभयोरपि॥ १४॥

---

दृश्यते तदैव तैलं पात्रान्तरे स्थित्वा ग्राह्यं न तु कल्कोगालनीयः क्षारमिश्रितभयात् अन्ये तु समासान्तर्भूतमपि मार्गपदं तच्छब्देन समाकृष्यापामार्गमूलमेव कल्कमाहुः॥ १२॥

फलमित्यादौ।— मूत्रेणेत्यस्य पिष्ट्वेत्यनेन तथा पाचयेदित्यनेन च सम्बन्धः पाचयेदित्यमेनैव वा तदुक्तं तन्त्रान्तरे विल्वगर्भं पचेत्तैलं गोमूत्राजपयोऽन्वितम्। बाधिर्य्ये पूरयेत्तेन कर्णौ सकृपयातजाविति अताजाक्षीरं तैलसमं गोमूत्रं द्विगुणं चतुर्गुणं वेत्याहुः! एष एवेति विधिर्व्वाधिर्य्यहरः। उभयोरपि बाधिर्य्यकर्णनादयोः॥ १३—१४॥

कर्णस्रावचिकित्सामाह चूर्णमित्यादि।— सुश्रुतस्य।

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम् ।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ १५ ॥
मालतिदलरसमधुना पूरितमथवा गवां मूत्रैः ।
दूरेण परित्यज्यते च श्रवणयुगलं पूतिरोगेण ॥
हरितालं सगोमूत्रं पूरणं पूतिकर्णजित् ।
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजोरसः ॥
मधुना संयुतः साधु कर्णस्रावे प्रशस्यते ॥ १६ ॥

अम्बाद्यं तैलम् ।

जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलञ्च सार्द्रम् ।

---

पञ्चकषायाणां पञ्चवल्कलानां चूर्णं उक्तं हि वाभटे पञ्चवल्कलचूर्णञ्च कपित्थस्वरसान्वितम् । मधुना योजितं हन्यात् कर्णस्रावं प्रपूरयेदिति । अन्ये तु पञ्चकषायशब्देन सौश्रुतमेव कर्णस्रावोक्तं तिन्दुकादि पञ्चकमुच्यते यथा तिन्दुकान्यभयालोध्रं समङ्गामलकन्तथा । पूरणञ्चात्र पथ्यं स्यात् कपित्थरसयोजितमिति नच तयोरपि वचनयोः सौश्रुतत्वेन पौनरुक्त्यमिति वाच्यं मधुयोगात् योगद्वैविध्यादित्याहुः ॥ १५ ॥

मालतिदलेति छन्दोऽनुरोधात् ह्रस्वत्वम् । सर्ज्जेत्यादि ।— सुश्रुतस्य सर्ज्जः शालः कार्पासी वनकार्पासी ग्रामकार्पासी वा । अत्र कार्पासीफलरसमपेक्ष्य अर्द्धं मधु मध्वपेक्षया च सर्जत्वक् चूर्णं मर्द्धमिति वृद्धोपदेशः । साधुरिति कार्पासीफलरसविशेषणं तेन कीटाद्यजग्धकार्पासीफलरसो ग्राह्य इति ॥ १६ ॥

जम्ब्वाम्रेत्यादौ सार्द्रमिति समन्तादार्द्रमित्यर्थः । चुत्वेति संचुद्येत्यर्थः । एतैरिति जम्ब्वाम्रपत्रादिभिः कल्करूपैरित्यर्थः । जलञ्चात्र तैलाच्चतुर्गुणम् अन्ये तु जम्बुपत्रादि रसैरित्यर्थः इत्या-

श्रुत्वा रसं तन्मधुना विमिश्रं स्रावापहं संप्रवदन्ति तज्ज्ञाः।
एतैः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ १७ ॥
पुटपाकविधिस्विन्नहस्तिविड्जातगोण्डुकः।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः।

शम्बूकाद्यं तैलम्।

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णनाडीप्रशाम्यति ॥

नाडीशोधनतैलम्।

निशागन्धपले पक्वं कटुतैलं पलाष्टकम्।
धूस्तूरपत्रजरसे कर्णनाडीजिदुत्तमम् ॥ १८ ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत्।

---

ह्वः। एतन्मते त्वक्कल्क एवायं पाक इति पाकोत्तरकालश्च मधुप्रक्षेप इत्याह्वः। निम्बबीजकरञ्जबीजभवं तैलं सार्षपतैलञ्च संमिश्र्य पक्तव्यम्। पृथगेव तैलत्रयं पक्तव्यमित्यन्ये ॥ १७ ॥

पुटपाकेत्यादौ।—हस्तिविड्जात गोण्डुकोहस्तिलण्डोद्भूतच्छत्रकः रस इत्यत्र तस्येति शेषः। तेन हस्तिलण्डोद्भूतच्छत्रकरस इत्यर्थः। अन्ये तु कोटज इति पठन्ति अपरे तु कोटजरस इति समस्तमेव पठन्ति वैद्यवारपयोदधि। मांसधावनतोयाभमिति वत्।

शम्बूके त्यादि।— शम्बूकमांसस्य कल्कः जलं चतुर्गुणमिति। निशेत्यादि निशा हरिद्रा निशागन्धयोर्मिलित्वा पलमेकं तथा धूस्तूरपत्रस्वरसश्च तैलसमः उक्तं हि गन्धकशिवार-जनोभवेनं [illegible] कटुतैल पलाष्टकञ्च। धस्तूरपत्ररसतुल्यमिदन्तु जित्वा नाडीं जयेच्चिरभवामपि कर्णजातमिति। कटुतैलस्थाने केचित् वृततैलं पठन्ति ॥ १८ ॥

ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥
कर्णपाकस्य भेषज्यं कुर्य्यात् क्षतविसर्पवत् ।
नाड़ीस्वेदोऽथ वमनं धूमोमूर्द्धि विरेचनम् ॥
विविधश्च कफघ्नाः सर्व्वेः कर्णकण्डूं व्यपोहति ।
क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ॥
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया ।
निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजोगुड़ः ॥
पूरणात् पूतिकर्णस्य शमनोमधुसंयुतः ।
जातिपत्ररसे तैलं विपक्कं पूतिकर्णजित् ॥ १८ ॥
वरुणार्ककपित्थाम्रजम्बुपल्लवसाधितम् ।
पूतिकर्णापहं तैलं जाती पत्ररसेन वा ।
सूर्य्यावर्त्तकस्वरसं सिन्धुवाररसन्तथा ॥
लाङ्गलीमूलजरसं त्र्यूषणेनावचूर्णितम् ।
पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम् ॥
क्रिमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम् ॥ २० ॥
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ।

---

चयेत्यादि सश्रुतस्य क्रियां प्राप्तामिति दोषानुरूपाम् । नाड़ीस्वेद इत्यादौ स्नेहस्वेद इति पाठे कफक्षतायामपि कर्णनाड्यां स्नेहोपमनाकृतया बोध्यः । निर्गुण्डीत्यादि निर्गुण्डीस्वरसतिलतैलयोः प्रत्येकं माषकचतुष्टयम् । गृहधूमचूर्णगुड़योस्तु प्रत्येकन्तु माषकद्वयं सैन्धवस्य रक्तिपञ्चकमिति व्यवहरन्ति ॥ १८ ॥

वरुणेत्यादि ।— वरुणादिपल्लवानां कल्कः सूर्य्यावर्त्तकादिषु त्रिषु योगेषु व्योषचूर्णं प्रक्षेप्यम् ॥ २० ॥

वार्त्ताकुधूम इति ।-परिणतवार्त्ताकुफलचूर्णं शराबसंपुटे

हलीसूर्य्यावर्त्तयोश्च स्वरसेनातिपूरिते ॥
कर्णे पतन्ति सहसा सर्व्वास्तु क्रिमिजातयः।
नीलवुन्नारसश्चैवं विन्धकाञ्जिकसंयुतः ॥
कटुष्णः पूरणात् कर्णे निःशेषः क्रिमिपातनः।
धूपनः कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ २१ ॥
राजवृक्षादितोयेन सुरसादिजलेन वा।
कर्णप्रक्षालनं कार्य्यं चूर्णैरेतैः प्रपूरणम् ॥
इष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम्।
प्रशस्यते चिरोत्थेऽपि स्रावे पूतिकर्णके ॥ २२ ॥

कुष्ठाद्यं तैलम्।

कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ॥ २३ ॥
विद्रधौ चापि कुर्व्वीत विद्रध्युक्तं हि भेषजम्।
शतावरीवाजिगन्धापयस्यैरण्डबीजकैः ॥
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम् ॥ २४ ॥

---

हत्वा नलिकया धूमोदेयः वार्त्ताकुबीजेन धूमः कार्य्यं इति भावबाभटः। हलीत्यादि हली लाङ्गलीयामूलं हलीसूर्य्या-वर्त्तयोर्व्वा मिश्रकृतरसेन कर्णपूरणमित्यर्थः ॥ २१ ॥

राजवृक्षेति राजवृक्षादिगणः आरग्वधादिगणः। सुरसादिः सुरसादिगणः। चूर्णैरेतैरिति आरग्वधादिसुरसादिकैः ॥ २२ ॥

कुष्ठेत्यादि।— कुष्ठादीनां कल्कम्। विद्रध्युक्तमित्यन्तर्विद्रध्युक्तमिति श्रीकण्ठः शतावरीत्यादि सुश्रुतस्य पयस्या क्षीरकाकोली विदारी गन्धेत्यन्ये एरण्डस्य बीजकं न तु बीजकः पीतशालः तस्य वल्कलादिति बीजकैरित्यत्र जीरकैरित्येवपाठ

गुञ्जाचूर्णयुते जाते माहिषे क्षीरजन्नतम्।
नवनीतं तदभ्यङ्गात् कर्णपालिविवर्द्धनम्॥ २५॥
विषगर्भं तिक्ततुम्बीतैलमष्टगुणे खरात्।
मूत्रे पक्वं तदभ्यङ्गात् कर्णपालि विवर्द्धनम्॥ २६॥

जीवनीयाद्यं तैलम्।

कल्केन जीवनीयेन तैलं पयसि साधितम्।
आनूपमांसक्काथेन पालीपोषणवर्द्धनम्॥
माहिषनवनीतयुक्तं सप्ताहं धान्यराशिपरिवासितम्।
नवसुवर्णकन्दचूर्णवृद्धिकरं कर्णपालीनाम्॥ २७॥
कर्णस्य दुर्व्यधे भूते संरम्भोवेदना भवेत्।

---

इति निश्चलः॥ २३—२४॥

गुञ्जेत्यादि।— गुञ्जाचूर्णं क्षीरापेक्षया अष्टमांशमित्याहुः जात इत्यत्र दध्नीति शेषः अष्टमांश गुञ्जाचूर्णयुते माहिषीक्षीरे जातस्य दध्नोनवनीतमित्यर्थः॥ २५॥
विषगर्भमित्यादि।— विषस्य कल्कं तिक्ततुम्बीवीजभवं तैलं तिक्ततुम्बीतैलं खरस्य गर्द्दभस्य मूत्रे खरमूत्रे॥ २६॥

कल्केनेत्यादि।— वाभटस्य। जीवनीयेनेति जीवनीयदशकेन अष्टवर्गेण वेत्यन्ये। दुग्धमत्र स्नेहसमं आनूपमांसक्काथस्तु त्रिगुणः। पोषणं परिणाहेन वर्द्धनं अन्ये तु दैर्घेण। माहिषेत्यादौ।—सप्ताहं धान्यराशौ परिवस्तुं शीलमस्येति तत्तथा। नवमूषलीकन्दचूर्णमिति तत्क्षणानीतशुष्कतालमूलीकन्दचूर्णं पल २ महिषनवनीतपल १ संमर्द्य सप्ताहं धान्यराशौ स्थाप्यमित्यर्थः॥ २७॥

दुर्व्विद्धकर्णचिकित्सामाह कर्णस्येत्यादि।— यवमधुकमेरण्डमूलं उक्तं हि तन्त्रान्तरे यवैरण्डजटासर्पिर्मधुमधुकसंयु-

तत्र दुर्ग्रन्थरोहार्थं लेपोमध्वाज्यसंयुतैः॥
मधूकयवमञ्जिष्ठारवुमूलैः समन्ततः॥ २८॥
अनेकधा तु छिन्नस्य सन्धिः कर्णस्य वै भिषक्।
यो यथाभिनिविष्टः स्यात्तन्तथाविनियोजयेत्॥ २९॥
धान्याम्लोष्णोदकाभ्यान्तु सेकोवातेन दूषिते।
रक्तपित्तेन पयसा श्लेष्मणा तूष्णवारिणा॥
ततः सीव्यस्थिरं कुर्य्यात् सन्धिं बन्धेन वा पुनः।

---

तम्। विकषायवचूर्णं वा केवलं रोपणं हितमिति। अतएव रवुमूलस्थाने रवुतैलमित्यपपाठः॥ २८॥

छिन्नकर्णपालिसन्धानार्थविधिमाह अनेकधेत्यादि। कर्णपालिच्छेदोहि हेतुद्वयेन भवति उक्तं हि सुश्रुते एवं विबर्द्धितः कर्णश्छिद्यते तद्विधा नृणाम्। दोषतश्चाभिघाताद्वेति। दोषत इति वातादिकोपात् छिन्नस्य कर्णस्येति छिन्नकर्णयोः कर्णवतिकयोः। अथ स्थूलह्रस्वदीर्घह्रस्वतिर्य्यगादिभेदेन अनेकविधत्वात् सन्धिरपि अनेकधा भवति तत्र सन्धिर्यथा येन प्रकारेण विनिविष्टस्सम्बद्धः स्यात् तं सन्धिं तथा तेन प्रकारेण योजयेत् सन्धानार्थं योजयेदित्यर्थः। तत्र सुश्रुते पञ्चदश छिन्नकर्णबन्धप्रकारा आकृतिभेदेनोक्ताः ते च तत्रैव कृष्यसन्धिविज्ञानीयाध्याये चानुसन्धेयाः॥ २९॥

तत्र दोषानुरूपं प्रक्षालनमाह धान्याम्लेत्यादि पयसेति दुग्धेन शीतोदकेनेति वा उक्तं हि सुश्रुते पित्तदुष्टे शीतोदकपयोभ्यामिति।

ततइत्यादि।— तत इति सन्धिद्वयसंयोगानन्तरम्। सीव्येति सीवुतन्तुसन्तान इत्यस्य रूपं छान्दसत्वात् सीव्येत्यत्र क्षौमसूत्रेणेति शेषः। सन्धिं कर्णपालिद्वयसन्धिं सीव्यस्थिरं

मध्वाज्येन ततोऽभ्यज्य पिचुना सन्धिवेष्टकम् ॥
कपालचूर्णेन ततश्चूर्णयेत् पथ्ययाथवा ॥ २० ॥
इति कर्णरोगचिकित्सा ।

---

## अथ नासारोगाधिकारः ।

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुड़ः षड़ङ्गश्च यूषः पीनसशान्तये ॥ १ ॥
व्योषादिचूर्णम् ।
व्योषचित्रकतालीशतिन्तिड़ी चाम्लवेतसम् ।
स चव्याजाजीतुल्यांशमेलात्वक्पत्रपादिकम् ॥

---

कुर्य्यात् तथा बन्धेन स्थिरं कुर्य्यात्। सन्धिस्थिरीकरणानन्तरं मधुघृताभ्यां सन्धिमभ्यज्य पिचुना तूलकपिण्डेन सन्धिवेष्टनं कुर्य्यात् । सन्धिवेष्टनानन्तरञ्च सूत्रेणातिगाढ़ं नातिशिथिलञ्च बन्धनं बोध्यं वाभटसम्वादात् । कपालोऽत्र पात्रकपालः ॥२०॥
इति कर्णरोगचिकित्सा ।

---

उक्तसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते । पञ्चमूलीत्यादि ।— पञ्चमूली स्वल्पेति निश्चलः महतीत्यन्ये चित्रकहरीतकी अत्रैवाधिकारे वाच्या सर्पिर्गुड़षड़ङ्गयूषौ यक्ष्मोक्तौ इदन्तु क्रिया सूत्रं पीनसे बोध्यम् ॥ १ ॥

व्योषादिचूर्णं ।— व्योषस्त्रिकटुः तिन्तिड़ी महार्द्रकं चजाजी जीरकं एलात्वक्पत्र पादिकमिति एलात्वक पत्रादि प्रत्येकमेकभागापेक्षया पादिकं गुड़न्तु सर्व्वचूर्णसममिति निश्चलः किन्तु तालीशचित्रकव्योषतिन्तिड़ीकाम्लवेतसम् । इच-

व्योषादिकं चूर्णमिदं पुराणगुड़संयुतम्।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम्॥ २॥
पाठाद्विरजनीमूर्व्वापिप्पलीजातिपल्लवैः।
दन्त्याच तैलं संसिद्धं नस्यं स्यात्पूयपीनसे॥ ३॥
व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः।
पाचितं नावनं तैलं पूतिनासागदं जयेत्॥
त्रिकटुविड़ङ्ग-सैन्धव-वृहतीफल-शिग्रु-सुरस-दन्तीभिः।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य॥ ४॥
कलिङ्गहिङ्गुमरिचलाक्षासुरसकट्फलैः।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीड़ः प्रशस्यते॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत्।

---

व्याजाजीद्विपलमेलात्वक्पत्रपादिकम्। जीर्णगुड़तुलार्द्धेन पाकेन वटकीकृतम्। पीनसश्वासकासघ्नं रुचिस्वरकरं परमिति वाभटे सार्द्धोनविंशतिपलचूर्णस्तुलार्द्ध ग्रहणात् गुड़स्य सर्व्वसमत्वं नोपपद्यत इति॥ २॥

पाठेत्यादि।— पाठादीनां कल्कोजलं चतुर्गुणमिति॥३॥

व्याघ्रीत्यादौ।— सुरसः सिन्धुवारः पर्णास इत्यन्ये। त्रिकटुकेत्यादि।—अत्रापि सुरसः सिन्धुवारः पर्णास इत्यन्ये। अत्र शिग्रुवीजं दन्तीवीजं ग्राह्यं तथा वृहतीफलस्यापि वीजं उक्तं हि वाभटे शिग्रुसिंहीनिकुम्भानां वीजैः सव्योषसैन्धवैः। सरेणुसुरसैस्तैलं मूत्रसिद्धन्तु नावनमिति॥ ४॥

कलिङ्गेत्यादौ।— सुरसः पर्णासः उग्रावचा क्रिमिघ्नोविड़ङ्गः अत्रापि वक्ष्यमाणमूत्रसंयुक्तैरित्यस्य सम्बन्धं कृत्वा अवपीड़मपि मूत्रेण पिष्ट्वा कुर्व्वन्ति। तैलपाके तु गोमूत्रमेव चतुर्गुणमिति। नासापाके पित्तहरं विधानमित्यत्र पित्तकृत्

अपीनसे पूतिनस्ये शमनं कीर्त्तितं परम् ॥
नासापाके पित्तहरं विधानं कार्य्यं सर्व्वं बाह्यमभ्यन्तरञ्च ।
हरेद्रक्तं क्षीरिवृक्षत्वचश्चयोज्याः सेके सघृताश्च प्रदेहाः ॥
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च ॥ ५ ॥
शुण्ठीकुष्ठकणाबिल्वद्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ ६ ॥
दीप्ते रोगे पैत्तिके सन्विधानं सर्व्वं कुर्य्यान्मधुरं शीतलञ्च ।
नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्द्धि वस्तिश्च नित्यम् ॥
वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम् ।

---

संधारणमिति पाठः रत्नप्रभासम्भवः । हरेद्रक्तमित्यत्र कृत्वा रक्तमपि तथा बाह्याभ्यन्तरञ्चेति बाह्यं लेपादि अभ्यन्तरं स्नेहपानादि । क्षीरीवृक्षोवटोडुम्बरादयः पञ्च ॥ ५ ॥

शुण्ठीत्यादि वाभटस्य बिल्वं बिल्वस्य मूलम् । क्षवथुपुट-नुदित्येव पाठो वाभटे तु दृश्यते टीकायाञ्चैवमेवोक्तं अस्यार्थ-मबुद्ध्वैव क्षवथुरुक् प्रणुदिति पाठमन्याः कुर्व्वन्ति । क्षवः क्षवथुः पुटोऽपि नासारोगविशेषः उक्तं हि वाभटे पित्तश्लेष्मावरुद्धो-ऽन्तर्नासायां शोषयेन्मरुत् । कफं संशुष्कपुटतां प्राप्नोतिपुटकं हि तदिति ॥ ६ ॥

दीप्तइत्यादि ।—सुश्रुतस्य । दीप्ते रोगे पैत्तिकसन्धानमिति पाठः सुश्रुते दृश्यते । वातिक इत्यादि सुश्रुतस्य । पञ्चभिर्ल-वणैरिति कल्करूपैः सिद्धं सर्पिः पिबेद्यथाक्रममिति स्नेहोपयो-गिकाध्यायोक्तविध्यनतिक्रमेण । प्रथमेन गणेनेति विदारीग-न्धादिगणेन वा क्वाथकल्करूपेण सिद्धं सर्पिः पिबेदित्यर्थः तथा नस्यादिकर्म्मसु कर्त्तव्येषु अर्द्दितोक्तविधिं अवेक्षेत जानी-यात् । वाभटेऽप्युक्तं पिबेत् वातप्रतिश्याये सर्पिर्वातघ्नसाधितम्

पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्द्दितेरितम् ॥ ७ ॥
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ।
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥ ८ ॥
कफजे सर्पिषा स्निग्धं तिलमाषविपक्कया ।
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥
दार्व्वीङ्गुदीनिकुम्भैश्च किणिह्यासुरसेन च ।
वर्त्तयोऽत्र कृता योज्या धूमपाने यथाविधि ॥ ९ ॥
अथवा सघृतान् शक्तून् कृत्वा मल्लिकसंपुटे ।

---

पटुपञ्चकसिद्धं वा विदार्य्यादिगणेन वा। स्वेदनस्यादिकं कु-र्य्यात् चिकित्सां चार्द्दितेरितामिति। अन्येत्वाहुः प्रथमेन गणेन सिद्धं सर्पिर्नस्योपनास शिरोबस्त्यादिषु योज्यमिति एतत्तु वाभटविरोधादुपेक्षणीयमिति ॥ ७ ॥

पित्तेत्यादि सुश्रुतस्य। पित्तरक्तोत्थयोः प्रतिश्यायथोरिति शेषः। मधुरकैः शृतमिति काकोल्यादिभिर्व्विपक्कं शीतला-निति न्यग्रोधाद्युत्पलादिगणाः शीतलास्तैः कृतान् ॥ ८ ॥

कफज इत्यादौ।— तिलमाषौ कल्करूपौ अत्र मदनफ-लमपि बोध्यं वमन योगात्। कफघ्नं क्रममिति कफहरद्रव्य-कृत पेयादिक्रमम्। दार्व्वीत्यादि।— सुश्रुतस्य। दार्व्वी दारु-हरिद्रा इङ्गुदी पुत्रजीवकः निकुम्भोदन्ती तस्या बीजं मूल वा। किणिहि कटभीबीजं अपामार्ग इत्यन्ये। सुरसेनेत्यत्र सरलेनेति सुश्रुते पठ्यते तन्मते सरलं सरलकाष्ठमेव। सुरस पर्णासः निर्गुण्डी वा। यथाविधिरिति वैरेचकधूमवर्त्तिविधान क्रमेण ॥ ९ ॥

अथवेत्यादौ।— यवशक्तून् सघृतान् शरावस्थिताङ्गा

नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥
यः पिबति शयनकाले शयनारूढ़ः सुशीतलं शुचि ।
सलिलं पीनसयुक्तः समुच्यते तेन रोगेण ॥ १० ॥
पुटपक्वं जयापत्रं सिन्धुतैलसमन्वितम् ।
प्रतिश्यायेषु सर्व्वेषु शीलितं परमौषधम् ॥
सोषणां गुड़संयुक्तं स्निग्धदध्यम्लभोजनम् ।
नवप्रतिश्यायहरं विशेषात् कफपाचनम् ॥
प्रतिश्याये नवे शस्तो यूषश्चिञ्चाच्छदोद्भवः ।
ततः पक्वं फलं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥ ११ ॥
शिरसोऽभ्यञ्जनस्वेदनस्यकट्वम्लभोजनैः ।
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥
अश्नाति भुक्तमात्रे सलवणामुत्स्विन्नमाषमत्युष्णाम् ।
स जयति सर्व्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥
पिप्पल्यः शिग्रुवीजानि विड़ङ्गं मरिचानि च ।
अवपीड़ः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥

---

दत्त्वा तदुपरि कृतच्छिद्रेण शरावान्तरेण पिधाय तस्मिन्नेव छिद्रे नलिकां दत्त्वा धूमं पिबेदित्यर्थः ।

यः पिबतीत्यादि ।— योगोऽयं वातपित्तोत्तरे प्रतिश्याये बोध्यः ॥ १० ॥

पुटेत्यादौ ।— जया जयन्ती । सोषणामित्यादि ।— ऊषणां मरिचम् । योगोऽयं वातिके इत्याहुः । प्रतिश्याय इत्यादि चिञ्चा तिन्तिड़ी तस्याः छदः पत्रम् । यूषः क्वाथः अत्र त्रिकु-मरिचचूर्णं मात्रानुरूपं प्रक्षिपन्ति वृद्धाः ॥ ११ ॥

शिरस इत्यादौ ।— यथास्वमिति पक्षे शिरोऽभ्यञ्जस्वेद-नस्य घृतपानादिशेषपक्षे स्वेदश्च ।

सम्यक्‌पिष्टास्तद्दिष्टाः क्रियाः क्रिमिषु योजयेत् ।
भावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान् ॥
शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ।

करवीराद्यं तैलम् ।

रक्तकरवीरपुष्पं जात्यशनमल्लिकायाश्च ।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥ १२ ॥

शिखरीतैलम् ।

गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः ।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम् ॥ १३ ॥

---

भक्षयतीत्यादि ।— योगोऽयं वातोत्तरे बोध्यः। सम्यगित्यादि सुश्रुतस्य। सम्यक् यथास्यात्तथा पिष्टाः कर्णधारयो वा। तद्दिष्टा इति सुश्रुतेऽनन्तरोक्ताः सर्व्वाः क्रियाः सम्यक्‌पिष्टाः प्रतिश्यायै क्रिमिसम्बन्धे सति योजयेदित्यर्थः। अन्ये तु क्रिमिषु याः क्रिया उक्तास्ताश्च सर्व्वा सम्यक्‌पिष्टा योजयेदित्याहुः।

क्रिमिघ्नानि भेषजानीति। सुरसादिगणप्रभृतीनि। शेषाणान्तु विकाराणामिति नासार्बुदनासार्शःप्रभृतीनाम्। यथास्वमिति यत् यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः।

रक्तकरवीरेत्यादौ ।— जाती मालती तस्या अपि पुष्पं अशनमल्लिका आफरमल्लिका। जात्यशनेति संहिताऽनिर्देशोऽसिद्धविधेरनित्यत्वात्। एतैः सममिति एतैः कल्करूपैः पाकार्थन्तु जलं चतुर्गुणमिति ज्ञेयम् ॥ १२ ॥

गृहधूमेत्यादौ ।— क्षारो यवक्षारः नक्ताह्वं करञ्जबीजं शिखरीबीजमपामार्गबीजतण्डुलं अत्रापि जलं चतुर्गुणं देयम् ॥ १३ ॥

चित्रकतैलम्।

चित्रकचविकादीप्यकनिदिग्धिकाकरञ्जलवणार्कैः।
गोमूत्रयुक्तं सिद्धं तैलं नासार्शसां विहितम्॥ १४॥

चित्रकहरीतकी।

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम्।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात्॥
शतं पचेद्घनीभूते पलं द्वादशकं क्षिपेत्।
व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽहनि॥
प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादतन्त्रितः।
हन्त्ययेऽग्नेः क्षयं कासं पीनसं दुस्तरं क्रिमीन्॥
गुल्मोदावर्त्तदुर्नामश्वासान् हन्ति रसायनम्॥ १५॥

इति नासारोगचिकित्सा।

---

चित्रकेत्यादौ।— दीप्यकं यमानी लवणं सैन्धवं अर्कमर्कक्षीरम्॥ १४॥

चित्रकहरीतक्यां चित्रकस्य पञ्चाशत्पलानि जलशरावाः पञ्चाशत् क्वाथ्यास्तु सार्द्धद्वादशशरावाः एवं चित्रकस्य क्वाथस्य पलशतं भवति। आमलकी स्वरसस्यापि पलशतं स्वरसाभावे त्वयमेव स्वरसविधिः। एवं गुडूच्याः मिलितदशमूलस्य च क्वाथविधिः। व्योषत्रिजातयोर्मिलित्वा पलद्वादश। पलार्द्धमिति क्षारादित्यनेनैव सम्बध्यते। अपरेऽहनीति परेण सम्बध्यते॥ १५॥

इति नासारोगाधिकारः।

## अथ नेत्ररोगाधिकारः ।

लङ्घनालेपनस्वेदशिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥ १ ॥
श्रीवासातिविषालोध्रैश्चूर्णितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगदे कार्य्यं प्रोतस्थैर्गुण्ठनं बहिः ॥ २ ॥
अक्षिकुक्षिभवारोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ ३ ॥

---

उक्तसम्बादादेव नेत्ररोगचिकित्सामाह । अत्राभिष्यन्दस्य निखिलनेत्ररोगमूलत्वेन प्राधान्यात् प्रथमतोऽभिष्यन्दप्रतिकारमाह लङ्घनेत्यादि ।— लङ्घनमत्र लघ्वन्नमुपवासो वा उक्तं हि प्रागेवाक्ष्यामये भुक्तं त्रिरात्रमगुरुस्थितम् । उपवासस्त्र्यहं वा स्यादिति । किन्तु उपवासो वातजादन्यत्र विधेयः वाभटसंवादात् । स्वेदोऽपि पित्तजं विना नयनोपान्ते मृदुर्बोध्यः । यदुक्तं त्र्यहं उषणौ दृष्टिं स्वेदयेत् मृदु वा नवा इति । शिराव्यधोरक्तदुष्टौ सत्यां शिराव्यधनम् । विरेचनं शिरसः कायस्य च शिरोविरेचनन्तु नवे, कायविरेचनञ्च जीर्णे ज्ञेयं आदिशब्देन तर्पणपुटपाकक्वाथादिपरिग्रहः ॥ १ ॥

श्रीवासेत्यादि ।— श्रीवासो देवदारुः । अल्पसैन्धवैरिति एकभागापेक्षया चतुर्भागत्वं सैन्धवस्येत्याहुः । अव्यक्त इति पूर्वरूपे । प्रतस्थैरिति कर्पटबद्धैः गुण्ठनं अवचूर्णनं एतच्च मुकुलिते चक्षुःपत्रे नतु विस्तारिते ॥ २ ॥

अक्षिकुक्षिभवा इत्यादि ।— कुक्षिभवा अतीसारविलम्बिकादयः । पञ्चरात्रेणेत्युपलक्षणं तेन त्र्यहमपि बोध्यम् । यदाह विदेहः उपवासस्त्र्यहं वा स्यादिति । अयञ्च मतभेदोदोषप्रकोपतारतम्याच्च विरोधमावहति ॥ ३ ॥

स्वेदः प्रलेपस्तिक्तान्नं सेकोदिनचतुष्टयम् ।
लङ्घनञ्चाक्षिरोगाणामामानां पाचनानि षट् ॥ ४ ॥
अञ्जनं पूरणं क्वाथपानमामे न शस्यते ॥ ५ ॥
धात्रीफलनिर्य्यासो नवहन्त्यप निहन्ति पूरणतः ।
सक्षौद्रसैन्धवो वा शिग्रुद्भवपत्ररससेकः ॥
दार्व्वीरसाञ्जनं वापि स्तन्ययुक्तं प्रपूरणम् ।
निहन्ति शीघ्रं दाहाश्रुवेदनाः स्यन्दसम्भवाः ॥
करवीरतरुणकिशलयच्छेदोद्भवबहलसलिलसम्पूर्णम् ।
नयनयुगं भवति दृढं सहसैव तत्क्षणात् कुपितम् ॥ ६ ॥
शिखरिमूलं ताम्रकभाजने स्तोकसैन्धवोन्मिश्रम् ।
मस्तुनिघृष्टं भरणाद्धरति नवं लोचनोत्कोपम् ॥ ७ ॥

---

स्वेद इत्यादौ ।— सेको वासकादिक्काथादिना चक्षुः सेचनमाश्चयोतनशब्दवाच्यं न तु पूरणं तस्यामे निषेधात् । आश्चयोतनं पुनरामे क्रियत एव यदुक्तं सर्व्वेषामक्षिरोगाणामादावाश्चयोतनं हितमिति । दिनचतुष्टयमिति दिनचतुष्टयं स्वरूपत एव ज्वराष्टाहवदिति ॥ ४ ॥

आमे नेत्ररोगे अञ्जनादिकं न कार्य्यमित्याह अञ्जनमित्यादि ।— पूरणमाश्चयोतनम् ॥ ५ ॥

धात्रीत्यादौ ।—पूरणशब्देनाश्चयोतनशब्दवाच्यम् । सक्षौद्रसैन्धवेति शोभाञ्जनपत्रस्वरसमाषकचतुष्टयं मधुमाषैकं सैन्धवं रक्तिद्वयम् । दार्व्वीत्यादि ।— दार्व्वी रसाञ्जनं दारुहरिद्राक्काथकृतं रसाञ्जनम् । स्यन्दसम्भवा इत्यभिष्यन्दसम्भवाः । करवीरेत्यादौ ।— तरुणमभिनवं यत् किशलयं तस्य छेदात् यो रसोनिर्गच्छति तेन पूरणमित्यर्थः ॥ ६ ॥

शिखरीत्यादौ । शिखरी अपामार्गः स्तोकं सैन्धवं रक्तिद्वयं त्रयं वा सैन्धवमितरार्थः ॥ ७ ॥

सामान्याभिष्यन्दे।

सैन्धवदारुहरिद्रागैरिकपथ्यारसाञ्जनैः पिष्टैः।
दत्तोवहिः प्रलेपोभवत्यशेषाक्षिरोगहरः॥
तथा शाबरकं लोध्रं घृतभृष्टं विडालकः।
शालक्ये ऽक्ष्णोर्वहिर्लेपोविडालक उदाहृतः॥
गिरिजचन्दननागरखटिकांशयोजितो बहिर्लेपः।
कुरुते वचया मिश्रोलोचनममगदं न सन्देहः॥
भूम्यामलकीघृष्टा ससैन्धवमस्तुवारियोजिता ताम्रे।
याताघनत्वमक्ष्णोर्जयति वहिर्लेपतः पीडाम्॥ ८॥
आश्च्योतनं मारुतजे क्वाथोविल्वादिभिर्हितः।
कोष्णः सैरण्डबृहतीतर्कारीमधुशिग्रुभिः॥ ९॥

---

सैन्धवेत्यादौ।— एतैः श्लोकसैन्धवसहितैः समभागपिष्टैः शुष्कस्योपरि निमीलितचक्षुषि लेपोदेयः। शाबरकं लोध्रमिति श्वेतलोध्रम्। विडालकशब्दार्थमाह शालक्य इत्यादि। शालक्ये शालक्यग्रन्थे सुश्रुत इति यावत्। गिरिजेत्यादौ।— अंशोभागः एतैः समभागपिष्टैश्चक्षुःसमीपे लेपः कार्य्य इत्याहुः। भूम्यामलकीत्यादौ।— मस्तुवारि काञ्जिकम्॥८॥

आश्च्योतनमिति।— आश्च्योतनमक्षिसेकः। विल्वादि महत् पञ्चमूलम्। तर्कारी जयन्ती। मधुशिग्रु रक्तशोभाञ्जनम्। विल्वादिभिरित्यस्य सैरण्डादिविशेषणं तेन एक एवायं योगः यदाह वृद्धकर्णः महत्पञ्चमूलरुबुकशिग्रुतर्कारीसिंहीक्वाथ इति। किन्तु तन्त्रान्तरे केवलविल्वादिक्वाथेनाप्ययं योगोऽनुश्रूयते यथा पूरयं तीव्रसूलघ्नं तथा विल्वादिजाम्भसेति किन्तु योगद्वयपक्षे सैरण्डेति बृहतीविशेषणं नतु विल्वादिविशेषणं एकयोगत्वाप्रसङ्गात्॥ ९॥

एरण्डपल्लवे मूले त्वचि चाजं पयः शृतम् ।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥ १० ॥
संपक्वेऽक्षिगदे कार्य्यं चाञ्जनादिकमिष्यते ।
प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता ॥
मन्दवेदनताकण्डूः पक्वाक्षिगदलक्षणम् ।
अञ्जनादिविधिश्चाग्रे निखिलेनाभिधास्यते ॥
इत्यैरण्डमूलत्वक्शिग्रोर्मूलं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्ज्ञाताक्षिरोगनुत् ॥ ११ ॥
हरिद्रे मधुकं द्राक्षा देवदारु च पेषयेत् ।
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥

---

एरण्डेत्यादि सुश्रुतस्य एरण्डपल्लवादिकण्टकार्य्यन्त एक एवायं योगः विदेहसंवादात् । यथा कण्टकारीशिग्रैरण्डमूलत्वक् पयसाधितम् । क्षीरमाजं हितं सेके चक्षुः स्यन्दाधिमन्थयोरिति । आजं पयोऽत्र क्षीरपरिभाषयैव साध्यं अन्येत्वाहुः एतद्योगान्तरं सुश्रुते सैन्धवोदिच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः । हितमक्षौदकं सेक इति पठन्ते एतद्वचनान्तः सर्व्वमाश्च्योतनक्षीरसाधनार्थं परिभाषास्थानीयं तेनात्रापि अर्द्धोदकं क्षीरसाध्यमिति किन्त्वत्र शेषानुक्त्या क्षीरपरिभाषयैव साधनमिति युक्तिमुत्पश्यामः । व्यवहारोऽपि क्षीरपरिभाषयैवेति ॥ १० ॥

अञ्जनादिविधानस्य समयमाह सम्पक्व इत्यादि ।—पक्वाक्षिरोगलक्षणमाह प्रशस्तेत्यादि । प्रशस्तवर्त्म तादोषाणामनभिभूतवर्त्मता संरम्भः शोथः । एतच्च लक्षणं प्रायस्त्यक्ताहुपरि ज्ञेयं यदाह चरकः । संपक्वे चाञ्जनं त्यहादिति । अञ्जनादिविधिश्च कथं ज्ञातव्य इत्यपेक्षया आह अञ्जनादिविधीत्यादि । अग्र इति आश्च्योतनाद्यधिकारे ॥ ११ ॥

गैरिकं सैन्धवं कृष्णां तगरञ्च यथोत्तरम्।
पिष्टं द्विरंशतोऽद्भिर्वा गुड़िकाञ्जनमिष्यते॥ १२॥
प्रपौण्डरीकयष्ट्याह्वनिशामलकपद्मकैः।
शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगनुत्॥
द्राक्षामधुकमञ्जिष्ठाजीवनीयैः शृतं पयः।
प्रातराश्च्योतनं पथ्यं शोथशूलाक्षिरोगिणाम्॥
निम्बस्य पत्रैः परिलिप्य लोध्रं स्वेदाग्निना चूर्णमथापि कल्कम्।
आश्च्योतनं मानुषदुग्धयुक्तं पित्तास्रवातापहमग्र्यमुक्तम्॥
कफजे लङ्घनं स्वेदो नस्यं तिक्तान्नभोजनम्।
तीक्ष्णैः प्रधमनं कुर्य्यात् तीक्ष्णैश्चैवोपनाहनम्॥

---

हरिद्रेत्यादि सुश्रुतस्य। अत्र द्राक्षास्थाने पथ्येति केचित् पठन्ति। गैरिकमित्यादि सुश्रुतस्य तत्र तगरस्थाने नागरमिति निश्चलः पठति। यथोत्तरं द्विरंशत इति यथोत्तरभागतोद्विगुणमित्यर्थः। तेन गैरिकमाषा १ सैन्धवमाषा २ पिप्पलीमाषा ४ तगरमाषा ८। अद्भिर्वेति वा शब्दाच्छागीक्षीरमपि बोध्यम्॥ १२॥

प्रपौण्डरीकमित्यादौ।— शीतैरिति प्रपौण्डरीकादीनां कषायैः शीतलैरित्यर्थः। समायुक्तैरित्यत्र सितायुक्तैरिति केचित् पठन्ति सितायुक्तेति पाठे मधुवत् सिता प्रक्षेप्येत्यर्थः।

द्राक्षेत्यादौ।—जीवनीयशब्देन जीवनीयाष्टवर्गं गृह्णन्ति। निम्बस्येत्यादि।— निम्बपत्रं पिष्ट्वा तत्पिण्डमध्ये लोध्रकल्कं चूर्णं वा प्रक्षिप्य पत्रेण वेष्टयित्वा अङ्गारैस्तत्स्विन्न नारीक्षीरेण संमिश्र्य वस्त्रेण गालयित्वा चक्षुःसेको विधेय इति। फञ्जिभक्तः पर्णाशभेदः निर्गुण्डीत्यन्ये। आस्फोता आफरमल्लिका कान्दसत्वाद्ह्रस्वत्वम्। पन्नूरः शाकिशशाकः पीलुः

फणिज्झकास्फोतकपीतविल्वपत्तूरपीलूसुरसार्कभङ्गैः।
स्वेदं विदध्यादथवा प्रलेपं वर्त्तिश्च शुण्ठीसुरदारुकुष्ठैः॥ १३॥
शुण्ठीनिम्बदलैः पिण्डः सुखोष्णः स्वल्पसैन्धवैः।
धार्य्यश्चक्षुषि संक्षेपाच्छोथकण्डुव्यथापहः॥ १४॥
वल्कलं पारिजातस्य तैलं काञ्जिकसैन्धवम्।
कफोद्भूताक्षिशूलघ्नं तरुणं कुलिशं यथा॥ १५॥
ससैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम्।
आश्च्योतनं तन्नयनस्य कुर्य्यात् कण्डूञ्च दाहञ्च रुजाञ्च हन्यात्॥ १६

पीतस्तरपथिकतरुः अतएव निर्द्देशात् पीलूशब्दो दीर्घोकारान्तोऽपि ज्ञेयः। सुरसार्क्कावपि पर्य्यायभेदौ एषां भङ्गैः पल्लवैर्व्यस्तसमस्तैरङ्गारतापितैश्चक्षुषोर्मृदुस्वेदः कार्य्यः। वर्त्तिः बालकम्। अत्रैव तन्त्रान्तरदर्शनात् अर्ज्जकस्थाने अर्कः केचित् पठन्ति तन्त्रान्तरे यथा कपित्थसुरसास्फोतपीलूपत्तूररूपिका। फणिज्झविल्वच्छदनैः स्वेदः स्यन्दाधिमन्थयोः। रूपिका अर्कः॥ १३॥

शुण्ठीत्यादौ।— निम्बपत्रापेक्षया शुण्ठी स्वल्पा देया सैन्धवमपि चतुःपञ्चरक्तिकमपि वदन्ति एषां पिण्डः कवुष्ण एव चक्षुषोरुपरि सूक्ष्मवस्त्रं दत्त्वा देय इत्युपदेशः। संक्षेपादित्यल्पप्रक्रियात्॥ १४॥

वल्कलमित्यादि।— परिजातः पारिभद्रः। पारिभद्रवल्कस्वरसस्य माषकत्रयं सैन्धवस्य रक्तिद्वयं त्रयं वा काञ्जिकन्तु निकुञ्चमात्रं निकुञ्चस्तु आभुग्नाङ्गुलिचतुष्टयपरिमितः। एतत् सर्व्वं ताम्रपात्रे कृत्वा कपर्द्दकेन तावद्घर्षणीयं भवति। तदनु चक्षुष्यञ्जनं देयमिति वृद्धाः व्यवहरन्ति॥ १५॥

ससैन्धवमित्यादि।— सैन्धवस्य रक्तिद्वयं लोध्रस्य माषक-

स्निग्धै रूक्षैश्च वातोत्थः पित्तजो मृदुशीतलैः।
तीक्ष्णरूक्षोष्णविशदैः प्रशाम्यन्ति कफात्मकाः॥
तीक्ष्णोष्णमृदुशीतानां व्यत्यासात् सान्निपातिकः॥ १७॥
तिरीटत्रिफलायष्टीशर्कराभद्रमुस्तकैः।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः॥ १८॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंयुतम्।
न्यस्तमप्स्वन्तरीक्षासु हितमाश्च्योतनं भवेत्॥ १९॥

---

चतुष्टयं काञ्जिकेन पिष्ट्वा गव्यघृते भृष्टा निर्मलसूक्ष्मवस्त्रेण बद्धा अङ्गुलीद्वयेन संपीड्य चक्षुषि तद्रसोदेयः॥ १६॥

संक्षेपेण वातजादीनां चिकित्सामाह स्निग्धैरित्यादि।— विशदैरित्यपिच्छिलैः। तीक्ष्णोष्णमृदुशीतलानां व्यत्यासोऽत्र परस्परविपर्य्ययेणोपयोगः तेन तीक्ष्णमुपयुज्य तद्विपरीतस्य मृदुन उपयोगः एवं मृदुद्रव्यमुपयुज्य तीक्ष्णस्योपयोगः एवं उष्णशीतयोरपि व्यत्यासो ज्ञेयः किम्वा परस्परविरुद्धानां भावानां संमिश्रणेन उपयोगो व्यत्यासोपयोगः। तीक्ष्णोष्णमृदुशीतलानामित्युपलक्षणं तेन स्निग्धरूक्षादीनामपि ग्रहणं बोध्यम्॥ १७॥

तिरीटेत्यादि।— तिरीटः पट्टिकालोध्रं एषां प्रत्येकं माषकमेकं गृहीत्वा सूक्ष्मं पिष्ट्वा शीतलजलेन पलैकेन संमिश्र परिषेकः कार्य्यः॥ १८॥

कशेर्व्वित्यादि।— सुश्रुतस्य। कशेरुयष्टिमधुनोः प्रत्येकं माषकचतुष्टयं गृहीत्वा सूक्ष्मवस्त्रेण पोट्टलीं बद्धा आकाशोदके पलैके निक्षिप्य तेन जलेन सेकः आकाशोदकाभावे हंसोदकेन॥ १९॥

दार्व्वीपटोलमधुकं सनिम्बं पद्मकोत्पलम् ।
प्रपौण्डरीकञ्चैतानि पचेत्तोयेचतुर्गुणे ॥
विपाच्य पादशेषन्तु तत् पुनः कुडवं पचेत् ।
शीतीभूते तत्र मधु दद्यात् पादांशिकं ततः ॥
रसक्रियैषा दाहाश्रुरागरक्तरुजापहा ॥ २० ॥
तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम् ।
अक्ष्णोरपि समन्ताच्च पातनन्तु जलौकसः ॥
पित्ताभिष्यन्दशमनोविधिश्चाप्युपपादितः ॥ २१ ॥
शिग्रुपल्लवनिर्य्यासः सुघृष्टस्ताम्रसंपुटे ।
घृतेन धूपितोहन्ति शोथघर्षाश्रुवेदनाः ॥ २२ ॥
पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रा
अन्तर्गर्भं दधाना पटुतरगुड़िका पिष्टलोध्रेन भ्रष्टाः ।

---

दार्व्वीत्यादा ।— पटोलनिम्बयोः पत्रं पद्मकं पद्मकाष्ठं उत्पलं नीलोत्पलं एषां मिलित्वा कुडवः चतुःपलोग्राह्यः पाकार्थञ्च जलस्य द्वात्रिंशत् पलानि ततस्तु कुड़वं यावत्तोयमष्टगुणं भवेदिति वचनात् । ततः कुड़वोऽष्टपलः स्थाप्यः तद्वस्त्रपूतं कृत्वा पुनः पक्तव्यमाघनीभावात् । ततः शीते मधुपलद्वयं प्रक्षेप्यं ततोऽञ्जनं कार्य्यमिति ॥ २० ॥

तिक्तस्येति ।—तिक्तं सर्पिर्वक्ष्यमाणपटोलादिघृतम् । विरेचनञ्च वक्ष्यमाणषड़ङ्गादिना ॥ २१ ॥

शिग्रुपल्लवेत्यादौ ।— निर्य्यासः स्वरसः घृतेन सह ताम्रपात्रे घृष्ट इत्यन्वयः । धूपित इति करीषाग्निना अन्ये तु करीषाग्नौ घृतं दत्त्वा तेन धूमेन धूपित इति व्याचक्षते घर्षः करकरिकाख्यवेदनाविशेषः ॥ २२ ॥

पिष्टैरित्यादि ।— जातिसिन्धूत्थं सारसैन्धवं जातिर्जाती-

तुलैः सौवीरसार्द्रैरतिशयबहुभिर्वेष्टिता सा समन्ता-
च्चक्षुःकोपप्रशान्तिं चिरमुपरि दृशोर्भ्राम्यमाणा करोति ।

विल्वाञ्जनम् ।

विल्वपत्ररसः पूतः सैन्धवाज्येन सान्वितः ।
शुल्वे वराटिकाघृष्टो धूपितो गोमयाग्निना ॥
पयसालोड़ितश्चाक्ष्णोः पूरणाच्छोथशूलनुत् ।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते ॥ २१ ॥
सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घनितमुपलघृष्टं धूपितं गोमयाग्नौ ।
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोथं सरागम् ॥

---

काञ्जिकेऽन्ये । अन्तर्गर्भं दधानेति पिष्टनिम्बपत्रपिण्डाभ्यन्तरे लोध्रकल्कपिण्डं निक्षिप्य कृता गुड़िकेत्यर्थः । भ्रष्टा इति खर्परे मनाग्भ्रष्टा इत्यर्थः तदनु सौवीरेण काञ्जिकेन सार्द्रै-रिति द्रवसार्द्रैस्तूलकैर्वेष्टिता चक्षुषोरुपरि भ्राम्यमाणा इत्यर्थः ।

विल्वपत्रेत्यादौ ।—शुल्व इति ताम्रपात्रे पयसेति नारी-स्तन्येन । वस्त्रपूतविल्वपत्ररसस्य माषकचतुष्टयं सैन्धवस्य रक्ति-द्वयं घृतस्य विन्दुचतुष्टयं एतत् सर्व्वं ताम्रपात्रे कृत्वा कपर्दकेन तावद्घर्षणीयं यावद्घनं भवति तदनु न्युब्जीकृतताम्रपात्रे शुष्कगोमयाग्निना धूपयित्वा नारीक्षीरेण तरलीकृत्य चक्षुः पूरणम् ॥ २१ ॥

सलवणेत्यादौ ।— सैन्धवस्य रक्तिद्वयं कटुतैलस्य विन्दुच-तुष्टयं काञ्जिकस्य माषकचतुष्टयं उपलं प्रस्तरखण्डेन घृष्टं किम्बा उपलशब्दे पत्रचक्षुष्यत्वात् रसाञ्जनादि शिलैव ग्राह्या ।

नवस्थविद्धामलकरसः सर्व्वाक्षिरोगनुत् ।
पुराणं सर्व्वथा सर्पिः सर्व्वनेत्रामयापहम् ॥
अयमेव विधिः सर्व्वोमन्थादिष्वपि शस्यते ।
अथान्तौ सर्व्वथा मन्ये भ्रुवोरुपरि दाहयेत् ॥ २४ ॥
जलौकःपातनं शस्तं नेत्रपाके विरेचनम् ।
शिराव्यधं वा कुर्व्वीत सेकालेपाश्च शुक्रवत् ॥

षड़ङ्गगुग्गुलुः ।

विभीतकशिवाधात्रीपटोलारिष्टवासकैः ।
क्वाथोगुग्गुलुना पेयः शोथसूलाक्षिपाकहा ॥
पिल्लञ्च सव्रणं शुक्रं रागादींश्चापि नाशयेत् ।
एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥ २५ ॥

---

वृद्धास्तु वराटिकयैव व्यवहरन्ति । नवस्थेत्यादि ।— नवस्थस्यै-वामलकीफलस्य सूच्यादिभिर्व्विद्धस्य यो रसो निर्गच्छती-त्यर्थः । पुराणसर्पिर्दशवर्षस्थितं तदभावे सम्वत्सरातीतमपि पुराणं ग्राह्यमित्याहुः । उक्तं हि अत्यभिष्यन्दिमधुरं यच्च सम्वत्सरोषितम् अनुत्क्लेदश्च दोषाणां पुराणं तत् प्रकीर्त्तित-मिति । सर्व्वथेति । पाननस्याञ्जनैरित्यर्थः अयमेव विधिरि-त्यादि ।— वाभटस्य । अयमभिष्यन्दोक्तः आदिशब्दात् अन्य-तोवातादयः ॥ २४ ॥

नेत्रपाकचिकित्सामाह जलौक इत्यादि ।— स्पष्टम् । विभीतकेत्यादौ पिल्लं पक्ष्मोज्झिका किम्वा प्रक्षालिते यथा मुष्टे आनाव्यते पुनः पुनः । अपरिक्लिन्नवर्त्मानं तं पिल्लमिति निर्द्दिशेदित्युक्तलक्षणः । अत्र घृतपाकपक्षे तु विभीतकादीनां क्वाथो गुग्गुलोः कल्कः इति । विभीतकादिचूर्णसमं गुग्गुलुं ग्रहीत्वा घृतेन पिष्ट्वा वटिकां कुर्य्यादित्युपदिशन्ति वृद्धाः॥२५॥

वासकादि ।

अटरूषामयानिम्बधात्रीमुस्ताब्दकृष्णकैः ।
रक्तास्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥
पथ्याक्षिधात्रीविभीतक्यः षट् धात्र्योऽष्टाद्शैव तु ।
प्रस्थार्द्धं सलिले क्वाथमष्टभागावशेषितम् ॥
पीत्वाभिष्यन्दमास्रावं रागञ्च तिमिरं जयेत् ।
संरम्भरागशूलास्रुनाशनं दृक्प्रसादनम् ॥ २६ ॥
नेत्रे त्वभिहते कुर्य्याच्छीतमाश्च्योतनादिकम् ।
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥ २७ ॥
आगन्तुदोषं प्रसमीक्ष्य कार्य्यं वक्त्रोष्मणा स्वेदितमादितस्तु ।
आश्च्योतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात् ॥

---

अटरूषेत्यादि ।— अटरूषकं वासकं एतैः क्वथकाथेन च शःसेचनः तथा गुग्गुलुं प्रक्षिप्य विरेचनमप्युपदिशन्ति वृद्धाः । पथ्या हृत्यादौ । प्रस्थार्द्ध इति द्रवद्वैगुण्यात् शरावद्वये । पीत्वेति सायमित्याहुः ॥ २६ ॥

आगन्तुनेत्ररोगचिकित्सामाह नेत्र इत्यादि ।— आदि-शब्दादस्य लेपादीनां ग्रहणम् । दृष्टीत्यादि । सुश्रुतस्य । दृष्टि-प्रसादजननं मशनावरक्तदोषनाशनम् । कैर्दृष्टिप्रसादनं कार्य्यमित्याह स्निग्धैरित्यादि । स्वेदेत्यादि ।— क्वतारुजा एव उपतापो रोगो रोगजनकत्वादुच्यते । अभ्याहतामित्यनन्तरं दृष्टिमिति शेषः । तथैवेत्यनन्तरोक्तस्निग्धहिमादिविधिना ॥ २७॥

आगन्त्वित्यादि ।— आगन्तुदोषं धन्वाद्यभिघातम् ।

सूर्य्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादि कार्य्यं सायं निषेव्यास्त्रिफलाप्रयोगाः॥ २८॥
निशाद्वत्रिफलादार्व्वीसितामधुकसंयुतम् ।
अभिघाताक्षिस्फूलघ्नं नारीक्षीरेण पूरणम् ॥
इत्कराङ्कुरजस्तद्वत् स्वरसोनेत्रपूरणम् ।
आजं घृतं क्षीरपात्रं मधुकञ्चोत्पलानि च ॥
जीवकर्षभकौ चापि पिष्ट्वा सर्पिर्व्विपाचयेत् ।
सर्व्वनेत्राभिघातेषु सर्पिरेतत् प्रशस्यते ॥ २९ ॥
सैन्धवं दारु शुण्ठी च मातुलुङ्गोरसोघृतम् ।
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥ ३० ॥

---

वस्त्रोष्मा च वस्त्रपुटग्राह्यः । यच्चापि पित्तघृतजापहं स्या-दिति पित्ताभिष्यन्दे रक्ताभिष्यन्दे च यदुक्तं तदपि हितम् । त्रिफलाप्रयोगा इति त्रिफलाक्काथेन चक्षुःसेकादयः ॥२८॥

निशेत्यादि ।— एषां चूर्णं नारीक्षीरे प्रक्षिप्य पूरणम् । तद्वदिति अभिघाताक्षिस्फूलघ्न इत्यर्थः । आजमित्यादि आज-घृतमिह प्रस्थमानम् । क्षीरपात्रोऽत्र पात्रञ्चाढ़कं द्रवद्वैगुण्यात् षोड़शशरावाः । क्षीरञ्चेह गव्यमेव विशेषाभावात् । अन्ये तु घृतसाहचर्य्यात् क्षीरमप्याजमाहुः । सर्पिषोद्विरुच्चारणमिह नस्ये तर्पणे च हितत्वप्रतिपादनार्थमिति वदन्ति । जेज्जरस्तु आजघृतस्य कल्कत्वमेवाह तेन तन्मते द्वितीयसर्पिः पदस्य गव्यघृतमेवार्थ इति ॥ २९ ॥

शुक्राक्षिपाकरोगचिकित्सामाह सैन्धवमित्यादि ।— सु-श्रुतस्य स्तन्योदकाभ्यामिति लक्षणे सहार्थे तृतीया । सैन्धव-दारुशुण्ठीनां मिलित्वा पादिकः कल्कः कार्य्यः । पादिकत्वञ्च मिलितमातुलुङ्गरसादिद्रवचतुष्टयमपेक्ष्य । सैन्धवं माषकद्वयं देवदारुशुण्ठ्योस्तु प्रत्येकं माषकचतुष्टयं मातुलुङ्गरसादीनां

वाताभिष्यन्दवच्चान्यद्वाते मारुतपर्य्यये ।
पूर्व्वभक्तं हितं सर्पिः क्षीरञ्चाप्यत्र भोजने ॥
वृश्चाद्न्यां कपित्थे च पञ्चमूले महत्यपि ।
सक्षीरं कर्कटरसे सिद्धञ्चापि पिबेद्धृतम् ॥
अभिष्यन्दमधीमन्थं रक्तोत्थमथवार्जुनम् ।
शिरोत्पातं शिराहर्षमन्यांश्चाक्षिभवान् गदान् ॥
स्निग्धस्याज्येन कौम्भेन शिराव्यधैः शमं नयेत्
अम्लाध्युषितशान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान् ॥
तैन्दुकं त्रैफलं सर्पिर्जीर्णं वा केवलं हितम् ।
शिराव्यधं विना कार्य्यः पित्तस्यन्दहरोविधिः ॥

---

चतुर्णां प्रत्येकं द्वादशमाषकाः सर्व्वमेकीकृत्य मृद्वग्निना पक्तव्यं यावत् घनीभवति ततोऽञ्जनं कार्य्यं रसक्रियेयम् । अन्ये तु सनारोदकामिति पठित्वा स्त्रीक्षीरजलयोर्म्मिलितयोः समुदयार्द्रमानम् । सैन्धवदारुशुण्ठीमातुलुङ्गरसभृतानां समभागः । सैन्धव दारुशुण्ठीनां कल्कम् । मातुलुङ्गरसादिद्रवचतुष्टयेन साध्याञ्जनं कार्य्यं रसक्रियेयमिति । अन्ये तु सान्धोदकार्द्रमिति व्याचक्षते ॥ ३० ॥

वातादिचिकित्सामाह ।— वातेत्यादि । पूर्व्वभक्तमिति भक्तात् पूर्व्वमिति अन्यतोवाते वातपर्य्यये च क्षीरपानं अनयोः पित्तरक्तावकृत्वात् ।

वृश्चाद्न्यामित्यादि ।— वृश्चाद्नीवन्दा, वृश्चाद्न्यादिभिः कल्कः क्षीरं स्नेहसमं कर्कटरसस्तु त्रिगुणः एवं घृतं साध्यमिति श्रीकण्ठः । गयदासस्तु वृश्चाद्न्यादीनां पञ्चमूलान्तानां मिलित्वा द्विगुणः क्वाथः क्षीरकर्कटरसयोस्तु प्रत्येकं स्नेहसममित्याह । अन्ये तु विभिन्न विभक्तित्वात् वृश्चाद्न्यादीनां प्र-

सर्व्वेषु ।

सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम् ।
तद्वत् सैन्धवकासीसं स्तन्यपिष्टञ्च पूजितम् ॥
शिरोहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम् ।
मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ॥ ३१ ॥
अथाम्लाध्युषितेऽप्यर्थं पथ्यं शुष्कं पिबेत् ।
कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च ॥
कांस्ये निघृष्टं स्तन्येन क्षतशुक्रार्त्तिरागजित् ।
चन्दनं गैरिकं लाक्षामामलीकलिका समा ॥
अथाशुक्रहरोवर्त्तिः शोणितस्य प्रसादनी ।
सिरया वा हरेत् रक्तं जलौकाभिश्च लोचनात् ॥

---

त्यक्तं स्नेहक्रमः क्वाथः एवं क्षीरकर्कटरसावपि इति पञ्चगुणः पाक इत्याह ।

अभिष्यन्दमित्यादौ ।— अन्यांश्चेति, शुक्रादीन् । कौम्भं सर्पिर्दशवर्षस्थितम् । अम्लाध्युषितमित्यादौ तैन्दुकं सर्पिर्व्वात-व्याधौ सुश्रुतेनोक्तम् । त्रैफलं त्रिफलाक्वाथ कल्काभ्यां सिद्धम् । केवलमित्यसंस्कृतं सर्पिरित्यादि । सुश्रुतस्य । अञ्जनं सौवीराञ्जनं घृतमधुभ्यां सौवीराञ्जनं पिष्ट्वा वर्त्तिः कार्य्या । भेषजमित्यञ्जनरूपं तद्वदिति शिरोत्पातभेषजमित्यर्थः कासीसं पुष्पकासीसं धातुकासीसमित्यनेन व्यवहारस्तु पूर्व्वेषां । फाणितं द्रवगुड़ः । तार्क्ष्यशैलं रसाञ्जनम् ॥ ३१ ॥

कतकस्येत्यादि ।— कतकं तोयप्रसादफलं प्रायो मगधे भवति शङ्खं नाभिशङ्खं तिन्दुकं तिन्दुकफलास्थि रूप्यचूर्णं एषां समभागं स्त्रीत्वा कांस्यपात्रे स्तन्येन सह घर्षणीयम् । क्षतशुक्रं व्रणशुक्रम् ।

घृष्टमज्जाञ्जनं सायं स्तन्येन शुक्रनाशनम्।
एकं वा पुण्डरीकस्य छागीक्षीरावसेचितम्॥
रागाश्रुवेदनां हन्यात् शतपाकाद्‌यथाजकाः।
तुत्थकं वारिणा युक्तं शुक्रं हन्त्यश्मपूरणात्॥
समुद्रफेणदक्षाण्डत्वक्सिन्धूत्थैः समाक्षिकैः।
शिग्रुबीजयुतैर्वर्त्तिः शुक्रघ्नी घोषु वारिणा॥ ३२॥
धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वलोध्रं खदिरन्तिलाश्च।
क्वाथः सुशीतोनयने निषिक्तः सर्व्वप्रकारं विनिहन्ति शुक्रम्॥

---

चन्द्रनेत्रादौ।— गैरिकं स्वर्णगैरिकं तज्जातग्रन्तरक्तत्वदु-
घग्रैरिकमिति पेषणन्तु जलेन। वृद्धाः गगणजलेन व्यवह-
रन्ति तदभावे तक्रुणेन वा। एवमन्यत्रापि द्रवाशुक्तस्थाने
बोध्यं तथा छायाशोषणं मधुना घृष्टा चाञ्जनमित्यपि विशे-
षाभावस्थाने व्यवहारोऽद्धानाम्। अश्चेत्रादौ स्तनेग्रनेत्रात्र
मध्वपि बोध्यं सुश्रुतसम्वादात्।

एकमित्यादि।— एकं श्रेष्ठमिति वा तत्र उत्तरापथजं
पुण्डरीकं पुण्डरीकाष्ठं पिष्टा वस्त्रेण पोट्टलीं बद्धा छागीक्षीरे
स्थाप्यं यदा पीतवर्णं दुग्धं भवति तदा चक्षुषि दुग्धं देयं प्रवल-
रक्तदुष्टौ योगोऽयम्।

तुत्थकमित्यादि।—अत्र मध्वपि बोध्यं सुश्रुतसम्वादात्।
समुद्रेत्यादौ दक्षाण्डत्वक् कुक्कुटाण्डकपालं समाक्षिकैरिति
स्वर्णमाक्षिकसहितैरिति केचित्। अन्ये तु मधु वदन्ति।
समाक्षिकैरित्यत्र सशङ्खकैरिति पाठे शङ्खकः शङ्खनाभिः।
शिग्रुशारिवेति शोभाञ्जनरसेन पिष्टा वर्त्तिः कार्य्या॥ ३२॥
धात्रीत्यादौ।— निम्बस्य कपित्थस्य च पत्रं क्वाथ इत्यत्र

चुक्षपुन्नागपत्रेण परिभावितवारिणा ।
श्यामाक्वाथेऽम्बुना वाथ सेचनं कुसुमापहम् ॥
दक्षाण्डत्वक्शिलाशङ्खकाचचन्दनगैरिकैः ।
तुल्यैरञ्जनयोगोऽयं पुष्पार्शादिविलेखनः ॥
शिरीषवीजमरिचपिप्पलीसैन्धवैरपि ।
शुक्रे प्रघर्षणं कार्य्यमथवा सैन्धवेन च ॥
वक्तयः पलाशकुसुमस्वरसैः परिभाविता जगत्यचिरात् ।
नक्ताह्ववीजवर्त्तिः कुसुमचयं हन्ति चिरजमपि ॥ ३३ ॥
सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभयः ।
सताम्ररजसोवर्त्तिः पिष्टा शुक्रविनाशिनी ॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
क्रमद्वृद्धमिदं चूर्णं शुक्रार्शादिविलेखनम् ॥

---

एषामिति शेषः । सर्व्वप्रकारमिति सव्रणमव्रणञ्च । चुक्षेत्यादि चुक्षं शिलायां जर्ज्जरीकृतं पुन्नागस्य नागकेशरस्य यत् पत्रं तेन भावितं यद्वारि तेन । श्यामा श्यामलता तस्याः क्वाथरूपमम्बु । कुसुमापहमिति शङ्खेन्दुकुन्दवर्णं शुक्लमेव कुसुमं तन्नाशनम् ।

दक्षेत्यादि ।— दक्षः कुक्कुटः गोष्ठकुक्कुट इत्यन्ये शिला मनःशिला शङ्खं शङ्खनाभिः एवं सर्व्वत्र काचः स्वनामख्यातः ।

शिरीषेत्यादि ।— शिरीषादिचूर्णैर्मध्वाक्तशलाकास्थितै-र्घर्षणं कार्य्यं सैन्धवेनेति केवलसैन्धवचूर्णेन लब्धे तु मद्यपसैन्धवखण्डेनेत्याहुः । वक्तय इत्यादि वक्तयः स्पष्टाः । नक्ताह्ववीजमिति करञ्जवीजस्य चूर्णं कृत्वा पलाशकुसुमस्वरसेन वर्त्ति शङ्ख... कार्य्या ॥ ३३ ॥

...नां ...दौ ।—कटुका कटुरोहिणी ताम्ररजस्तु मारितता-म्रचूर्णं ...। पिष्टशुक्रविनाशिनीति पिष्टाख्यनेत्ररोगः बिन्दुभिः ...सिक्तैः पिष्टकं ददेदित्युक्तलक्षणः । चन्दनमित्या-

दन्तवर्त्तिः।

दन्तैर्हस्तिवराहोष्ट्रगवाश्वाजाखरोद्भवैः।
सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः॥
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत्॥ ३४॥
शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम्॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च।
पिच्चिटे मधुना योज्यमर्व्बुदे मस्तुना तथा॥
तार्क्ष्यं मधुकसारो वा बीजं चाक्षस्य सैन्धवम्।
मधुना घ्नन्ति रोगाः स्युश्चत्वारः शुक्रशान्तये॥
वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम्॥

---

टी।— पत्राग्रतक्षशोणितं किंशुकरक्तवेष्टकम्। रक्तचन्दनस्य माषकः सैन्धवस्य द्वौ पथ्याशाकस्य इति टह्निकमः। एतच्चूर्णाञ्जनं मध्वाक्तशलाकया चक्षुषि देयं एवं सर्व्वत्र चूर्णाञ्जने।

दन्तैरित्यादि वाभटस्य। मरिचपादिकैरिति समुदितचूर्णाच्चतुर्थो मरिचस्य चतुर्थभागः पेषणञ्चात्र जलेन वाभटसम्वादात्॥ ३४॥

शङ्खेत्यादि।— शङ्खं शङ्खनाभिः नाभिशङ्खं मा ४ मनःशिला मा २ मरिच मा १ सैन्धव र ५। चूर्णाञ्जनमिति मध्वाक्तशलाकया संटह्य शुक्रदेशं घर्षयेत्। ततस्त्रिफलाक्काथेन प्रक्षालनं कार्य्यमिति। शुक्रयोरिति सव्रणाव्रणशुक्रयोः।

तार्क्ष्यमित्यादि।— तार्क्ष्यं स्वर्णमाक्षिकं अक्षस्य बीजं विभीतकास्थि मज्जा। त्रिफलेत्यादौ मञ्जल्या गोरोचना मधुकं यष्टिमधु एतैः समभागैर्मधुना पूरणं कार्य्यम्।

तालस्येत्यादि।— तालस्य जटा नारिकेलस्य फलास्थि

त्रिफलामज्जमज्जल्यामधुकं रक्तचन्दनम्।
चूर्णं मधुसंयुक्तं व्रतशुक्राजकाञ्जितम् ॥
तालस्य नारीकेलस्य तथैवारुष्करस्य च।
करीरस्य च वंशानां क्षत्वा क्षारं परिस्रुतम् ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम्।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णं चूर्णन्तु कारयेत् ॥
एतच्छुक्रेष्वसाध्येषु कृष्णीकरणमुत्तमम्।
यानि शुक्राणि साध्यानि तेषां परममञ्जनम् ॥ ३५ ॥

---

अरुष्करः भल्लातः तस्य फलं वंशकरीरस्य तु पाचरी एतत् सर्व्वं तिलनालाग्निना दग्धा भस्म ग्राह्यं तच्च भाव्यद्रव्यसमं गृहीत्वा अष्टगुणोदके षोड़शगुणोदके वा निःक्वाथ्यार्द्धशेषं पादशेषञ्चैकविंशतिवारान् स्रावयेत्। अन्ये तु क्वाथमकृत्वा चतुर्गुणेन षोड़शगुणेन वा जलमात्रेण स्रावणमाहुः वाभट-सम्वादात्। अपरेतु भाव्यद्रव्यसमं भस्म चतुर्गुणेन षोड़शगुणेन वा अम्बुना निःक्वाथ्यार्द्धावशेषेण विस्रावणं वदन्ति। व्यवहा-रस्तु पूर्व्वेणैव। परिस्राव्य च गृहीतेन स्वच्छेन क्षारोदकेन सप्ताष्टौ वासरान् करभास्थिचूर्णं भाव्यं करभ उष्ट्रः एतच्च प्रतिभावनमेव चूर्णीकर्त्तव्यं तच्चूर्णं मध्वाक्तशलाकया संगृह्य शुक्रदेशं घर्षयेत्। ततश्च त्रिफलाक्वाथेनाक्षिप्रक्षालनमिति क्रियापरिपाटी क्षारेणेति क्षारोदकेन एतच्छुक्रेष्वसाध्येष्विति अनेन शुक्रस्यासाध्यस्य वैवर्णनाशनं परं क्रियते न पुनः शुक्र-नाशनमिति दर्शयति। यानि शुक्राणि साध्यानीत्यादि पाठो-युक्तः न तु शुक्रान्यसाध्यानीति। नारिकेलास्थि भल्लाततालं-वंशकरीरजम्। भस्माद्भिः स्रावयेत् ताभिर्भावयेत् करभास्थि-जम्। चूर्णं शुक्रेष्वसाध्येषु तत् वैवर्ण्यप्र मञ्जनम्। साध्येषु साधनीयमिदमेव। निश्चलेन पुनरसाध्यानीति पठित्वा एतच्च

पटोलाद्यं घृतम् ।

पटोलं कटुकां दार्व्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥
प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि ।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ॥
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥
घ्राणकर्णाक्षिवर्त्म त्वङ्मुखरोगव्रणापहम् ।
कामलाज्वरवीसर्पगण्डमालाहरं परम् ॥ ३६ ॥

कृष्णाद्यं तैलम् ।

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः ।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम् ॥ ३७ ॥
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
व्रणं गोमयचूर्णेन पूरयेत् सर्पिषा सह ॥

---

न कदाचिदपि साध्यशुक्लगोचरतया प्रयोक्तव्यमिति यद्व्याख्यातं तदपास्तं उक्तवाभट वचनविरोधादेव ॥ ३५ ॥

पटोलमित्यादि ।— पटोलं पटोलस्य फलं कुटज इन्द्रयवः तन्त्रान्तरे यष्टिकलिङ्गभूनिम्बपिप्पलीघनचन्दनैः । कल्कैर्मुष्टिकैराज्यं प्रस्थमानप्रसाधितमित्युक्तत्वात् । अतएव वचनात् भूनिम्बादीनां पलमानता च बोध्या ॥ ३६ ॥

कृष्णेत्यादि ।— कृष्णा पिप्पली । अक्षिशब्दस्य शूलपाकात्ययाभ्यां सम्बन्धः ॥ ३७ ॥

अजकामित्यादि ।— सुश्रुतस्य । गोमयचूर्णेनेति पाठो

सैन्धवं वाजिपादश्च गोरोचनसमन्वितम् ।
शेलुत्वक्‌रससंयुक्तं पूरणश्चाजकापहम् ॥ ३८ ॥

शशकाद्यं घृतम् ।

शशकस्य शिरः कल्के शेषाङ्गक्वथिते जले ।
घृतस्य कुड़वं पक्वं पूरणश्चाजकापहम् ॥ ३९ ॥

शशकाद्यं घृतम् । कृष्णाजेषु ।

शशकस्य कषाये च सर्पिषः कुड़वं पचेत् ।
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥
कणल्याः पूरणाच्छुक्रक्षतपाकात्ययाजकाः ।
हन्ति भ्रूशङ्खमूलञ्च दाहरागानशेषतः ॥ ४० ॥
त्रिफलाघृतं मधुयवाः पादाभ्यङ्गः शतावरीसुन्नाः ।
चाक्षुष्यः संक्षेपाद्वर्गः कथितोभिषग्भिरयम् ॥ ४१ ॥

---

लेखकदोषात् सुश्रुते वाभटे च तत्तदाकारपुस्तकेषु बहुषु गोमांसचूर्णैरित्येव हि पाठो दृश्यते टीकाकारैश्च व्याख्यात इति । सैन्धवेत्यादौ ।— वाजिपादोऽश्वखुरः अश्वगन्धामूलमिति केचित् व्यवहारस्तु पूर्व्वेणैव । शेलुर्ब्बहुवारः ॥ ३८ ॥

शशकेत्यादि ।— शशकमस्तकमात्रं कल्कः शेषाङ्गस्यान्त्रादिहीनस्य क्वाथः एतत् क्वाथार्थस्य जलस्य षोड़शशरावाः स्थाप्याश्चत्वारश्शरावा इति । घृतस्य कुड़वोऽष्टौपलानि ॥ ३९ ॥

शशकस्य कषायेत्वित्यादि ।— आकृतिमानात् शशकगुरुकमेकं अत्रापि पूर्व्ववदेव क्वाथकरणं पयसा समं तुल्यं अतः पञ्चगुणः पाकः अन्येतु चतुर्गुणमाहुः । एतन्मते क्वाथार्थजलस्य द्वादशशरावाः स्थाप्यास्त्रय इति । इति कृष्णाजेषु ॥४०॥

त्रिफलेत्यादौ ।— त्रिफलेति छेदः सापि क्वाथचूर्णादिविषयोपयोज्या घृतञ्च यदि सामान्यत एव चक्षुष्यं तथापि पुराणमतिशयेन बोध्यं अतएव सुश्रुते घृतं पुराणं त्रिफलां

त्रिश्यात् सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे ।
समीरजे तैलयुतां कफात्मके मधुप्रगाढ़ां विदधीत युक्तितः ॥
कल्कः क्वाथोऽथवा चूर्णं त्रिफलायानिषेवितम् ।
मधुना हविषा वापि समस्ततिमिरान्तकृत् ॥
यस्त्रैफलं चूर्णमपथ्यवर्ज्जी सायं समश्नाति हविर्म्मधुभ्याम् ।
स मुच्यते नेत्रगतैर्व्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्यः ॥
सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ ४२ ॥
जातारोगा विनश्यन्ति न भवन्ति कदाचन ।
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥
अत्रगण्डूषैः प्रातर्व्वक्त्रगतोऽम्भोभिः प्रपूर्य्य मुखरन्ध्रम् ।
निर्दयमुत्पलाक्षि क्षपयति तिमिराणि ना सद्यः ॥
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् प्रदीयते ।
अचिरेणैव तद्वारितिमिराणि व्यपोहति ॥

सुखावतीवर्त्तिः ।

कतकस्य फलं शङ्खं त्र्यूषणं सैन्धवं सिता ।

---

शतावरीं पटोलमुद्गफलकान् यवानपि । निषेव्यमानस्य जनस्य नक्ततोभयं सुघोरात्तिमिराच्च विद्यते इति ॥ ४१ ॥

त्रिश्यादित्यादि ।— सुश्रुतस्य । युक्तित इति मात्रया । अत्र यस्त्रैफलं चूर्णमित्यादेरनन्तरं सघृतं वा वराक्वाथं शीलयेत् तिमिरामयीति न युक्तः । कल्कः क्वाथोऽथवा चूर्णमित्यादिनैवोक्तार्थत्वात् ॥ ४२ ॥

जाता इत्यादौ ।— धावनादिति प्रक्षालनात् । निर्दयमुत्क्षिपति अवगाढ़ं सिञ्चन् ना इति पुरुषः ।

भुक्त्वेत्यादौ ।—पाणितलमित्यनन्तरमाचमनान्तवारिपरिप्लुतमिति शेषः ।

फेणोरसाञ्जनं चौद्रं विडङ्गानि मनःशिला ॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति ।
तिमिरं पटलं काचमर्म्मशुक्रन्तथैव च ॥
कण्ड्क्लेदार्ब्बुदं हन्ति मलञ्चाशु सुखावती ॥ ४३ ॥

चन्द्रोदयावर्त्तिः ।

हरीतकी वचा कुष्ठं पिप्पलीमरिचानि च ।
विभीतकस्य मज्जा च शङ्खनाभिर्म्मनःशिला ॥
सर्व्वमेतत् समं कृत्वा छागक्षीरेण पेषयेत् ।
नाशयेत्तिमिरं कण्डुं पटलान्यर्ब्बुदानि च ॥
अधिकानि च मांसानि यश्च रात्रौ न पश्यति
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ।
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी ॥ ४४ ॥
हरीतकी हरिद्रा च पिप्पल्योलवणानि च ।
कण्डुतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते ॥

कुमारिकावर्त्तिः ।

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलीतण्डुलाः ।
जातीकुसुमपञ्चाशन्मरिचाणि च षोड़श ॥
एषा कुमारिकावर्त्तिर्गतं चक्षुर्निवारयेत् ॥ ४५ ॥

---

कतकस्येत्यादि, कतकस्य फलं जलप्रसादनफलं शङ्खं शङ्खनाभिः सिता शर्करा फेणः समुद्रफेणः चौद्रमत्राञ्जनार्थं पेषणाय जलेन द्वयञ्च वर्त्तिः पित्तान्विते तिमिरे भद्रा । चन्द्रोदयवर्त्तिस्तु कफतिमिरे प्रशस्ता जलेन चाञ्जनमिति श्रीकण्ठः तत् सिद्धत्वाच्चक्षुष्यत्वाच्च मधुनापि व्यवहरन्ति वृद्धाः ॥४३-४४॥

हरीतकीत्यादौ ।- लवणशब्दः सैन्धववचनः चक्षुष्यत्वाच्च तच्च प्रथमभागापेक्षया चतुर्थांशमित्याहुः । द्वयमपि कफे हिता । न क्वचित् प्रतिहन्यत इति पित्तावपि न वार्य्यत

त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसोरजः ।
नीलोत्पलं विडङ्गानि फेणञ्च सरितां पतेः ॥
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने ।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः ॥ ४६ ॥
चन्दनत्रिफलापूगपलाशतरुशोणितैः ।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा ॥ ४७ ॥
निम्बाद्दयाभयामांसीकुष्ठलाक्षाविचूर्णिताः ।
सर्व्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम् ॥
स्रोतोत्पलाभयाकुष्ठतार्क्ष्यैर्व्वर्त्तिः कृता हरेत् ।
अर्व्वुदं पटलं काचं तिमिराम्लाश्रुनिस्रुतिम् ॥
तूत्थकं त्रिफलावक्रं सैन्धवालमनःशिलाः ।
क्लेदोपदेहकण्डूघ्नी वर्त्तिः शलाकयापहा ॥ ४८ ॥

---

इत्यर्थः । एषा कुमारिकावर्त्तिरित्यत्र कुसुमिकावर्त्तिरिति वृन्दे पठ्यते ॥ ४५ ॥

त्रिफलेत्यादौ ।— कासीसं धातुकासीसं अयसोमारितपुटितस्य रजः भावयेदिति स्थापयेत् लेपयेदिति वा । क्षीरेणेति आजेनैवेत्याहुः । वर्त्तयेदिति वर्त्तिं कुर्व्वात् अभिन्नचक्षुष इति अनष्टतारकस्य ॥ ४६ ॥

चन्दनेत्यादौ ।— पूगं गुवाकफलं पलाशतरुशोणितं किंशुकवेष्टकं पलाशपुष्पस्वरस इत्यन्ये ॥ ४७ ॥

निम्बेत्यादौ ।— सुगतोबुद्धस्तन्निर्म्मितत्वात् सौगतम् । स्रोतेत्यादौ ।— तार्क्ष्यं रसाञ्जनम् । तूत्थेत्यादौ ।— वक्रं तगरपादुका । आलं हरितालम् ॥ ४८ ॥

एकगुणा मागधिका द्विगुणा च हरीतकी ।
सलिलपिष्टा वर्त्तिरियं नयनसुखा हि तिमिरपटलकाचार्म्महरी ॥

चन्द्रप्रभावर्त्तिः ।

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका ।
विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला ॥
एतानि समभागानि अजाक्षीरेण पेषयेत् ।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत् ॥
अर्ब्बुदं पटलं काचं तिमिरं रक्तराजिकम् ।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति ॥
वर्त्ति चन्द्रप्रभानाम जातान्ध्यमपि शोधयेत् ॥ ४८ ॥

श्रीनागार्ज्जुनाञ्जनम् ।

त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनम् ।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्द्दश ॥
द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिः कार्य्या नभोऽम्बुना ।
नागार्ज्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥
नाशनी तिमिराणाञ्च पटलानान्तथैव च ।
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम् ॥
किंशुकस्वरसेनाथ पिल्लपुष्पकरक्तताः ।
अञ्जनाल्लोध्रतोयेन चासन्नतिमिरं जयेत् ॥
चिरसंछादिते नेत्रे वस्तमूत्रेण संयुता ।
उन्मीलयत्यच्छेण प्रसादं चाधिगच्छति ॥ ५० ॥

---

एकगुणेत्यादौ ।— अत्र चार्म्मतिमिरपटलार्म्मकाचहरीति पठनीयं अन्यथा छन्दोभङ्गः स्यात् । अञ्जनमित्यादि अञ्जनं रसाञ्जनं श्वेतमरिचं शोभाञ्जनबीजम् । एवं सर्व्वत्र ॥ ४८ ॥

त्रिफलेत्यादौ ।—जन्तुघ्नं विड़ङ्गं ताम्रञ्च मारितं ग्राह्यम् । चतुर्द्दशेति संख्याकथनेन अस्यावर्त्तौ चतुर्द्दशाङ्गीति नामान्तर-

पिप्पल्यो सतगरोत्पलपत्रा वर्त्तयेत् मधुकामं सहरिद्राम्।
एतया सततमञ्जयितव्यं यः सुवर्णसममिच्छति चक्षुः ॥
कोकिलावर्त्तिः।
व्योषायश्चूर्णसिन्धूत्थत्रिफलाञ्जनसंयुता।
गुडिका जलपिष्टेयं कोकिलातिमिरापहा ॥
तोगिण कटुनि करञ्जफलानि द्वे रजनी सह सैन्धवकञ्च।
बिल्वतरोर्नेत्रमथ च मुस्तं वारिचरं दशमं प्रवदन्ति ॥
हन्ति तमस्तिमिरं पटलञ्च पिच्चिटशुक्रकमथार्ज्जुनञ्च।
अञ्जनकञ्जनरञ्जनकञ्च इक च न नश्यति वर्षशतञ्च॥ ५१ ॥
नीलोत्पलं विडङ्गानि पिप्पलीरक्तचन्दनम्।
अञ्जनं सैन्धवञ्चैव सद्यस्तिमिरनाशनम् ॥
पत्रगैरिककर्पूरयष्टीनीलोत्पलाञ्जनम्।

---

मपि सूचितम्। वाभटवचनात्। ताम्रे शिलातांम्रे। किंशुकस्वरसेनेति किंशुकपुष्पस्वरसेन ॥ ५० ॥

पिप्पलीमित्यादौ।— उत्पलपत्रं उत्पलपुष्पस्य पत्रम्। वर्त्तयेदिति वर्त्तिं कारयेत्।

व्योषेत्यादौ।— अञ्जनं सौवीराञ्जनं कोकिलवत् कृष्णवर्णत्वात् कोकिलेति वर्त्तेः संज्ञा। तोगीत्यादौ।— द्वे रजनीति कौलिङ्गनिर्देशात् लौकिके ऋस्वेकारान्तोऽपि रजनीशब्दोऽस्तीति ज्ञेयम्। वारिचरः शङ्खनाभिः वारिधर इति पाठे वारिधरः मुस्तकं हन्ति तमस्तिमिरमिति अन्धकारत्वसाधर्म्यात् तमः,सूक्ष्मं तिमिरं हन्तीति। अञ्जनकमिति संज्ञायां स्वार्थे कः अकरञ्जकं जनानुरागकारीत्यर्थः। दोधकाख्यच्छन्दः ॥ ५१ ॥

नीलोत्पलेत्यादौ।—अञ्जनं रसाञ्जनं एवं वक्ष्यमाणेऽपि। पत्रेत्यादि पत्रं तेजपत्रं गैरिकं स्वर्णगैरिकम्। शङ्खेत्यादौ

नागकेशरसंयुक्तमशेषतिमिरापहम् ॥
शङ्खस्य चतुरोभागास्तदर्द्धेन मनःशिला।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन पिप्पली ॥
वारिणा तिमिरं हन्ति चर्व्वुदं हन्तिमस्तुना।
पिच्चिटं मधुना हन्ति स्त्रीक्षीरेण तदुत्तमम् ॥ ५२ ॥
हरिद्रानिम्बपत्राणि पिप्पल्योमरिचानि च।
भद्रमुस्तं विडङ्गानि सप्तमं विश्वभेषजम् ॥
गोमूत्रेण गुड़ी कार्य्या छागमूत्रेण चाञ्जनम्।
ज्वरांश्च निखिलान् हन्ति भूतावेशस्तथैव च ॥
वारिणा तिमिरं हन्ति मधुना पटलन्तथा।
नक्तान्ध्यं भृङ्गराजेन नारीक्षीरेण पुष्पकम् ॥
शिशिरेण परिस्रावमर्व्वुदं पिच्चिटन्तथा।
संपक्वोपरतामलककरसेनाभाव्य गण्डूपदान् ॥
लाक्षारञ्जिततूलवर्त्ति निहितान् यष्टीमधुन्मिश्रितान्।

---

चतुरोभाग इति छान्दसत्वात्। एतैर्ज्जलपिष्टैर्व्वर्त्तिः कार्य्या। स्त्रीक्षीरेण तदुत्तममिति उत्कृष्टशक्तिकमित्यर्थः ॥ ५२ ॥

हरिद्रेत्यादौ।— भद्रमुस्तं कान्तकामकः। भृङ्गराजेनेति भृङ्गराजस्वरसेन। शिशिरेणेत्यवश्यायजलेन। चर्व्वुदं नुरोगविशेषः प्रभावादेव हन्ति ज्वरांश्च निखिलान् हन्ति इति निश्चलस्तु चायुर्व्वेद पठति।

संपक्वेत्यादौ।— उपरतानिति मृतान् भावयित्वामलककरसेन भावयित्वा इत्यर्थः। लाक्षारञ्जितं तूलमलक्तकम्। उत्तमसर्पिषा गव्यघृतेन। मृतगण्डूपदान् चामलकरसं दत्वा आतपे शोषयेत् तदनु चूर्णीकर्त्तव्यम्। तदनु तत् गण्डूपद-चूर्णं यष्टिमधुचूर्णेन सह अलक्तकमध्ये दत्वा सूत्रेण संवेष्य वर्त्तिः कार्य्या तया वर्त्त्या गव्यघृतमिश्रितया दीपः प्रज्वाल्य-

प्रस्थाप्योत्तमसर्पिपानलशिखासन्तापजं कज्जलं
दूरासन्ननिशान्ध्यसर्वतिमिरप्रध्वंसकृच्चोदितम्॥
भूमौ निष्ठ्यूतयाहृत्या अञ्जनं शमनन्तयोः।
तिमिरकाचाग्निहरं धूमिकायाश्च नाशनम्॥ ५३॥
त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे।
नागं सप्तनिषिक्तं करोतिगरुडोपमञ्चक्षुः॥ ५४॥
त्रिफलासलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधूये।
प्रतिदिनमथ तप्तं सप्तधा सीसमेकं
प्रणिहितमथ पश्चात् कारयेत्तच्छलाकाम्॥

---

स्नुह्दीपशिखोपरि निर्म्मलकाचादिपात्रं धृत्वा कज्जलपातनं कर्त्तव्यं तेन कज्जलेन कदुष्णेनाञ्जनं कर्त्तव्यमिति क्रियामार्गः। आन्ध्यशब्दोदूरादिभिः सम्बध्यते। प्रत्येकं तयोरिति दूरासन्नान्धयोर्निशान्ध्यदिवान्धयोरितिवा धूमिका धूमिकावलोकनम्॥ ५३॥

त्रिफलेत्यादि।— त्रिफलायाः क्वाथः भृङ्गराजस्य स्वरसः महौषधं शुण्ठी तस्याः क्वाथः नागं सीसकं एतच्चाग्नरा वावर्त्त्य त्रिफला क्वाथादावेकैकस्मिन तप्तसीसकं सप्तधा निर्व्वाप्य तेन सीसकेन शलाका कर्त्तव्या तया तिमिराञ्जनलिप्तया केवलया वा प्रस्तरादिघृष्टया अञ्जनं कार्य्यमिति परिपाटीभाविप्रयोगदर्शनात्॥ ५४॥

त्रिफलेत्यादौ।— हविषि च विषकल्क इति विषं मारकद्रव्यं कल्करूपं तत्र नाहशि हविषि। अतएव चन्द्राटे हविषि च विषमिश्र इत्युक्तः। वाभटेऽपि सविषाज्यमजापय इत्युक्तम्। मधूय इति प्रचुरे मधुनि अन्येतु मधुशब्देन यष्टिमधु वदन्ति।

सवितुरुदयकाले साञ्जना व्यञ्जना वा
करकरिकसमेतानश्मपेच्चिच्चरोगान् ।
असितसितसमुत्थान् सन्धिवर्त्माभिजातान् ॥
हरतिनयनरोगान् सेव्यमाना शलाका ॥ ५५ ॥
चिञ्चापत्ररसं निधाय विमले चौडुम्बरे भाजने ।
मूलं तत्र निघृष्टसैन्धवयुतं गौञ्जं च विशोष्यातपे ॥
तच्चूर्णं विमलाञ्जनेन सहितं नेत्राञ्जने शस्यते ।
काचार्म्मार्जुनपिच्चिटे सतिमिरे स्रावञ्च निर्व्वासयेत् ॥ ५६ ॥
चित्रापष्ठीयोगे सैन्धवममलं
विचूर्ण्य तेनाञ्जितममञ्जनेन तिमिरम् ।
गच्छति वर्षादसाध्यमपि दद्यात्
उशीरनिर्य्यूहे चूर्णितं कणासैन्धवम् ॥
तच्छ्रुतं सघृतं भूयः पचेत् चौद्रं क्षिपेद्घने ।
शीते तस्मिन हितमिदं सर्व्वजे तिमिरेऽञ्जनम् ॥ ५७ ॥

---

उक्तं हि वाभटे—वराजलं भृङ्गजलं सविषाज्यमजापयः ।
यष्टीरसश्च यत् क्षौद्रं सप्तकृत्य पृथक् पृथगिति । साञ्जना तिमिराञ्जनेन सहिता व्यञ्जना तद्रहिता करकरिका वालुकाभिभूतनेत्रवेदनावत् वेदना ॥ ५५ ॥

चिञ्चेत्यादौ ।— चौडुम्बरे भाजने ताम्रादिपात्रे । गौञ्जं मूलं काकणन्तिका मूलं विमलाञ्जनं सौवीराञ्जनम् ॥ ५६ ॥

चित्रेत्यादि ।— चित्रापष्ठीयोगे इति चित्रानक्षत्रयुक्तषष्ठ्यां दद्यादित्यादि वाभटस्य कणेति पिप्पली छान्दसत्वात् ह्रस्वत्वम् । श्रुत इति वस्त्रपरिस्रुते एतच्चोशीरनिर्यूह विशेषणं उशीरमूलस्य क्काथः कणासैन्धवघृतानि मिलित्वा पादिकानि अष्टमांशानि वा दत्त्वा पाकात् घनः कार्य्यः । शीते चास्मिन् पादिकं मधु प्रक्षेप्यम् । वैद्यप्रसारकेत्वस्या विवरणं यथा उशी-

धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया।
पित्तानिलाक्षिरोगघ्नी तैमिर्य्यपटलापहा ॥ ५८ ॥
शृङ्गबेरं भृङ्गराजं यष्टितैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटलनाशनम् ॥
लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्व्वकम्।
विद्धा दैवकृते छिद्रे नेत्रं स्तन्येन पूरयेत् ॥

---

रस्य पलद्वयं जलस्य चत्वारः शरावाः स्थाप्यस्तु शरावएकः पूते तस्मिन् प्रक्षेपार्थं कणासैन्धवयोः प्रत्येकमष्टमाषकं घृतस्य च कर्षः। पुनः पाकेन घनीभूते शीते च मधुनःकर्षः ॥ ५७ ॥

धात्रीत्यादि। धात्रीक्वाथे रसाञ्जनचूर्णं घृतञ्च प्रक्षिप्य पुनः पाकात् रसक्रिया साध्या। रसक्रिया घनीभूतक्वाथस्य संज्ञा। शीते च मधु प्रक्षेप्यं मानमेषां सर्व्वेषां पूर्व्ववदिति॥५८॥

शृङ्गबेरेत्यादि।— यष्टिमधुसाधितेन तैलेन मिश्रितं शृङ्गबेरभृङ्गराजचूर्णं नस्यं किम्बा भृङ्गराजस्वरसे तैलमिश्रिते शृङ्गबेर यष्टिमधुचूर्णं प्रक्षिप्य नस्यं कार्य्यम्। लिङ्गनाश इत्यादि।— लिङ्ग्यते ज्ञायतेऽनेनेति दृष्टिस्तस्य नाशो लिङ्गनाशः। कफोद्भूतइत्यनेन वातज. पित्तजश्च विद्धो न सिध्यतीति दर्शयति यथावद्विधिपूर्व्वकमिति विधिश्चविदेहसुश्रुताद्युक्तः तत्रानुसन्धेयः स च विस्तार भयान्न लिखितः। दैवकृते छिद्र इति अपाङ्गभागवर्त्तिनः शुक्लभागस्य मध्ये यद्दैवकृतं छिद्रमस्ति तस्मिन् तदुक्तं सुश्रुते मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा त्वपाङ्गतः। उन्मील्य नयने सम्यक् छिद्रे दैवकृते ततः। शलाकया ताम्रमय्या व्यधयेदित्यादि। कृष्णात् कृष्णमण्डलात् प्रभृति द्वौ शुक्लभागौ त्यक्त्वामध्ये दैवकृतं छिद्रं यदस्ति तस्मिन् विध्येदिति। व्यधश्च तथा कर्त्तव्यो यथा एकैवपरं त्वगभिद्यते। सम्यग्व्यधलिङ्गञ्च सुश्रुतेभोक्तं यथा वारि-

ततोऽदृष्टे सुरूपेषु शलाकामाहरेच्छनैः ।
नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥
ततोऽगृहे निराबाधे शयितोत्तान एव च ।
उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि च ॥
तत्कालं नाचरेदूर्द्धं यन्त्रणा स्नेहपीतवत् ।
त्र्यहात्र्यहाद्धावयेत्त कषायैरनिलापहैः ॥
वायोर्भयात्त्र्यहादूर्द्धं स्वेदयेदक्षि पूर्ववत् ।
दशरात्रन्तु संयम्य हितं दृष्टिप्रसादनम् ॥
पश्चात् कर्म्म च सेवेत लघ्वन्नं चापि मात्रया ॥ ५८ ॥

---

गमे सम्यक् शब्दस्य व्यधने भवेदिति । असम्यग्विद्धे तु शोणितागमादिति । पट्टवस्त्रेण वेष्टयेदिति । सद्यःक्षतरोपणलोभ्ररक्तचन्दनम् । त्रिफला चूर्णं दत्त्वा वस्त्रेण वेष्टनं अन्येतु धुस्तूर पिण्डं दत्त्वा वस्त्रेण वेष्टयन्ति । निराबाध इति धूमातपादिरहितस्थाने । शयितोत्तान एवेति एतच्च चक्षुर्द्वयोर्व्यधे ज्ञेयम् । एकतरस्य व्यधेतु विद्धा चक्षुषोऽन्येन पार्श्वेन शयनं ज्ञेयम् । वाभटेऽप्येवमेवोक्तम् । उद्गारेत्यादौ ।— उत्कम्पनं कम्पनमेव । तत्कालमिति सप्ताहम् । उक्तं हि वाभटेक्षवथुकासमुद्गारं सप्ताहं नाचरेदिति । ऊर्द्धमिति उत्तानशयनात् परं उद्गारादीनि सप्ताहं परिहरेदित्यर्थः । यन्त्रणा स्नेहपीतवदिति स्नेहपीतस्येवाहाराचारादिनियमः । पूर्ववदिति वस्त्रेणाच्छाद्य । कियन्तं कालमयं विधिःकार्य्य इत्याह दशाहमेवमित्यादि ।— संयम्येति एवमुत्तानशयनादिना आत्मानं नियम्य अनन्तरं दृष्टिप्रसादनादिहितं पश्चाल्लघ्वन्नञ्चापि कर्म्म सेवेतेत्यर्थः । दृष्टिप्रसादनमञ्जनादि लघ्वन्नञ्चापीति चकाराद्दशाहाभ्यन्तरेऽपि लघ्वन्नविधिं समुच्चिनोति ॥ ५८ ॥

रागदूरादि सुश्रुतस्य । दोष स्पतादः दौरणवत् पीड़ा

रागश्चोषोऽर्ब्बुदं शोथोवुद्बुदं केकराक्षिता।
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः॥
अहिताचारतो वापि यथास्वं भानुपाचयेत्।
रुजायामक्षिरोगे वा भूयोयोगान्निबोध मे॥ ६०॥
कल्किताः सघृतादूर्व्वायवगैरिकशारिवाः।
मुखालेपाः प्रयोक्तव्या रुजारागोपशान्तये॥
पयस्याशारिवापत्रमञ्जिष्ठामधुकैरपि।
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे।
काकोल्यादिप्रतिवापं प्रयुञ्ज्यात् सर्व्वकर्म्मसु॥ ६१॥
शाम्यत्येवं नचेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत्।
ततः शिरां दहेच्चापि मतिमान् कीर्त्तितां यथा॥

---

वा अर्ब्बुदं अर्ब्बुदाकारशोथः वुद्‌वुदं बुद्‌बुदाकारशोथः। केकराक्षिता वक्रदृष्टिता टेरनेत्रमिति यावत्। शूकराक्षिता पाठान्तरे शूकरस्येवाधोदृष्टितेत्यर्थः। रोगद्दत्यादि सुश्रुतस्य। यथास्वमिति वातादिप्रशमनौषधादिभिः। रुजायामिति चोषादिरूपपीड़ायाम्॥ ६०॥

कल्किताइत्यादि।—वाभटस्य मुखालेप इति एतैः समभागैश्चक्षुःसमीपे प्रलेप इति रागोऽक्षिलौहित्यम्।

पयस्येत्यादि।— वाभटस्य पयस्या क्षीरकाकोली पत्रं तेजपत्रम्। वाभटे सुखोष्णः पथ्यउच्यते इत्यत्र सुखोष्णः शमेऽत्पर इति पाठः। वातघ्नेत्यादि सुश्रुतस्य। वातघ्नोभद्रदार्व्वादिः तेन क्षीरसाधनपरिभाषया सिद्धे पयसि चतुर्गुणे। सर्व्वकर्म्मस्विति नस्यपानादिषु॥ ६१॥

शाम्यतीति सुश्रुतस्य। शिरामिति ललाटस्थां शिरां मोक्ष-

दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे।
मेषशृङ्गस्य पत्राणि शिरीषधवयोरपि ॥
मालत्याश्चापि तुल्यानि मुक्तावैदूर्य्यमेव च ।
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत् ॥
प्रणिधाय तु तद्वर्त्तिं योजयेदञ्जने भिषक् ॥ ६२ ॥
स्रोतोजं विद्रुमं फेणं सागरस्य मनःशिला ।
मरिचानि च तद्वर्त्तिं कारयेत् पूर्व्ववद्भिषक् ॥ ६३ ॥
रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम् ।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥
नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ।
गुड़िकाञ्जनमेतत् स्याद्दिनरात्र्यन्धयोर्हितम् ॥

---

येत् दद्याच्चापीत्यन्वयः । दृष्टेरित्यादि ।— सुश्रुतस्य अत इति शिराव्यधदाहानन्तरम् । व्यधदाहाभ्यां दोषशेषेण वा कलुषिताया दृष्टेः प्रसादनाय अञ्जनम् । अञ्जन इति अञ्जनद्वयम् । मेषशृङ्गीमेषशृङ्गी पुतञ्जीवक वृक्ष इत्यन्ये। आवपेदिति आक्षिप्य स्थापयेत् ॥ ६२ ॥

स्रोतोजमित्यादि ।— सुश्रुतस्य स्रोतोजं रसाञ्जनम् । पूर्व्ववदिति—छागीक्षीरेण पिष्ट्वा ताम्रपात्रे सप्ताहं स्थापयेदित्यर्थः ॥ ६३ ॥

रसाञ्जनमित्यादौ ।— गोशकृद्रसेन वर्त्तिः कार्य्या । नलिनेत्यादि । नलिनं पद्मं उत्पलं नीलोत्पलं द्वयोः । किञ्जल्कं गोशकृद्रसेति गोशकृद्रसेन गुड़िकाः कार्य्या इत्याहुः । नदीजेत्यादि सुश्रुतस्य । नदीजं सैन्धवं शङ्खं शङ्खनाभिः शङ्खस्थाने शिम्बीति पाठे शिम्बी हरितमुद्गः अञ्जनं रसाञ्जनम् । गवां यकृत् वृक्काग्रं शकृदित्यपि पाठान्तरम् ।

कणेत्यादि ।— छागयकृत् विदार्य्य तन्मध्ये पिप्पलीं स्थाप-

नदीजशङ्खत्रिकटून्यथाञ्जनं मनःशिला द्वे च निशे गवां यकृत्।
सचन्दनेयं गुड़िकाथ चाञ्जने प्रशस्यते रात्रिदिनेष्वपश्यताम्॥
कणाच्छागशकृन्मध्ये पक्का तद्रसपेषिता।
अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम्॥
पचेत्तु गौधं हि यकृत् प्रकल्पितं प्रपूरितं मागधिकाभिरग्निना।
निषेवितं तद्धि यकृद्‌ञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु॥६४॥
दध्ना निघृष्टं मरिचं रात्र्यन्ध्याञ्जनमुत्तमम्।
ताम्बूलयुक्तं खद्योतभक्षणञ्च तदर्थकृत्॥
शफरीमत्स्यरत्नारोनक्तान्ध्यमञ्जनात् विनिहन्ति।
तद्वद्रामठटङ्कणकर्षमसैकशोञ्जनान्मधुना॥

यित्वा उत्स्वेदयेत्। पक्का उत्स्विन्ना तद्रसपेषितेति उत्स्वेदाम्बुना पिष्टा वर्त्तिः कार्य्येत्यर्थः। तद्वत् सक्षौद्रमूषणमिति उषणं मरिचं पूर्व्ववत् छागशकृत् पिण्डं विदार्य्य तन्मध्ये मरिचं स्थापयित्वा उत्स्वेदयेत् तत आकृष्य उत्स्वेदावशिष्टजलेन तन्मरिचं संपिष्य वर्त्तिः कार्य्येत्यर्थः।

पचेदित्यादि।— पचेदुत्स्वेदयेत्। गौधं गोधाभवं यकृत् पिप्पलीपूरणार्थं प्रकल्पितमिति पठितम्। अग्निनेत्यत्र अम्बुनेति पाठान्तरे अम्बुना स्वेदनं बोध्यम्। अत्र गोधायकृद्दग्धपाचितमित्यपि पाठः। निषेवितं यकृदिति तथाभूतं यकृत् खादितमित्यर्थः। पिप्पल्यञ्जनविधिना देयमिति कश्चित्। अन्येतु उत्स्विन्नकणासहितं यकृत्भक्षणविधिना अञ्जनविधया च विहितं नक्तान्ध्यं हन्तीत्याहुः अपरस्तु उत्स्विन्नकणा सहितं यकृदञ्जनविधया निषेवितं सन् नक्तान्ध्यं हन्तीति व्याचक्षते। खलु शब्दएवार्थे असंशयमेवेत्यर्थः॥ ६४॥

दध्नेत्यादि योगः पष्टः। शफरीति।— शफरीमत्स्यरमन्तं मूं दग्ध्वा मधुना सन्ध्यायामञ्जनम् कार्य्यम्।

केशराजान्वितं सिद्धं मत्स्यखण्डं हन्ति भक्षितम्।
न नक्तान्ध्यं नियतं नृणां सप्ताहात् पथ्यसेविनाम्॥ ६५॥

त्रिफलाघृतम्।

त्रिफलाक्वाथकल्काभ्यां सपयस्कं शृतं घृतम्।
तिमिराण्यचिराद्धन्ति पीतमेतन्निशामुखे॥ ६६॥

महात्रिफलाद्यं घृतम्।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम्॥
अजाक्षीरं गुडूच्याश्च आमलक्या रसस्तथा।
प्रस्थं प्रस्थं समाहृत्य सर्व्वैरेभिर्घृतं पचेत्॥
कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम्।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका॥
तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत्।
ऊर्द्ध्वपानमधःपानं मध्यपानञ्च शस्यते॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति।
सरक्ते रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च॥
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्व्वुदे।

---

केशराजेत्यादि।— रोहितमत्स्यादीनां खण्डं केशराजं दत्त्वा उपदेशात् काञ्जिकेन पक्वा भक्ष्यम्॥ ६५॥

इतः परं घृतान्युच्यन्ते।

त्रिफलेत्यादौ।— चतुर्गुणेन त्रिफलाक्वाथेन व्यवहरन्ति सपयस्कमिति क्षीरं स्नेहसमम्॥ ६६॥

महात्रिफलाद्ये।— वृषस्येति वासकस्य पत्ररसः प्रस्थः। मधुपर्णी गुडूची। ऊर्द्ध्वपानादि विधिर्भोजनापेक्षया ज्ञेया। वातपित्तकफोत्थेति वातपित्तकफोद्भूतेषु नेत्ररोगेषु तथा कफवातप्रदूषणात् जाता मन्ददृष्टिं मन्ददृष्टिञ्चापकर्षतीत्यर्थः। तदा

अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ॥
नेत्ररोगेषु सर्व्वेषु वातपित्तकफेषु च ।
अदृष्टिं मन्दद‍ृष्टिञ्च कफवातप्रदूषिताम् ॥
स्रवतोवातपित्ताभ्यां सकण्ड्वासन्नदूरदृक् ।
गृध्रदृष्टिकरं सद्योवलवर्णाग्निवर्द्धनम् ॥
सर्व्वनेत्रामयं हन्यात्त्रिफलाद्यं महद्घृतम् ॥ १७ ॥

त्रैफलं घृतम् ।

त्रिफलात्र्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैलाविड़ङ्गं नागकेशरम् ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।
कार्षिकैः पयसा तुल्यं त्रिगुणं त्रिफलारसम् ॥
घृतप्रस्थं पचेदेतत् सर्व्वनेत्ररुजापहम् ।
तिमिरं दोषमास्रावं कामलां काचमर्ब्बुदम् ॥
वीसर्पं प्रदरं कण्डुं रक्तं श्वयथुमेव च ।
खालित्यं पलितञ्चैव केशानां पतनन्तथा ॥
विषमज्वरमर्म्माणि शुक्रञ्चाशु व्यपोहति ।
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः ॥
तान् सर्व्वान्नाशयत्याशु भास्करस्तिमिरं यथा ।
नचैवास्मात् परं किञ्चिद्दृषिभिः काश्यपादिभिः ॥
दृष्टिप्रसादनं दृष्टं यथा स्यात्त्रैफलं घृतम् ॥ १८ ॥

---

वातपित्ताभ्यां स्रवतश्चक्षुषः पथ्यमिति शेषः । तथा कण्ड्वासन्नदूरदृक् यः, तस्यापि गृध्रतुल्यदृष्टिकारकमिति सोपस्कारं व्याख्येयम् । पुनः सर्व्वनेत्रामयं हरतीत्यत्र कथनं सर्व्वनेत्रामयहरणस्यावश्यकोपदर्शनार्थमिति ज्ञेयम् ॥ १७ ॥

त्रिफलेत्यादि । त्रिगुणं त्रिफलारसमिति घृतप्रस्थविशेष-

त्रिफलाद्यतम्।

फलत्रिकाभीरुकषायसिद्धं कल्केन यष्टीमधुकस्य युक्तम्।
सर्पिः समं क्षीरचतुर्थभागं हन्यात्त्रिदोषं तिमिरं प्रवृद्धम्॥६९॥

भृङ्गराजाद्यं तैलम्।

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च।
तैलस्य कुडवं पक्वं सद्योदृष्टिं प्रसादयेत्॥
नस्याद्वलीपलितघ्नं मासेनैतन्नसंशयः।
गवां शकृत्क्वाथविपक्वमुत्तमं हितञ्च तैलं तिमिरेषु नस्यतः॥
घृतं हितं केवलमेव पैत्तिके तथाणुतैलं पवनात्मकात्मयोः॥७०॥

---

थान्। विषमज्वरमर्म्माणीति विषमज्वरस्तथा मर्म्माणीति शेषः॥ ६८॥

फलत्रिकेत्यादौ।— अभीरु शतमूली तत्र फलत्रिकस्य क्वाथः शतमूल्यास्तु स्वरस इत्यर्थः। सममिति साध्वित्यर्थः। उक्तं हि मेदिनीकारकोषे सर्व्वं साधुसमानेषु समं स्यादभिधेय-वदिति। अन्ये तु सममिति सहार्थे यथोक्तकषायादिना सह सिद्धमित्यर्थ इत्याहुः॥ ६९॥

गवामित्यादि सुश्रुतस्य। गवां शकृत् क्वाथविपक्वमिति गोशकृतः क्वाथोऽत्राष्टगुणाम्भसा कार्य्यः चतुर्गुणं देयमिति परिभाषा व्यवहारबाधिता। घृतं हि केवलमिति केवलमित्य-संस्कृतम्। नस्यत इति इहापि सम्बध्यते। अणुतैलञ्च सुश्रुते वातघ्नाधावुक्तं कस्मिंश्चित् सुश्रुतपुस्तके घृतं हितं केवलमेव पैत्तिक इत्यस्यानन्तरं अजाविकं यन्मधुरैश्चोपाचितम्। तैलं स्थिरादौ मधुरे च यत्गण इति पाठो दृश्यते स च पाठस्तथा-विधाकारपुस्तकेषु न दृश्यते टीकाकृद्भिश्च न व्याख्यातः तथा संग्रहकृद्भिश्च न प्रामाणिकैर्लिखित इति कृत्वा अनार्ष इति ज्ञेयः॥ ७०॥

नृपवल्लभं तैलं घृतञ्च ।

जीवकर्षभकौ मेदे द्राक्षांशुमतीनिदिग्धिका बृहती ।
मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना ॥
नीलोत्पलं श्वदंष्ट्राप्रपौण्डरीकं पुनर्नवालवणम् ।
पिप्पल्याः सर्व्वेषां भागैरक्षांशिकैः पिष्टैः ॥
तैलं वा यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम् ।
आत्रेय निर्म्मितमिदं तैलं नृपवल्लभं सिद्धम् ॥
तिमिरं पटलं काचं नक्ताख्यं चार्व्वुदन्तथाख्यञ्च ।
श्वेतञ्च लिङ्गनाशं नाशयति नीलिकाव्यङ्गम् ॥
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम् ।
कासं श्वासं शोषं हिक्कां स्तम्भं तथात्ययं नेत्रे ॥
मुखभेदस्वरभङ्गभेदं रोगं वाङ्गग्रहं शिरःस्तम्भम् ।
रोगानशेोर्द्ध जत्रुः सर्व्वानचिरेण नाशयति ॥
नस्यार्थं कुडवं तैलं पक्तव्यं नृपवल्लभे ।
अक्षांशैः शाणिकैः कल्कैरन्ये भृङ्गादितैलवत् ॥

अभिजित तैलम् । दृष्टिजेषु ।

तैलस्य पचेत् कुडवं मधुकस्य पलेन कल्कपिष्टेन ।
आमलकस्वरसप्रस्थं क्षीरप्रस्थेन संयुतम् ॥

---

जीवकेत्यादौ ।— अंशुमती शालपर्णी अक्षांशिकैरिति अक्षः कर्षस्तस्यांशश्चतुर्थोभागः माषकचतुष्टयम् । तेन शाणिकैरित्यर्थः तेन सर्व्वं मिलित्वा द्वादशमाषिकाधिकं पलं भवति अनेन तैलकुडवः साध्यः नस्यार्थं तैलकुडवः पच्यत इति संप्रदायः कुडवश्चाष्टौ पलानि नच कल्कस्तु स्नेहपादिक इत्यनेन विरोधः कल्कपलेनापि तैलकुडवपाकदर्शनात् तथा पूर्व्वोक्त- भृङ्गराज तैले तथा वक्ष्यमाणाभिजितनाम्नि तैले च किम्वा अक्षांशिकैरिति कार्षिकैः अस्मिन् पक्षे कल्कस्य बहुत्वात् तैल-

कृत्वाभिजितं नाम्ना तेनं तिमिरं हन्यान्मुनिप्रोक्तम् ।
त्रिमलां कुरुते दृष्टिं तन्नामप्यानयेत्तथा ॥ ७१ ॥
अर्म्मे तु छेदनीयं स्यात् कृष्णप्राप्तं भवेद्यदा ।
वडिशविद्धमुन्नस्य त्रिभागञ्चात्र वर्ज्जयेत् ॥ ७२ ॥
पिप्पलीत्रिफलालाक्षालौहचूर्णं ससैन्धवम् ।
भृङ्गराजरसे पिष्टं गुड़िकाञ्जनमिष्यते ॥
अर्म्म सतिमिरं काचं कण्डूं शुक्रं तदर्जुनम् ।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः ॥
पुष्पाख्यतार्क्ष्यजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैश्च माक्षिकरसेन रसक्रियेयं
हन्त्यर्म्मकाचतिमिरार्ज्जुनवर्त्मरोगान् ॥
कौम्भस्य सर्पिषः पानैर्विरेकालेपसेचनैः ।

---

प्रश्नः साध्यः व्यवहारस्तु पूर्व्ववैव । यदि वा सर्पिरिति पैत्तिके तिमिरे सर्पिः पक्तव्यं दृष्टिजेष्विति दृष्टिमण्डलरोगेषु ॥ ७१ ॥

अर्म्मेत्विति अर्म्म आमा इति ख्यातोऽक्षिरोगविशेषः । अर्म्मच्छेदनीयमिति मण्डलाग्रेणेति शेषः । समुन्नस्येति सूच्यग्रेणेति शेषः सूच्यग्रेण समुन्नस्य उत्तोल्य अनन्तरम् । वडिशेन विद्धा मण्डलाग्रेण छेदयेदित्यर्थः । त्रिभागमिति तृतीयभागं कनीनिकां वर्ज्जयेदित्यर्थः । उक्तं हि रत्नन् कनीनिकां छिन्द्याच्चतुर्भागावशेषितमिति ॥ ७२ ॥

पिप्पलीत्यादि ।—भृङ्गराजरसेनैव पेषणमञ्जनञ्चेत्याहुः । गुड़िकाञ्जनं वर्त्तिरित्यर्थः । अजकाक्षिरोगभेदः । पुष्पाख्येत्यादि ।— पुष्पाख्यं पुष्पकाशीशं तार्क्ष्यजं रसाञ्जनं सिता शर्करा शङ्खः शङ्खनाभिः गैरिकशिला गैरिकमेवेति श्रीकण्ठः । माक्षिकरसेनेति मधुरूपद्रवेण । रसक्रियेयमिति एतत् सर्व्वं

स्वादुशीतैः प्रशमयेत् शुक्तिकामञ्जनैस्ततः।
प्रवालमुक्तावैदुर्य्यशङ्खस्फटिकचन्दनम्॥
सुवर्णरजतं चौद्रमञ्जनं शुक्तिकापहम्।
शङ्खः चौद्रेण संयुक्तः कतकः सैन्धवेन वा॥
सितया णवफेणो वा पृथगञ्जनमर्जुने॥

शुक्लजेषु।

पैत्तं विधिमशेषेण कुर्य्यादर्ज्जुनशान्तये;
वैदेहीसितमरिचं सैन्धवं नागरं समम्॥
मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम्॥ ७३॥
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः॥

---

चूर्णं प्रचुरतरमधुना समालोड्य वंशनलिकायां स्थाप्यमेतत् रसक्रियाविधानं वदन्ति। अतएव पिष्टं चौद्रेण चालोड्य इतप्रादि वचनमपि पठन्ति।

क्षौम्यस्थेत्यादि।— क्षौम्यं सर्पिर्दशवर्षस्थितं घृतम्। प्रवालेत्यादि।—चौद्रेण पेषणमञ्जनञ्च। पैत्तं विधिमिति पित्ताभिष्यन्दोक्तविधिं उक्तं हि पित्ताभिष्यन्दशमनाविधिरर्जनशान्तिकृदिति।

वैदेहीत्यादि।—वैदेही पिप्पली सितमरिचं शोभाञ्जनबीजम्। इति शुक्लजेषु॥ ७३॥

भित्त्वेत्यादि।—सुश्रुतस्य भित्त्वेति व्रीहिमुखेनेति शेषः। यद्यप्युपनाहं केवलं कफज एव तथापि कफजमिति स्वरूपपरं ज्ञेयम्। पिप्पलीमधुसैन्धवैरित्यनन्तरं प्रतिसारणमिति शेषः अत्र लेखनान्तरं प्रतिसारणं ज्ञेयम्। उक्तं हि वाभटे उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन तु। लेखयेत् मण्डलाग्रेण

पथ्याक्षधात्रीफलमध्यवीजैस्त्रिद्व्येकभागैर्विदधीत वर्त्तिम् ।
तयाञ्जयेदश्रुमति प्रगाढ़मक्ष्णोर्हरेत् कष्टमपि प्रकोपम् ॥७४॥

सन्धिजेषु ।

स्रावेषु त्रिफलाक्काथं यथादोषं प्रयोजयेत् ।
चौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा ॥
त्रिफलामूत्रकाशीशसैन्धवैः सरसाञ्जनैः ।
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥ ७५ ॥
स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामिकाम् ।
शिलैलानतसिन्धूत्थैः सचौद्रैः प्रतिसारयेत् ॥

---

ततश्च प्रतिसारयेदिति । अन्ये तु भेदनप्रतिसारणाभ्यां अशमे लेखनं प्रच्छनञ्च देयमित्याहुः ।

पथ्येत्यादौ ।—फलमध्यवीजपदं पथ्यादिभिः प्रत्येकं सम्बध्यते । त्रिद्व्येकभागैरिति पथ्यावीजादिषु यथाक्रमं योज्यं अत्र पानीयेन पेषणं मधुना त्वञ्जनमिति व्यवहरन्ति ॥ ७४ ॥

स्रावेष्वित्यादौ ।— प्रयोजयेदिति पिवेत् । यथादोषमिति चौद्रेण पित्तरक्ते आज्येन वाते पित्ते रक्ते च पिप्पल्यातु कफे। एभिरप्रशमे शिराव्यध इति ।

त्रिफलेत्यादि सुश्रुतस्य। त्रिफलाक्काथगोमूत्रे मिलित्वा पलचतुष्टये काशीशसैन्धव रसाञ्जनं पलमानं प्रक्षिप्य पुनः पाकेन घनतामापाद्य रसक्रिया विधेया । किन्तु काशीशरसाञ्जनापेक्षया सैन्धवमल्पमानं व्यवहरन्ति वृद्धाः । मूत्रस्थाने तु श्येति निश्चलः पठति । तन्मते त्रिफलाक्कायस्यैव .पलचतुष्टयं किन्तु सुश्रुते बहुपुस्तकेषु च मूत्रपाठ एव दृश्यते । भिन्ने स्यात् प्रतिसारणमिति रसाञ्जनचूर्णमधुभ्यामेव प्रतिसारणं ज्ञेयम् । इति सन्धिजेषु ॥ ७५ ॥

प्रतिसार्य्याञ्जनैरिति अञ्जनैः कल्कैः। रोचनेत्यादि ।—

रञ्जाञ्जनमधुभ्याञ्च भिन्नां वा शस्त्रकर्म्मवित् ।
प्रतिसार्य्य ञ्जनैर्य्यञ्जगानुष्णैर्दीपयिष्योऽद्भवैः ॥
स्वेदयेद्दृष्टगान्तुल्या हरेद्रक्तं जलौकसा ।
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ॥
प्रतिसारणमेकैकं भिन्ने न गणा इष्यते ।
निमिषे नासया पेयं सर्पिस्तेन च पूरणम् ॥
स्वेदयित्वा विषग्रन्थिं छिद्राण्यस्य निराश्रयम् ।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥ ७६ ॥
वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।
पुनः पुनर्व्विरेकञ्च पिल्लरोगातुरोभजेत् ॥
पिल्लो स्निग्धोवमेत् पूर्व्वं शिराव्यधं श्रुतेऽस्ति ।
शिलारसाञ्जनथ्यापगोपित्तैश्चक्षुरञ्जयेत् ॥
हरितालपषादाबसुरसारसपेषितम् ।

---

सुश्रुतस्य । क्षारो यवक्षारः रोचनादिषु प्रत्येकं क्षौद्रयोगः । प्रतिसारणमिह व्रणमुखे दानं नतु घर्षणम् ।

निमेष इत्यादौ ।— सर्पिस्त्रिफलासिद्धमिति केचित् । अन्येत्वपक्वमित्याहुः । पूरणमिति तेन सर्पिषा चक्षुःपूरणमित्यर्थः । स्वेदयित्वेत्यादौ । विषग्रन्थिमिति विषवर्त्माख्याक्षिरोगम् । निराश्रयमिति आश्रयः स्फोटकः निरवशिष्टं यथा स्यात्तथा भित्त्वेत्यर्थः । अल्पेऽप्याश्रये सति व्याधेरस्य पुनः सम्भवात् । उक्तं हि विषग्रन्थिं तथा भिन्द्यात् यथास्याश्रयः क्वचित् । पुनः प्रवर्द्धते यस्मादल्पेऽप्यस्याश्रये स्थित इति ॥ ७६ ॥

वर्त्मेत्यादिना पिल्लरोगचिकित्सामाह वर्त्मलेखमिति कर्कशशाखोटकादिपत्रेण वर्त्मघर्षणम् । पिल्ललक्षणञ्च पूर्व्वमेवोक्तं वाभटेन तु कुकूणकादीनामष्टादशानां पिल्लाख्या कृता । यथा एतेऽष्टादश पिल्लाख्या दीर्घकालानुबन्धिन इति ।

अभया रसपिष्टं वा तगरं पिल्लनाशनम् ॥
भावितं वस्तमूत्रेण सस्नेहं देवदारु च ।
काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान् ॥
धूपयेत् पिल्लरोगार्त्तं पतन्ति क्रिमयोऽचिरात् ॥ ७७ ॥
रसाञ्जनं सर्जरसोजातीपुष्पं मनःशिला ।
समुद्रफेणोलवणं गैरिकं मरिचानि च ॥
एतत् समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ।
अञ्जनं क्लेदकण्डुघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥
मस्तकास्थि चुलुक्यास्तु तुषोदलवणान्वितम् ।
ताम्रपात्रेऽञ्जनं घृष्टं पिल्ले प्रक्लिन्नवर्त्मनि ॥
ताम्रपात्रे गुहामूलं सिन्धूत्थं मरिचान्वितम् ।
आरनालेन संघृष्टमञ्जनं पिल्लनाशनम् ॥ ७८ ॥

---

पिल्लेत्यादौ ।— स्वेदोपि बोध्यो वमनाङ्गत्वात् शिरा लालाटी । शिलेत्यादौ ।— गोपित्तस्याप्राप्तौ गोरोचनया सर्व्वत्र व्यवहारः । हरितालेत्यादौ ।— सुरसारस पेषित-मिति सुरसा पर्णासभेदः सुरहि मञ्जीतिलोके । प्रतिसारणमे-तत् । अभयेत्यादौ । तगरं तगरपादुका । भावितमित्यादौ । स्नेहोघृतं चक्षुष्यत्वात् एतदपि प्रतिसारणम् । काकमाची-त्यादौ । फलमेकमेव घृतलिप्तं धूपार्थम् । धूपनं चक्षुर्व्वारु-साच्छाद्य कार्य्यम् । अन्ये तु एकेन केवलेन भावनादिरहितेन धूपनमित्याहुः ॥ ७७ ॥

रसाञ्जनमित्यादौ ।— सर्जरसो यक्षधूपः अत्र पेषणं मधुनैव । मस्तकास्थीत्यादौ ।—चुलुकी शिशुमारः तस्य मस्त-कास्थि तुषोदकं काञ्जिकम् । ताम्र इत्यादौ ।— गुहा पृश्नि-पर्णी तस्या मूलं ताम्रपात्रे समाङ्गं घर्षयेदिति ज्ञेयम् । अन्ये तु गुहास्थाने स्नुहेति पठित्वा स्नुहामूलमाहुः । तत्र प्रच्छा-

हरिद्रे त्रिफला लोध्रं मधुकं रक्तचन्दनम् ।
भृङ्गराजरसे पिष्टा घर्षयेल्लौहभाजने ॥
तथा ताम्रे च सप्ताहं कृत्वा वर्त्तिं रजोऽथवा ।
पिञ्चिटौ धूमदर्शी च तिमिरोपहतेक्षणः ॥
प्रातर्निश्यञ्जयेन्नित्यं सर्व्वनेत्रामयापहम् ॥ ७९ ॥

चूर्णाञ्जनम् ।

मञ्जिष्ठामधुकोत्पललोध्रशिवाफलत्वक्सेव्यगोरोचनाः ।
मांसीचन्दनशङ्खपत्रगिरिकर्णातालीशपुष्पाञ्जनैः ॥
सर्व्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषोः ।
कण्ड्वक्लेदमलाश्रुशोणितरुजापिल्लार्म्मशुक्लापहम् ॥ ८० ॥
तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ।
तत्सेकेनोपदेहाश्रुकण्डूशोथांश्च नाशयेत् ॥ ८१ ॥

---

अनेन चौरश्चितं कृत्वा अञ्जयित्वा प्रयोज्यमिति वदन्ति व्यवहारस्तु पूर्व्ववदेव ॥ ७८ ॥

हरिद्रेत्यादौ ।— तथेत्यनेन ताम्रपात्रे सप्ताहं घर्षयेदिति योज्यम् । अन्ये तु तथा ताम्रे चेति विकल्पार्थमेतत् वचनं न समुच्चयार्थः तेन लौहभाजने ताम्रे भाजने वा घर्षयेदित्याहुः । रजोऽथवेति एतेन चूर्णाञ्जनमप्युपदिशन्ति ॥७९

मञ्जिष्ठेत्यादौ । –उदधिकफः समुद्रफेणः सेव्यमुशीरं पत्रं तमालपत्रं तेजपत्रमित्यन्ये पुष्पं पुष्पकाशीशं अञ्जनं रसाञ्जनं तालीशपत्राञ्जनैरिदमपि पाठः वर्त्तिरियं चूर्णाञ्जनं वा ॥८०॥

तुत्थकेत्यादि ।— वाभटस्य श्वेतमरिचानि शोभाञ्जनबीजानि विंशतिरित्याकृतिमानात् उपदेहः पिच्छोद्भिका ॥८१॥

याप्यः पक्ष्मोपरोधस्तु रोमोद्धरणलक्षणैः ।
वर्त्मन्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥
प्रवृद्धान्तर्मुखं रोम सन्निधाप्योद्धरेच्छनैः ।
सन्दंशेनोद्धरेद्दुष्टां पक्ष्मरोमाणि बुद्धिमान् ॥
रक्षन्नक्षि दहेत् पक्ष्मा तप्तहेमशलाकाया ।
पक्ष्मरोगे पुनर्नैवं कदाचिद्रोमसम्भवः ॥ ८२ ॥
उत्सङ्गिनी बहुलकर्द्दमवर्त्मनी च
श्यावञ्च यच्च पठितं त्विह बद्धवर्त्म ।
क्लिन्नञ्च पोथकियुतं त्विह वर्त्म यच्च
कुम्भीकिनी च सहशर्करयावलेख्याः ॥
श्लेष्मोपनाहलगणौ च विषञ्च भेद्यो-
ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ।
घृतसैन्धवचूर्णेन कफानाहं पुनः पुनः ॥

---

याप्य इत्यादौ ।—रोमोद्धरणलक्षणैरित्यनन्तरं कर्मभि-रिति शेषः पक्ष्मोपरोधोरोमोद्धरणलक्षणैः कर्मभिर्याप्यः यापनीयः लक्षणैरित्यत्र लेखनैरित्यपि पाठान्तरम् । वर्त्म-न्युपचितमिति पक्ष्मलोमेति शेषः ।

केनप्रकारेणोद्धरेदित्याह संदंशेनेत्यादि । दुष्टां पक्ष्मरो-माणीत्यत्र दुष्टा पक्ष्मरोमाणीत्यपि पाठान्तरम् । रक्षन्नि-त्यादौ ।— पक्ष्मेति पक्ष्मस्थानं उक्तं हि पक्ष्मरोगे हृते नास्ति दाहं तत्स्थानके भिषक् । तप्तया हेमसूच्या तु कुञ्जराद्याप्यभ-वाष्टकमिति ॥ ८२ ॥

इदानीं नेत्ररोगेषु मध्येषु ये च लेख्या ये च भेद्यास्तानाह उत्सङ्गिनीत्यादि ।— सुश्रुतस्य । बहुलकर्द्दमवर्त्मिनी चेति बहुलवर्त्म कर्द्दमवर्त्म चेत्यर्थः । श्याववर्त्म श्यावञ्चेति तथा क्लि-न्नञ्च क्लिन्नवर्त्म । विषमिति विषग्रन्थि ।

विलिखे मण्डलाग्रेण प्रच्छयेद्वा समन्ततः॥ ८३॥
पटोलामलकक्वाथैराश्च्योतनविधिर्हितः।
फणिज्झकरसोनस्य रसैः पोथकिनाशनः॥ ८४॥
आनाहपिड़कां स्विन्नां तिर्य्यगभित्त्वाग्निना दहेत्।
अर्शस्तथा वर्त्मनाम्ना शुष्कार्शोऽर्ब्बुदमेव च॥
मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषक् शनैः॥ ८५॥

वर्त्मजेषु।

सिन्धूत्थपिप्पलीकुष्ठपर्णिनीत्रिफलारसैः।
सुरामण्डेन वर्त्तिः स्यात् श्लेष्माभिष्यन्दनाशिनी॥
पोथकी वर्त्मोपरोधकिमिग्रन्थिकतूणके॥ ८६॥

इति नेत्ररोगचिकित्सा।

---

घृतेत्यादि।— घृतमिश्रसैन्धवचूर्णेन विलिखेत्। प्रतिसारयेत्। मण्डलाग्रेण तु प्रच्छयेदित्यर्थः॥ ८३॥

पोथकीचिकित्सामाह पटोलेत्यादि-फणिज्झकः मरुवकः। रसैरित्यनन्तरं पिष्ट इति शेषः। फणिज्झकपत्रं रसोनस्य रसैः पिष्टमाश्च्योतनमित्यर्थः॥ ८४॥

आनाहपीड़कामित्यादौ दहेदिति छेदः। अर्शःप्रभृतीनान्तु छिन्द्यादित्यनेनान्वयः॥ ८५॥

सिन्धूत्थेत्यादौ।— चतस्रः पर्ण्यो गृह्यन्ते विशेषादित्याहुः। सिन्धूत्थादीनां प्रत्येकं समं चूर्णं गृहीत्वा त्रिफलारसेन भावयित्वा सुरामण्डेन वर्त्तिः कार्य्येत्यर्थः॥ ८६॥

इति नेत्ररोगचिकित्सा।

# अथ शिरोरोगाधिकारः ।

वातिके शिरसोरोगे स्नेहस्वेदान् सनावनान् ।
पानान्नमुपनाहांश्च कुर्य्याद्वातामयापहान् ॥ १ ॥
कुष्ठमेरण्डमूलञ्च लेपात् काञ्जिकपेषितम् ।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥
पञ्चमूलीशृतं चीरं नस्यं दद्याच्छिरोगदे ॥ २ ॥
आशिरोव्यायतञ्चर्म्म कृत्वाष्टाङ्गुलमुच्छ्रितम् ।
तेनावेश्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ।
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा ।
शिरोवस्तिर्जयत्येषा शिरोरोगं मरुद्भवम् ॥

---

शिरःसंश्रितमर्म्मासानयनगतरोगाणां चिकित्सितोक्ता सम्प्रति तदाश्रयस्य शिरसोरोगाणां चिकित्सामाह वातिक इत्यादि । स्वेदोऽत्र वातहरद्रव्यकृतस्वरसादिभिः । उपनाहः स्वेदविशेषः अन्ये तूपनाहं शिरोवस्तिभेदमाहुः येन मस्तिष्क उच्यते तन्त्रान्तरे हि मस्तिष्क उपनाहः । शिरोवस्तिविशेषत्वेनोक्तः । यथा मस्तिष्केऽष्टाङ्गुलं पट्टं वस्तौ तु द्वादशाङ्गुलमिति । चुचुकोऽप्येवमिह इति निश्चलः किन्तु पश्चिमे स्नानमस्यात एव ॥ १ ॥

पञ्चमूली वातपैत्तिके स्वल्पा वातकफे तु महती ॥ २ ॥

आशिरोव्यायतमिति यावता चर्म्मणा शिरोवेष्टनं भवति तावन्मानं चर्म्म ग्राह्यमित्यर्थः । तैलैरिति यथाविधि साधितैः पूरयेदितरङ्गुलोच्छ्रयेन घृतमिति तन्त्रान्तर दर्शनात् आरुजः शान्त्यै धारयेदिति वाते यामं पैत्तिके यामार्द्धं कफे वक्ष्यमाण पञ्चमात्रःशतानीतरादि वचनं भिन्नकर्त्तृकत्वान्मतभेदाविरुद्धं

हनुमन्यादिकर्णार्त्तिमर्द्दितं मूर्द्ध कम्पनम्।
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च॥
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी।
एव एव विधिः कार्य्यस्तथा कर्णाभिपूरणे॥ ३॥
पैत्ते घृतं पयः सेकाः शीतलेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत्॥
पित्तात्मके शिरोरोगे स्निग्धं सम्यक् विरेचयेत्।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि॥
शतधौतघृताभ्यङ्गः शीतवातादिसेचनम्॥ ४॥
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्तिशान्तये।
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः॥
क्षीरपिष्टैः प्रदेहः स्यात्शृतैर्व्वा परिषेचनम्।

---

बोध्यम्। मात्रात्र निमेषोन्मेषादिः। उक्तं हि निमेषोन्मेषणे पुंसां स्फोटनं वापि चाङ्गुलेः। अक्षरस्य लघोश्चापि मात्रा-स्तूच्चारणा भवेदिति। व्यवहारस्तु कुटिकयेति। कफजे तु शिरो-वस्तिर्नस्यादिभिरजिते कफे वातस्य चानुबन्धे सति ज्ञेयः। केवलकफे तस्यानौचित्यात्। विधिरिति मात्राकल्पः॥ ३॥

पैत्त इत्यादौ।— शीता इति सेकलेपयोर्व्विशेषणम्। जीवनीयानि सर्पींषीति जीवनीयदशककाथकल्कसाधितानि। मृद्वीकेत्यादि मृद्वीकेक्षुरसौ त्रिवृच्चूर्णप्रक्षेपाद्विरेककारकौ ज्ञेयौ त्रिफलाक्काथस्तु स्वतएवेत्याहुः। क्षीरघृते चापि त्रिवृतादि सिद्धे विरेके। शतधौतघृताभ्यङ्गेति शतधौतेन घृतेन शिरसोऽभ्यङ्गो ज्ञेयः उक्तं हि सर्पिषः शतधौतस्य शिरसि धारणं हितमिति॥४॥

शीतस्पर्शा इत्यादि।—शीतस्पर्शाः कुमुदोत्पलपद्मादयः। चन्दनेत्यादौ।— व्याघ्रनखो नखभेदः। शृतैरिति चन्दनादि

मृणालबिसशालूकचन्दनोत्पलकेशरैः ॥
स्निग्धशीतैः शिरोदिह्यात्तद्वदामलकोत्पलैः ॥ ५ ॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम् ।
नावनं शर्कराद्राक्षामधुकैर्व्वापि पित्तजे ॥ ६ ॥
त्वक्पत्रशर्कराराम्लानावनं तण्डुलाम्बुना ।
क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः ॥
रक्तजे पित्तवत् सर्व्वं भोजनालेपसेचनम् ॥ ७ ॥
शीतोष्णयोश्च व्यत्यासोविशेषोरक्तमोक्षणम् ॥ ८ ॥
कफजे लङ्घनं स्वेदोरूक्षोष्णैः पाचनात्मकैः ।

---

क्वाथैः । अन्येतु चन्दनादिस्मृतैः क्षीरैरित्याहुः । मृणाले-त्यादौ ।—बिसं बालमृणालम् । उत्पलकेशरं किञ्जल्कं स्निग्ध-शीतैः स्निग्धत्वं घृतयोगात् । तद्वदित्यनेन घृतयोगात् स्निग्धत्व-मतिदिशन्ति ॥ ५ ॥

यष्ट्याह्वेत्यादौ ।— अनन्ता अनन्तमूलं एषां कल्केन चतुर्गुणक्षीरेण घृतं पक्तव्यं एवं शर्करा द्राक्षा यष्टिमधुकल्केन चतुर्गुणक्षीरेण घृतान्तरं पक्तव्यमित्यर्थः ॥ ६ ॥

त्वक्पत्रेत्यादि ।— त्वक्पत्रं तेजपत्रम् । क्षीरसर्पिरि-त्यादि । सुश्रुतस्य । क्षीरोत्थं सर्पिः क्षीरसर्पिः । शुभाइति सद्यस्काः । जाङ्गलाः शुभाइत्यत्र जाङ्गलाम्बुजा इति पाठा-न्तरं तन्त्रान्तरे तथाविधाकारसुश्रुतादिपुस्तकेष्वदर्शनात् उपेक्षणीयमिति ॥ ७ ॥

शीतोष्णयोश्च व्यत्यास इति ।—शीतां क्रियां कृत्वा उष्णा उष्णाञ्च कृत्वा शीतेत्यर्थः । रक्तजेऽप्येतदुष्णक्रियाविधानं यद्यपि हेतुप्रत्यनीकं न भवति तथापि व्याधिप्रभावात् व्याधिप्रत्य-नीकत्वमस्य बोध्यम् ॥ ८ ॥

कफजइत्यादौ ।— पाचनात्मकैरिति आमकफपाचनस्य-

तीक्ष्णावपीड़ाधूमाश्च तीक्ष्णाश्च कवड़ाहिताः॥
स्वच्छञ्च पाययेत् सर्पिः पुराणं स्वेदयेत्ततः।
मधूकसारेण शिरः स्निग्धञ्चास्य विरेचयेत्॥ ९॥
कृष्णाद्रुगुडूचीमधुकशतावर्युत्पलपाकलैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः॥
देवदारु नतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत्।
सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया॥
सर्पिःपानं विशेषेण पुराणन्त्वादिशन्ति हि॥ १०॥
त्रिकटुकपुष्करजनीजीवकतुरङ्गगन्धानाम्।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति॥ ११॥
नागरकल्कमिश्रं क्षीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम्॥ १२॥
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः।

---

भावैर्भेषजैर्बृंहणमूलादिभिः। पाययेत् सर्पिः पुराणमिति पुराणस्य सर्पिषः कालप्रकर्षकृतसंस्कारात् कफहरत्वं बोध्यम्। स्निग्धा कफजे पुराणे वातानुबन्धे विधेयम्। मधुकसारेण मधुककाष्ठसारचूर्णेन उष्णोदकेनालोड़ितेन अवपीड़ः कार्य्यः ;

कृष्णेत्यादौ। पाकलं कुष्ठम्। देवदार्व्वित्यादौ।— नलदं मांसी। सर्पिःपानं पुरातनमिति पीयते इति पानं कर्म्मणि ल्युट् तदेव पुराणमिति विशेषणं गच्छते॥ ९॥ १०॥

त्रिकटुकेत्यादौ।— जीवकः पीतशालः शिरोऽर्त्तिजालमिति नानादोषजं शिरोरोगम्। द्रव्याणां तीक्ष्णवीर्य्यत्वात् पित्तजं विहाय योज्यायं योग इत्येके॥ ११॥

नागरेत्यादौ।— गव्यदुग्धं पलैकं शुण्ठीचूर्णं माषकत्रयं प्रक्षिप्य नासया पेयमिति वृद्धाः॥ १२॥

प्रपौण्डरीकं सुरदारुकुष्ठं यष्ट्याह्वमेलाकमलोत्पले च॥
शिरोरुजायां सघृतः प्रदेहो लोहैरकापद्मकचोरकैश्च॥ १३॥

षड्ताह्वाद्यं तैलम्।

षड्ताह्वैरण्डमूलोग्रावक्राव्याघ्रीफलैः शृतम्।
तैलं नस्यं मरुत्श्लेष्मतिमिरोर्द्ध्वगदापहम्॥ १४॥

जीवकाद्यं तैलम्।

जीवकर्षभकौ द्राक्षासितायष्टीबलोत्पलैः।
तैलं नस्यं पयः पक्वं वातपित्तशिरोगदे॥ १५॥

वृहज्जीवकाद्यं तैलम्।

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला।
नीलोत्पलं चन्दनञ्च विदारीशर्करा तथा॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम्।
वाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्ठिकाम्॥

---

नतेत्यादि।— नतं तगरपादिका तदभावे शियालीकोपरः प्रपौण्डरिकेत्याद्यौ। लोहमगुरुः एरका शोगलः चोरकं चोरपुष्पी प्रपौण्डरिकादिश्चोरकान्त एकोयोगः निश्चलस्तु उत्पलान्त एकोयोगः लोहेत्याद्यपरइत्याद्यपरइत्याह। तत्र द्वात्रिंशत्प्रदेहापेक्षया प्रदेहाधिकप्रसङ्गात्॥ १३॥

षड्ताह्वेत्याद्यौ।— उग्रा वचा वक्रं तगरपादिका व्याघ्री कण्टकारी तस्या फलं फलमिति मदनफलमित्यन्ये॥ १४॥

जीवकाद्यतैले पयः पक्वमिति चतुर्गुणदुग्धे सिद्धम्॥ १५॥

वृहज्जीवकाद्यतैले मधुकं मधूकस्य पुष्पं फलं वा जाङ्गलमांसं हरिणादिमांसं तस्य तुलार्द्धस्य रसेनेति तुलाद्रव्ये जलद्रोण इति वचनात् तुलार्द्धे मांसेऽर्द्धद्रोणजलं दत्त्वा पादशेषो-

वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति।
हन्त्यकालं शिरश्चलमर्हितञ्चापकर्षति ॥ १६ ॥

षड्बिन्दुतैलम्।

एरण्डमूलं तगरं शताह्वा जीवन्ति रास्ना सह सैन्धवञ्च।
भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ॥
आजं पयस्तैलविमिश्रितञ्च चतुर्गुणे भृङ्गरसे विपक्वम्।
षड्बिन्दवोनासिकया विधेयाः शीघ्रं निहन्युः शिरसोविकारान् ॥
च्युतांश्च केशान् पलितांश्च दन्तान् दुर्बद्धमूलांश्च दृढीकरोति।
सुपर्णदृष्टिप्रतिमञ्च चक्षुर्बाह्वोर्बलञ्चाभ्यधिकं ददाति ॥ १७ ॥
क्षयजे क्षयमासाद्य कर्त्तव्योवृंहणो विधिः।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ १८ ॥
क्रिमिजे व्योषनक्ताह्वशिग्रुवीजैश्च नावनम्।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम् ॥

---

रसः प्रस्थद्वयमानो भवति। स्नेहोश्चतुर्गुणन्देयमिति परिभाषया काथ विधिरितग्रन्थे व्यवहारस्तु पूर्व्वव्याख्यया ॥ १६ ॥

षड्बिन्दुतैले तगरं पिण्डतगरमूलं भृङ्गं गुड़त्वक् अजाक्षीरन्तु तैलसममिति किन्तु सामान्यतः तिलतैलगोक्षीरेणापि योगोऽयं तन्त्रान्तरसम्वादात् ॥ १७ ॥

क्षयजे क्षयमासाद्येति।— यस्य रक्तादेः क्षयेण शिरोरोगोजातस्तस्य क्षयं बुद्धा तत्प्रत्यनीको वृंहणोविधिः कार्य्यइत्यर्थः। वातघ्नमधुरैः शृतमिति वातघ्नोभद्रदार्व्वादिः मधुरः काकोल्यादिः तत्र वातघ्नस्य काथः मधुरगणस्य तु कल्कः। यदाह विदेहः सिद्धं वातहरकाथे कल्के मधुरके घृतम्। पाने नस्ये विधातव्यं शिरोरोगे क्षयोद्भव इति ॥ १८ ॥

क्रिमिजइत्यादौ।— नक्ताह्न शिग्रुवीजैरिति नक्ताह्वः

### अपामार्ग तैलम् ।

अपामार्गफलव्योषनिशाचवकरामठैः ।
सविड़ङ्गं स्मृतं मूत्रे तैलं नस्यं क्रिमिं जयेत् ॥ १६ ॥
नावनं सगुड़ं विश्वं पिप्पली वा ससैन्धवा ।
भुजस्तम्भादिरोगेषु सर्व्वेषूर्द्ध्वगदेषु च ॥ २० ॥
सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादिभेषजम् ।
पाययेत् सगुड़ं सर्पिर्घृतपूरांश्च भक्षयेत् ॥
सूर्य्यावर्त्ते शिरावेधेन तनं क्षीरसर्पिषा ।

---

करञ्ज. बीजपदमुभयत्रापिसम्बध्यते । अजामूत्रयुतमित्यादि ।-क्रिमिजे शिरोरोगे यन्मयमुक्तं तदजामूत्रयुक्तमत्यर्थं क्रिमिजित्स्यादित्यर्थः । उक्तं हि मूत्रपिष्टा समुद्दिष्टा क्रिया क्रिमिषु योजयेदिति कृत्वा क्रिमिजिद्विड़ङ्गं अजामूत्रयुक्तं नस्यं परं उत्कृष्टं स्यादित्यर्थः । अपामार्गफलमिति षष्ठीसमासः । चवकोहास्तिया लोकनाथ इति लोके । रामठं हिङ्गुमूत्रं चतुर्गुणम् ॥ १६ ॥

नावनमित्यादौ गुड़माषकान्यष्टौ शुण्ठीचूर्णं माषकद्वयं उष्णोदकपलैकेन गोलयित्वा वस्त्रपूतं कृत्वा नस्यं कार्य्यं अयं योगोवातानुबन्धे । तथा पिप्पलीचूर्णं माषकद्वयं उष्णोदकं कर्षैकं पूर्ववन्नस्यं कफानुबन्धे ॥ २० ॥

सूर्य्यावर्त्त इत्यादि सुश्रुतस्य । नस्य कर्म्मादीति हेतुभूतदोषविपरीतं नस्यं परिषेकः शिरोविरेकादिकम् । पाययेदित्यादि ।—वातप्रबले घृतपलैके गुड़माषकाष्टकं प्रक्षिप्य पाययेदिति । घृतपूरो भक्ष्यविशेषः । यथा मर्द्दितां समितां क्षीरनारीकेलसुताादिभिः । अवगाह्य घृते पक्वा घृतपूरोयमुच्यते । यथोक्तक्रियाभिः पुनरप्रशमे शिराव्यधः कार्य्य इत्याह: सूर्य्यावर्त्त इत्यादि । क्षीरसर्पिषेति क्षीरोत्थसर्पिषा । क्षीरघृता-

श्रितः क्षीरघृताभ्यासस्ताभ्याञ्चैव विरेचनम् ॥
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ २१ ॥
सशर्करं कुङ्कममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥२२॥
कृतमालपल्लवरसे खरमञ्जरिकल्कसिद्धं नवनीतम्।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुस्तारम् ॥ २३ ॥
दशमूलीकषायन्तु सर्पिः सैन्धवसंयुतम्।
नस्यमर्द्धावभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥
शिरीषमूलकफलैरवपीड़ञ्च योजयेत्।
अवपीड़ोहितो वा स्यात् वचापिप्पलीभिः स्मृतः ॥ २४ ॥

---

अभ्यास इति क्षीरघृतयोरभ्यासः ताभ्यामिति क्षीरघृताभ्यां विरेचक द्रव्यसहिताभ्यां विरेचनं कृत्वा विरेचनमिह शिरोविरेचनम्। जीवनीयैश्च क्षीरपिष्टैरित्यन्वयः ॥ २१ ॥

सशर्करामित्यादि।— सशर्करं कुङ्कुमं घृते भृष्ट्वा घृतेनैव पिष्ट्वा समालोड्य नस्यं विधेयम्। अस्य पक्वो घृत तो ४ शर्करा मा ४ कुङ्कुम मा ४ आलोड्याग्नौ किञ्चित् तप्तीकृत्य नस्यं देयम्। दिनाभिवृद्धि प्रभवोरोगः सूर्य्यावर्त्तइत्यर्थः ॥ २२ ॥

कृतमालेत्यादि। कृतमालः सोनालुः तस्य पल्लवस्वरसः प्रस्थएकः अपामार्गवीजस्य पलद्वयं नवनीतस्याष्टौ पलानौत्याहुः ॥ २३ ॥

दशमूलीत्यादि।— दशमूलीक्वाथ पल १ प्रक्षेपघृत मा ७ सैन्धव मा १ नासया पेयम्। शिरीषेत्यादि।— शिरीषवल्कलमूलकवीजयोः प्रत्येकं मा ४ पिष्ट्वा वस्त्रेण निष्पीड्य नस्यं विधेयं एवं वचा पिप्पलीभ्यामिति। एतच्चावपीड़द्वयमतितीक्ष्णत्वात् यद्यपि सूर्य्यावर्त्ते वातपित्तोत्तरे न युज्यते तथापि वराविप्रत्यनीकत्वात् स्थानिककफक्षयार्थं वा ज्ञेयमिदं अन्ये तु

जाङ्गलानि च मांसानि कारयेदुपनाहनम्।
तेनास्य शाम्यति व्याधिः सूर्य्यावर्त्तः सुदारुणः॥
एष एव विधिः कृत्स्नः कार्य्यश्चार्द्धावभेदके।
शारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम्॥
सर्पिस्तैलयुतोलेपः सूर्य्यावर्त्तार्द्धभेदयोः॥ २५॥
पिबेत् सशर्करं क्षीरं नीरं वा नारिकेलजम्।
सुशीतं वापि पानीयं सर्पिर्वा नस्ततस्तयोः॥ २६॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः।
शिरावेधश्च कर्त्तव्योऽनन्तवातप्रशान्तये॥
आहारश्च विधातव्योवातपित्तविनाशनः।
मधुमस्तकसंयावहविः पुरैश्च यः क्रमः॥
सूर्य्यावर्त्ते हितं यत्तच्छङ्खके स्वेदवर्ज्जितम्।
क्षीरसर्पिः प्रशंसन्ति नस्यपानञ्च शङ्खके॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।

---

सूर्य्यावर्त्तविपर्य्यये योगद्वयमित्याहुः। सूर्य्यावर्त्तविपरीतश्च प्रत्यूषेसायञ्च महान् मध्ये तु मन्द इति॥ २४॥

जाङ्गलानीति।— अत्र वृद्धवैद्योपदेशात् वातहरद्रव्यैर्मांसमुत्स्विद्य सैन्धवं तैलञ्च दत्त्वा उष्णोलेपः कार्य्यः। अम्लपेषितमिति काञ्जिकपेषितम्॥ २५॥

पिबेदित्यादि योगचतुष्टयं सशर्करमित्यनुवर्त्तयितुं युज्यत इति निश्चलः। तयोरिति सूर्य्यावर्त्तार्द्धभेदकयोः॥२६॥

अनन्तवातेत्यादि। सुश्रुतस्य। मधुमस्तकेति मधुमस्तकादयोभक्ष्यविशेषाः सूदशास्त्रेऽनुसन्धेयाः। मधुमस्तः पोलिकाकारोमधुगर्भः सितावेष्टितो भक्ष्यविशेष इति बकुलः। मधुमस्तकमिति चक्रः। संयावो यथा पचेद्घृतोत्तरे भाण्डे क्षिपेच्छाण्डेन वै ततः। संयावोऽसौ सिताचूर्णैः खण्डैश्चामरिचार्द्र-

दूर्वां पुनर्नवाञ्चापि लेपं साध्ववचारयेत् ॥
शीततोयावसेकांश्च चीरसेकांश्च शीतलान् ।
कल्कैश्च चीरिवृक्षाणां शङ्खकस्य प्रलेपनम् ॥
मांशकादध्वहंसानां शराव्यौः कच्छपस्य च ।
रसैः संविंहितस्याथ तस्य शङ्खकसन्धिजाः ॥
ऊर्द्धं तिस्रः शिराः प्राज्ञोभिन्द्यादेव न ताड़येत् ॥ २७ ॥
शिरःकम्पे ऽमृतारास्नाबलास्नेहसुगन्धिभिः ।
स्नेहस्वेदादिवातघ्नं शिरोवस्तिश्च शस्यते ॥ २८ ॥

यष्ट्याद्यं घृतम् ।

यष्टीमधुबलारास्नादशमूलाम्बुसाधितम् ।
मधुरैश्च घृतं सिद्धमूर्द्ध्वजत्रुगदापहम् ॥ २९ ॥

---

कैरिति । हविःपूरोभक्ष्यविशेषः घृतपूरेति लोके । यथा मण्डितः सितापिण्डः चीरेणैव विलोड़ितः । अवगाह्य घृते पक्वो घृतपूरोऽयमुत्तम इति । क्रमइत्यत्राह क्रम इति चीरोत्थं सर्पिः चीरसर्पिः नस्तपानं नासिकया पानं किम्बा नस्यं पानञ्च उक्तञ्च सुश्रुते चीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खक इति। चीरिवृत्तेति चीरिवृक्षा वटादयः। संवृंहितस्येति प्राप्तमांसोपचयस्य । सन्धिजाः शिराभिन्द्यादित्यत्र सूच्येति शेषः। न ताड़येदिति कुठारिकयेति शेषः सन्धिभङ्गभयादिति च शेषः ॥ २७ ॥

शिरःकम्पइत्यादौ ।— स्नेहोघृतादिः सुगन्धिरगुर्व्वादिः सुगन्धिभिरित्यनन्तरं लेपइति शेषः। शिरोवस्तिविधिः पूर्व्वमुक्त एव ॥ २८ ॥

यष्टिमध्वित्यादि ।— घृतं प्रत्येकं क्वाथार्थं यष्ट्यादिदशमूलान्तानां मिलित्वा चतुःषष्टिपलं जलद्रोणैकं शेषं शरावषोड़श कल्कार्थं काकोलियष्टिमधुकाकड़ाशृङ्गमेदाजीवकऋषभकपुण्ड-

मयूराद्यं घृतम् ।

दशमूलबलारास्नामधुकैस्त्रिपलैः सह ।
मयूरं पक्षपित्तान्त्रशकृत्पादास्य वर्ज्जितम् ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् ॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम् ।
मयूराद्यमिदं ख्यातमूर्द्ध्वजत्रुगदापहम् ॥
आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान् ।
कल्केनाऽनेन विपचेत् सर्पिरूर्द्ध्वगदापहम् ॥
दशमूलादिना तुल्यो मयूर इह गृह्यते ।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः ॥ ३० ॥

---

रिकाकाष्ठ-द्राक्षाऋद्धि-वृद्धि-वंशरोचना मुगानी माषाणी क्षीरकाकोली पद्मकाष्ठ गुडूची प्रक २ पक्तव्यम् ॥ २८ ॥

दशमूलेत्यादि ।— दशमूलस्य प्रत्येकं पलत्रयं एवं बला-दीनां त्रयाणामपि तेन मिलित्वा ऊनचत्वारिंशत्पलानि भवन्ति तथा मयूरमांसमपि पक्षपादादिरहितं ऊनचत्वारिंशत् पलं ग्राह्यं एवं मिलित्वा यावत् क्वाथ्यं भवति तत्र क्वाथ्याच्चतु-र्गुणं वारीत्यादि परिभाषया जलादिव्यवस्था एतदेवाह दश-मूलाद्दिना तुल्यो मयूरइत्यादि ।— अन्ये तु दशमूलादिभिः प्रत्येकं त्रिपलमानैः सह तद्गुणमयूरगुडमेकं पक्षादिवर्ज्जितं जलद्रोण एव पचेत् जलद्रोणोऽत्र पादशेषः स च पचनीयघृ-तापेक्षया चतुर्गुणो भवतीत्याहुः । एतदेवाह अन्येत्वाकृति-मानेन मयूरग्रहणं विदुरिति । व्यवहारस्त्वनेनैव । मधुरैरिति जीवनीयदशकैः जीवनीयानि च मधुरत्वमधुरविपाकत्वप्रक-र्षान्मधुरशब्देनोच्यन्ते । एतन्मयूरघृतं तथा अच्चमानश्च मधुर-स्थाने मृषिकादीन् दत्त्वापि कार्य्यमित्याहुः । आखुना मधु-

प्रपौण्डरीकाद्यं तैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा ॥
सर्व्वानूर्द्ध्वगदान् हन्ति पलितानि च शीलितम् ॥ ३१ ॥

बृहन्मायूरं घृतम् ।

शतं मयूरमांसस्य दशमूलबलातुलाम् ।
द्रोणेऽम्भसः पचेत् युक्त्वा तस्मिन् पादस्थिते ततः ॥
निषिच्य पयसो द्रोणं पचेत्तत्र घृताढकम् ।
प्रपौण्डरीकवर्गोक्तैर्जीवनीयैश्च भेषजैः ॥
मेधाबुद्धिस्मृतिकरमूर्द्ध्वजत्रुगदापहम् ।
मायूरमेतन्निर्द्दिष्टं सर्व्वानिलहरं परम् ॥
मन्याकर्णशिरोनेत्ररुजापस्मारनाशनम् ।
विषवातामयश्वासविषमज्वरकासनुत् ॥ ३२ ॥

इति शिरोरोगचिकित्सा ।

---

रापेक्षया अल्पगुणेनापि तत्रैकेन स्नेहसाधनं कर्त्तव्यमित्याह ॥ ३० ॥

प्रपौण्डरिकमित्यादि ।— वाभटस्य । चन्दनोत्पलैरित्यत्र कल्कैरिति शेषः । धात्रीरसश्चात्र तैलापेक्षया चतुर्गुणम् ॥ ३१ ॥

शतमित्यादौ ।— दशमूलबलामूलयोर्म्मिलित्वा तुला । द्रोण इति पदमावृत्य उभयत्रापि योज्यं तेन मयूरमांसशतपले एको जलद्रोणः । दशमूलबलातुलायां चापर इति द्रोणद्वयमम्भसः । पयसोदुग्धस्य द्रोणं निषिच्य दत्त्वा पचेदिति । एतेन षड्गुणः पाकः । प्रपौण्डरिकवर्गोक्तैरिति प्रपौण्डरिकमधुकपिप्पलीचन्दनोत्पलैरित्यर्थः । जीवनीयैरिति जीवनीयदशकैः । ततोऽत्र यष्टिमधुकस्य भागद्वयं ग्राह्यम् ॥ ३२ ॥

इति शिरोरोगाधिकारः ।

## अथासृग्दराधिकारः ।

दध्ना सौवर्च्चलाजाजीमधुकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारीवातासृग्दरपीड़िता ॥ १ ॥
पिबेदैणेयकं रक्तं शर्करामधुसंयुतम् ।
वासकस्वरसं पैत्ते गुड़ूच्यारसमेव वा ॥ २ ॥
रोहीतकान्मूलकल्कं पाण्डरेऽसृग्दरे पिबेत् ।
जलेनामलकाद्वीजकल्कं वा ससिता मधु ॥
धातक्याश्चाक्षमात्रं वा आमलक्यामधुद्रवम् ।
काकजानुकमूलम्बा मूलं कार्पासमेव वा ॥
पाण्डुप्रदरशान्त्यर्थं पिवेत्तण्डुलवारिणा ॥ ३ ॥

---

स्त्रीपुंसां साधारणव्याधीनां तथा पुं प्रति नियतानामप्यपदंशादीनां चिकित्सोक्ता सम्प्रति स्त्रीजियतानां प्रदरादीनां चिकित्सितमभिधातुमुपक्रमते । दध्नेत्यादि दध्नः कर्षत्रयं सौवर्च्चलस्य माषकमेकम् । अजाज्यादीनां प्रत्येकं माषकद्वयं मधुनस्तु माषकचतुष्टयमित्याहुः ॥ १ ॥

अतिरक्तस्रुतशोणितानां चिकित्सामाह पिबेदित्यादि । एणस्येदं ऐणेयं स्वार्थे कः एणस्य रक्तं दशमूलयोगेन मर्द्दयित्वा पेयं तेन स्यानता नस्यादित्याहुः । शर्करामधुयोजितमिति पदं वासकस्वरसगुड़ूचीस्वरसयोरपि योज्यं हारीतसम्वादात् ॥ २ ॥

रोहितकादित्यत्रापि ससिता मध्विति योज्यम् । धातक्याद्यित्यादि ।— धातक्याः कल्कमक्षमात्रं मधुद्रवं तथामलक्यावा कल्कमक्षमात्रं मधुद्रवं पिवेत् मधुद्रवोयत्र कल्के तत् मधुद्रवम् । काकजानुकः काकजङ्घा ॥ ३ ॥

चशोकेत्यादौ ।— षड़ङ्गपरिभाषयार्द्ध्रस्तमशो॰ वल्कल-

अशोकवल्कलक्काथशृतं दुग्धं सुशीतलम्।
यथाबलं पिबेत् प्रातस्तीव्रासृग्दरनाशनम्॥ ४॥
दार्व्वीरसाञ्जनवृषाब्दकिराततिक्त-
भल्लातकैरवकृतोमधुना कषायः।
पीतोजयत्यतिबलं प्रदरं सशूलं
पीतासिताकणविलोहितनीलशुक्लम्॥ ५॥
रसाञ्जनं तण्डुलीयस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम्।
असृग्दरं सर्व्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण॥
कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना।
एतत् पीत्वा त्र्यहाद्वारी प्रदरात् परिमुच्यते॥
क्षौद्रयुक्तं फलरसं काष्ठोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोन्नभुक्॥
प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम्॥ ६॥

---

क्वाथं गृहीत्वा तेन चतुर्गुणेन क्षीरं साध्यमित्यर्थः। वृद्धास्तु क्वाथमप्यत्रैव क्षीरसाधनपरिभाषया व्यवहरन्ति॥ ४॥

दार्व्वीत्यादौ।— वृषोवासकः तिक्तं शुष्कतिक्तमलातु कैरवं कुमुदं भल्लातकासहत्वे तु रक्तचन्दनमिष्यते अनेन व्यवहरन्ति॥ ५॥

रसाञ्जनमित्यादौ। तण्डुलीयस्य मूलं लोहितण्डुलीयस्य मूलं गृह्णन्ते। भेषजद्वयमिदं प्रत्येकं मिलितञ्च बोध्यं सिद्धसारहारीतसम्बादात्। सर्व्वभवमिति वाताद्येकदोषभवं सर्व्वं न तु सान्निपातिकं तस्यासाध्यत्वात् उक्तं हि सक्षौद्रसर्पिर्हरिताब्बर्णं मज्जप्रकाशं कुणपं त्रिदोषात्। तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञाः न तत्र कुर्व्वीत भिषक् चिकित्सामिति। श्वासञ्च भार्गी सह नागरेणेति तु श्लोकानुरोधाल्लिखितम्॥ ६॥

कुशवाट्यालकमूलं तण्डुलसलिलेन रक्ताख्यम् ।
शमयति मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ ॥ ७ ॥
गुड़ेन वदरीचूर्णं मोचमामन्तथा पयः ।
पीता लाक्षा च सघृता पृथक् प्रदरनाशना ॥ ८ ॥
रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत् ॥ ९ ॥
असृग्दरे विशेषेण कुटजाष्टकमाचरेत् ।

पुष्यानुगं चूर्णम् ।

पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदरसाञ्जनम् ।
अम्बष्ठकीमोचरसः समङ्गापद्मकेशरान् ॥
वाह्लीकातिविषामुस्तं विल्वं लोध्रं सगैरिकम् ।
त्रिफलं मरिचं शुण्ठी मृद्वीका रक्तचन्दनम् ॥
कट्फलवत्सकानन्ताधातकीमधुकार्जुनम् ।
पुष्येणोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत् ॥
तानि क्षौद्रेण संयुज्य पाययेत्तण्डुलाम्बुना ।
असृग्दरातिसारेषु रक्तं यच्चोपवेशते ॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत् ।

---

रक्ताख्यमिति रक्तप्रदरम् । मदिरापानमिति मदिरया पीयते कर्मणि युट् तेन मदिरापीतमित्यर्थः । तदुभयमिति कुशवाट्यालकयोर्मूलम् ॥ ७ ॥

गुड़ेनेत्यादि ।— योगचतुष्टयं वदरीचूर्णमिति वातकफे । मोचमाममोचं अपक्व कदलिफलचूर्णस्य कर्षएकः एतच्च कफपित्ते ॥ ८ ॥

रक्तपित्तविधानेनेति अधोगतरक्तपित्तविधानेन ॥ ९ ॥

पुष्यानुगचूर्णे जम्ब्वायोर्मध्यं जम्ब्वाम्रयोरस्थि । वाभटेपि जम्ब्वाम्रयोरस्थीत्युक्तम् । अम्बष्ठकी दक्षिणापथे ख्याता तदभावे पाठामेव द्विगुणां गृह्णन्ति लक्षणामित्यन्ये पद्मकेशरं पद्म-

योनिदोषं रजो दोषं श्वेतं नीलं सपीतकम् ॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ १० ॥

मुद्गाद्यं तैलम् ।

मुद्गमासस्य निर्य्यूहे रास्नाचित्रकनागरैः ।
सिद्धं सपिप्पलीबिल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ ११ ॥

शीतकल्याणकं घृतम् ।

कुमुदं पद्मकोशीरं गोधूमोरक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरीमधुयष्टिका ॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतमूली च शालपर्णी सजीवका ॥
फलं त्रिपुषबीजानि प्रत्यग्रं कदलीफलम् ।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत् ।
प्रदरे रक्तपित्ते च रक्तगुल्मे हलीमके ॥
बहुरूपञ्च यत् पित्तं कामलावातशोणिते ।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति ।

---

किञ्जल्कम् । वाह्लीकं कुङ्कुमं विल्वं विल्वशलाटु । पुष्येणेति पुष्यानक्षत्रेण ॥ १० ॥

मुद्गेत्यादौ ।— मुद्गमाषाभ्यां निर्यूहः क्वाथः रास्नादिपञ्चकस्य कल्कः विल्वं विल्वशुण्ठकम् ॥ ११ ॥

कुमुदमित्यादि ।— कुमुदं कह्लारपुष्पं पद्मकं पद्मकाष्ठम् । रक्तशालेस्तु मूलं पयस्या क्षीरकाकोली काश्मरी गाम्भारी तस्याः फलं अतिबला गोरक्षतण्डुला जीवकं जीवनीयगणमध्ये

अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम् ॥
शीतकल्याणकं नाम परमुक्तं रसायनम् । फलं त्रिफला ॥१२॥

बृहच्छतावरीघृतम् ।

शतावरीरसप्रस्थं क्षोदयित्वावपीड़येत् ।
घृतप्रस्थसमायुक्तं क्षीरं द्विगुणितं भिषक् ॥
अत्र कल्कानिमान् दद्यात् स्थूलोडुम्बरसम्मितान् ।
जीवनीयानि यान्यष्टौ यष्टिपद्मकचन्दनैः ॥
श्वदंष्ट्रा चात्मगुप्ता च बलानागबला तथा ।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम् ॥
शर्करा च समा देया काश्मर्याश्च फलानि च ।
सम्यक् सिद्धन्तु विज्ञाय तद्घृतञ्चावतारयेत् ॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च ।
वातरक्तं क्षयं श्वासं हिक्कां कासञ्च दुस्तरम् ॥
अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम् ।
असृग्दरं सर्व्वभवं मूत्रकृच्छ्रं सुदारुणम् ॥
एतान् रोगान् शमयति भास्करस्तिमिरं यथा ॥ १३ ॥

इत्यसृग्दरचिकित्सा ।

---

पठितं वणिकद्रव्यम् । फलं त्रिफला त्रिपुषं मायाम्बुफलं वीजमित्यन्ये प्रत्यग्रमित्यभिनवं अपक्वमित्यर्थः ॥ १२ ॥

बृहच्छतावरी घृते ।— शतावरीं क्षोदयित्वा रसप्रस्थमवपीड़येत् । अवपीड्य गृह्णीयादित्यर्थः । स्थूलोडुम्बरसम्मितानिति प्रत्येकं कर्षसंमितानीत्यर्थः । जीवनीयान्यष्टाविति अष्टवर्गः । जीवकर्षभकौ मेदाकाकोलीक्षीर काकोलीऋद्धिवृद्धय इति । असृग्दरं सर्व्वभवमिति पूर्व्ववत् व्याख्येयम् ॥ १३ ॥

इति प्रदररोगचिकित्सा ।

# अथ योनिव्यापदधिकारः।

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म्म वातजित्।
बस्त्यभ्यङ्गपरिषेकप्रलेपाः पिचुधारणम्॥ १॥
वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम्।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम्॥
पिष्ट्वा प्रसन्नयालोड्य खादेत्तत् घृतभर्ज्जितम्।
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शोविनिवृत्तये॥
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम्॥ २॥
नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः।
तैलात् प्रसाधिताद्धार्य्यः पिचुर्योनौरुजापहः॥
पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च॥ ३॥
योन्यां बलासदुष्टायां सर्व्वं रूक्षोष्णमौषधम्।

---

प्रदरोऽपि योनिव्यापत् विशेष इति योनिव्यापत्त्वसामान्यादनन्तरं योनिव्यापच्चिकित्सितमुच्यते। योनिव्यापत्स्वित्यादि।— कर्म्मवातजिदिति वस्तिरुत्तरवस्तिश्च॥ १॥

वचेत्यादि वाभटस्य। उपकुञ्चिका कृष्णजीरकं वृषको वासकमूलं प्रसन्नामदिराया उपरि फेणभागः। एभ्योवचादिभ्यः समभागपिष्टेभ्यः तो २ प्रसन्ना पल २ आलोड्य घृतकर्षेण सन्तोल्य पेयम्॥ २॥

नतेत्यादि।—वाभटस्य। वार्त्ताकिनी भूकण्टकारी गोष्ठवार्त्ताकुरित्यन्ये। अमरदारु देवदारु। एभिर्वचादिभिः कल्कैः तैलं साध्यं जलञ्च चतुर्गुणमिति। पिचुरिति भेषजसाधितस्नेहाप्लुतवं पिचुः॥ ३॥

पिप्पल्यामरिचैर्म्माषैः शताह्वाकुष्ठसैन्धवैः ॥
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥ ४ ॥
हिंस्राकल्कन्तु वातार्त्ता कोष्णामभ्यज्य धारयेत् ।
पञ्चवल्कलस्य पित्तार्त्ता श्यामादीनां कफोत्तरा ॥ ५ ॥
मूषिकामांससंयुक्तं तैलमातपभावितम् ।
अभ्यङ्गात् हन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥ ६ ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥
स्रोतसां शोधनं शोथकण्डुक्लेदहरञ्च तत् ।
वामिन्याः पूतियोन्याश्च कर्त्तव्यः स्वेदनो विधिः ॥
क्रमः कार्य्यस्ततः स्नेहपिचुभिस्तर्पणं भवेत् ॥ ७ ॥
शल्लकीजिङ्गिनीजम्बुधवत्वक्पञ्चवल्कलैः ।

---

योन्यामित्यादौ तुल्येति परिणाहेण दैर्घेण च । वर्त्तिरिति वस्त्रेण वस्त्रं विना वा ॥ ४ ॥

हिंस्रेत्यादि हिंस्रा कालाकड़ामूलम् । पञ्च वल्कलस्य वटोडुम्बराश्वत्थप्लक्षवेतसस्य । श्यामादीनामिति कफरोगभिषग्जितीये श्यामा त्रिवृत् चतुरङ्गलेत्यादिनोक्तानाम् ॥ ५ ॥

मूषिकेत्यादि ।—मूषिकायां मांसं तैलात् पादिकं नात्र द्रवयोगः कार्य्यः । आतपभावितमिति सप्ताहं तन्मांसं मूषिकमांसं सैन्धवचूर्णावचूर्णितमेरण्डादिपत्रे कृत्वा योनिं स्वेदयेत् ॥ ६ ॥

गोपित्त इत्यादौ ।— क्षौमं सूक्ष्ममसृणवस्त्रम् । किण्वं सुरावीजं मधुना किण्वचूर्णमिति तृतीयो योगः । अचरणानाम योनिव्यापत् । वामिन्या इत्यादौ ।— पूतियोनिशब्देन उपप्लुता परिप्लुता चोच्यते ॥ ७ ॥

शल्लकीत्यादि ।— शल्लकीजिङ्गिन्यौ स्वनामख्याते । त्वक्-

कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥
कर्णिन्यां वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः।
वस्तमूत्रकृता धार्य्या सर्व्वञ्च श्लेष्मनुद्धितम् ॥
त्रैवृतं स्नेहनं स्वेद उदावर्त्तानिलार्त्तिषु।
तदेव च महायोन्यां स्रस्तायाञ्च विधीयते ॥ ८ ॥
आखोर्म्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक्।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति व्रीडाकरभगफलं नात्र सन्देहबुद्धिः ॥ ९ ॥
शतपुष्पातैललेपाद्वदरीदलजात्तथा।
पेटिकामूललेपाच्च योनिर्भिन्ना प्रशाम्यति ॥
सुषवीमूललेपेन प्रविष्टान्तर्ब्बहिर्भवेत् ॥ १० ॥

---

शब्दः शल्लक्यादिभिः प्रत्येकं सम्बध्यते अत्र कषायश्चतुर्गुणः। अकल्क एवायं स्नेहः। पिचुरिति एतत् तैलाप्लुतः पिचुः। कर्णिन्यामित्यादौ कुष्ठादिभिर्व्वर्त्तिः कार्य्या इति योज्यम्। अर्काग्रमर्कपल्लवः। त्रैवृतं स्नेहनमिति सर्पिस्तैलवसारूपस्नेहः। उदवर्त्ता उदावर्त्ताख्योयोनिव्यापत् अनिलार्त्तिः वातिकी योनिव्यापदित्यर्थः तदेवेति त्रैवृतं स्नेहनम्। विधीयत इति अनुवासनोत्तरवस्तिविधयेत्यर्थः चरकसम्वादात् ॥ ८ ॥

आखोरित्यादौ।— सपदीति सद्यस्कमांसग्रहणार्थं एतन्मांसं यावदिति खरत्वमासाद्य न द्रवति द्रवतां न गच्छति तावदेव.गालनीयमित्यर्थः भगफलं कन्दरोगम् ॥ ९ ॥

शतपुष्पेत्यादि।— योगत्रयम्। तैलपिष्टशतपुष्पया लेप इत्यर्थः। पेटिका भापीटुपरीति ख्याता। भिन्नेति विदीर्णा। सुषवीत्यादि। सुषवीमूललेपेन कारवेल्लमूललेपेनेत्यर्थः। प्रविष्टेति अन्तःप्रविष्टा अन्तर्मुखा योनिर्बहिर्भवतीत्यर्थः ...

योनिर्मूषरसाभ्यङ्गात् निःसृता प्रविशेदपि ॥ ११ ॥
लोध्रतुम्बीफलालेपो योनिदार्ढ्यं करोति च ।
वेतसमूलनिःक्वाथक्षालनेन तथैव च ॥
मूषिकावागुलिवसाभ्यक्षणं योनिदार्ढ्यम् ॥ १२ ॥
वचानीलोत्पलं कुष्ठं मरिचानि तथैव च ।
अश्वगन्धा हरिद्रा च गाढ़ीकरणमुत्तमम् ॥
मदफलमधुकर्पूरपूरितं भवति कामिनीजनस्य ।
विगलितयौवनस्य च वराङ्गमतिगाढ़ं सुकुमारम् ॥ १३ ॥
पञ्चपल्लवयष्ट्याह्वमालतीकुसुमैर्घृतम् ।
रविपक्वमन्यथा वा योनिगन्धविनाशनम् ॥ १४ ॥
इक्ष्वाकुबीजदन्ती चपलागुड़मदनकिण्वयष्ट्याह्वैः ।
सस्नुक्क्षीरैर्वर्त्ति र्योनिगताकुसुमसञ्जननी ॥ १५ ॥

---

योनीत्यादौ ।— मूषोमूषिकस्तस्य वसामांसस्नेहः निःसृतेति वहिर्निःसृता इयमेव प्रसंसिनीत्युच्यते ॥ ११ ॥

लोध्रेत्यादौ ।— तुम्बी अलावुः तस्याफलम् । तथैव चेति दार्ढ्यकृदित्यर्थः । मूषिकेत्यादौ । वागुली वादुर इति ख्यातः दिवान्धः पक्षी ॥ १२ ॥

वचेत्यादि । वचादिहरिद्रान्त एकोयोगः । वचादिहरिद्रान्तैर्लेपोऽवचूर्णनं वा । मदेत्यादि ।—मदः कस्तूरीफलं जातीफलं किम्बा मदफलं मदनफलमेव एतैर्मधुनापिष्टैर्योनिप्रपूरणम् ॥ १३ ॥

पञ्चपल्लवेत्यादि ।— पञ्चानां आम्रजम्बुकपित्थवीजपूरकविल्वानां पल्लवाः एषां कल्कः । रविपक्वमिति द्रवं विनैव अन्यथावेत्यग्निपक्वं अस्मिन् पक्षे जलं चतुर्गुणम् ॥ १४ ॥

इदानीमार्त्तवनाशे सत्यार्त्तवोत्पादनविधिमाह इक्ष्वाकुवीजेत्यादि इक्ष्वाकुस्तिक्तालावुः चपला पिप्पली एषां प्रमा

चक्राङ्किकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम्।
दूर्व्वायाः पिष्टकं प्राश्य वनिता त्वार्त्तवं लभेत्॥ १६॥
धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजोहरेत्।
शेलुच्छदमिश्रपिष्टं भक्षणाय तदर्थकृत्॥ १७॥
पुष्योद्धृतं लक्ष्मणायाश्चक्राङ्कायास्तु कन्यया।
पिष्टं मूलं दुग्धघृतपीतमृतौ तु पुत्रदम्॥ १८॥
क्वाथेन हयगन्धायाः साधितं सघृतं पयः।
ऋतुस्नाताबला पीत्वा गर्भं धत्ते न संशयः॥

८ सुहीचीर मा ८ अग्नौ पक्का वर्त्तिः कार्य्या। कुसुमं रक्तं तज्जननी कुसुमसंजननी॥ १५॥

चक्राङ्किकेत्यादि योगत्रयं ज्योतिष्मतिदलमपि भृष्टं बोध्यम्। दूर्व्वायाः पिष्टकमिति दूर्व्वातण्डुलाभ्यां कृतं पिष्टकम्। योगत्रयमेतत्॥ १६॥

इदानीमार्त्तवहरयोगानाह धात्रीत्यादि धात्र्यादीनां मिलितचूर्णानां तोलकैकं बोध्यम्। शेलुच्छदेति शेलुपत्र तण्डुलाभ्यां कृतं पिष्टकमित्यर्थः॥ १७॥

इदानीमार्त्तवे पुत्रप्रदयोगानाह पुष्येत्यादि।— चक्राङ्काया इति लक्ष्मणाया विशेषणं तत्पत्रस्य चक्राङ्कितत्वात्। दुग्धघृतपीतमिति दुग्धेन घृतेन वा ऋतुस्नानानन्तरं दिनत्रयं पिवेत्। अथवा नासापुटेन विन्दुचतुष्टयं पिवेदित्यर्थः। अन्ये तु लक्ष्मणामूलं मा २ दुग्ध तो ४ घृत तो २ ऋतुस्नानानन्तरं दिनत्रयं पिवेदित्याहुः॥ १८॥

क्वाथेनेत्यादि।— हयगन्धा अश्वगन्धा तस्या मूलं षडङ्गपरिभाषया जलाधिकं दत्त्वा अर्द्धंशृतं चीराच्चतुर्गुणं दत्त्वा पक्का घृतं प्रक्षिप्य पिवेत्। अथवा अश्वगन्धा मूल मा ८ जल

पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं बन्ध्यापि लभते सुतम् ॥ १९ ॥
सुवर्णस्य रूप्यकस्य चूर्णं ताम्रस्य चाज्यसंमिश्रे ।
पीते शुद्धे चेत्रे भेषजयोगाद्भवेद्गर्भः ॥ २० ॥
कृत्वा शुद्धौ स्नानं विलङ्घ्य दिवसान्तरे ततः प्रातः ।
स्नात्वा द्विजाय दत्त्वा भक्त्या संपूज्य लोकनाथेशम् ॥
श्वेतबलाङ्घ्रिकयष्टीं कर्षं कर्षं पलन्तु शर्करायाः ।
पिष्टैकवर्णजीववत्सायागोस्तु दुग्धेन ॥
समधिकघृतेन पीतं नात्र दिने देयमन्नमन्यच्च ।
क्षुधिते सदुग्धमन्नं दद्यादापुरुषसन्निधेस्तस्याः ॥
समदिवसे शुभयोगे दक्षिणपार्श्वावलम्बिनी धीरा ।
त्यक्तस्यन्तरसङ्गप्रहृष्टमनसोऽतिदृढधातोश्च ॥
पुरुषस्य सङ्गमभावात् लभते पुत्रं ततो नियतम् ॥ २१ ॥

---

पल ४ शेष पल १ घृत मा ८ इत्थास्तु चीरसाधनपरिभाषया व्यवहरन्ति । पिप्पलीत्यादौ ।— शृङ्गवेरं शुण्ठी ॥ १९ ॥

सुवर्णस्येत्यादौ ।— आज्यसंमिश्र इति सर्व्वत्र योज्यम् । मारितसुवर्णचूर्णस्य माषैकं गव्यघृतस्य कर्षद्वयं आलोड्य पेयम् । एवं रजतताम्रयोरपि । तद्भेषजयोगात् शुद्धे चेत्र इति योज्यम् । केचित्तु सुवर्णादित्रयं एकत्रावर्त्त्य ततो योनिमध्ये लेपयेदिति । तत् पानश्चोपदिशन्ति उक्तं हि । हेमरूप्यं वरं ताम्रमेकत्रावर्त्त्य सर्पिषा । घृष्ट्वान्तर्लेपयेद्योनिं शोधमार्थं पिवेदपीति ॥ २० ॥

कृत्वेत्यादौ । विलङ्घ्येति यस्मिन् दिने शुद्धिस्नानं तस्मिन् दिने उपोष्येत्यर्थः । श्वेतबलाया अङ्घ्रि मूलं समधिकघृतेनेति-दुग्धापेक्षया घृतभागोऽधिकोदेय इत्यर्थः । यस्मिन् दिने भेष-जमिदमुपयुज्यते तस्मिन्नेवदिनेऽपरमन्नं नोपयुज्यं दिनान्तरे

गोष्ठजातवटकस्य प्रागुत्तरशाखजे शुभे ।
माषौ द्वौ च तथा गौरसर्षपौ दध्नि योजितौ ॥
पुष्यापीतौ द्रुतापन्नगर्भाया: पुंस्त्वकारकौ ।
कानकान् राजतान् वापि लौहान् पुरुषकाननून् ॥
ध्माताग्निवर्णान् पयसोदध्नोवाप्युदकस्य वा ।
क्षिप्ताञ्जलौ पिबेत् पुष्ये गर्भे पुत्रत्वकारकान् ॥ २१ ॥

फलघृतम् ।

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ॥
अजमोदा हरिद्रे द्वे हिङ्गुकं कटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥

---

त क्षुधायां सत्यां क्षीरसहितमन्नं दद्यात् । सप्तदिवस इति शुभदिने ॥ २१ ॥

गोष्ठेत्यादि ।— गोष्ठः पर्व्वतः उपवन श्चेति केचित् । माषाविति माषकलायौ द्वौ चरके धान्यामाषाभ्यामित्युक्तम् । तथा गौरसर्षपद्वाविति दधियोजिताविति दधिप्रक्षिप्तावित्यर्थः । द्रुतापन्नगर्भाया इति यावत् स्त्रीत्वं पुंस्त्वं वा गर्भस्य न व्यक्तीभूतमस्ति तावदेव इदं कर्म्म कुर्य्यात् । अङ्गाभिव्यक्तिस्तु तृतीये मासे भवतीति मासद्वयं यावत् पुंसवनकर्म्म कुर्य्यादिति भावः । इदं कर्म्म लिङ्गपरावृत्तिकारकं भवतीति ज्ञापनार्थं द्रुतापन्नगर्भायाइत्युक्तम् । पुरुषकाननूनिति अनुपरिमानान् पुरुषाकृतीन् । अञ्जलावित्यस्य पयसइत्यादिभिः सम्बन्धः । एतच्च दुग्धादि निःशेषं पेयं चरकसम्वादात् ॥ २१ ॥

मञ्जिष्ठेत्यादौ ।— पयस्या क्षीरविदारी द्राक्षाकाकोल्या-

परिरेतन्नरः पीत्वा नित्यं स्त्रीषु वृषायते ।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान् ॥
या चैव स्थिरगर्भा स्यात् या वा जनयते मृतम् ।
अल्पायुषञ्चा जनयेत् या च कन्यां प्रसूयते ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्व्वग्रहनिवारणम् ॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम् ।
नोक्तञ्च लक्षणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥
जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते ।
आरण्यगोमयेनापि वह्निज्वाला प्रदीयते ॥ २३ ॥

फलघृतम् ।

सहाचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम् ।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरचतुर्गुणम् ।
तत् सिद्धं प्रपिबेन्नारी योनिशूलप्रपीड़िता ॥
पिण्डिता चलिता या च निःसृता विवृता च या ।
पित्तयोनिस्तु विस्रस्ता षण्डयोनिश्च या स्मृता ॥
प्रपद्यन्ते तु ताः स्थानं गर्भं गृह्णन्ति चासकृत् ।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ २४ ॥

---

विति द्वन्द्वः काकोल्यत्र क्षीरकाकोली काकोली द्वयप्राप्तत्वात् । शतावरीरसक्षीरयोः प्रत्येकं चातुर्गुण्यम् । अत्र वृन्दोपदेशं संग्रहकृल्लिखति नोक्तमित्यादि ॥ २३ ॥

सहचर इत्यादि ।— सहचरे द्वे इति सितपीतभेदेन झिण्टीद्वयम् । शुकनासा श्मशकारपुटकः । पिण्डितेत्यत्र योनिरितिशेषः ॥ २४ ॥

नीलोत्पलमित्यादौ ।—मधुकस्य पुष्पं फलं वा । कुशपक्षः

नीलोत्पलाद्यं घृतम्।

नीलोत्पलोशीरमधूकयष्टीद्राक्षाविदारीकुशपञ्चमूलैः।
स्याज्जीवनीयैश्च घृतं विपक्वं शतावरीकारसदुग्धमिश्रम्॥
तच्छर्करापादयुतं प्रशस्तम् असृग्दरे मारुतरक्तपित्ते।
क्षीणे बले रेतसि संप्रनष्टे कृच्छ्रे च पित्तप्रभवे च रुग्णे॥२५॥

दृहच्छतावरीघृतम्।

शतावरीमूलतुलाश्चतस्रः संप्रपीड़येत्।
रसेन क्षीरतुल्येन पचेत्तेन घृताढ़कम्॥
जीवनीयैः शतावर्या मृद्विकाभिः परूषकैः।
पिष्टैः पियालैश्चाद्यांशैर्द्वियष्टीमधुकैर्भिषक्॥
सिद्धशीते च मधुनः पिप्पल्याश्चाष्टकं पलम्।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम्॥
ब्राह्मणान् प्राशयेत् पूर्व्वं लिह्यात् पाणितलं ततः।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत्॥
क्षतक्षयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तञ्च विसर्पं हृच्छिरोग्रहम्॥
उन्मादादीनपस्मारान् वातपित्तात्मकान् जयेत्॥ २६॥

---

मूलं तृणपञ्चमूलम्। जीवनीयैरिति जीवनीयदशकैः शताव-
रीरसस्य त्रयः प्रस्थाः दुग्धस्य चैकः। अन्ये तु शतावरीरसस्य
चत्वारः प्रस्थादूतप्राहुः। घृतप्रस्थापेक्षया शर्करायाः पादो-
ऽष्टौ पलानि॥ २५॥

शतावरीमूलेत्यादि।— चरकस्य जीवनीयैरिति जीवनी-
यदशकैः न पुनरष्टवर्गैः चरकोक्तत्वात्। द्वियष्टिमधुकैरिति एक-
यष्टिमधुकभागः जीवनीयगणपठितः। अपरोपि मधुकस्यैको-
भागोदेय इति द्वितीय यष्टिमधुकेन। किम्बा स्थलजलभेदाद्य-

दग्ध्वा शङ्खं क्षिपेद्रम्भास्वरसे तत्तु पेषितम्।
तुल्यालं लेपतो हन्ति रोम गुह्यादिसम्भवम्॥
रक्ताञ्जनापुच्छचूर्णं युक्तं तैलन्तु सार्षपम्।
सप्ताहं व्युषितं हन्ति मूलाद्रोमाण्यसंशयः॥ २७॥
कुसुम्भतैलाभ्यङ्गोवा रोम्णामुत्पाटितेऽन्तकृत्॥ २८॥

आरग्वधाद्यं तैलम्।

आरग्वधमूलपलं कर्षद्वितयं शङ्खचूर्णस्य।
हरितालस्य च खरजे मूत्रप्रस्थे तु कटुतैलम्॥
पक्वं तैलं तदथ शङ्खहरितालचूर्णितं लेपात्।
निर्मूलयति च रोमाण्यन्येषां सम्भवोनैव॥ २९॥

---

धूकद्वययुक्तैः। वाभटे तु द्वियष्टिमधुकैरित्यत्र द्विवलामधुकैरिति पठ्यते॥ २६॥

योनौ लोमशाकुल्येन वैवस्याद्रतिर्नस्यादित्यतोलोमशातनमाह दग्धेत्यादि।— रम्भास्वरसे कदली वागुडास्वरसे। तुल्यालमिति समहरितालं रक्ताञ्जनेति रक्ताञ्जना लोहितवर्णाञ्जननामिका आरजिला इति लोके। तत् पुच्छं रौद्रे शोषयित्वा चूर्णं कुर्यात्। तच्च सार्षपतैलेऽनुरूपे प्रक्षिप्य सप्ताहं स्थाप्यमित्यर्थः॥ २७॥

कुसुम्भेत्यादौ।— उत्पाटित इत्यनन्तरं लोम्नीति शेषः। लोम्नि उत्पाटिते सति कुसुम्भवीजतैलाभ्यङ्गोलोम्नामन्तकृद्भवतीत्यर्थः॥ २८॥

आरग्वेत्यादौ।— कर्षद्वितयमिति हरितालस्य नेत्यनेनापि सम्बध्यते। कटुतैलस्यात्राष्टौ पलानि। अथ इत्यानन्तर्य्ये तेजःपाकानन्तरं शङ्खचूर्णं हरितालचूर्णं मिलित्वा तैलात् पादिकं प्रक्षिप्य लेपोदेयइत्यर्थः। किम्बा शङ्खचूर्णहरितालचूर्णयोरनियतमानेन तैलं संपिष्य लेपोदेय इति॥ २९॥

कर्पूरभल्लातकशङ्खचूर्णं क्षारो यवानाञ्च मनःशिला च।
तैलं विपक्कं हरितालमिश्रं रोमाणि निर्मूलयतिक्षणेन ॥३०॥

क्षार तैलम्।

शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् समुष्ककात्।
दग्धा क्षारं समादाय खरमूत्रेण गालयेत् ॥
क्षाराष्टभागं विपचेत्तैलस्य सार्षपं बुधः।
इदमन्तःपुरे देयं तैलमात्रेयपूजितम् ॥
विन्दुरेकः पतेद्यत्र तत्र रोमापुनर्भवः।
मदनादिव्रणे देयमश्विभ्याञ्च विनिर्मितम्।
अर्शसां कुष्ठरोगाणां पामादद्रुविचर्च्चिनाम् ॥
क्षारतैलमिदं श्रेष्ठं सर्व्वलोमहरं परम् ॥ ३१ ॥

इति योनिव्यापच्चिकित्सा।

---

कर्पूरेत्यादि।— कर्पूरादीनां कल्कः क्षारो यवक्षारः। तैलमिति कटुतैलम्। हरितालमिश्रितमिति पूर्व्ववत् व्याख्येयम् ॥ ३० ॥

क्षारतैले।— शुक्तिः शुक्तिरेव मुक्तास्फोटो वा दीर्घवृन्तः श्योनाकः मुष्ककोघण्टापारुली। एतानि समभागानि दग्धा चतुर्व्विंशतिपलक्षारोग्राह्यः। अस्य स्रावणार्थं गर्द्दभमूत्रं षड्गुणं अष्टादशशराव परिमितं गृहीत्वा एकविंशतिवारान् परिस्राव्य क्षारोदकस्य षोड़श शरावा ग्राह्या कटुतैलस्य शरावचतुष्टयम्। तैलापेक्षयाऽष्टभागः क्षारस्य कल्कत्वेन प्रदेय इत्यर्थः। तेन क्षारस्य पलचतुष्टयं कल्कइत्यर्थः। अन्ये तु क्षारोदकं तैलापेक्षयाऽष्टगुणमित्यर्थः। मदनादि इत्युपदंशादौ ॥ ३१ ॥

इति योनिव्यापच्चिकित्सा।

## अथ स्त्रीरोगाधिकारः ।

मधुकं शाकवीजञ्च पयस्या सुरदारु च ।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥
वृक्षादनी पयस्या च तथैवोत्पलशारिवा ।
अनन्तशारिवा रास्ना मधुकमेव च ॥
वृहतीद्वयकाश्मर्य्य चीरिशुङ्गास्त्वचोविसम् ।
पृथक्पर्णी बला शिग्रु श्वदंष्ट्रा मधुयष्टिका ॥
शृङ्गाटकं विसं द्राक्षा कशेरुमधुकं सिता ।
मासेषु योगाः स्युरर्द्धश्लोकास्तु सप्तसु ॥
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोन्विता ॥ १ ॥
कपित्थविल्ववृहतीपटोलेक्षुनिदिग्धकाः ।
मूलानि चीरसिद्धानि दापयेद्भिषगष्टमे ॥

---

अत्रशिष्टस्त्रीरोगचिकित्सामभिधानार्थं स्त्रीरोगचिकित्सामाह मधुकेत्यादि । सुश्रुतस्य । शोकमरुजस्तरुस्तस्य बीजम् । पयस्या चीरकाकोली अश्मान्तकः मालुया वा । ताम्रवल्ली मञ्जिष्ठा वृक्षादनी वन्दाकः । तथैवोत्पलशारिवेत्यत्र तथातिलतशारिवे इति पाठः सुश्रुते वाभटे च तट्टीकाकृतो-ऽतिलता दूर्वा प्रियङ्गुर्वेति व्याख्यानयन्ति उत्पलशारिवा अनन्तमूलम् । अनन्ता अनन्तमूलं शारिवा श्यामलता । पद्मा मधुयष्टिः । काश्मर्य्यं गाम्भारीफलं चीरीणां वटादीनां शुङ्गास्त्वचश्चेति विसं मृणालं एते च सप्त योगाः कल्कविषये उपयोज्याः । अपरे तु चीरसाधनपरिभाषयेत्युक्तः ॥ १ ॥

कपित्थेत्यादि सुश्रुतस्य । कपित्थादीनां सर्व्वेषां मूलं गि-ल्वस्तु कपित्थस्य फलं पटोलस्य फलं पत्रं वा अन्येषाञ्च मूल-मित्याह । किन्तु सुश्रुतवाभटटीकाकृद्भिर्न व्याख्यातोयमर्थः । नवमइत्यादि क्षीरसिद्धानीति पदं विक्रपरिणामेणात्रापि

नवमे मधुकानन्तापयस्याशारिवाः पिबेत् ॥ २ ॥
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते।
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ॥
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति।
कुशकाशोरुबूकानां मूलैर्गोक्षुरकस्य च ॥
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ ३ ॥
कशेरुशृङ्गाटकजीवनीयपद्मोत्पलैरण्डशतावरीभिः।
सिद्धं पयः शर्करयाविमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥ ४ ॥
कशेरुशृङ्गाटकपद्मकोत्पलं समुद्गयष्टीमधुकं सशर्करम्।
सशूलगर्भश्रुतिपीडिताङ्गना पयोविमिश्रं पयसान्नभुक् पिबेत् ॥ ५ ॥

---

सम्बध्यते डल्लनेन व्याख्यातोऽयमर्थः। अन्ये मधुकानन्ते इति योगश्च क्वाथेन क्षिप्त्वा मधुकादीनां कल्कं क्षीरेण पिबेदित्यर्थं इत्याहुः ॥ २ ॥

पयस्त्वित्यादि।— सुश्रुतस्य डल्लनस्तु क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितमिति पठन्ति व्याचष्टे च दशमे मासि शुण्ठ्याः क्षीरविदार्य्या वा क्षीरपाककल्पनया सिद्धं क्षीरं दशमे हितमिति। वाभटेऽप्युक्तं योजयेद्दशमे मासि क्षीरं सिद्धं पयस्यया। अथवा यष्टिमधुकनागरामरदारुभिरिति। एतद्वचनसम्बादादेव सक्षीरा वा हिता शुण्ठीत्यादावपि शुण्ठीमधुकदेवदारुभिः सिद्धं क्षीरं दशमे मासि प्रशस्तमित्यर्थोऽज्ञेयः कुशेत्यादि स्पष्टम् ॥ ३ ॥

कशेर्वित्यादौ।— जीवनीयो जीवनीयदशकम्। शर्करया विमिश्रमिति शर्करा प्रक्षेप्या ॥ ४ ॥

कशेर्वित्यादौ। पद्मकं पद्मकेशरमित्याहुः। उत्पलं नीलोत्पलम्। समुद्गयष्टिमधुकमिति मुद्गोमुद्गपर्णी समुद्गयष्टि-

गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥ ६ ॥
गर्भशोषे त्वामगर्भाः प्रसहाश्च सदा हिताः ।
पाठालाङ्गलिसिंहास्यमयूरकजटैः पृथक् ॥
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ।
परूषकस्थिरामूललेपस्तद्वत् पृथक् पृथक् ॥
गृहाम्बुना गेहधूमपानं गर्भापकर्षणम् ॥ ७ ॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥ ८ ॥
पुटदग्धसर्पकञ्चुकमसृणमसीकुसुमसारसहिताञ्जिताक्षी ।
झटिति विशल्या जायेत गर्भवती मूढगर्भापि ॥ ६ ॥
गृहाम्बुना हिङ्गुसिन्धुपानं गर्भापकर्षणम् ।
कृष्णाह्वतस्य सोमस्य चित्रभानुस्य भाविनि ॥

---

मधुकमित्यत्र समुद्रपर्णीमधुकमित्यपि पाठान्तरम् ॥ ५ ॥

गर्भे शुष्के तु वातेनेत्यादि ।— पूर्व्वं वातव्याधावेव पठितमिति नेह पठनीयम् ॥ ६ ॥

आमगर्भा इति ।— हंसकूर्म्मादीनामण्डानि प्रसहाः कुक्कुटादयः पाठेत्यादौ ।— श्रीकण्ठोलाङ्गलीस्थाने सुरसा पठति व्याचष्टे च । सुरसा निर्गुण्डी सिंहास्योवासकः मयूरकोऽपामार्गः एषां जटा मूलं क्रूस्वत्वं छान्दसत्वात् गृहाम्बु काञ्जिकं गृहधूमं धूलन्धुकः ॥ ७ ॥

मातुलुङ्गेत्यादौ ।— मधुकं यष्टिमधु एतदुभयमपि मधुसंयुक्तं घृतेन सह पातव्यमित्यर्थः ॥ ८ ॥

पुटेत्यादि ।— पुटपाकविधया दग्धा सर्पनिर्म्मोकमसी तया मधुसहितया अञ्जितलोचना सती विगर्भा भवेदित्यर्थः ॥ ६ ॥

वह्नेः अवाश्वतुगरोमन्दिरे निवसन्तु ते।
इदममृतमपां समुद्धृतं वैभवलघुगर्भमिमं विमुञ्चतु स्त्री॥
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम्।
मुक्ताः पाशाविपाशाश्च मुक्ताः सूर्य्येण रश्मयः॥
मुक्तः सर्व्वभयाद्गर्भ एह्येहि मारिच स्वाहा।
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम्॥
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम्॥ १०॥
तयोभयपञ्चदशदर्शनं सुखसूतिकृत्।
वसुगुणाब्धिरवाणनवषट्सप्तयुगैः क्रमात्॥
सर्व्वं पञ्चदशङ्क्तिस्तु त्रिंशकं नवकोष्ठके॥ ११॥
कटुतुम्ब्यहि निर्मोकृतवेधनसर्षपैः।
कटुतैलान्वितोधूमो योनेः पातयतेऽमराम्॥
कचवेष्टितयाङ्गुल्या घृष्टे कण्ठे सुखं पतत्यमरा।
मूलेन लाङ्गलिक्याः संलिप्ते पाणिपादे च॥ १२॥

---

इहाम्बुनेत्यादौ निम्बु सैन्धवम्। इहेत्यादि स्वाहान्तोयं मन्त्रश्च सुश्रुतस्य। अयमेव गर्भच्यवनमन्त्रः जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितं पीत्वेति वृद्धवैद्यव्यवहारः संग्रहकर्द्भिर्लिख्यते न तु सुश्रुतेन। सुश्रुतेन तु च्यवनमन्त्रेण गर्भिणीं स्नावयेदित्युक्तम्॥ १०॥

उभयपञ्चदशतामुभयत्रिंशकञ्चाह वस्वित्यादि।— वसवोऽष्टौ गुणास्त्रयः अब्धयश्चत्वारः बाणाः पञ्च युगं द्वयम्। एतद्देशुख्याद्भयत्रिंशकं भवति। एते नवकोष्ठान् कृत्वा तदभ्यन्तरे लेख्याः। इन्द्रे तु उभय त्रिंशकमप्युक्तम्। एतद्द्वयं शरावपरे लिखित्वा सम्पूज्य दर्शयितव्यम्॥ ११॥

कटुतुम्बीत्यादि।— कटुतुम्बी तिक्तालाबुफलं कृतवेधनं घोषकभेदः तस्य फलं सर्षपः श्वेतसर्षपः एतैर्धूमं कृत्वा योनि-

अमरापातनं मद्यैः पिप्पल्यादिरजः पिबेत् ।
शालिमूलात्तमात्रं वा मूत्रे गोम्बेन वान्वितम् ॥
इक्षुशिकां निखलिभ्र मदिरां लाभतः पिवेत् ।
तुंबमूलेन संयुक्तां योनिशूलनिवारणीम् ॥ १३ ॥
सूता याहृच्छिरोबस्तिशूलं मक्कन्द सञ्ज्ञितम् ।
यवक्षारं पिबेत्तत्र सर्पिषोष्णोदकेन वा ॥
पिप्पल्यादिगणक्काथं पिबेद्वा लवणान्वितम् ।
पारावतशकृत् पीतं शालितण्डुलवारिणा ॥
गर्भपातान्तरोत्थे तु रक्तस्रावनिवारणम् ॥ १४ ॥
जलपिष्टवरुणपत्रैः सहतैश्चूर्णनालेपौ तु ।
किक्किशरोगं हरतोगोमयधर्षादयो विहितौ ॥ १५ ॥
अमृतानागरसहचरभद्रोत्कटपञ्चमूलजलदशृतम् ।
शीतं मधुसंयुक्तं निवारयति सूतिकातङ्कम् ॥ १६ ॥

---

मुखे दद्यात् उक्तं हि सुश्रुते योनिमुखं धूपयेदिति ॥ १२ ॥

अमरापातनमित्यादौ ।— पिप्पल्यादिरज इति सुश्रुतस्य पिप्पल्यादिगणचूर्णम् । अम्बेन काञ्जिकेन मद्येनेत्यन्ये । इक्षुशिका लघ्वजीरकम् । पिप्पलीमित्यनन्तरं प्रक्षिप्येति शेषः ॥ १३ ॥

सूतायाइत्यादि । सुश्रुतेप्युक्तं प्रसूतायास्तु वस्त्यदरशिरोयोनिशूलं रक्तं संरुध्य वायुः करोति समकन्दसंज्ञितः ॥ १४ ॥

जलपिष्टेत्यादौ ।— किक्किशरोगो गर्भोत्पीडनेन वस्त्यादिदेशे मनाक् चर्म्मविदारणम् । अथोऽनन्तरं गोमयधर्षणानन्तरं विहिताविल्यर्थः ॥ १५ ॥

अमृतेत्यादौ ।— भद्रोत्कटोभादखेड़ इति राढ़ायां ख्यातस्तत्र: । अन्ये तु भद्रं भद्रमुस्तकं इत्कटः इकर इति ख्यातस्त-

सहचरपुष्करवेतसमूलं विकङ्कतदारुकुलत्थसमम् ।
जलमत्र सैन्धवहिङ्गुयुतं सद्योज्वरसूतिकारोगहरम् ॥ १७ ॥
दशमूलीकृतः क्वाथः सद्यः सूतिरुजापहः ॥ १८ ॥

वज्रकाञ्जिकम् ।

पिप्पलीपिप्पलीमूलं चव्यं शुण्ठी यमानिका ।
जीवके द्वे हरिद्रे द्वे विड़सौवर्च्चलं तथा ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचितम् ।
आमवातहरं हृद्यं कफघ्नं वह्निदीपनम् ॥
काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम् ।
मक्कल्लशूलशमनं परं क्षीराभिमर्द्दनम् ॥
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥ १९ ॥

पञ्चजीरकगुड़ः ।

जीरकं हपुषा धान्यं शताह्वा वदराणि च ।

---

स्वमूलमितरार्द्धः । पञ्चमूलं स्वल्पपञ्चमूलं जलदं मुस्तकं जलं क्वाथः ॥ १६ ॥

सहचरेत्यादि ।— विकङ्कतः वैंचर इति लोके तस्य मूलम् । कुलत्थः समो यत्र तत्तथा कुलत्थसमम् । जलं क्वाथः ॥ १७ ॥

दशमूलीत्यादि ।— आमशूलादिपीड़ायां पुनर्धान्यशुण्ठीयुक्तस्य धान्यपञ्चकयुक्तस्य वा दशमूलस्य क्वाथमुपदिशन्ति वृद्धाः ॥ १८ ॥

वज्रकाञ्जिके ।— पिप्पल्यादि द्रव्यस्य मिलित्वा कर्षत्रयं काञ्जिकस्य शराव एकः पानीयमप्यत्र एवमेव प्रायशो व्यवहरन्ति वृद्धाः । सकल्ककाञ्जिकपानमुपदिशन्ति च । चक्रस्त्वाह क्षीरपाकविधानेन काञ्जिकस्यापि साधनमिति ॥ १९ ॥

यमानी कुष्टिकोहिङ्गुपत्रिकाकासमर्हकम् ॥
पिप्पली पिप्पलीमूलमजमोदाथ वाष्पिका।
चित्रकञ्च पलांशानि तथाधान्यञ्च चतुःपलम् ॥
कर्षेरुकं नागरञ्च कुष्ठं दीप्यकमेव च।
गुड़स्य च शतं दद्यात् घृतप्रस्थं तथैव च ॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
पञ्चजीरक इत्येष सूतिकानां प्रशस्यते ॥
गर्भार्थिनीनां नारीणां वृंहणीये समारुते।
विंशति व्यापदोयोनेः कासं श्वासं ज्वरं क्षयम् ॥
हलीमकं पाण्डुरोगं दौर्गन्ध्यं बहुमूत्रताम्।
हन्ति पीनोन्नतकुचाः पद्मपत्रायतेक्षणाः ॥
उपयोगात् स्त्रियोनित्यमलक्ष्मीमलवर्जिताः ॥ २० ॥
वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा।
विदारीकन्दं सुरया पिवेद्वा स्तन्यवर्द्धनम् ॥
दुग्धेन शालितण्डुलचूर्णपानं विवर्द्धयेत्।

---

पञ्चजीरकगुडे।— जीरकं सूक्ष्ममुख लघ्वाजीरकं गुज्जरप्रसिद्धं कुष्टिकोराजिका हिङ्गुपत्रिका वंशपत्रिका अजमोदा वनयमानी अन्तःपरिमार्जनत्वात् यमान्या एव भागद्वयं वाष्पिका क्षुद्रराजिका तथा चान्यच्चतुःपलमिति वक्ष्यमाण कर्षेरुकादिचतुष्टयं प्रत्येकं चतुःपलमित्यर्थः। दीप्यकं स्थूलजीरकम्। आदौ गुड़घृतं क्षीरेण पक्त्वा सिद्धे सति जीरकादिचूर्णप्रक्षेपः। पञ्चपलजीरकयोगात् पञ्चजीरक इति संज्ञा समारुत इत्यत्र गर्भ इति शेषः कुपितमारुतयोगात् क्षीयमाण इत्यर्थः ॥ २० ॥

सम्प्रति स्तन्यवर्द्धनयोगानाह वनकार्पासिकेत्यादि।— सौवीरकेण काञ्जिकेन विदारीकन्दं भूमिकुष्माण्डम्। हरि-

स्तन्यं समाहृतः स्त्रीरसैर्विन्यास्तु न संशयः॥
हरिद्रादिं वचादिं वा पिबेत् स्तन्यविशुद्धये।
तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत्॥
पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम्।
धात्री कुमारश्च पिबेत् क्वाथयित्वा सशारिवम्॥
कफे वा त्रिफलामुस्ताभूनिम्बं कटुरोहिणीम्।
धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशिनी॥
भार्गीवचादारुपाठाः पिबेत् सातिविषाः स्रुताम्॥ २१॥
कुक्कुरमेस्तु कामूलं चर्वितमास्ये विधारितं जयति।
समाहृतात् स्तनकीलं स्तन्यं चैकान्ततः कुरुते॥
शोथं स्तनोत्थितमवेक्ष्य भिषक् विदध्यात्
यद्विद्रधावभिहितं त्विह भेषजानि॥
आमे विदह्यति तथैव गते च पाकं
तस्याः स्तनौ सततमेव च निर्दुहीत।
विशालामूललेपस्तु हन्ति पीड़ां स्तनोत्थिताम्॥
निशाकणककफलाभ्यां लेपश्चापिस्तनार्त्तिहा॥ २२॥

---

इत्यादि हरिद्रादिवचादिगणौ सौश्रुतौ यथा [हरिद्रादारुह-रिद्राकलसीकुटजबीजानि मधुकञ्चेति। कलसी पृश्निपर्णी। वचामुस्तातिविषा भद्रदारु नागरशतमूली अनन्तमूलञ्चेति भद्रदारु देवदारु। अभीरु शतावरी। शारिवा अनन्तमूलं सशारिवमित्यत्र सशर्करमिति पाठान्तरम्। अमृतादिशारि-वान्तस्य क्वाथः॥ २१॥

स्तनविद्रधिचिकित्सामाह।— कुक्कुरेत्यादि।— कुक्कुर-मेस्तुको गोरचतण्डुला स्तनकीलं स्तनविद्रधिः निशेत्यादौ।— कणककफलं धूस्तूरफलम्॥ २२॥

मूषिकवसया शूकरगजमहिषमांसचूर्णसंयुतया ।
अभ्यङ्गमर्द्दनाभ्यां कठिनपीनस्तनौ भवतः ॥ २३ ॥
महिषीभवनवनीतं व्याधिवचोग्रा तथैव नागबला ।
पिष्टा मर्द्दनयोगात् पीनं कठिनं स्तनं कुरुते ॥

श्रीपर्णी तैलम् ।

श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम् ।
तत्तैलं तूलकेनैव स्तनस्योपरि धारयेत् ॥
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ ॥ २४ ॥

कासीसाद्यं तैलम् ।

कासीसतुरगगन्धाशावरीगजपिप्पलीविपक्वेन ।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि ॥
प्रथमर्त्तौ तण्डुलाम्भो नस्यं कुर्य्यात् स्तनौ स्थिरौ ॥ २५ ॥
गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः ।
सत्रिकटुनिशाभिः सिद्धं नस्यं स्तनोत्थापनं परम् ॥

---

स्तनशोथचिकित्सामाह ।— मूषिकवसायां शूकरादिमांस-चूर्णं प्रक्षिप्य स्तनयोरभ्यङ्गमर्द्दनं आद्यपुष्पोत्सवे ॥ २३ ॥

महिषीत्यादौ ।— व्याधिः कुष्ठं उग्रा वचा श्रीपर्णी गाम्भारी तस्यास्त्वचो रसः स्वरसः । स्तनस्योपरि कुचाग्रे॥२४॥

कासीसेत्यादि ।— कासीसं धातुकासीसं शावरी लोध्रं एषां कल्कः जलं चतुर्गुणं कर्णः कर्णकपाली, वराङ्गं स्त्रीगुह्यम् । प्रथमर्त्तौ आद्यपुष्पोत्सवे ॥ २५ ॥

गोमहिषीत्यादौ ।— गोमहिषघृतयोर्मिलित्वा एकोभागः अपरश्च तैलस्य । श्यामा प्रियङ्गुः कृताञ्जलिः सूर्य्यभक्ता अञ्जलिकारिकेति ख्याता लालालुया इत्यन्ये । लज्जावती कुत्रचित् । कटुका कटुरोहिणी । एषां कल्कः जलं चतुर्गुणम् । प्रतनू करोतीत्यादौ मध्यं स्त्रियामध्यदेशः मथितेन घोलेन

तद्भरोति मध्यं पीतं मथितेन माधवीमूलम्।
स्त्रीक्षयिकापि च गाढ़ा सुरगोपाभ्यासयुक्तोर्योनिः॥ २६॥
यववहनस्थितबन्धनरज्ज्वा सन्ताड़नाद्वि दयितेन।
मथ्यत्यबलाहेतः पत्नौ सचजः क्षतोऽथवा योगैः॥
दत्त्वैव दुग्धभक्तं विप्रायोत्थाय सितबलामूलम्।
पुष्ये कन्यापिष्टं दत्तमनिच्छाकरं भक्ते॥ २७॥
इति स्त्रीरोगचिकित्सा।

---

## अथ बालरोगाधिकारः।

कुष्ठावचाभयाब्राह्मीकमलं क्षौद्रसर्पिषा।
वर्णायुः कान्तिजननं लेहं बालस्य दापयेत्॥ १॥

---

माधवीमूलं माधवीलतामूलम्। सुरगोप इति इन्द्रगोपाख्यः कीटः शिन्दूरियापोका इति लोके भाष्यं एतं चनकोरम-ज्ञात्॥ २६॥

यववहनेत्यादि।—यवोवतः तद्वहनाय स्थिता या बन्धन-रज्जुस्तया दयितेन भर्त्रा। विप्राय दुग्धभक्तं दत्त्वेति पूर्वोक्त योज्यम्। भक्ते भक्तादौ॥ २७॥

इति स्त्रीरोगाधिकारः।

---

दुष्टस्तन्यपानादिना बालानां रोगसम्भवादनन्तरं बाल-रोगाधिकारः। तत्र बालरोगाधिकारे वक्तव्ये प्रथमतः बालस्य स्वस्थहत्तमाह कुष्ठमित्यादि कनकं मारितजारितसर्पपूर्वकम्। तत्र सुवर्णमारणविधिर्यथा — कण्टकवेध्यसुवर्णपत्रं कञ्जीर-स्वरसेन व्यापयित्वा सुवर्णकफलस्थितगुडप्रायः लेपभागेन

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
तर्कधोगुड़िकां तप्तां निर्व्वाप्य कटुतैलके ॥
तत्तैलं पानतो हन्ति बालानामुल्लमुद्धतम् ॥ २ ॥
व्योषशिरोग्रारजनीकल्कं वा पीतमथ पयसा ।
उल्लं निःशेषं कुरुते पटुतां बालस्य चात्यन्तम् ॥ ३ ॥
मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा ।
स्वेदयेदुत्थितां नाभिं शोथस्तेन प्रशाम्यति ॥
नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम् ।
तैलमभ्यञ्जने शस्तमेभिर्व्वाप्यवचूर्णनम् ॥
सोमग्रहणे विधिवत् केकाशिखामूलमुद्धृतं बद्धम् ।
जघनेऽथ कन्धरायां क्षपयत्यचिरेण्डिकां नियतम् ॥ ४ ॥

---

लिप्त्वा गोरक्षकर्कटीमूलपिण्डमथ ऊर्द्ध्वं दत्त्वा शरावसम्पुटे निःक्षिप्य प्रलिप्य च गोमयाग्नौ वारद्वयं त्रयं वा प्रपुटेत् ततश्चूर्णयित्वा दृढ़घनवस्त्रेण छानयेदिति । लेह्योऽयं जातदिने तदुपरि च प्रचरति तन्त्रान्तरे च स्वर्णादिलेहान्तरस्य सञ्चारो यावदुपयोग इति ॥ १ ॥

तद्गुणमिति संस्काराल्लघुत्तमम् । तर्कधः इति तर्कुः टाकुया इति ख्याता तस्या अधोगुड़िका वाटुनीति ख्याता । उल्लं बालकस्य कण्ठगतश्लेष्मा ॥ २ ॥

व्योषेत्यादौ ।—शिवा हरीतकी उग्रा वचा स्तन्येन पयसेति नारीक्षीरेणेत्यर्थः ॥ ३ ॥

नाभीत्यादौ ।—मधुकं यष्टीमधुकं सोमग्रहण इत्यादौ ।-विधिवत् उद्धृत इत्यन्वयः विधिश्च मुक्तकचशिखेन पुंसा उद्धरणम् । केकाशिखा मयूरशिखा उद्धृतोवद्धेति पाठे आमूलमुद्धृत्येति योज्यम् । अत्र भिक्षुप्रार्थितकपर्द्दककुहरे पारदं पूरयित्वा सिक्थकेन संरुध्य कुमारीधत्ते इत्युपदिशन्ति वृद्धाः॥४॥

सप्तदलपुष्पं मरिचं पिष्टं गोरोचनासहिततत्।
पीतं तद्वत् तण्डुलभक्तस्ततो दग्धपिष्टकप्रायः॥ ५॥
जम्बूकनासावायसजिह्वानाभिश्वैरोष्ट्रसम्भूता।
कांस्यं रसोऽथगरलं प्रावृडभेकस्य वामजङ्घास्थि॥
इत्येकशोथ मिलितं विधृतं ग्रीवादिकटिदेशे।
अहिशिण्डिकाप्रशमनमथ्यङ्गैनातिपथ्यविधिः॥ ६॥
अनामके घुर्घुरिकावुकामरिचरोचना।
नवनीतञ्च संमिश्र खादेत्तद्रोगनाशनम्॥ ७॥
तैलाक्तशिरस्तालुनि सप्तदलार्कस्नुहीभवं चीरम्।
दत्त्वा रजनीचूर्णं दत्ते नश्येदनामकाख्यः॥
लेपयेच्च मधुना बालं नवनीतेन लेपितम्।
स्फटकपत्रजरसेनोद्वर्त्तनञ्च तद्धितम्॥ ८॥

---

सप्तदलेति सप्तदलः सप्तच्छदः तस्य पुष्पं पीतमित्यत्र जलेनेति शेषः। तद्वदिति अहितुण्डिकां चयतीति शेषः। तण्डुलेत्यादि योगान्तरं भक्तसहिततण्डुलान् पिष्टा पलेशावेष्ट कुशेन बद्धा अङ्गारैर्दग्धा भक्षणीयमित्यर्थः॥ ५॥

जम्बूकेत्यादि।— जम्बूकः शृगालस्तस्य नासा वायसः काकस्तस्य जिह्वा रसः पारदः गरलं विषं प्रावृषभेकः वर्षाकालजमण्डूकः स च पीतच्छविः सोनाबेङ इति ख्यातः तस्य वामपदास्थि एतत् सर्व्वं प्रत्येकं मिलित्वा वा ग्रीवायां कट्यां वा धारणीयम्। नातिपथ्यविधिरिति व्याधिप्रभावादेवायम्॥ ६॥

अनामक इति निर्नामरोग इति ख्यातः केचिच्च पुञ्जिकारोग इति ख्यातः। घुर्घुरिकाकीटविशेषः तस्य वुका वुक्कभाग इत्यर्थः॥ ७॥

तैलाक्तेत्यादौ।— तैलाभ्यक्तस्तालुनि सप्तदलार्कस्नुहीक्षीरं दत्त्वा तदुपरि हरिद्राचूर्णं दद्यादित्यर्थः। लेपयेदित्यादौ।—

तैलस्य भागमेकं नवस्य द्वौ च शिग्रिदलरसस्य ।
नवं पयश्चतुर्गुणमेवं दत्त्वा पचेत्तैलम् ॥
तेनाभ्यङ्गः सततं रोगमनामकाख्यमपहरति ।
अर्कतूलकमाविकरोमाख्याद्वाय केशराजस्य ॥
स्वरसेनाक्ते वस्त्रे कृत्वा वर्त्तिश्च तैलाक्ताम् ।
तज्जातकज्जलाञ्जितलोचनयुगलोऽप्यवश्यमतोबालः ॥
कष्टमनामकरोगं चपयति भूतादिकञ्चापि ॥ ६ ॥
चालनिकातलसंस्थितपोतं संस्नाप्य गव्यमूत्रेण ।
चोक्षोदशालिकायां रजकक्षारोदकस्नानम् ॥ १० ॥
हारक्षयणश्रावणपटिकारसेन्द्रपूरिता हता कण्ठे ।
नलिनीदले च शयनं सुकष्टमनामकाख्यरोगघ्नम् ॥
भैषज्यं पूर्व्वमुद्दिष्टं नराणां यज्ज्वरादिषु ।
देयन्तदेव बालानां मात्रा तस्य कनीयसी ॥ ११ ॥

---

नवनीताक्तगात्रं शिशुं कृत्वा मधुना कुकुरेण लेहयेत् ततः पुटकीस्वरमेनोद्वर्त्तयेत् ॥ ८ ॥

तैलस्येत्यादौ ।— शिग्रीदलं शिग्रुपत्रम् । चार्कमित्यादि ।— अर्कस्य तूलकम् । आविरोमाणि मेषरोमाणि चेति भागद्वयं केशराजस्वरसरञ्जितवस्त्रैरावेष्ट्य तैलाक्तं आवयेत् । तच्छिखोपरि पात्रं धृत्वा पतितकज्जलेन चक्षुषोरञ्जनं कार्य्यम् ॥ ६ ॥

चालनिकेत्यादि ।— चोक्षोदशालिकायां चालनिकातले संस्थितबालकं चालनिकारन्ध्र पतितगोमूत्रेण स्नापयित्वा रजकक्षारजलेन स्नापयेत् ॥ १० ॥

हारेत्यादौ ।— श्रावणः पाषण्डविशेषः भिक्षुवेशधारी योगीति लोके तस्य पटिका वराटिका कपर्द्दिकेति यावत् हारेण हारकारकयत्रं यस्याः सा तथा ततः कर्णधारकः

प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥
एकैकां वर्द्धयेत्तावद्यावत् संवत्सरो भवेत् ।
तदूर्द्ध्वं माषवृद्धिः स्याद्यावद्दाषोड़शाब्दिकाः ॥ १२ ॥

हरिद्रादिः ।

हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः ।
शिशोर्ज्वरातिसारघ्नः कषायस्तन्यदोषजित् ॥ १३ ॥

बालचातुर्भद्रिका ।

घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम् ॥ १४ ॥

रसेन्द्रेण पारदेन पूरिता सा कण्ठे धृतेत्यर्थः। मक्षिमोदकं पक्षपतम् ॥ ११ ॥

मात्राचात्र कनीयसीति यदुक्तं अतस्तामेव मात्रां प्रतिपादयितुं परिभाषामाह प्रथम इत्यादि। मध्विति मध्वादिविकल्पो दोषप्रकृतयादिभेदात्। एकैकामिति मासि मासि एकैकां रक्तिकां कृत्वा बर्द्धयेदितग्रर्थः। तदूर्द्ध्वमिति वर्षादूर्द्ध्वं वर्षे वर्षे माषेण माषेण वृद्धिर्माषवृद्धिः। एतत् परिभाषा शेषो यथा प्रतिमासं प्रयोक्तव्या वृद्धिरेषा भिषग्वरैः। मानमेतत् प्रयोक्तव्यं सर्व्वमानविधावपि। षोड़शाब्दाद्भवेदूर्द्ध्वं यावदासप्ततेरिति। एष एव विभागोयं तदूर्द्ध्वं बालवत् क्रियेति॥१२॥

हरिद्रेत्यादौ।—सिंही पृश्निपर्णी यत्र हरिद्रादिगण एवायं श्लोकेन निबद्धः तत्र च कनसीति पठिता निश्चलस्तु सिंही वासक इत्याह यस्तु क्षीरपोबालः कषायं पातुमसमर्थस्तस्य धात्रीं पाययेत्। सुश्रुतेन कषायोक्तद्रव्यकल्केन लिप्तयोः स्तनयोः पानमपि दर्शितम् ॥ १३ ॥

धातक्यादिः ।

धातकीबिल्वधन्याकलोध्रेन्द्रयवबालकैः ।
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित् ॥
रजनीदारुसरलश्रेयसीवृहतीद्वयम् ।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥
ग्रहणीदीपनं हन्ति मारुतार्त्तिं सकामलाम् ।
ज्वरातीसारपाण्डुघ्नं बालानां सर्व्वरोगनुत् ॥ १५ ॥
मिषीकृष्णाञ्जनं लाजाश्टङ्गीमरिचमाक्षिकैः ।
लेहः शिशोर्व्विधातव्यश्छर्द्दिकासज्वरापहः ॥

श्टङ्ग्यादिः ।

श्टङ्गीं समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् ।
कासज्वरच्छर्द्दिभिरर्द्दितानां समाक्षिकाञ्चातिविषां तथैकाम् ॥ १६ ॥
पीतं पीतं वमेद्यस्तु स्तन्यं तन्मधुसर्पिषा ।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥
आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्द्दिनुत् ।
पिप्पलीमरिचानान्तु चूर्णं समधुशर्करम् ॥

---

धनेत्यादि ।— धनं मुस्तकं अरुणा अतिविषा । रजनीत्यादि ।— वाभटस्य श्रेयसी गजपिप्पली बालानां सर्व्वरोगनुदित्यत्र बालानां सर्व्वरोगनुदित्यपि पाठो वाभटे चन्द्राटेऽपि दृश्यते ॥ १४—१५ ॥

मिषीत्यादि ।— मिषी मधुरिका कृष्णापिप्पली अञ्जनं रसाञ्जनम् । श्टङ्गी कर्कटश्टङ्गी ॥ १६ ॥

पीतमित्यादि वाभटस्य । द्विवार्त्ताकी वृहतीद्वयम् । फलरसमिति वार्त्ताकीफलरसम् । योगोऽयमेक इति श्रीकण्ठः निश्चलस्तु च शब्दो विकल्पे अतो योगद्वयं यदुक्तमायुर्व्वेदसारे पीत्वा यो वमति स्तन्यं भग्नं यो मधुसर्पिषा । कोलीफलरसं यद्वा

रसेन मातुलुङ्गस्य हिक्काच्छर्दिनिवारणम्।
पेटी पाठाम्बुलाज्जम्बूः सहकारवल्कलतः कल्कः॥
प्रत्येकशश्च पिष्टोविहितोऽम्बुनाभिमध्यतालादौ।
छर्द्यतीसारजं वेगं प्रबलं धत्ते तदेव च नियमेन॥ १७॥
बिल्वञ्च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च।
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु॥१८॥
समङ्गाधातकीलोध्रशारिवाभिः शृतं जलम्।
दुर्द्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम्॥
नागरातिविषामुस्तबालकेन्द्रयवैः शृतम्।
कुमारं पाययेत् प्रातः सर्व्वातीसारनाशनम्॥
समङ्गा धातकी पद्मं वयस्था कच्छुरा तथा।
पिष्टैरेतैर्यवागूः स्यात् सर्व्वातीसारनाशिनी॥
बिल्वचूतकषायेण लाजाश्चैव सशर्कराः।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशिनीः॥
कल्कः प्रियङ्गुकोलास्थिमध्यमुस्तरसाञ्जनैः।

पञ्चकोलं प्रलेहयेदिति। अयञ्च व्यवस्थितो विकल्पः तेन पित्तोत्तरे कफे छर्द्दावियफलरसं वातश्लेष्मणि च पञ्चकोलचूर्णमित्याह। पिप्पलीत्यादौ।— रसेन मातुलुङ्गस्येत्यत्र लिह्यादिति। शेषः। पेटीत्यादि।— पेटारीति ख्याता क्षापीटुपरीति लोके चकारान्मिलित्वा प्रत्येकञ्च योगः॥ १७॥

बिल्वेत्यादौ।— जलं बालकं क्वाथावलेहाविति क्वाथो वा अवलेहो वेत्यर्थः। अवलेहपक्षे सर्व्वं संचूर्ण्य अनुरूपमधुना लेह्यम्॥ १८॥

समङ्गेत्यादि।— समङ्गा वराहक्रान्ता पद्मं पद्मकेशरं वयस्था गुडूची कच्छुरा शूकशिम्बीमूलम्। कल्कसाध्येयम्। बिल्वेत्यादौ।— कषायोऽर्द्धशृतः। अतएव निर्द्देशात् लाजा-

चौद्रलीढः कुमारस्य छर्दितृष्णातिसारनुत् ॥
मोचरसः समङ्गा च धातकीपद्मकेशरम् ।
पिष्टैरेतैर्यवागूःस्याद्रक्तातीसारनाशिनी ॥
लेहस्तैलसिताचौद्रतिलयष्ट्याह्वकल्कितः ।
बालस्य हन्त्याशियतं रक्तस्रावं प्रवाहिकाम् ॥ १९ ॥
लाजासयष्टिमधुकं शर्कराचौद्रमेव च ।
तण्डुलोदकसंयुक्तं चिप्रं हन्ति प्रवाहिकाम् ॥
अङ्कोठमूलमथवा तण्डुलसलिलेन वटजमूलं वा ।
पीतं हन्त्यतीसारं ग्रहणीरोगं सुदुर्व्वारम् ॥ २० ॥
सितजीरकसर्ज्जचूर्णं विल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तमूलं गुड़सहितः श्वेतसर्ज्जो वा ॥
मरिचमहौषधकुटजं द्विगुणोत्तमुत्तरोत्तरं क्रमशः ।
गुड़तक्रयुक्तमेतत् ग्रहणीरोगं निहन्त्याशु ॥

---

शब्दः स्त्रीलिङ्गोऽप्यस्तीति । योगोयं छर्द्यतिसारनाशनो बोधवतीति शेषः । कल्क इत्यादौ । कोलास्थिमध्यं वदरास्थिमज्जा मोचं शाल्मलीवेष्टकः । लेह इतप्रादौ ।— रक्तस्रावप्रवाहिकामिति प्रवाहिकायामेव यत्र रक्तस्रुतिस्तत्रायं योगः नतु केवलरक्तस्रावे तैलतिलयोरुष्णवीर्य्यत्वेन तत्रानार्हत्वात् ॥ १९ ॥

लाजा इतप्रादौ ।— संयुक्तमितप्रनन्तरं पीतमिति शेषः । लाजादिचूर्णं यथायोग्यं गृहीत्वा तण्डुलोदकेन पेयम् । अङ्कोठेतप्रादि । अङ्कोठः अङ्कोड़ इति ख्यातस्तदः योगद्वये तण्डुलोदकं सम्बध्यते । वटजमूलं वटजातमूलं मूलाकारं प्ररोहमाणं वा इति ख्यातः अतएवोक्तं वटजमूलमिति नतु वटमूलम् ॥ २० ॥

सितेतप्रादौ ।— विल्वदलोत्थाम्बु विल्वपत्रस्वरसः । गुड़ेन मधुरीकृतं तक्रं गुड़तक्रम् । विल्वेतप्रादौ शक्रमिन्द्रयवं अम्बु

विल्वशलाटुना वाऽथ सिद्धमाज्यं पयः शिशोः।
समांसरक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रतः॥
तद्वद्राजक्षीरसमोजम्बुत्वगुड्वोरसः।
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्॥
रसाञ्जनं विशेषेण पानालेपनयोर्हितम्।
कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः॥
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः॥ २१ ॥
घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजोलिहन्।
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः॥२२॥
हरीतकी वचा कुष्ठं कल्कं माक्षिकसंयुतम्।
पीत्वा कुमारस्तन्येन मुच्यते तालुपातनात्॥२३॥
मुखपाके तु बालानां साम्रसारमयोरजः।
गैरिकं क्षौद्रसंयुक्तं भेषजं सरसाञ्जनम्॥
अश्वत्थत्वगदलक्षौद्रैर्मुखपाके प्रलेपनम्।
दार्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथापरम्॥

---

बालकं मोचः शाल्मलीवेष्टकः। सिद्धमिति क्षीरपरिभाषया पाकः॥ २१ ॥

घृतेनेत्यादौ।— सिन्धु सैन्धवं एषां चूर्णं घृतेन लेह्यं तोयेनवेत्यनन्तरं पिबन्निति शेषः। तेन तोयेन कोष्णजलेन वा पिवेदित्यर्थः॥२२॥

हरीतकीत्यादि।— वाभटस्य तालुपातनं तालुप्रदेशस्य निम्नता तालकण्टकादित्यपि पाठः॥२३॥

मुखपाक इत्यादौ।— आम्रसारः आम्रसदृशपत्रः स्वनामख्यातो राढ़ायामिति केचित्। अन्ये तु आम्रसारः आम्रफलास्थि मज्जेत्याहुः। आम्रसारादि रसाञ्जनान्तं एक

सह जम्बीररसेन सुगन्दलरसघर्षणं सद्यः।
क्षतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥२४॥
लावतित्तिरवल्लूरजः पुष्परसान्वितम्।
द्रुतं करोति बालानां दन्तकेशरवन्मुखम् ॥२५॥
दन्तोद्भेदोत्थरोगेषु न बालमति यन्त्रयेत्।
स्वयमप्युपशाम्यन्ति जातदन्तस्य ते गदाः ॥२६॥
पञ्चमूलीकषायेण सघृतेन पयः शृतम्।
सशृङ्गवेरं सगुड़ं शीतं हिक्कार्द्दितः पिबेत् ॥
सुवर्णगैरिकस्यापि चूर्णानि मधुना सह।
लीढ्वा सुखमवाप्नोति क्षिप्रं हिक्कार्द्दितः शिशुः ॥२७॥

---

एवप्रलेपः। अश्वत्थस्य त्वक् पत्रञ्च अपरमित्यत्र प्रलेपमित्यन्वयः। सहेत्यादौ।— जम्बीरः पर्णासभेदः सुकदलं सुही-पत्रं तस्य स्वरसः पुटपाकविधिना एव ग्रहीतुं शक्यते ।२४॥

लावेत्यादि।— वाभटस्य। लावतित्तिरयोरनयोर्वल्लूरं शुष्कमांसं पुष्परसोमधु एतन्मांसचूर्णं मधुना लेह्यमिति केचित्। अन्ये तु मधुनेतच्चूर्णेन दन्तपालिं प्रतिसारयेदित्याहुः। किन्त्वयं योगावाभटे प्रतिसारणप्रकरणे पठितः। दन्तकेशरमिति दन्ता एव केशरं सुकुमारत्वात् ॥२५॥

दन्तोद्भेदेत्यादि वाभटस्य दन्तोद्भेदो दन्तभेदः। दन्तोद्भेदश्च रोगाणां सर्व्वेषामपि कारणम्। विशेषाज्ज्वरविड्भेद-कासच्छर्द्दिशिरोरुजमित्यादि।— नवालमति यन्त्रयेदिति आहाराचारनियमेनेत्यर्थः ॥२६॥

पञ्चमूलीत्यादि।— पञ्चमूली महती वातकफप्रधानहिक्काहरत्वात्। अत्र क्वाथात् पादिकं घृतं अष्टमांसं वा दुग्धाच्चतुर्गुणः क्वाथः एतत् सर्व्वमेकीकृत्य पक्वा क्वाथं शोषयित्वा सघृतं दुग्धं स्थाप्यं तत्र शुण्ठीचूर्णं गुड़ञ्चानुरूपं प्रक्षिप्य

चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाच्यपि ।
चूर्णं कृत्वा तु सर्व्वेषां सुखोष्णेनाम्बुना पिबेत् ॥
श्वासं कासमथो हिक्कां कुमाराणां प्रणाशयेत् ।
द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ॥
लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा ॥२८॥
पुष्करातिविषाशृङ्गीमागधीधन्वयासकम् ।
तच्चूर्णं मधुना लीढं शिशूनां पञ्चकासनुत् ॥
दाडिमस्य च बीजानि जीरकं नागकेशरम् ।
चूर्णितं शर्कराक्षौद्रलीढं तृष्णाविनाशनम् ॥
मायूरपक्षभस्मव्युषितजलं तेन भावितं पेयम् ।
तृष्णाघ्नं वटकाष्ठभस्मजलं वक्त्रशोषजिद्वृतं वक्त्रे ॥
पिष्टैश्छागेन पयसादार्व्वीमुस्तकगैरिकैः ।
बहिरालेपनं शस्तं शिशोर्नेत्राक्ष्यापहम् ॥२९॥
मनशिलाशङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।

---

यथार्हं पिबेदित्याहुः । अन्ये तु घृतस्यापि पानकाले प्रक्षेप्यत्वमिति वदन्ति । सुवर्णगैरिकस्य अत्यन्तलोहितगैरिकस्य॥२७॥

चित्रकमित्यादौ ।— गवाची गोरक्षकर्कटी । सविबन्धे वाते कफेऽयं योगः । द्राक्षेत्यादि ।— कफपित्ते । यासो दुरालभा तमकं श्वासमित्यर्थः ॥ २८ ॥

दाडिमस्येत्यादौ ।— चूर्णितमित्यत्र कृष्णा चेति पाठान्तरम् । मयूरेत्यादौ ।— मयूरपक्षभस्मभावितजलेन व्युषितेन भावितवटकाष्ठभस्मभावितजलेन पेयमित्यर्थः । मयूरपक्षभस्म पल १ जल पल ६ एतद्बहुधा वस्त्रे परिस्राव्य गृहीतजले व्युषिते षडंशेन वटकाष्ठभस्मप्रक्षिप्य बहुधा परिस्राव्य यथार्हं पिबेत् ॥ २९ ॥

मनःशिलेत्यादौ ।— क्षौद्रेण संयुक्ता संघृष्टेत्यर्थः । मातुः

वर्त्तिः चोद्रे ण संयुक्ता बाले सर्व्वाक्षिरोगनुत् ॥
मातुलुङ्ग्यकटुस्नेहक्षाक्षिकैर्भावितो जयेत् ।
स्वेदाद्दीपशिखोत्तप्तोनेत्रामयमलक्तकः ॥३०॥
शुण्ठीभृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूणके ऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥३१॥
क्रिमिघ्नालशिलादार्व्वी लाक्षाकाञ्चनगैरिकैः ।
चूर्णाञ्जनं कुकूणे स्यात्क्रिमूनां पोथकीषु च ॥
सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूणके ।
गृहधूमनिशाकुष्ठवाजिकेन्द्रयवैः शिशोः ॥
लेपस्तकेण हन्त्याशु सिध्मपामाविचर्च्चिकाः ॥३२॥

मात्र्येत्यादौ ।— कटुस्नेहं कटुतैलं एतैर्मातुलुङ्ग्यादिभिः प्रत्येकशः सप्ताहं भावितोऽलक्तकरसः अनन्तरं दीपशिखातप्तः सन् स्वेदविधिना नेत्रामयं जयेदित्यर्थः ॥ ३० ॥

शुण्ठीत्यादौ ।— भृङ्गो भृङ्गराजः शुण्ठ्यादीनां पिष्टानां प्रत्येकं माषद्वयं सैन्धवं रक्तिपञ्चकम् । एतत् सर्व्वं पुटपाकविधिना पक्त्वा तत आकृष्य वस्त्रेपोट्टलीं बद्ध्वा चक्षुषि आश्च्योतनं कार्य्यम् । कुकूलक इति पाठे कुकूलकस्तुषाग्निः एतस्मिन् पुटपाक इत्यन्वयः । उक्तं हि वाभटे शृङ्गवेरं निशाभृङ्गं कल्कितं वटपल्लवैः । बद्ध्वा गोशकृता लिप्तं कुकूलैः स्वेदयेत्ततः । रसेन लिम्पेत् तालास्यं नेत्रे च परिषेचयेदिति ॥ ३१ ॥

क्रिमिघ्नेत्यादौ ।— आलं हरितालं शिला मनःशिला काञ्चनगैरिकं स्वर्णगैरिकम् । चूर्णाञ्जनमिति मधुनाप्लुतशलाकया चूर्णाञ्जनं कार्य्यम् । सुदर्शनेति सुदर्शना लिघुरीति ख्याता जीवपत्नेति च ख्याता ॥ ३२ ॥

अश्वगन्धाघृतम्।

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत्।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम्॥३३॥

बालचाङ्गेरीघृतम्।

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत्।
कपित्थव्योषसिन्धूत्थसमङ्गोत्पलवालकैः॥
सविल्वधातकीमोचैः सिद्धं सर्व्वातिसारनुत्।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः॥३४॥

कुमारकल्याणकं घृतम्।

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीरकं बला॥
शठी दुरालभा विल्वं दाड़िमं सुरसः स्थिरा।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिं चतुर्गुणे॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम्।
बलवर्णकरं धन्यं पुष्ट्यग्निबलवर्द्धनम्॥
छायासर्व्वग्रहालक्ष्मीक्रिमिदन्तगदापहम्।
सर्व्वबालामयहरं दन्तोद्भेदं विशेषतः॥३५॥

---

पादकल्क इत्यादौ।— पेयं कुमाराणामिति कुमारैः पेयमित्यर्थः वा कर्त्तरि क्तस्येति षष्ठी॥३३॥

चाङ्गेरीत्यादौ।—छागक्षीरचाङ्गेरीस्वरसैः घृताद्द्विगुणैः। पाकसाधनत्वेन चतुर्गुणद्रवस्योत्सर्गसिद्धत्वात्॥३४॥

शङ्खपुष्पीत्यादौ।— जीवकं जीवनीयवर्गमध्ये पठितद्रव्यम्। सुरसः पर्णासः कण्टकारीस्वरसः क्षीरञ्च प्रत्येकं घृता-

अष्टमङ्गलकं घृतम् ।

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च ।
शारिवा सैन्धवश्चैव पिप्पलीघृतमष्टमम् ॥
मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने ।
दृढ़स्मृतिः क्षिप्रमेधः कुमारो बुद्धिमान् भवेत् ॥
न पिशाचा न रक्षांसि न भूता न च मातरः ।
प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥ ३६ ॥

लाक्षादितैलम् ।

लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणम् ।
रास्नाचन्दनकृष्णाब्दवाजिगन्धानिशायुगैः ॥
शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः ।
बालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत् ॥ ३७ ॥

सहामुण्डितिकोदीच्यक्वाथस्नानं ग्रहापहम् ।
सप्तच्छदनिशाकुष्ठचन्दनैश्चानुलेपनम् ॥ ३८ ॥

सर्पत्वक् लशुनं मूर्वासर्षपारिष्टपल्लवाः ।
वैड़ालविड़जालोम मेषशृङ्गी वचा मधु ॥
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ॥ ३९ ॥

---

चतुर्गुणम् । भूतादिकृतं मुखादिवैवर्ण्यं छाया ॥ ३५ ॥

वचेत्यादि ।— वचादीनां कल्कः जलं चतुर्गुणमिति॥३६॥

लाक्षातैले ।— कुष्ठाब्दचन्दनैरित्येव पाठो वाभटपुस्तकेषु दृश्यते । नतु कृष्णाब्दचन्दनैरिति । तिक्ता कटुरोहिणी नतु लताकस्तुरी । समूर्वारोहिणीरास्नाशताह्वमधुकैः समैरिति सिद्धसारदर्शनात् ॥ ३७ ॥

सहेत्यादि ।— सहा माषपर्णी क्वाथो ऽत्राभिमतः ॥३८॥

सर्पेत्यादि ।— सर्पत्वक् निर्मोकः अरिष्टो निम्बः सर्षपः

बालकस्य बलियान्त्येष्ट कर्म्माणि।

बलियान्त्येष्टकर्म्माणि आर्याणि ग्रहशान्तये।

मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सर्व्वकामिकः॥

ओं नमो भगवते गरुडाय त्र्यम्बकाय स सद्यस्तुतः स्वाहा।

ओं कं पं टं यं वैनतेयाय नमः ओं ह्रों ह्रं चः॥ ४०॥

गरुड़बलिः।

बालदेहप्रमाणेन पुष्पमालान्तु सर्व्वतः।

भक्तञ्च मुद्गिकाभक्तबलिरेयस्तु शान्तिकः॥

ओंकारीस्वर्णपक्षी बालकं रक्ष रक्ष स्वाहा॥ ४१॥

ओं नारायणाय नमः।

प्रथमे दिवसे मासि वर्षे वा गृह्णाति नन्दानाम मातृका।

तया गृहीतमात्रेण प्रथमं भवति ज्वरः॥

---

श्वेतसर्षपः मेषश्रृङ्ग्याः पत्रम्। मेषश्रृङ्गमिति पाठे मेषस्य गडे-रस्य श्रृङ्गम्॥ ३८॥

बलीत्यादौ।—तत्रादावित्यत्र मन्त्रादावारिति पाठान्तरे कुमारस्य रक्षकस्यादिसूत्रबन्धन इत्यर्थः। ओं इत्यादिस्वा-हान्त एकोमन्त्रः। ओं इत्यादिबीजाक्षरात्मको द्वितीयः एवं ओं इत्यादि च इत्यन्तस्तृतीयः। किम्बा मिलित्वा एक एव बलिदानमन्त्रः॥ ४०॥

बालदेहमित्यादौ। पुष्पमाला ग्राह्या। सर्व्वत इति सर्व्वासु दिक्षु। भक्तं शरावस्योपरिस्थभक्तं चतुःपार्श्वस्थभक्तं वा। मुद्गिकाः स्वल्पशरावाः। अत्र मत्स्यमांसव्यञ्जनधूपदीपदानम-प्युपदिशन्ति वृद्धाः। अयं गरुड़बलिः सन्ध्यायाः दिनत्रयं देयत इति वृद्धैः। बालक रक्षा मन्त्रमाह ओंकारीत्यादिस्वा-हान्तः॥ ४१॥

इदानीं प्रसिद्धफलं रावणकृतकुमारतन्त्रमाह ओं नारा-

अशुभं यद्दं मुञ्चति चात्कारञ्च करोति स्तन्यं न गृह्णाति।
बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्॥
मशुभयतटवत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लोदनं शुक्ल-पुष्पं शुक्लसप्तध्वजाः सप्तप्रदीपाः सप्तस्वस्तिकाः सप्तवटकाः सप्तशष्कुलिकाः सप्तजम्बुलिकाः सप्तमुरुकाः गन्धं पुष्पं ताम्बूलं मत्स्यं मांसं सुराशुभक्तञ्च पूर्व्वस्यां दिशि चतुष्पथे मध्याह्ने बलिर्देयः॥
ततोऽश्वत्थपत्रं कुम्भे प्रक्षिप्य शान्तुदकेन स्नापयेत्।
रक्षोघ्नसिद्धार्थकमेषशृङ्गनिम्बपत्रशिवनिर्माल्यैर्बालकं धूपयेत्॥

---

बलाय नम इत्यादि।— प्रथमे मासि वर्षे वेत्यादि कथं यतो वक्ष्यमाणद्वितीयदिवसादिना प्रथममासस्य बाधितत्वात् एवं प्रथमवर्षस्यापि द्वितीयतृतीयमासादिद्वादशमासान्ते परिभूतत्वादिति चतोच्यते द्वादशदिनात् परतोऽस्त्येव प्रथममासस्यावकाशः एवं वर्षस्यापि तथाहि यदि कुमारो माघे जातस्तदा माघादिगणनया पौषमासि द्वादशमासाः भवन्ति। प्रथमद्वितीयदिवसविधिरेव तत ऊर्द्धं द्वादशमासि वर्षवृद्धिदिनं यावत् प्रथमसम्वत्सरविधिर्ज्ञेय इति युक्तिसुत्पश्यामः मासेन गणनया न तु चन्द्रादित्यगत्या दिनविभागं कृत्वा मासादिगणना कार्य्या। इह द्वादशमासवर्षयोः विषयत्वाभावप्रसङ्गात्। किम्बा चादितगततादिगणनयापि जन्मदिन एव प्रथमवर्षविशेषदिनार्थं वमिति। नन्दादिनामकीर्त्तनञ्च तदुद्देशेन बलिदानार्थं यथा चमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा नन्दायै नम इति बलिदानम्। चशुभद्वन्द्वमनकृत्वाला मुञ्चति विरौति। चात्कारं छर्द्दिः स्वस्तिकावेदिकाः। जम्बुडिका चतुस्त्रिंशमाषाः। चश्वत्थपत्रं जलकुम्भे प्रक्षिप्य गायत्रीं पठित्वा द्विजेन शान्तुदकं कर्त्तव्यम्। किम्बा बलिदानमन्त्रे-

ओं नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च क्रीं फट् स्वाहा। एवं दिनत्रयं बलिं दत्त्वा चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥ ४१ ॥

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः ॥ चक्षुरुन्मीलयति गात्रमुद्वेजयति न शेते क्रन्दति स्तन्यं न गृह्णाति आर्त्तकारश्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ॥ तण्डुलं हस्तपृष्ठैकं दधिगुडघृतञ्च मिश्रितं शरावैकं गन्धताम्बूलं पीतपुष्पं पीतसप्तध्वजाः चत्वारः प्रदीपाः दशस्वस्तिका मत्स्यमांससुराग्रभक्ततिलचूर्णानि पश्चिमस्यान्दिशि चतुष्पथे बलिर्देयः दिनानि त्रीणि सन्ध्यायां ततः शान्त्युदकेन स्नापयेत् ॥ शिवनिर्म्माल्यसिद्धार्थमार्ज्जारलोमशीरवालघृतैर्धूपं दद्यात्। ओं नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च क्रीं फट् स्वाहा ॥ चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥ ४२ ॥

---

अत्र भिषजा कार्य्यमित्यध्याहार्य्यम्(?)। मेषस्य गड़रस्य शृङ्गः। यत्र धूपो नोक्तस्तत्रायमेव धूपो विधेयः। यत्र शान्त्युदकं नोक्तं तत्र इदमेव शान्त्युदकमुपदिशन्ति। ओं नम इत्यादि मन्त्रोभ्यः(?) येऽविशेषास्ते प्रतिमातृकं वाच्याः कुमारस्य नामोच्चारणपूर्व्वकं पठनीयाः यथा अमुकस्य व्याधिं हन हन मुञ्च मुञ्च इति ॥ ४१ ॥

द्वितीय इत्यादौ।—उन्मीलयति उपरि भृशमुत्क्षिपति। हस्तपृष्ठैकमिति एकवारं परिमितहस्तपृष्ठे तण्डुलान् गृहीत्वेत्यर्थः। अग्रभक्तमिति ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते भक्तं तदग्रभक्तं शान्त्युदकेनेति शान्त्युदकमिदं कुशेन कार्य्यम् एवं सर्व्वत्र विशेषोक्तिं विना ॥४२॥

तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः ॥ गात्रमुद्वेजयति स्तन्यं न गृह्णाति मुष्टिं बध्नाति क्रन्दति ऊर्द्ध्वं निरीक्षते बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धताम्बूलरक्तचन्दनं रक्तपुष्पं रक्तसप्तध्वजाः सप्तप्रदीपाः सप्तस्वस्तिकाः पक्षिमांससुरा अग्रभक्तञ्च दक्षिणस्यां दिशि अपराह्णे चतुष्पथे बलिर्दातव्यः । शिवनिर्माल्यगुग्गुलुसर्षपनिम्बपत्रमेषशृङ्गैर्दिनत्रयं धूपयेत् । ओं नमो रावणाय बालस्य व्याधिं हन हन मुञ्च मुञ्च ह्रासय ह्रासय स्वाहा । एवं दिनत्रयं कार्य्यं चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥ ४४ ॥

चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डिकानाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः ॥ ग्रीवां नामयति अक्षिणी उन्मीलयति स्तन्यं न गृह्णाति रोदिति स्वपिति मुष्टिं बध्नाति । बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ॥ नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पलपुष्पं गन्धताम्बूलं दशध्वजाः चत्वारः प्रदीपाः त्रयोदशस्वस्तिकाः मत्स्यमांससुराग्रभक्तञ्च उत्तरस्यां दिशि अपराह्णे चतुष्पथे बलिं दद्यात् ओं नमो रावणाय हन हन मुञ्च मुञ्च स्वाहा ॥ चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥ ४५ ॥

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रमुद्वेजयति

---

तृतीय इत्यादौ ।—अग्रभक्तमिति ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते तत् अग्रभक्तम् ॥४४॥

चतुर्थ इत्यादौ ।—दशध्वजा इति शुक्लाः विशेषाभावात् ॥४५॥

स्तन्यं न गृह्णाति मुष्टिञ्च बध्नाति बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां निर्म्माय गन्धताम्बूलं शुक्लौदनं शुक्लपुष्पं पञ्चध्वजाः पञ्चप्रदीपाः पञ्चवटकाः ऐशान्यां दिशि बलिर्द्दातव्यः। शान्त्युदकेन स्नापयेत् शिवनिर्म्माल्यसर्पनिर्म्मोकगुग्गुलुनिम्बपत्रबालकहतैर्धूपं दद्यात्। ओँ नमो रावणाय अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा। चतुर्थे दिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ४६॥

षष्ठे दिवसे मासे वर्षे वा गृह्णाति शकुनिका नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रभेदञ्च दर्शयति मुष्टिं बध्नाति दिवारात्रावुत्थानं भवति ऊर्द्धं निरीक्षते॥ बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टकेन पुत्तलिकां शुक्लौदनं रक्तपुष्पं पीतपुष्पं गन्धताम्बूलं दशप्रदीपा दशध्वजा दशस्वस्तिका दशवटकाः क्षीरजम्बूडिका मत्स्यमांससुराः आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने बलिं दापयेत्। शान्त्युदकेन स्नापयेत्। शिवनिर्म्माल्यरसोनगुग्गुलुसर्पनिर्म्मोकनिम्बपत्रहतैर्धूपं दद्यात्। ओँ नमो रावणाय चूर्णय चूर्णय हन हन स्वाहा॥ चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥ ४७॥

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति मुष्टिं बध्नाति रोदिति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। रक्तपुष्पं शुक्लपुष्पं गन्धताम्बूलं रक्तौदनं

---

पञ्चम इत्यादौ।—कुम्भकारचक्रमृत्तिका कुम्भकारचक्रसंलग्नमृत्तिका॥४६॥

षष्ठ इत्यादौ।—क्षीरजम्बुडिकाः क्षीरसहितखिन्नमाषाः॥४७॥

कृशरास्त्रयोदश स्वस्तिकां स्त्रयोदश शष्कुलिका जम्बुड़िका । मत्स्यमांससुरास्त्रयोदशध्वजाः पञ्च प्रदीपाः पश्चिमदिग्भागे ग्रामनिष्काशे अपराह्णे वृक्षमाश्रित्य बलिं दद्यात् । शान्त्युदकेन स्नानं गुग्गुलु मेषशृङ्गीसर्षपवशीरवालकघृतैर्धूपयेत् ॥ ओं नमो रावणाय दीप्ततेजसे हन हन मुञ्च मुञ्च स्वाहा । चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥ ४८ ॥

अष्टमे दिवसे मासे वर्षे वा यदि गृह्णाति आर्य्यका नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गृध्रगन्धः पूतिगन्धश्च जायते आहारञ्च न गृह्णाति उद्वेजयति गात्राणि बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । रक्तपीतध्वजाः चन्दनं पुष्पं शष्कुल्यः पर्पटिकाः मत्स्यमांससुरा जम्बुड़िकाः प्रत्यूषे बलिर्देयः प्रान्तरे ॥ मन्त्रः ॥

ओं नमो रावणाय त्रैलोक्यविद्रवणाय चतुर्दिशमोक्षणाय व्याधिं हन हन मुञ्च मुञ्च दह दह ओं ह्रीं फट् स्वाहा । चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम् ॥

नवमे दिवसे मासे वर्षे वा गृह्णाति सूतिका नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः । नित्यं छर्द्दिर्भवति गात्रभेदं दर्शयति मुष्टिं बध्नाति बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभं नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्म्माय शुक्लवस्त्रेण वेष्टयेत् शुक्लपुष्पं गन्धताम्बूलं शुक्लत्रयोदश ध्वजाः त्रयोदशप्रदीपाः त्रयोदश स्वस्तिकाः त्रयोदश पुत्तलिकाः । मत्स्यमांससुराः उत्तरदिग्भागे ग्रामनिष्काशे बलिं

---

सप्तम इत्यादौ ।—रक्तौदनं शाल्यादि भक्तं अलक्तकादिरञ्जितभक्तम्बा । कृशरा तिलतण्डुलनिर्मितयवागूः ग्रामनिष्काशे ग्रामप्रान्ते ॥४८॥

अष्टमनवमदशमैकादशस्फुटाः ।—द्वादशे वादयति इति

दद्यात् शान्त्युदकेन स्नानं गुग्गुलुनिम्बपत्रगोश्टङ्गश्वेतसर्षपष्टतैर्धूपं दद्यात्। मन्त्रः ओं नमो रावणाय चतुर्भुजाय हन हन मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सम्पद्यते शुभम्॥

दशमे दिवसे मासे वर्षे वा गृह्णाति निर्ऋता नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रभङ्गं जयति आतृकारं करोति रोदिति बध्नाति मूत्रं पुरीषञ्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्॥ पारावारमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय गन्धताम्बूलं रक्तपुष्पं रक्तचन्दनं पञ्चवर्णध्वजाः पञ्चप्रदीपाः पञ्चस्वस्तिकाः पञ्चपुत्तलिकाः मत्स्यमांससुराः वायव्यां दिशि बलिं दद्यात्। काकविष्ठागोमांसगोश्टङ्गरसोनमार्ज्जारलोमनिम्बपत्रष्टतैर्धूपयेत्। ओं नमो रावणाय चूर्णितहस्ताय मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सुस्थो भवति बालकः॥

एकादशे दिवसे मासे वर्षे वा यदि गृह्णाति पिलिपिच्छिका नाम मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं न गृह्णाति ऊर्द्ध्वदृष्टिर्भवति गात्रभङ्ग आतृकारश्च भवति बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनरक्ताञ्च तस्यामुखं दग्धेन सिञ्चेत्। पीतपुष्पं गन्धताम्बूलं सप्तपीतध्वजाः सप्तप्रदीपाः अष्टौ वटकाः अष्टौ शष्कुलिकाः अष्टौ पुपिकाः मत्स्यमांससुराः पूर्व्वस्यां दिशि बलिर्दातव्यः शान्त्युदकेन स्नानं शिवनिर्माल्य गुग्गुलुगोश्टङ्गसर्पनिर्म्मोकष्टतैर्धूपयेत्। ओं नमो रावणाय मुञ्च मुञ्च स्वाहा। चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सुस्थो भवति बालकः॥

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कालुका नाम

मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः । विकृतस्य बालः वति करेण तर्ज्जयति गृह्णाति क्रामति निःश्वसिति मुहुर्मुहुराहारं न करोति । बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । क्षीरेण पुत्तलिकां कृत्वा गन्धं ताम्बूलं शुक्लपुष्पं शुक्लसप्तध्वजाः सप्तप्रदीपाः सप्तशष्कुलिकाः करम्भकेन सर्व्वकर्म्मबलिं दद्यात् शान्त्युदकेन स्नापयेत् ॥ शिवनिर्म्माल्यगुग्गुलुसर्षपद्दतैर्धूपयेत् । ओं नमो रावणाय मुञ्च मुञ्च हन हन स्वाहा । चतुर्थदिवसे ब्राह्मणं भोजयेत् ततः सुस्थो भवति बालकः ॥४८॥

इति रावणकृतं कुमारतन्त्रं समाप्तम् ।

इति बालरोगचिकित्सा ।

## अथ विषाधिकारः ।

अरिष्टाबन्धनं मन्त्रं प्रयोगश्च विषापहः ।
दंशनं दंशकस्याहेः फलस्य मृदुनोपि वा ॥ १ ॥

---

सम्भाषते । रोदितीति पाठान्तरम् । क्षीरेणेति पाकात् पिण्डीभूतेन क्षीरेणेत्यर्थः । करम्भकेन दधिमिश्रितभक्तेन ॥४८॥

इति बालरोगाधिकारः ।

इदानीमातुररक्षितचिकित्सापारिशेष्यात् विषचिकित्सामाह अरिष्टेत्यादि अरिष्टाबन्धनं धमनीबन्धः स च दंशदेशादूर्द्ध्वं चतुरङ्गुले यदाह वाभटः दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले । क्षौमादिभिर्व्वल्कलैर्व्वा सिद्धमन्त्रैश्च मन्त्रयेदिति । दष्टकस्याहेरिति दंशकर्त्तुः सर्पस्य दंशनं दन्तपंक्तिद्वयमन्त्रपीड़नं एवं मृदुफलस्यापि एतच्च सुकुमार द्रव्योपलक्षणं तेन रम्भाक्षणालकाण्डाद्यपि बोध्यम् । तत्र सर्व्वत्र विषसंक्रमणं

चलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवम्।
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः।
दर्पादेव फणी यदा दशति तं मोहान्वितोऽस्थचपम्।
स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात् ॥२॥
मसूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ।
अब्दमेकं न भीतिः स्याद्विषात्तस्य न संशयः ॥
धवलपुनर्नवजटया तण्डुलजलपीतया पुष्यर्क्षे।
अपहरति विषधरविषोपद्रवं आसंवत्सरं पुंसाम् ॥ ३ ॥
गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम्।
अपि वासुकिना दष्टः पिबेद्दधिघृतासुतम् ॥ ४ ॥
कुलिकामूलनस्येन कालदष्टोऽपि जीवति ॥ ५ ॥

---

भवतीति भावः। यदुक्तं टन्दे धर्त्तुं दंशविधौ न भोगिगरलं प्राप्नोति दष्टो यदा रम्भाखण्डभपालकोमलफलं दन्तैर्दशत्याशु यत्। गच्छेत्तत्क्षणमेव तस्य गरलं तद्दष्टवस्त्वन्तरं दंशे नीरसतां नयेच्च बहुधा संवध्य फलेन वै इति ॥ १ ॥

चलमित्यादौ।— प्रत्यङ्गिरा कण्टकी शिरीषः। शुचिराषाढ़स्तस्य भद्रयोगदिवसे शुभयोगनक्षत्रादियुक्तदिने पुष्पानक्षत्रादियुक्तदिने इत्यन्वयः ॥ २ ॥

मसूरमित्यादि।— मसूरगुड़कमेकं निम्बस्य द्वे पत्रे तृतीया सहार्थे। मेषगते रवौ वैशाखे। धवलेत्यादि स्पष्टम् ॥३॥

गृहधूम इत्यादौ। तण्डुलीयकमिति केवलं त[illegible]लीयकमूलमपि बोध्यं तदुक्तं विन्दुसारे तण्डुलीयकमूलं तु पीतं तण्डुलवारिणा। तक्षकेणापि संदष्टं निर्विषं कु[illegible] नरमिति ॥ ४ ॥

कुलिकेत्यादि।—कुलिकः काकाकड़भेदः स्वल्प[illegible] कुड़-

स्वेभ्यस्थः कर्णगूथस्य वामानामिकयाकृतः ।
लेपोऽन्याद्विषं घोरं स्वमूत्रसेचनं तथा ॥ ६ ॥
शिरीषपुष्पस्वरसे भावितं श्वेतसर्षपम् ।
सप्ताहं सर्पदष्टानां नस्य पानाञ्जने हितम् ॥ ७ ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुःपलम् ।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥ ८ ॥
वन्ध्याकर्कोटजं मूलं छागमूत्रेण भावितम् ।
नस्यं काञ्जिकसंयुक्तं विषोपहतचेतसः ॥
त्रिवृद्विशल्यामधुकं हरिद्रे मञ्जिष्ठवर्गो लवणाश्च सर्व्वम् ।
कटुत्रिकञ्चैव विचूर्णितानि शृङ्गे निदध्यान्मधुना युतानि ॥

---

करायिरिति ख्यातः । उपदेशात् तण्डुलोदकेन नस्यं कार्य्यं केचित् पानं वदन्ति ॥५॥

स्वेभ्यस्थ इत्यादि ।—योगत्रयं मुखस्थितस्वेभ्यस्थ इत्येकः । कर्णगूथस्येति द्वितीयः । वामानामिकया कृत इति कनिष्ठाङ्गुलीसमीपे या अङ्गुली सा अनामिकेत्युच्यते । वामहस्तस्य अनामिकाङ्गुल्या कृत इत्यर्थः । स्वमूत्रसेचनः दंशदेशे स्वीयमूत्रसेकः । उक्तं हि सर्पदष्टप्रदेशे तु स्वयमेव विचक्षणः । मूत्रयेत्तत् क्षणादेव निर्व्विषत्वमवाप्नुयादिति । अयं तृतीयोयोगः ॥६॥

शिरीषेत्यादि ।—वाभटस्य । श्वेतसर्षपमित्यत्र मरिचाऽनतमिति पाठे मरिचं श्वेतमरिचं शोभाञ्जनबीजम् । अयमेव पाठश्चन्द्रटादौ दृश्यते । अतः श्वेतसर्षपमिति पाठान्तरमयुक्तम् ॥७॥

द्विपलमित्यादि ।—वाभटस्य । षट्पलीयं मात्रा सर्पदष्टविषये विशेषविहितत्वात् न दोषावहेति ॥८॥

एषोऽगदोहन्त्युपप्रयुज्यमानः पानाञ्जनाभ्यञ्जननस्ययोगैः।
अवार्य्यवीर्य्योविषवेगहन्ता महागदोनाम महाप्रभावः॥ ९ ॥
पीते विषे स्याद्वमनञ्च त्वक्स्थे प्रदेहसेकादि सुशीतलञ्च।
कपित्थमांसं ससिताक्षौद्रं कण्ठगते विषे॥
लिह्यादामाशयगते ताभ्यां चूर्णफलं नतात्॥१०॥
विषे पक्वाशयगते पिप्पलीरजनीद्वयम्।
मञ्जिष्ठाञ्च समं पिष्ट्वा गोपित्तेन नरः पिबेत्॥

---

बन्धेत्यादि।—बन्ध्यः फलरहितः। त्रिदृदित्यादि।—सुश्रुतस्य। विशल्या दन्ती काष्ठपाटला वा विशालेति पाठे गोरक्षकर्कटी। मञ्जिष्ठावर्गो मञ्जिष्ठासहितोयमेव त्रिवृता-दिवर्ग इत्यर्थः। अन्ये तु मञ्जिष्ठावर्गं पृथगेवि पठन्ति। तच्च टीकाकारैर्न्व्याख्यातम्। डल्लनस्तु त्रिवृद्विशल्ये मधुकं हरिद्रे रक्तानरेन्द्रो लवणश्च वर्ग इति व्याचष्टे च विशल्या दन्ती काष्ठपाटला वा रक्तं मञ्जिष्ठा नरेन्द्रः स्वर्णालुः लवणवर्गो लवणपञ्चकमिति। शृङ्ग इति गोशृङ्गे निदध्यादिति पक्षमेकं स्थापयेत् एतच्च गोशृङ्गे पक्षैकं स्थापनं सौश्रुतवक्ष्यमाण योगे तथा दर्शनात्। यथा शृङ्गे गविशृङ्गमनेन चैव प्रच्छादितः पक्षमुपेक्षितस्य॥९॥

पीत इत्यादौ।—वमयमिति गोमयस्वरसेन मधुयुक्तेन वान्तिः कार्य्या उक्तं हि समधुस्विषपीतस्य वमनं गोमयाद्रस इति। त्वक्स्थे तु विषे शीतलं प्रदेहसेकादि कार्य्यम्। कपि-त्थेत्यादि।-कपित्थस्य मांसं त्वगस्थ्यादिरहितं मध्यम्। लिह्या-दित्यादौ ताभ्यामिति सिताक्षौद्राभ्यां नतादिति तगरपादि-कातः॥१०॥

विष इत्यादौ।—पिप्पलीद्वयं रजनीद्वयञ्च। सममिति समभागं जलेन पेषणं पानश्चेत्याह्नः। रजनीत्यादौ।—

रजनीसैन्धवक्षौद्रसंयुक्तं घृतमुत्तमम्।
पानं मूलविषार्त्तस्य दिग्धविद्धस्य चेष्यते॥
सितामधुयुतं चूर्णं ताम्रस्य कनकस्य वा।
लेहः प्रशमयत्युग्रं सर्व्वसंयोगजं विषम्॥११॥
अङ्कोठमूलनिःक्वाथं फाणितं सघृतं लिहेत्।
तैलाक्तः स्विन्नसर्व्वाङ्गोगरदोषविषापहः॥१२॥
कटभ्यर्ज्जुनशैरीयशेलुक्षीरीद्रुमत्वचः।
कषायचूर्णकल्काः स्युः कीटलूताव्रणापहाः॥
आगारधूममञ्जिष्ठारजनीलवणोत्तमैः।
लेपोजयत्याखुविषं कर्णिकायाश्च पातनम्॥
यः कासमर्द्दनेत्रं वदने प्रक्षिप्य कर्णे फुत्कारम्।
मनुजोददाति शीघ्रं जयति विषं वृश्चिकानां सः॥१३॥
दंशे भ्रामणविधिना वृश्चिकविषहृत् कुठेरपादगुड़िका।
पुरधूपपूर्व्वमर्कच्छदमिव पिष्ट्वा कृतोलेपः॥१४॥
कुङ्कुमकुनटीकर्कटपत्रकहरितालैः कुसुम्भसंमिलितैः।
कृतगुड़िका भ्रामणतोविदष्टगोधासरटादिविषजित्॥

---

उत्तमं घृतं गव्यघृतम्। दिग्धोविषाक्तशरः तेन विद्धस्य। ताम्रस्य कनकस्य वेति मारितस्य ताम्रस्य तथा मारितस्य सुवर्णस्येत्यर्थः॥११॥ अङ्कोठेत्यादौ।—अङ्कोठमूलक्वाथमेव पुनः पाकात् फाणिताकारं कुर्य्यात्॥१२॥

इदानीं कीटादिविषचिकित्सामाह कटभीत्यादि।—शैरीयोझिण्टी। शेलुर्व्वहुवारः। क्षीरीद्रुमा वटोडुम्बरादयः। आगारधूमेत्यादौ।—कर्णिका कीटवक्त्रशुक्रः। य इत्यादौ नेत्रं मूलं निःक्षिप्य संचर्व्य॥१३॥ दंश इत्यादि।—दंशे वृश्चिकदंशे। कुठारपादगुड़िका पर्णासमूलकृतगुड़िका। पुरधूपपूर्व्वमिति गुग्गुलुना पूर्व्वं धूपयित्वा अर्कपत्रकृतो लेपः॥१४॥

गोधाविषचिकित्सामाह कुङ्कुमेत्यादि।—कुनटी मनः-

अङ्कोठपलधूमो मीनविषं झटिति विघटयेत् स्पृष्टी।
गोधावरटीविषमिवालेपेन कुठकराग्निजटा ॥१५॥
कनकोडुम्बरफलमिव तण्डुलजलपिष्टं पीतमपहरति।
कनकदलद्रवघृतगुडदुग्धपलैकं शुनां गरलम् ॥१६॥
लेपइव भेकगरलं शिरीषवीजैः स्नुहीपयःसिक्तैः।
हरति गरलं त्र्यहमशिताङ्कोठजटाकुष्ठसम्मिलिता ॥
मरिचमहौषधवालकनागाह्वैर्मक्षिकाविषे लेपः॥
लालाविषमपनयतोमूले मिलिते पटोलनीलिकयोः।
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपाद्यपि॥
रजन्यौ गैरिकं लेपोनखदन्तविषापहः।
वचाहिङ्गु विडङ्गानि सैन्धवं गजपिप्पली॥
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्म्मितम्।
दशाङ्गमगदं पीत्वा सर्व्वकीटविषं जयेत् ॥१७॥
कीटदष्टक्रियाः सर्व्वाः समानाः स्युर्जलौकसाम्॥

---

शिला वर्द्धटकसत्र पललं मांसं कुसुम्भं कुसुम्भपुष्पम्। शरटादित्यादिशब्दादञ्जननामिकाज्येष्ठीप्रभृतीनां ग्रहणम्। अङ्कोठेत्यादौ।—स्पृष्टीति छेदः अन्यथा छन्दोभङ्गं स्यादिति। कूढकराग्निः स्वनामख्याता तस्या मूलम् ॥१५॥

कुक्कुरविषचिकित्सामाह कनकेत्यादि।—कनकोधुस्तूरः उडुम्बरं यज्ञोडुम्बरं तयोः फलम्। कनकदलेत्यादि योगान्तरम्। कनकदलद्रवो धुस्तूरपत्ररसः। एषां पलं मिलित्वा॥१६॥

भेकविषचिकित्सामाह लेप इत्यादि।-अशिता भक्षिता क्वाथविधया कल्कविधया वा योज्यमेतत्। लालाविषमिति लालैव विषं लालाविषम् सोमवल्कः कट्फलं अश्वकर्णः शालभेदः गर्द्दभाण्डो वा। पीत्वेति क्वाथविधया कल्कविधयावा योज्यम्॥१७

अतिदेशेन जलौकाचिकित्सामाह कीटदष्टेत्यादि।-दष्ट-

मृतसञ्जीवनोगदः ।

स्पृक्काप्लवस्थौणेयकाञ्चीशैलेयरोचनातगरम् ।
ध्यामकं कुङ्कुमं मांसी सुरसाग्रैलालकुष्ठघ्नम् ॥
बृहतीशिरीषपुष्पश्रीवेष्टकपद्मचारटीविशालाः ।
सुरदारु-पद्मकेशर-शावरक-मनःशिला-कौन्त्यः ॥
जात्यर्कपुष्पसर्षपरजनीद्वयहिङ्गुपिप्पलीद्राक्षाः ।
जलमुद्गपर्णीमधुकमदनसिन्धुवाराश्च ॥
सम्पाकलोध्रमयूरकगन्धफलीलाङ्गलीविडङ्गाः ।
पुष्ये समुद्धृत्य समं पिष्ट्वा गुड़िकाविधेयाः स्युः ॥
जन्तुविषघ्नोजयकृद्विषमृतसंजीवनोज्वरनिहन्ता ।
श्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥
भूतविजयन्त्वलक्ष्मीकार्म्मणमन्त्राग्नशन्यरीन् हन्यात् ।
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम् ॥
धनधान्यकार्य्यसिद्धिश्रीपुष्टिवर्णायूर्व्वर्द्धनोधन्यः ।
मृतसञ्जीवन-एष प्रागमृताद्ब्रह्मणाभिहितः ॥१८॥

इति विषरोगचिकित्सा ।

---

त्यादौ ।—स्थौणेयं ग्रन्थिपर्णं काञ्ची सौराष्ट्रमृत्तिका ध्यामं गन्धतृणं सुरसाग्रं निर्गुण्डीमञ्जरी अलं हरितालम् । कुष्ठघ्न-मेड़गजः । श्रीवेष्टकोनवनीतखोटी । पद्मचारटी कुम्भाकलता पद्मस्य केशरं किञ्जल्कः शावरकोलोध्रः कौन्ती रेणुका । जात्यर्कपुष्पमिति जात्यर्कयोः पुष्पं जलं बालकम् । निर्गुण्ड्याकारः शुक्लपुष्पः सिन्धुवारः सम्पाक आरग्वध स्तस्य फलं ग्राह्यम् । लोध्रं लोहितलोध्रम् । मयूरोऽपामार्गः गन्धफली प्रियङ्गुः नाकुली रास्ना । पुष्ये पुष्यानक्षत्रे जन्तवः क्रिमयः कार्म्मणं परद्रोहोपायः मन्त्रोऽभिचारमन्त्रः । अशनिर्वज्रं स्त्रीदोषाः सौभाग्यार्थकृतगरादिदोषाः ॥१८॥ इति विषाधिकारः ।

# अथ रसायनाधिकारः।

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ १ ॥

---

भेषजं तावद्द्विविधं आतुरहितं सुस्थहितञ्च सुस्थहितमपि द्विविधं रसायनवाजीकरणभेदात्। अत्रातुरहितं तावदुक्तमेव सम्प्रति सुस्थहितं वाच्यं तत्रापि वाजीकरणापेक्षया रसायनस्य वर्षसहस्रायुष्कत्वात् महाफलत्वाच्च प्रथमतः रसायनमाह यदित्यादि।—जराविध्वंसी जराकृपव्याध्युत्पत्तिप्रतिबन्धकः। एतेन विशिष्टरसजनकत्वे सति जरानिवर्त्तकत्वं रसायनत्वमिति लक्षणं सूचितम्। अत्र रसशब्देन रसकार्य्यत्वात् समानामेव धातूनां ग्रहणं अत्राद्यविशेषणसन्निवेशात् कपालरञ्जनादिषु नातिव्याप्तिः। दृद्धो न रसायनाधिकारी वक्ष्यति पूर्व्वे वयसीत्यादि।— अन्यत्राप्युक्तं जरापक्वशरीरस्य व्यर्थमेव रसायनमिति। तत् कथं जराप्रशमकत्वं रसायनमिति नैवं जराशब्देनात्र अकालपलितं कालिकस्य भाविपलितमुच्यते अतोनोक्तोदोषः। यत्तु च्यवणप्राशादौ सुदृद्धोऽभूत् पुनर्य्युवेति तत्र न दृद्धस्यापि रसायनप्रयोगात् जराप्रशमनमुक्तं तत्तपःप्रभावेनानुगृहीतस्य फलं न रसायनमात्रस्येति। सुदान्तस्त्वाह रसायनस्य सुस्थातोरविषयम्। जरा च व्याधिश्च तद्विध्वंसितुं शीलं यस्य तद्रसायनम्। जरा हि बहुत्वेन न पूर्व्वापरविरोधः अकालजराहरत्वाद्रसायनस्य। यत्तु च्यवणप्राशादौ सुदृद्धोऽभूत् पुनर्य्युवेति तत्तपःप्रभावानुगृहीतत्वेनाचिन्त्यसामर्थ्यात्। भेषजपदेन ध्यानमन्त्रादिकं व्यवच्छिनत्ति। जरेति ज्वरातिसारादिभेषजं वाजीकरणं व्यवच्छिनत्ति। व्याधीति कपालरञ्जनकृष्णीकरणादिकञ्च व्यवच्छिनत्तीति॥ १ ॥

पूर्व्वे वयसि मध्ये वा शुद्धदेहः समाचरेत् ॥ २ ॥
अविशुद्धशरीरस्य युक्तोरसायनोविधिः ।
न भाति वाससि क्लिष्टे रङ्गयोगइवार्पितः ॥ ३ ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुड़ैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिवेत् चौद्रोदकाप्लुतम् ॥
प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत् ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चापि समाः शतम् ॥ ५ ॥
पञ्चाष्टौ सप्तदश वा पिप्पलीः चौद्रसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ६ ॥

---

पूर्व्वे इत्यादि ।— पूर्व्वे इति यौवन प्रवेश एव । मध्य इति यौवनशेषे बालवृद्धौ तु रसायनाविषयौ भेषजवीर्य्यासहत्वात् जरापक्वशरीरत्वाच्च । शुद्धकाय इति वमनविरेचनाभ्यां शुद्ध-शरीरः ॥ २ ॥

अविशुद्धे तथा फलं नास्तीति मत्वाह अविशुद्धशरीरस्ये-त्यादि । सुश्रुतस्य ।—युक्तइति प्रयुक्तः । क्लिष्ट इति मलिने॥३॥

प्रथमतः हरीतकीरसायनमाह सिन्धूत्थेत्यादि ।— वर्षासु हरीतकी मा ६ सैन्धव मा २ गिलनीया । शरदि हरीतकी मा ५ शर्करा मा ४ खाद्यं शीतलजलं पेयम् । हेमन्ते हरी-तकी मा ३ शुण्ठी मा २ तप्तजलं पेयम् । शिशिरे हरीतकी मा ३ पिप्पली मा २ तप्तजलं पेयमिति ॥ ४ ॥

त्रैफलेत्यादौ ।— आयसीं पात्रीमिति कान्तादिलौहपात्रीं नवामित्यनेन निर्म्मलत्वमपि सूच्यते । कल्केनेति कर्षमितेन । अन्नपिन्ते त्विदं क्रियत इत्याङ्कर्व्वृद्धाः केचित् उदकस्थाने घृतमिति पठन्ति ॥ ५ ॥

तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्ताग्रे भोजनस्य च।
पिप्पल्यः किंशुकक्षारभाविताघृतभर्ज्जिताः॥
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा।
जेतुं कासं क्षयं श्वासं शोषं हिक्कां गलामयम्॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम्।
वैस्वर्य्यं पीनसं शोषं गुल्मं वातबलासकम्॥
जरणान्तेऽभयामेकां प्राग्भुक्ताद्द्वे विभीतके।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम्।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च॥ ७॥
मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥
आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शङ्खपुष्प्या॥ ८॥

---

पञ्चाष्टावित्यादि।— सप्तेति छेदः। संख्याव्यतिक्रमेण नागुक्तपिप्पलीनामुपयोगं सूचयतीति चक्रः। यद्यपि लौणि द्रव्याणि नात्युपयुञ्जीत पिप्पलीं क्षारं लवणमिति तथापि द्रव्यान्तरसंयुक्तानां पिप्पलीनामभ्यासेन विरुद्धः किम्वा एक-पिप्पल्यभ्यासव्यतिरेकेण उत्सर्गापवादन्यायनिषेधो ज्ञेयः रसायनगुणाश्चरकोक्तबृंहणत्वादयः॥ ६॥

तिस्र इत्यादौ।—किंशुकः पलाशः। क्षारमिति क्षारोदकम्। भावित इति सप्ताहम्। जरणान्त इति प्रातः प्राग्-भुक्तादिति भोजनादौ। मधुसर्पिर्भ्यामित्यभयादिभिस्त्रिभिरेव सम्बध्यते॥ ७॥

मण्डूकपर्ण्या इत्यादिना शङ्खपुष्प्या इत्यन्तेन चतुरोयो-

पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषोविधत्ते बालस्य शस्यस्य यथाम्बु वृष्टिः॥
धात्रीतिलान् भृङ्गरजोविमिश्रान् ये भक्षयेयुर्मनुजाः क्रमेण।
ते कृष्णकेशाविमलेन्द्रियाश्च निर्व्याधयोवर्षशतं भवेयुः॥
वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्यारसेनैव सप्तरात्राणि भावयेत्॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह भोजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः॥
मेधावी स्मृतिमांश्चैव वलिपलितवर्ज्जितः॥ ९॥
हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा।
यथेष्टाहाराचारोपि सहस्रायुर्भवेन्नरः॥
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुनात्वग्रवेगः स्यात् वलिष्ठः स्त्रीसहस्रगः॥
मन्त्रश्चायं प्रयोक्तव्यो भिषजा चाभिमन्त्रणे।
ओं नमो महाविनायकाय अमृतं रक्ष रक्ष

---

शानाच्च। समूलपुष्पया दूर्वा गुडूच्याः शङ्खपुष्प्या वा विशे-षणम्॥ ८॥

पीतेत्यादि।—वाभटस्य। अश्वगन्धायाश्चूर्णं पयसा पित्ते घृतेन वातपित्ते तैलेन वाते उष्णोदकेन वातकफ इत्याहुः। धात्रीत्यादौ।— तिलाश्च कृष्णाः प्रशस्ताः। भृङ्गरज इति निर्द्देशात् सान्तोभृङ्गरजःशब्दोभृङ्गराजवचनमुच्यते। क्रमे-णेति रसायनक्रमेण॥ ९॥

हस्तिकर्णेति।— हस्तिकर्णोहस्तिकर्ण पलाशमूलम्। ओं नम इत्यादिमन्त्रोहस्तिकर्णेत्यादियोगस्यैवाभिमन्त्रणाय। धा-त्रीत्यादौ।— कंसः चतुःषष्टिपलानि। स्वरसपरिगतमिति आमलकफलसहस्ररसेन भावितम्। भावना च एकविंशति-

मम फलसिद्धिं देहि रुद्रवचनेन स्वाहा ॥
धात्रीचूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिः समांशं
कृष्णामानीसिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ ॥
वर्षान्ते तत् समश्नन् भवति विपलितोरूपवर्णप्रभावैः
निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्य्यसत्वैरुपेतः ॥ १० ॥
गुडूच्यपामार्गविड़ङ्गशङ्खिनीवचाभयाकुष्ठशतावरी समा ।
घृतेन लीढ़ा प्रकरोति मानवं त्रिभिर्द्दिनैः श्लोकसहस्रधारणम्॥११

ब्राह्मीघृतम् ।

समूलपत्रमादाय ब्राह्मीं प्रक्षाल्य वारिणा ।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत् ॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत् ।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत् ॥
हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी ।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि तु ॥
पिप्पल्योथविड़ङ्गानि सैन्धवं शर्करा वचा ।
सर्व्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत् ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥

---

धारम् । क्षौद्रसर्पिःसमांशमिति धात्रीचूर्णापेक्षया प्रत्येकं समभागमित्यर्थः । तेन मधुघृतयोः प्रत्येकं चतुःषष्टिपलानि । मानीत्यष्टौ पलानि । सितायाः शर्करायाः अष्टौ प्रसृतानि षोड़शपलानीत्यर्थः । स्थापितं भस्मराशाविति प्रावृड़ारम्भ इति शेषः । वर्षान्ते प्रावृटकालान्ते शरदीत्यर्थः ॥ १० ॥

गुडूचीत्यादौ ।— शङ्खिनी शङ्खपुष्पी । क्वचित् वचास्थाने हयेति पठ्यते किन्तु वाभटे वचैव पठिता ॥ ११ ॥

अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत् ।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥
हन्त्यष्टादशकुष्ठानि अर्शांसि विविधानि च ।
पञ्चगुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥
वन्ध्यानाञ्चैव नारीणां नराणाञ्चाल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम् ॥ १२ ॥
कासश्वासातिसारज्वरपिड़ककटीकुष्ठकोठप्रकाराः
मूत्राघातोदरार्श:श्वयथुगलशिर:कर्णशूलाक्षिरोगाम् ।
ये चान्ये वातपित्तक्षतजकफकृताव्याधय: सन्ति
जन्तोस्तांस्तानभ्यासयोगादपनयति पय: पीतमन्ते निशाया: ।
व्यङ्गवलिपलितघ्नं पीनसवैस्वर्य्यकासशोथघ्नम् ।
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिजननञ्च ॥ १३ ॥

अथ साध्यसाधन परिमाणम् ।

नागार्ज्जुनोमुनीन्द्र: शशास यल्लोहशास्त्रमतिगहनम् ।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूम: ॥

---

ब्राह्मीघृतं स्पष्टम् ॥ १२ ॥

कासेत्यादौ पिड़क: पिड़का । पयइति दुग्धं पानीयं वा सुश्रुते प्रात: क्षीरपानस्य जलपानस्यापि दर्शितत्वात् । यथा शीतोदकं पय: क्षौद्रं सर्पिरित्येकशोद्विश: । त्रिश: समस्तमथवा प्राक्पीतं स्थापयेद्वय: । प्रागिति प्रात: । अत्र चतुर्गुणजलशृतगव्यदुग्धस्य धारोष्णस्य वात्र द्वित्रिकर्षपलादिषोड़शपलं यावच्छिद्यर्थः ॥ १३ ॥

यद्यपि सर्व्वरसायनश्रेष्ठत्वात् प्रथममेवाभ्रसारलौहाभिधानमुचितं तथापि सूचीकटाहन्यायेन रसायनान्तराण्यभिधाय बहुप्रपञ्चतया सम्प्रत्यभ्रसारलौहमाह नागार्ज्जुनइत्यादि तत्र मारणादिविधिरप्रशस्तत्वेन प्रथमं तदभिधानं

मेने मुनिः स्वतन्त्रे यः पाकं न पलपञ्चकादर्व्वाक् ।
सुबहुप्रयोगदोषादूर्द्धञ्च पलत्रयोदशकात् ॥
तत्रायसि पाचनीये पञ्चपलादौ त्रयोदशपलकान्ते ।
लौहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका ॥
मारणपुटनस्थालीपाका-स्त्रिफलैकभागसम्पाद्याः ।
त्रिफलायाभागद्वितयं ग्रहणीयं लौहपाकार्थम् ॥ १४ ॥

---

वक्तुमुचितं तथापि दुरूहप्रमेयत्वेन साध्यसाधनपरिमाणविधिर्वक्तव्यः । तत्र क्रियन्मानलौहः पक्तव्यइत्याह मेने मुनिरित्यादि । पलपञ्चकादर्व्वागित्यत्र संस्कारस्याल्पत्वाद्व्यापकतया बहुगुणत्वं नस्यादित्येव हेतुर्ज्ञेयः । ननु पञ्चपलादर्व्वागपि पक्तव्यः उक्तञ्चापि पलाष्टकादिति योगरत्नाकरेऽभिहितमित्यतआह स्वतन्त्र इति स्वतन्त्रे स्वीयशास्त्रएव नान्यत्र तेनाशक्तौ न्यूनमानमपि शास्त्रान्तरोक्तं न विरोधमावहतीति भावः । लौकसंस्कारसाधनार्थं क्वाथपरिभाषामाह तत्रायसीत्यादि । पचनीयेऽयसीति पञ्चपलादित्रयोदशपलान्तलौहे यावत्परिमाणं लौहं पक्तुं शक्यं तावत्परिमितलौहापेक्षया मिलिता त्रिगुणा त्रिफला षट्पलैरधिका ग्राह्या तेन पञ्चपले लौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलायाः पञ्चदशपलानि ध्रुवषट्पलेन सह मिलित्वा एकविंशतिपलानि भवन्ति । एवं षट्पललौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलाया अष्टादशपलानि ध्रुवषट्पलेन सह चतुर्व्विंशतिपलानि भवन्ति एवं सप्तपलादिष्वपि बोध्यम् । ननु लौहस्य तावन्मारणस्थालीपाकपुटपाकनिश्चन्तिपाकाः सन्ति तत्र कुत्र कियत् त्रिफलापरिमाणं कर्त्तव्यमित्यतोविभज्य त्रिफलापरिमाणं दर्शयति मारणपुटनेत्यादि । लौहमपेक्ष्य कृतत्रिगुणत्रिफलाद्रव्यं ध्रुवषट्पलसहितमेव त्रिभागं कृत्वा तत्र भागद्वयं प्रधाननिश्चन्तिपाकार्थमव-

सर्व्वत्राय: पुटनाद्यर्थैकांशे शरावसंख्यातम् ।
प्रतिपलमेव त्रिगुणं पाय: क्वाथार्थमादेयम् ॥ १५ ॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावैश्च ।
आद्यैकादशकान्तैरधिकं तद्वारि कर्त्तव्यम् ॥ १६ ॥

स्थाप्यं अपरैकभागेन लौहमारणस्थालीपाकपुटनानि कर्त्तव्यानीत्यर्थः ॥ १४ ॥

तदिह लौहमारणपुटनस्थालीपाकार्थंग्टहीतैकभागत्रिफलाक्वाथार्थं कियज्जलं देयमित्याह सर्व्वत्रेत्यादि ।— आदिशब्दान्मारणस्थालीपाकौ ग्राह्यौ । सर्व्वत्रेति पञ्चपलादित्रयोदशपलान्तनिखिलमाने । पुटनाद्यर्थैकांश इति पुटनमारणस्थालीपाकार्थंग्टहीतत्रिफलैकभागे प्रतिपलं शरावैरेव त्रिगुणं वारि देयमित्यर्थः । तत्र पञ्चपललौहपुटादित्रयार्थस्थापितत्रिफलैकभाग: सप्तपलो भवति तत्र जलैकविंशतिशरावा इत्यर्थः । एवं षट्पलादिलौहेऽपि त्रिफलैकभागा अष्टौ पलादय: तत्र जलस्यापि चतुर्व्विंशतिशरावादय: उन्नेया: ॥१५॥

किन्तु त्रिगुणताया अधिकमपि जलं देयं तदर्थमाह सप्तपलादावित्यादि ।— अस्यार्थः पचनीयपञ्चपलादिलौहादारभ्य त्रयोदशपलान्तलौहापेक्षया त्रैगुण्येन भवषट्पलाधिकतया फलत्रयस्यैकविंशतिचतुर्व्विंशतिपलरूपं मानं वा तस्य तृतीयभागैः पुटनादिकर्म्मत्रयार्थंस्थापितैः सप्तपलाष्टपलादिक्रमगणनया लौहत्रयोदशपलान्तेन त्रिफलाया: पञ्चदशपलानि भवन्ति तेषां क्वाथं प्रतिशरावसङ्ख्यया यत् त्रिगुणं वारि देयं तत् त्रिफलासप्तपलादारभ्य पञ्चदशपलपर्य्यन्तं क्रमेण जलशरावत्रयमारभ्य एकादशपर्य्यन्तं जलशरावैरधिकं विधेयमित्यन्वय: । तेन सप्तपले त्रिफलाद्रव्ये जलशरावत्रयमधिकं अष्टपले च शरावचतुष्टयं एवं क्रमेण त्रयोदशपलाकं

तत्राष्टमोभागः शेषः क्वाथस्य यत्नतः स्थाप्यः ।
तेन हि मारणपुटनस्थालीपाका भविष्यन्ति ॥ १७ ॥

---

ज्ञेयम् । एतद्वचनं सुष्टीकरणार्थं पत्रिका लिख्यते । लौहपल ५ मारणादिकर्म्मत्रयार्थं स्थापितत्रिफलैकभाग पल ७ पाथ श २१ अधिक श ३ मिलित्वा श २४ एवं षट्पललौहमारणादिकर्म्मत्रयार्थं स्थापितत्रिफलैकभाग पल ८ पाथ श २४ अधिक श ४ मिलित्वा श २८ सप्तपललौहमारणादिकर्म्मत्रयार्थं स्थापितत्रिफलैकभाग पल ९ पाथ श २७ अधिक श ५ मिलित्वा श ३२ अष्टपललौहे त्रिफलैकभाग पल १० पाथ श ३० अधिक श ६ मिलित्वा श ३६ । नवपललौहे त्रिफलैकभाग पल ११ पाथ श ३३ अधिक श ७ मिलित्वा श ४० दशपललौहे त्रिफलैकभाग पल १ पाथ श ३६ अधिक श ८ मिलित्वा श ४४। एकादशपललौहे त्रिफलैकभाग पल १३ पाथ श ३९ अधिक श ९ मिलित्वा श ४८। द्वादशपललौहे त्रिफलैकभाग पल १४ पाथ श ४२ अधिक श १० मिलित्वा श ५२। त्रयोदशपललौहे त्रिफलैकभाग पल १५ पाथ श ४५ अधिक श ११ मिलित्वा श ५५ ॥ १६ ॥

इदानीं एतज्जलं क्वाथ्यमानं कियदवशिष्टमित्याह तत्रे-त्यादि ।— तत्रेति त्रिफलैकभागस्य क्वाथार्थजले । तेन पञ्चपललौहे त्रिफलैकभागक्वाथार्थं जलशराव २३ शेष श ३ । एवं षट्पललौहे त्रिफलाक्वाथार्थं जल श २८ शेषं सार्द्धशरावत्रमित्यादि ज्ञेयम् । यत्नत इति ।— त्वणधान्यादिनिवारणार्थं न्यूनाधिकतापविरहार्थञ्च उक्तं हि योगरत्नाकरे ।-क्वाथेन मन्दपाकेन वह्निमान्द्यं भवेद्ध्रुवम् । क्वाथस्याधिकपाकस्य मन्दमाचक्ष्यते फलमिति । हि हेतौ मारणपुटादि सकलकर्म्म-

पाकार्थे तु त्रिफलाभागद्वितये शरावसंख्यातम्।
प्रतिपलमम्बुसमं स्यादधिकं द्वाभ्यां शरावाभ्याम्॥
तत्र चतुर्थोभागः शेषोनिपुनैः प्रयत्नतोग्राह्यः।

---

त्रयं तेन क्वाथेन कर्त्तव्यमस्ति तेन तत्र यत्नतः कर्त्तव्यमित्यर्थः। ननु एकस्मिन् दिने मारणादिकर्म्मत्रयं कर्त्तुमशक्यं यदि पुनरेकस्मिन् दिने मारणं अपरैर्द्दिनैः पुटनादिकं क्रियते तदा क्वाथस्य पर्य्युषितत्वेनाम्लत्वं स्यात् सत्यं प्रत्यहं तत्क्वाथस्य उष्णीकरणात् नाम्लता। यद्यपि तामाद्दल्पचयितं तदपि सूक्ष्मत्वात् संक्रान्ताधिकत्वाच्च न दोषमावहति एवमेव वृद्धा अपि व्यवहरन्ति। लौहशास्त्रेऽप्युक्तं पथ्याभिः कटुकाद्याभिर्मात्रिकलेपोनिहन्त्ययः सुतरां। पर्य्युषितः परिशोषाद्ग्राह्यः पटात् गलित इति। अन्यदत्तदेवस्तुत्रिफलायास्तृतीयभागमपि त्रिधा समभागेन विभज्य मारणपुटनस्थालीपाकरूपकर्म्मत्रयार्थक्वाथः प्रत्यहमेव कार्य्य इत्याह॥ १७॥

इदानीं प्रधाननिष्पत्तिपाकार्थस्यार्पितत्रिफलाभागद्वयस्य क्वाथविधिमाह पाकार्थेत्वित्यादि। पाकार्थमिति प्रधाननिष्पत्तिपाकार्थं त्रिफलाभागद्वितय इति पूर्व्वोक्तरीत्या लौहपञ्चपलादौ त्रयोदशपलान्ते क्रमेण त्रिफलायाभागद्वयं चतुर्दशपलषोडशपलाष्टादशपलादयस्त्रिंशत्पलान्ताभवन्ति तत्र त्रिफलायाः प्रतिपलं एकशरावं जलं दातव्यं किन्तु सर्व्वत्रैव शरावद्वयमधिकं प्रदातव्यं तेन त्रिफलायाश्चतुर्द्दशपले षोड़शशरावाः क्वाथार्थं देयाः। षोड़शपले अष्टादशजलशरावाइत्यादिक्रमेण बोद्धव्याः। स च क्वाथः कियदवशिष्टः स्यादित्याह तत्रेत्यादि। प्रयत्नतो ग्राह्य इत्यत्र हेतुमाह प्रयत्नइत्यादि।— चतुर्थांशशिष्टक्वाथस्य निखिलकर्म्मप्रसाधननिष्पत्तिपाकार्थत्वादित्यर्थः। स चेति निष्पत्तिपाकः। सर्व्वत्रा-

अयसः पाकार्थत्वात् स च सर्व्वस्मात् प्रधानतमः ॥
पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलान्ते ।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम् ॥ १८ ॥
पञ्चपलादिमात्रा तदभावे तदनुसारतोग्राह्यम् ।
चतुरादिकमेकान्तं शक्तावधिकं त्रयोदशकात् ॥ १९ ॥

---

इति मारणपुटनादिः । प्रधाननिष्पत्तिपाकार्थं हि लौहे यथा त्रिफलाक्वाथो दीयते तथा दुग्धमपि तत्र दुग्धं पञ्चपलादित्रयोदशपलान्तलौहेषु क्रियमाणं देयमित्याह पाकार्थमित्यादि । अत्र एकआदियेषां पादानां शरावचतुर्थांशानां ते पादद्वयत्रयादयः एकादिकाः पादाः तैरधिकं दुग्धशरावद्वयं पुटमान्तेऽश्मसारे लौहचूर्णे पञ्चपलादित्रयोदशपलान्ते यथाक्रमं पक्तव्यमित्यर्थः । तेन पञ्चपललौहे पक्तव्ये सति सपाददुग्धशरावद्वयम् । षट्पले तु पादद्वयाधिकं दुग्धशरावद्वयम् । सप्तपले पादत्रयाधिकं दुग्धशरावद्वयमित्यादिक्रमेण त्रयोदशपलपर्य्यन्तमुन्नेयमिति ॥ १८ ॥

अथ लौहस्य पञ्चपलादिमात्राकरणे यदि शक्तिर्नास्ति तदा पञ्चपलादर्व्वागपि एकपलादिचतुःपलपर्य्यन्तं लौहपाकः कर्त्तव्यः तथा यथाशक्तिसम्भवः त्रयोदशपलादुपर्य्यपि चतुर्द्दशपलादिलौहस्य पाकः कर्त्तव्य इत्यर्थः आह पञ्चपलादिरित्यादि । चतुरादिकमेकान्तमिति चतुस्त्रिद्व्येकम् । नन्वेवं सत्येकपलादिचतुःपलान्ते लौहे तथा त्रयोदशपलादूर्द्ध्वं च चतुर्द्दशपलादौ लौहे मारणादिकर्म्मार्थं तथा प्रधाननिष्पत्तिपाकार्थञ्च कीदृशं क्वाथ्यत्रिफलायामानं ग्रहणं एतत्क्वाथार्थं जलदानं वा कीदृशं स्थाप्यः शेषो वा कीदृशः प्रधाननिष्पत्तिपाकार्थं दुग्धदानं वा कीदृशं तदर्थमाह तदनुसारतोग्राह्या इति पञ्चपलादिलौहमारणाद्युक्तक्वाथादिनानुसारत इत्यर्थः ।

इदानीं तदनुसारत इतरस्य विवरणाय पञ्ची लिख्यते। तत्रै कपले लौहे मारणादिकर्म्मत्रयार्थं भुवषट्पलसहितत्रिफलायास्तृतीयभागे पलत्रयं भवति प्रतिपलञ्च जलशरावत्रयद्विकता ततस्तदनुसारात् प्रतिपलञ्च जलशरावत्रैगुण्यात् नवमजलशरावा भवन्ति। तथा सप्तपलादौ भाग इत्यनेन त्र्यादिशरावैरधिकत्वमुक्तं अतस्तदनुसारात् पञ्चपलद्व्यागपि क्रमेण पादद्वयं क्षारयेत्। तेनैकपललौहस्य मारणादिकर्म्मत्रयार्थं गृहीतत्रिफलायास्तृतीयभागे अपरोऽपि जलशराव एको भुवत्वेन देयो भवति अतः पूर्व्वोक्तनवजलशरावैर्म्मिलित्वा दशशरावा इति। तथा द्विपललौहे कर्म्मत्रयार्थं भुवषट्पलसहितत्रिफलायास्तृतीयोभागः पलचतुष्टयो भवति। प्रतिपलञ्च शरावत्रैगुण्यात् द्वादशजलशरावाः तथा सप्तपलादौ भाग इति वचनानुसारेणापरोऽपि पादद्वयाधिकजलशराव एकोभुवत्वेन देयो भवति अतो मिलित्वा सार्द्धत्रयोदशजलशरावा भवन्ति। एवं त्रिपललौहे कर्म्मत्रयार्थं भुवषट्पलसहितत्रिफलायास्तृतीयभागे पञ्चपलानि भवन्ति प्रतिपलञ्च जलशरावत्रैगुण्यात् पञ्चदशजलशरावाः। सप्तपलादौ भाग इति वचनानुसारादपरमपि जलशरावद्वयं अधिकं भुवत्वेन देयं तेन मिलित्वा सप्तदशशरावाः। चतुःपललौहेऽपि कर्म्मत्रयार्थं भुवषट्पलसहितत्रिफलायास्तृतीयभागे पलषट्कं प्रतिपलञ्च जलशरावत्रैगुण्यादष्टादशजलशरावाः। सप्तपलादौ भाग इत्यनुसारादपरमपि पादद्वयाधिकजलशरावद्वयं भुवत्वेन देयं भवति। तेन मिलित्वा जलस्य सार्द्धविंशतिशरावा भवन्ति। पञ्चपलादिलौहे यत् क्वाथादिमानं तत् पूर्व्वमेव विवृतम्। त्रयोदशपलादुपरि चतुर्द्दशपलादौ त्र्याद्येकादशकान्तैरित्यनुसारात् पूर्व्वापेक्षया शरावेणैव जलस्य वृद्धिः कर्त्तव्या। क्वाथस्याष्टमांशः शेषः एवं सर्व्वत्रैव। प्रधाननिष्पत्तिपाकार्थमपि एकपल-

कौडे च त्रिफलाया भागद्वये षट्पलानि प्रतिपलमम्बुसमं स्यादित्युक्तेश्च त्रिफलायाः क्वाथार्थं जलस्य षट्शरावाः ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा अष्टौ जलशरावाः चतुर्थभागावशेषादत्र स्थाप्यं शरावद्वयम्। पञ्चपलकौडस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च एकपले तु कौडे क्रमात् पादह्रासेन सपाददुग्धशराव एको भवति। प्रधानपाकार्थं घृतमपि द्विगुणं त्रिगुणं चतुर्गुणं कौडापेक्षया यथा प्रकृतिदोषभेदेन तेन वातप्रकृतौ घृतं कौडाच्चतुर्गुणं पित्तप्रकृतौ त्रिगुणं श्लेष्मप्रकृतौ द्विगुणमिति। एवं द्विपले कौडे। द्विपलकौडस्य प्रधानपाके त्रिफलाया भागद्वयेऽष्टौ पलानि प्रतिपलमम्बुसमं स्यादित्युक्तेश्च जलस्याष्टौ शरावाः ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा दशजलशरावाः। चतुर्थभागावशेषात् स्थाप्यं सार्द्धशरावद्वयम्।· पञ्चपलकौडस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च द्विपले तु क्रमात् पादह्रासेन दुग्धस्य सार्द्धशरावैकं भवति घृतस्य प्रकृत्याद्यपेक्षया पूर्व्ववदेव ज्ञेयम्। त्रिपलकौडस्य प्रधानपाके तु त्रिफलायादशपलानि प्रतिपलमम्बुसमं स्यादित्युक्तेश्च जलस्य दशशरावाः ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा द्वादशजलशरावाः। चतुर्थभागावशेषात् स्थाप्यं शरावत्रयम्। दुग्धस्य पादोनशरावद्वयं घृतस्य प्रकृत्याद्यपेक्षया पूर्व्ववदेव ज्ञेयम्। चतुःपलकौडस्य प्रधानपाके तु त्रिफलायाः द्वादशपलानि प्रतिपलमम्बुसमं स्यादित्युक्तेश्च जलस्य द्वादशशरावाः ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा चतुर्द्दशशरावाः। चतुर्थभागावशेषात् स्थाप्यन्तु सार्द्धशरावत्रयम्। दुग्धञ्च घृतञ्च पूर्व्ववदिति। त्रयोदशपला-

त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि ।
जातीफलजातीकोषैलाकक्कोललवङ्गानाम् ॥
सितकृष्णजीरयोरपि चूर्णान्ययसा समानि स्युः ॥ २० ॥
त्रिफलात्रिकटुविडङ्गानियता अन्ये यथाप्रकृति ॥ २१ ॥
कालायसदोषहृते जातीफलादेर्लवङ्गान्तस्य ।
क्षेपप्रमाणगुरूपः सर्व्वस्योनस्य चैकाद्यैः ॥

इुपरि चतुर्द्दशपललौहस्य प्रधानपाके स्थापितत्रिफलाया-भागद्वये पूर्व्ववदेव जलं देयं स्थाप्यञ्च चतुर्थभागम् । पूर्व्वपूर्व्वापेक्षया दुग्धस्य एकैकशरावपादवृद्धिः स्पष्टतरैव । घृतमपि प्रकृत्याद्यपेक्षया द्विगुणत्रिगुणादिकमेवेति तदनुसारत इति ग्रन्थोविवृतः ॥ १९ ॥

पक्वावतारितमात्रे लौहे प्रक्षेपार्थं चूर्णमाह त्रिफले-त्यादि कान्तक्रामकं काश्चिकासुरकं सितकृष्णेति द्वयं जीरक-विशेषणं अयसा समानीति यावल्लौहचूर्णं तावदेव मिलित्वा त्रिफलादिचूर्णमित्यर्थः ॥ २० ॥

इदानीमेतेषु त्रिफलादिषु मध्ये यदवश्यं प्रक्षेप्यं तदाह त्रिफलेत्यादि । कालायसदोषहृत इति छेदः । अन्य इति जातीफलादयः ॥ २१ ॥

उक्तत्रिफलादिसप्तकस्य नियतत्वे हेतुमाह कालायसदो-षहृत इत्यादि ।— कालायसं वज्रपाण्ड्यादिलौहएव काल-त्वश्यास्य क ... त्वेन कीर्त्यते तदुक्तं पातञ्जले — कज्जलाभाः शिरोजाले रसायनविधौ मताइति पतितदानवशिरसि जाता इत्यर्थः । उक्तं हि पातञ्जले—कफपित्तानिलप्रायादेशास्तत्र महीतले । पतिता दानवास्तत्र प्रदेशाश्चापि तादृशाः । गिरि-साराश्चतोजाता उत्तमाधममध्यमाः । कफश्चैवं शिरःस्थानं हृदयं पित्तमण्डलम् । वायोर्नाभेरधःक्षेत्रमिति देहविदोविदुः ।

कान्तक्रामकमेकं निःशेषं दोषमयहरत्ययसः।
द्विगुणत्रिगुणचतुर्गुणमाज्यं ग्राह्यं यथाप्रकृति ॥
यदि भेषजभूयस्त्वं स्तोकत्वं वा तथापि चूर्णानाम्।
अयसा साम्यं संख्याभूयोल्पत्वेन भूयोल्पा ॥ २१ ॥

---

वस्तोजाद्याधिनाशार्थं कटिजावाजीकर्मणि। शिरोजादेव-सिद्ध्यर्थमित्येव त्रिविधामता इत्यादि। अयोभवोदोषः आ-यसः स चाकारहृष्टिवशात् तस्य क्षतिकरणं प्रथमइति यावत्। यद्यपि कान्तक्रामकस्यापि लौहदोषहरणत्वेनावश्यप्रक्षेप्यत्वो-पवर्णनमिहैव युज्यते तथापि तस्यैकस्यापि निःशेषदोषहरण-त्वकरणार्थं पृथगभिधानं कान्तक्रामकमित्यादिनाऽग्रे करि-ष्यति तथा कान्तक्रामकस्यापि नियतं प्रक्षेप्यत्वमिति ज्ञेयम्। जातीफलादीनां प्राप्त्यनुरूपं प्रक्षेप्यत्वमाह जातीफलादेरि-त्यादि। प्राप्त्यनुरूपइत्यस्यार्थमाह सर्व्वस्योमस्य चैकाद्यैरिति यदुक्तं जातिफलादित्रयक्षान्तं यदा सर्व्वमेव प्राप्यते तदा सर्व्वस्यैव प्रक्षेपः यदा सर्व्वं न लभते तदा एकद्वित्यादिभिर्जा-तीफलादिद्रव्यैरूयस्यापि प्रक्षेपः। कान्तक्रामकस्यापि अव-श्यप्रक्षेपत्वमाह कान्तक्रामकमेकमित्यादि। किन्तु यदा लौहस्य निष्पत्तिपाकः कर्त्तव्यः तदा प्रथमतो घृतं देयं ततो लौहचूर्णं ततस्त्रिफलाक्काथ. ततो दुग्धं तत एकीकृत्य लौह पच्यते घृतव्यतिरेकेण च सर्व्वत्र लौहपाकानुपलम्भ इति स्थितः अतः परिमाणपूर्व्वकं घृतमाह द्विगुणेत्यादि। द्विगुणेत्यादिकञ्च लौहमपेक्ष्य यथाप्रकृतीति कफपित्तवातप्रकृतिषु यथाक्रमं द्विगुणत्व.दि बोद्धव्यमिति। द्वन्द्वप्रकृतौ च मिश्रविधिः सम-प्रकृतौ च मध्यविधिः तेन त्रिगुणमितरन्वयः। ननु त्रिफ-लादित्रयक्षान्तसमग्रभेषजप्राप्तिर्यदि भवति तदा प्रक्षेप्य चूर्णस्य भूयस्त्वं यदि समग्रं न लभ्यते तदाऽल्पीयस्त्वं अतः कथमयसा

साध्यसाधनपरिमाणविधिः ।
एवं धातवाराच्चत् कथितौषधस्य बाधेन ।
सर्व्वत्रैव विधेयस्तत्तदकथितस्यौषधस्योहः ॥ १३ ॥

साध्यमित्याह यदीत्यादि,—भूयोल्पसंख्येति सम्बन्धः भूयसी अल्पा वा संख्या प्रक्षेप्यचूर्णानां भूयस्त्वेऽल्पत्वे वा न प्रयोजकेति शेषः । तेन यदा भेषजानां समग्रेण प्राप्तौ संख्याकृत-भूयस्त्वं तदा भागक्रमेण मिलितचूर्णानां लौहचूर्णेन समत्वम् । सम्यगप्राप्तौ च संख्याकृतस्तोकत्वं स्यात् तदा भाग-वृद्ध्या मिलितचूर्णानां लौहचूर्णेन समत्वं विधेयमिति भावः । यद्यपि नानाचारैस्तेषु लौहप्रयोगेषु प्रक्षेप्यचूर्णानां लौह-समत्वं तदर्द्धमानत्वं तच्चतुर्थमानाभिहितं तथाप्यत्रतसार-लौहे प्रक्षेप्यचूर्णानां मिलित्वा लौहचूर्णसमत्वमेवेति वचना-देवावसीयते ॥ १२ ॥

इदानीमुक्तौषधमध्ये यद्यद्दोषाद्यननुरूपं तदपनीयं यत् तत्रोचितं तदपि विधेयमित्याह एवमित्यादि । पूर्व्वन्तु तत्त-द्वचनव्याख्यानाभिव्यक्तिनिमित्तं स्थाने स्थाने पत्रिकाक्रमो-लिखितः । इदानीं तत्सर्व्वमेकीकृत्य एकपलादित्रयोदशपल-पर्य्यन्तं पत्रिकाक्रमेण लिख्यते । तत्र एकपललौहे मारणा-दिकर्म्मनयार्थं मिलित्वा त्रिफला पल ३ पाथ श १ शेष० श १ पल २ तथा निष्पत्तिपाकार्थं मिलित्वा त्रिफला पल ६ पाथ श ८ शेष श २ दुग्ध श १ पल २ घृतस्य तथा प्रकृतैरव चूर्णमानन्तु स्पष्टमेव । अथ द्विपललौहे मारणादिकर्म्मनयार्थं त्रिफला मिलित्वा पल ४ पाथ श १२ पल४ शेष श १ पल ५ कर्ष २ निष्पत्तिपाकार्थं त्रिफलामिलित्वा पल ८ पाथ श १० शेष श २ पल ४ दुग्ध श १ पल ४ घृतस्य यथाप्रकृतस्यैव चूर्ण-मानन्तु स्पष्टमेव । अथ त्रिपललौहे मारणादिकर्म्मनयार्थं

मिलित्वा त्रिफला पल ५ पाथ श १७ शेष श २ पल १ नि-
म्पत्तिपाकार्थं त्रिफला पल १० पाथ श १२ शेष श ३ दुग्ध श
१ पल ६ घृतं चूर्णमानञ्च स्पष्टमेव। चतुःपललौहे आरण्या-
दिकर्मत्वयार्थं त्रिफला पल ६ पाथ श २० पल ४ शेष श २
पल ४ कर्ष २ प्रधानपाकार्थं त्रिफला मिलित्वा पल १२ पाथ
श १४ शेष श ३ पल ४ दुग्ध श २ घृतं चूर्णमानञ्च स्पष्टमेव।
पञ्चपललौहे आरण्यादिकर्मत्वयार्थं त्रिफला पल ७ पाथ श
२३ शेष श ३ प्रधानपाकार्थं त्रिफला पल १४ पाथ श १६
शेष श ४ दुग्ध श २ पल २ घृतादि स्पष्टमेव। षट्पललौहे
आरण्यादिकर्मत्वयार्थं त्रिफला पल ८ पाथ श २८ शेष श ३
पल ३ प्रधानपाकार्थं त्रिफला पल १६ पाथ श १८ शेष श
४ पल ४ दुग्ध श २ पल ४ घृतं चूर्णमानञ्च स्पष्टमेव। सप्तपल-
लौहे आरण्यादिकर्मत्वयार्थं त्रिफला पल ९ पाथ श ३२ शेष
श ४ प्रधानपाकार्थं त्रिफला पल १८ पाथ श २० शेष श ५
दुग्ध श २ पल ६ घृतं चूर्णमानञ्च स्पष्टम्। अष्टपललौहे आ-
रण्यादिकर्मत्वयार्थं त्रिफला पल १० पाथ श ३६ शेष श ४
पल ४ प्रधानपाकार्थं त्रिफला पल २० पाथ श २२ शेष श ५
पल ४ दुग्ध श ३ घृतं चूर्णमानञ्च स्पष्टम्। नवपललौहे
आरण्यादिकर्मत्वयार्थं त्रिफला पल ११ पाथ श ४० शेष श
५ प्रधानपाकार्थं त्रिफला पल २२ पाथ श २४ शेष श ६
दुग्ध श ३ पल २ घृतं चूर्णमानञ्च स्पष्टम्। दशपललौहे आ-
रण्यादिकर्मत्वयार्थं त्रिफला पल १२ पाथ श ४३ शेष श ५
पल ४ प्रधानपाकार्थं त्रिफला पल २४ पाथ श २६ शेष श ६
पल ४ दुग्ध श ३ पल ४ घृतं चूर्णमानञ्च स्पष्टम्। एकादश-
पललौहे आरण्यादिकर्मत्वयार्थं त्रिफला पल १२ पाथ श

अथ मारणविधिः ।

कान्तादिलौहमारणविधानसर्व्वस्वमुच्यते तावत् ॥ २४ ॥
यस्य कृते तल्लौहं पक्तव्यं तस्य शुभदिवसे ।
सचइङ्गारकराज्ञितनतभूभागे शिवं समभ्यर्च्य ।

४८ शेष श ६ प्रधानपाकार्थं त्रिफला पल २६ पाथ श २८ शेष श ७ दुग्ध श ४ घृतं चूर्णमानस्याष्टमम् । द्वादशपल-लौहे मारणादिकर्मतार्थं त्रिफला पल १४ पाथ श ५२ शेष श ६ पल ४ प्रधानपाकार्थं त्रिफला पल २८ पाथ श ३० शेष श ७ पल ४ दुग्ध ४ पल २ घृतं चूर्णमानस्याष्टम् । त्रयो-दशपललौहे मारणादिकर्मतार्थं त्रिफला पल १५ पाथ श ५६ शेष श ७ प्रधानपाकार्थं त्रिफला पल ३० पाथ श ३२ शेष श ८ दुग्ध श ४ पल ४ । तदेव एकादिशपोडशपलान्त-लौहस्य साध्यसाधनपरिमाणविधौ पत्रिका लिखिता एवमु-क्तरीत्या च चतुर्द्दशपलादिलौहेऽपि साध्यसाधनपरिमाणमू-ह्येयमिति । साध्यसाधनपरिमाणविधिरिति साध्यं लौहं सा-धनं त्रिफलादि तयोः परिमाणविधिरित्यर्थः ॥ २३ ॥

इदानीं लौहमारणविधिमाह कान्तादीत्यादि आदि-शब्दात् पाण्डिवज्रादयोऽपि गृह्यन्ते एषां लक्षणानि ग्रन्थ-स्यास्य चतुर्थपरिच्छेदेऽनुसन्धेयानि । लौहमारणविधानमेव सर्व्वस्वं तदधीनत्वात् पुटादिकर्म्मणां किन्तु गुप्ततमेव लौहं गुणाढ्यं तदुक्तं —सुघ्रतश्च यतो लौहमघ्रतेन समं नृणाम् । दुर्मृतं शूलविष्टम्भौ शरीरक्षितिसंशयम् । भवेदयोवधे तस्माद्-यत्नं कुर्य्याद्भिषग्वरः ॥ २४ ॥

यस्य कृत इति यस्मातुरस्य निमित्तम् । लौहमारणाय भूमिसंस्कारपूर्व्वकमिति कर्त्तव्यतामाह सचइत्यादि ।- यदा सच अङ्गारमेकीकृत्य संचूर्ण्यतेन कराज्ञिते इन्दुरिते किम

वैदिकविधिना वह्निं निधाय हुत्वाहुतीस्तत ॥ २५ ॥
यस्मात् सिध्यति सर्व्वं श्रेयस्तत्कर्म्मसिद्धये किमपि च ।
धनमनुरूपं दद्याद्विजाय सन्तोषिणे गुणिने ।
सन्तोष्य कर्म्मकारं प्रसादपूगादिदानसम्मानैः ॥ २६ ॥
आदौ तदयस्सारं निर्म्मलमेकान्ततः कुर्य्यात् ॥ २७ ॥

---

इति यावत् एतेनातितापान्मृत्तिका न गच्छति नतभूभागे मध्यनिम्नभूभागे । शिवमित्युपलक्षणं तदुक्तं—अर्च्चयित्वा विधानेन हेरम्बं गुरुभास्करौ । लोकपालान् ग्रहांश्चैव क्षेत्रपालानथौषधम् । आदित्यदेवताश्चेष्टा धन्वन्तरिः पतञ्जलिः । इत्यादयश्च सर्व्वेभ्यो नानाभक्ष्योपचारतः इति । वह्निमिति वह्न्यादिस्थानजं तदभावे दारुद्वयसंघट्टनजमग्निम् । यदाह पतञ्जलिः—दिव्यं दावं समादाय लौहकर्म्म समाचरेत् । यदि दिव्यानलाभावस्तदा घर्षणसम्भवः । आरोप्य कर्म्मशालायामग्निं यत्नेन पूजयेदिति ॥ २५ ॥

यद्यपि दृष्टादृष्टरूपेण कार्य्यचक्रेण कार्य्यं सिध्यति तथा दृष्टमप्यदृष्टवशादेव उपतिष्ठते । इत्यदृष्टस्यैव रमणीयत्वं मन्यमानमाह यस्मादित्यादि । श्रेय इत्यभिमतप्रशस्तफलं किमपीति धान्यहिरण्याद्यदानादान्यतमं यथाशक्ति दद्यादित्यर्थः ॥ २६ ॥

मारणार्थं लौहसंस्कारमाह आदावित्यादि ।— अयस्सारं लौहं निर्म्मलमिति शोधनविधिना कार्य्यं तद्यथा प्रथमं लौहं शिलादिना निर्म्मलीकृत्य पत्तनं कार्य्यं तदनु चाङ्गेरी मातुलुङ्गाम्लवेतसेनाक्तयित्वा सप्तवारं प्रत्येकेन आतपे संशोष्य ततः काञ्जिकादौ दिनद्वयं त्र्यं वा स्थाप्यं एवमम्लभावनां विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयम् । ततश्च मनःशिलावल्मीकमृत्तिकाकुठारिका-

तदनु कुठारच्छिन्नात्रिफलागिरिकर्णिकास्थिसंहारैः।
करिकर्णच्छदमूलशतावरीकेशराजाख्यैः॥

मूलचाङ्गेरीश्वेतदूर्वासैन्धवैश्च जलपिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयम्। ततश्च—पत्रनं निर्मलं कृत्वा लौहमग्नीकृतं पुनः। मूलपिष्टत्रिफलया वारिपिष्टमनोज्ञया। भावितं भावयेत्तच्च वल्लीकामलकेऽपि च। परशुच्छिन्ना चाङ्गेरी गण्डदूर्वा ससैन्धवा। अभिलिप्तं यथाप्राप्ति शोष्यं सूर्य्यातपे क्रमात्। गण्डदूर्वा श्वेतदूर्वेति नाम तदेवं भावनां विधाय तदनु भस्त्रया वह्निं ध्मापयित्वा नातितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथेषु वारत्रयं कृत्वा निर्वापनीयम्। उक्तं हि—क्षीरारनालगोमूत्रत्रिफलाक्वाथवारिणि। प्रतिद्रव्यं निषिक्तव्यं त्रिधा त्रिधा विधानत इति। निषेकमात्रा च—लौहपलं मनाक् तप्तं द्विगुणे तद्द्रवे क्षिपेत्। निषेक एषो निर्दिष्टो निषेकार्थैर्वादिभिरिति। निषेकार्थं त्रिफलाक्वाथविधानञ्च यथा—सिद्धार्थं त्रिफला लौहात् कर्त्तव्या त्रिगुणा सदा। चतुर्गुणं फलात् तोयमष्टभागावशेषितमिति। दोषविशेषे च निषेकविशेषो यथा—विशेषतः कफे तीक्ष्णैः कटुतिक्तकषायकैः। वाते तु मधुरस्निग्धैः पित्ते मधुरशीतलैः। निषेकः शस्यते नित्यं सर्व्वदोषापनायकः। तदेवमुक्तक्रमेण निषेकं विधाय रात्रिमेकां विश्राम्य लौहमारणादिषु योजयेत्। उक्तं हि—विश्राम्य रजनीमेकां ततः कर्म्मसमाचरेदिति॥ २७॥

इदानीं लौहमारणार्थं भेषजान्याह तदन्वित्यादि—तदन्विति शोधनानन्तरं किन्तु लौहमारणसमीपकाले पुनरपि स्वच्छकाञ्जिकमाले लौहस्य निषेकं कृत्वैव मारणं कर्त्तव्यम्। उक्तं हि पातञ्जले—क्वाथं पर्य्युषितं कृत्वा वह्निं दत्वा चतु-

त्रालिश्च मूलकाथीमूलप्रार्थष्णाभृङ्गराजैश्च ।
विप्ना दग्धयत् तद्‌ष्टक्रियलोहकारेण॥ २८ ॥

इंग। अपरोऽपि च दातव्यो निषेको व्यधविधौ। अम्बष्ठ-च्छारपाले च ततो व्यधमुपक्रमेत्। कुठारच्छिन्ना कुठारिका गिरिकर्णी श्वेतापराजिता अस्थिसंहारोकारश्च करिकर्णच्छ-दमूलं हस्तिकर्णपलाशमूलं काथी स्वनामख्याता। प्रारूड़ आ-वर्षाभूः पुनर्नवेति यावत्। यद्यपि एतैरेव भेषजराजैर्विप्ना सुदग्धे सति नियतमेव लोहस्य मारणं भवति तथापि द्रव्यालो-हार्द्धभागपरिमितं लाङ्गापेक्षया षोड़शांशेन परिमितं वा शो-धितस्वर्णमाक्षिकचूर्णं त्रिफलाकाथेनालोड्य तेन लौहं विप्ना तदनन्तरं उक्त कुठारच्छिन्नादिभेषजैर्लौहापेक्षया षोड़शांशेरा-विप्य ततोऽस्य ध्मापनमुपदिशन्ति। उक्तार्थे पतञ्जलिवाक्यं यथा-एतद्दग्धं विख्यातः प्रलेपोमाक्षिकेण च। माक्षिकार्द्ध-गुणाप्रोक्ता कुनटी चाम्लपेषिता। मारकद्रव्यसंयुक्तं षोड़शां-शेन ध्मायते। केचिन्माक्षिकस्यापि षोड़शांशमाहुः यथा-त्रिफला वाड़िवो हिङ्गुभवपादरजोन्वितम्। अत्र वाड़िवो हिङ्गुभवं स्वर्णमाक्षिकम्। पादाश्च षोड़शांशइति व्याख्यान-यन्ति। तथान्यत्रापि — लौहं लौहार्द्धमानेन षोड़शांशेन वा पुनः। त्रिफलाकाथपिष्टेन माक्षिकेण प्रलेपयेत्। ततो लोहाच्चतुर्थांशकुनट्या वाम्लपिष्टयेति। कुनटी मनःशिला। अत्र लोहजारणाङ्गीभूतस्वर्णमाक्षिकस्य शोधनं लक्षणञ्च लि-ख्यते।— भृङ्गे सुवर्णसंकाशो मनाक् कृष्णच्छविर्भवेत्। ‍इष्ट-हर्ण इति ख्यातो माक्षिकोत्र प्रशस्यते। एवम्बिधमाक्षिकचूर्णं क्षुद्रमारिषशालिञ्च काथमध्ये पक्तनिकार्ट स्थापयेत्। पक्त-निकास्थापितकाथे तत् स्वर्णमाक्षिकचूर्णं वस्त्रे पोट्टलिकां बद्धा

चिरजलभावितनिर्मलशालाङ्गारेण परित आच्छाद्य ।
कुशलाध्मापितभस्त्रानवरतमुक्तेन पवनेन ॥
वङ्केर्ज्वालाज्वाला बोद्धव्या जातु नैव कुञ्चिकया ।
मृन्मयशसलिलभाजा किन्तु स्वच्छाम्बुसंभृतया ॥
द्रव्यान्तरसंयोगात् स्वां शक्तिं भेषजानि मुञ्चन्ति ।
मलभूलोमत् सर्वं सर्वत्र विवर्ज्जयेत्तस्मात् ॥ २८ ॥
सन्दंशेन गृहीत्वान्तःप्रज्वालिताग्निमध्यमुपनीय ।
गलति यथायथमग्रे तथैव मृदु वर्द्धयेन्निपुणः ॥

निःक्षिप्य दोलापाकक्रमेण पचेत् । पत्तनिकाभ्यन्तरे क्वाथमध्ये पोट्टलिकाया यत् तोयवद्गलति तद्ग्राह्यं—तदुक्तम् । स्वर्णमाक्षिकचूर्णञ्च वस्त्रबद्धं विपाचयेत् । कालमारिषशालिञ्चीक्वाथे दोलाविधानतः । तदधः पतितं ग्राह्यमेवं शुध्यति माक्षिकमिति ॥ २८ ॥

इदानीं तत्पाकाय यादृशोऽङ्गारोग्राह्यस्तदाह चिरेत्यादि ।— चिरं पञ्चमासादिकं भावितं स्थापितम् । निर्मलं शस्यधान्यादिरहितात् कुशलोऽत्र छिद्रोऽनलस्य कुञ्चिका वंशशाखा कुञ्चीति ख्याता । विपक्षे दोषमाह द्रव्यान्तरेत्यादि । मृदादिसंसर्गे सति यस्मादौषधसंस्कृतभेषजानि क्षीणशक्तिकानि भवन्ति तस्मात् मृदादिकर्ज्जरितसलिलयुक्तकुञ्चिकया वङ्किज्वाला न बोद्धव्या किन्तु निर्मलजलयुक्तकुञ्चिकयैव इत्यर्थः ॥ २९ ॥

इदानीं तल्लौहं येन प्रकारेण वङ्किमध्ये प्रवेशनीयं तदाह संदंशेनेत्यादि ।— संदंशः सांड़ाशीति ख्याता । मृदु वर्द्धयेदिति क्रमशस्तल्लौहखण्डं वङ्किमध्ये प्रवेशयेदित्यर्थः ।

गलितञ्च यथा त्रिफलाक्वाथे देयं तदाह तलेत्यादि ।
पाकेन यथायथं गलति तथा तथा तलनिहितोर्द्ध्वमुखाङ्कुशेन

सतनिहितोर्द्धमुखाङ्कुशलग्नं त्रिफलाजले विनिक्षिप्य।
निर्वापयेदशेषं शेषं त्रिफलाम्बु रक्षेच्च ॥ ३० ॥
अलौहं न मृतं तत् पुनरपि पञ्चशरमुक्तमार्गेण।
यच्च मृतं तथापि तत् त्यक्तव्यमलौहमेव हि तत् ॥ ३१ ॥
तदनु घनलौहपात्रे कालायसमुद्गरेण संचूर्ण्य।

---

अतुरग्रलग्नं निहितं समुद्धृत्य सन्दंशेन पीडयित्वा यथोक्तत्रिफलाजले शनैःशनैर्निर्वापयेत्। शेषं त्रिफलाम्बु रक्षेदिति पुटपाकार्थं स्थालीपाकार्थं स्थापितत्रिफलाक्वाथभागद्वयमेव शेषशब्दवाच्यम्। उक्तार्थं पातञ्जले यथा— हस्तिकर्णसमीरेण अङ्गारास्थापितं श्रयम्। उत्तोलितं विना लौहं खनिजैः परिवर्जितम्। ततोऽङ्कुशमुखे लग्नं संदंशपीडितं यथा। उद्धृत्य त्रिफलातोये प्रक्षेप्यं शनैःशनैरिति ॥ ३० ॥

त्रिचतुर्वारमङ्गारस्थापनात् तावत् सर्वमेव लौहं म्रियते तथापि यन्न मृतं तत् किं कर्त्तव्यं तत्राह अलौहमित्यादि।— उक्तमार्गेणेति उक्तमेवाङ्गारे पादिक्रिया वर्त्तनीया तथापि यच्च मृतं तत्त्याज्यमेवेत्याह न मृतमित्यादि। तथापीति सप्तभिरङ्गारैः सप्तवारमङ्गारापीत्यर्थः। उक्तं हि—सप्तवारान् तथा लौहं पूर्ववत् पूर्वभेषजैः। ध्मात्वा ध्मात्वा समुत्थाप्य निःक्षिपेत् त्रिफलाम्भसि। एवं नाना लवणैर्लौहेन मृतस्त्याज्य एव स इति।

अमरणे हेतुमाह अलौहमित्यादि — उक्तौषधलिप्तामेकवारमातमरणाप्राप्तं हि सुलौहत्वम्। तमरणं निहन्ति भावं सुप्राप्तं लौहयाकोहितसुलोहत्वमादायैव निवर्त्ततइति भावः। मृतलौहलक्षणञ्च यथा—लौहगन्धसमाकारस्पर्श शब्दाः प्रतीयते। यदा लौहस्तदा ज्ञेयः सुमृतोवैद्यसत्तमैरिति ॥ ३१ ॥

इदानीं मारणानन्तरं प्रक्षालनञ्च तथा त्रिफलाक्काथावशिष्टस्य सूर्य्यातपे शोषणरूपो भानुपाकश्च यथा कर्त्तव्यस्त-

दत्वा बङ्गयः सलिलं प्रक्षाल्याङ्गारमुद्धृत्य ॥
तदयः केवलमग्नौ शुष्कीकृत्याथवातपे पश्चात् ।
लौहशिलायां पिंष्यादसितेऽश्मनि वा तदप्राप्तौ ॥ ३२ ॥

स्थालीपाकविधिः ।

अथ कृत्वायोभाण्डे दत्वा त्रिफलाम्बु शेषमन्यद्वा ॥ ३३ ॥

---

दाह तदन्वित्यादि । घनं दृढं छिद्राद्यभावयुक्तम् । लौहपात्र-
इति लौहोदूखलादावित्यर्थः । कालायसमुद्गरं तीक्ष्णलौह-
मुद्गरम् । एतदुभयमप्युपलक्षणं तेन दृढदृषदादिकञ्च बोध्यम् ।
संचूर्णयेत्यत्र मुद्गनिभमिति शेषः । सलिलमित्युपलक्षणं तेन
त्रिफलाक्काथोऽपि बोध्यः । शुष्कीकृत्वेति त्रिफलाक्काथेनैव स-
प्तधा सूर्य्यातपे संशोध्येत्यर्थः । तदर्थे पातञ्जले यथा-अयो-
घनेन तत् पिष्टं शिलया दृढया यथा । अयोमलसमं पिष्टं
कृत्वा मुद्गसमं पुनः । त्रिफलावारिणा धौतं विशुष्कं चूर्णितं
पुनरित्यादि । योगरत्नाकरेप्युक्तं-मृतञ्चोदूखले लौहे मुषलेनापि
ताडयेत् । संचूर्ण्य त्रिफलाम्भोभिः सप्तधा सूर्य्यभावितम् ।
एवं पुटविधौ योग्यो विज्ञेयो भिषजांवरैरित्यादि । अत्र लौ-
हप्रक्षालनार्थं भानुपाकार्थञ्च त्रिफलाक्काथविधिर्यथा योग-
रत्नाकरे-शुद्ध्यर्थं त्रिफलालौहात् कर्त्तव्या त्रिगुणा सदा ।
चतुर्गुणफलात् तोयमष्टभागावशेषितम् । एष एव विधिर्नित्यं
चालनेऽपि च शस्यतइति । तथा—भानुपाकार्थमिच्छन्ति
त्रिफलामयसा समम् । सलिलं द्विगुणं तत्र चतुर्भागावशे-
षितमिति ॥ ३२ ॥

इति मारणविधिः ।

स्थालीपाकमाह अथेत्यादि ।-- अयोभाण्डे लौहपात्र-
निर्म्मितायां शेषं त्रिफलाम्बु त्रिफलैकभागकृतक्काथस्य भात-
निर्व्वापनावशिष्टम् । अथ यदि कथमपि तद्विनष्टं स्यात् तदा

प्रथमं स्थालीपाकं दद्यादातत्‌क्षयात्तदनु।
गजकर्णपलाशब्रह्मयष्टीशतावरी भृङ्गकेशरराजरसैः॥
प्राग्वत् स्थालीपाकं कुर्य्यात् प्रत्येकमेकं वा॥ ३४॥

पुटनविधिः।

हस्तप्रमाणवदनं श्वभ्रं हस्तैकखातिसममध्यम्।
कृत्वा कटाहसदृशं तत्र करीषं तुषञ्च काष्ठञ्च॥
अन्तर्ज्ञनतरमर्द्धं शुषिरं परिपूर्य्य दहनमायोज्यम्॥ ३५॥

---

का गतिरित्याह अन्यहेति तत्प्रक्रिययैव क्वाथान्तरं कार्य्यमिति भाव.॥ ३३॥

प्रथमं स्थालीपाकं दद्यादिति प्रथमं स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेनालोड्य वह्निना पाकं विधाय त्रिफलाक्वाथ-क्षयः कर्त्तव्यः। इत्येव स्थालीविधानक्रमः। आतत्‌क्षयादिति त्रिफलाक्वाथशोषपर्य्यन्तम्। तदन्विति प्रथमं त्रिफलाक्वाथेन स्थालीपाकं विधाय अनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्व्ववत् स्थालीपाकः कार्य्यइत्याह गज-कर्णेत्यादि गजकर्णोहस्तिकर्णपलाशः। प्राग्वदित्यनेनैव याव-तीयत्रिफला क्वाथस्य स्थालीपाके मात्रा इष्यस्तयानन्तरञ्च पाकस्तथा गजकर्णादिस्वरसादावित्यर्थः। किन्तु तत्र व्या-ध्यनुरूपस्थालीपाकीयद्रव्याणामन्तरे यदि स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेणैव क्वाथजलादिकं दत्त्वा क्वाथं विधाय स्थालीपाको विधेय इति॥ ३४॥

इति स्थालीपाकविधिः।

पुटपाकविधिमाह। हस्तप्रमाणेत्यादि श्वभ्रं खातं हस्तै-कखातिसममध्यमिति हस्तैकप्रमाणं खातिः खननं यस्य सर्व्वतो हस्तैकमात्रपरिमाणमित्यर्थः। समोऽनिम्नमध्योऽस्य-

पश्चाद्धयसश्चूर्णं श्लक्ष्णं पङ्कोपमं कुर्य्यात्।
त्रिफलाम्बुभृङ्गकेशरशतावरीकन्दमाणहस्तिरसैः॥
भल्लातककरिकर्णच्छदमूलपुनर्नवास्वरसैः।
स्विन्नाथ लौहपात्रे मार्द्दे वा लौहमार्द्दपात्राभ्याम्॥

---

त्तरत्यागो यत्र समर्त्थम्। कटाहसदृशमित्यनेन वर्त्तुला-कारत्वमुक्तं तेन चतुष्कोणं न कार्य्यमित्यर्थः। तत्र मध्ये चन्तरिति मध्ये घनतरं बहुतरं निविरतरमिति यावत्। सर्व्वसुषिरं परिपूर्य्येति करीषादिभिः मध्यस्यार्द्धभागं परिपू-र्य्येत्यर्थः॥ ३५॥

केचिद्धि पङ्कोपमं कुर्य्यादित्याह त्रिफलेत्यादि। त्रिफ-लाम्बु त्रिफलाक्वाथः। भृङ्गकेशरौ भृङ्गराजकेशराजौ कन्दः सूरणः। एषां भृङ्गादीनां हस्तिरसः स्वरसः। भल्लातकस्य पुनः क्वाथ एव स च भल्लातकसत्त्वे सत्येव बोध्यः। अयश्चूर्णं त्रिफलाक्वाथादिभिः पङ्कोपमं कृत्वा किं कर्त्तव्यं तदाह स्वि-न्नेत्यादि मार्द्दे इति मृण्मयत्तिका भवपात्रे एतच्च मृत्पात्रं सर्व्वथा लौहपात्राभावे हि बोध्यं किन्तु दक्षिणराढ़ानां सम-मस्तृणे लौहसम्पुटे लौहं कृत्वा पक्वमृत्तिकाभिरालिप्य पुटपाको दीयते इति व्यवहारः। अयञ्च पक्षः साधीयान् भवति। यतो लौहसम्पुटमध्येऽधमलौहघटित सम्पुटमात्रस्यापि पुटपाकौ-षधसंसर्गमौर्णतया तदीयरजसोऽनुप्रवेशोदुर्निवार इति दृष्टे-नाच्छाद्येति।— यत्र पात्रान्तरे पङ्कोपमं लौहचूर्णमस्ति तन्मध्यमनपरतन्त्र्यमात्रस्य कटीभागे निधायेत्यर्थः। अन्ते रन्ध्रनाशिवेति पट्टिलसदृशादिभिरिति शेषः। भूयोभिरिति प्रचुरैः। इदञ्च काठादिनां पुटमात्रोपदर्शनार्थं चतोन पौनरु-क्तम्। भूयानिरित्यनेन गर्त्तपूरणं कृत्वा तदुपर्य्यपि करीषस-मुच्चयः कार्य्य इति दर्शयति। अहर्निशमित्यनेन दिवसे रात्रौ

तुल्याभ्यां ष्ठेनाच्छाद्यान्ते रन्ध्रमालिप्य ।
तत्पुटपात्रं यत्न श्वभ्रज्वलने निधाय भूयोभिः॥
काष्ठकरीषतुषैस्तत् संच्छाद्याहर्निशं दहेत् प्रायः॥ २८॥
एवं नवभिरमीभिर्भेषजराजैः पचेत्तु पुटपाकम्।
प्रत्येकमेकमेभिर्मिलितैर्वा त्रिचतुरान् वारान्॥

---

वा पुटो देय इति दर्शयति। अन्येतु पुटपाकस्याष्ट प्रहरव्याप-कार्थमहर्निशमिति वचनमाहुः। तन्न पुटपाकस्य चतुःप्रहर-सम्पाद्यत्वात् उक्तं हि पतञ्जलौ—चतुर्भिः प्रहरैर्ज्ञेयः पुटपाक-श्चयोवुधैः। तथायोगरत्नाकरसमुच्चयेऽपि चतुर्भिःप्रहरैरेव पुट-पाकः प्रकीर्त्तितः। पुटपाकस्य पादूर्द्ध्वं स्थितो भवति भस्मसात्। अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यतः। कुण्डस्थोभस्मता तस्य चाकृष्टश्च सुशीतलः। समाकृष्टस्य तत्रस्य गुणश्चाग्निः प्रजायते इति तत्र संक्षेपात् पुटपाकपरिपाटी लिख्यते। त्रि-फलाक्काथादिभिः पङ्कोपमं लौहं विधाय संपुटाकृति लौहपा-त्रस्थं कृत्वा वस्त्रादिभिरवगुण्ठ्य पट्टितवस्त्रवर्त्तिकया पात्र-योरवकाशमालिप्य हस्तमात्र परिमितसमतलभूगर्त्ते करीष-तुषैः शुष्कगोमयमात्रेण वा खातस्यार्द्धं प्रपूर्य्य तत्र तल्लौहस-म्पुटं निधाय वह्निं नियोज्य तदुपरि अपरकरीषादिभिः शु-ष्कगोमयमात्रेण वा श्वभ्रं परिपूरयेत् एवं चतुर्भिः प्रहरैरेव पुटो देयः शीतीभूतमाकृष्टव्यम्॥ २८॥

इदानीं उक्तैस्त्रिफलादिभिः पुनर्नवा स्वरसान्तैः प्रत्येकं मिलित्वा वा पुटो देय इत्याह एवमित्यादि।— नवभिरिति इह त्रिफला एकत्वेनैव गणनीया तेन न संख्यातिरेकः त्रि-फलेतरनेन त्रिफलादिगणमिच्छन्ति केचित् तद्यथा—त्रिफ-लामिरुता दण्डीत्रिकटुतालमूलिकाः। इक्षुदारव्य इक्षीर इ-पपत्रकचित्रकाः शृङ्गबेरविडङ्गौ च अङ्गभल्लातकौषधम्।

प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव तत् ।
तादृग्घि दृश्यदि न पिंष्यात् विगतद्रजसा तु युज्यते यत्र ॥
तद्वयचूर्णं पिष्टं दृष्टं घनसूक्ष्मवाससि च न्यस्तम् ।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम् ॥

दाड़िमस्य च पत्राणि शतपुष्पो पुनर्नवा । कुठारच्छिन्नको कन्दः तन्त्रोभिकस्य पर्णिका । हस्तिकर्णपलाशश्च कुलिशः शेयराजकः । माषः खण्डितकर्णश्च गोजिह्वा कोकमारकः । गिरिसन्तानकः प्रोक्तस्त्रिफलादिरयं गणः । सामान्यपुटपाकार्थमेतानिच्छन्ति सुवय इति । दोषभेदे तु गणविशेषा विस्तारभयान्न लिखिताः । ते च लौहप्रदीपे प्रथमपरिच्छेदस्यान्तेऽनुसन्धेया इति । किञ्च यस्मिन् व्याधौ ये ये योगाश्चितास्तस्मिन् व्याधौ तत्तत् क्वाथैरपि पुटोदेयः । उक्तं हि ये ये यत्र गदे योगास्तेषां तेषाञ्च वारिणा । विधिनाभ्ययतेनैव पुटो रोगे च सम्मत इति । विधिनेति साध्यसाधनपरिमाणोक्तपुटपाकार्थत्रिफलाक्वाथविधिना अथवा यत्र त्रिफलाव्यतिरिक्तक्वाथ्यद्रव्यान्तराण्यनुक्तमानानि सन्ति देयजलमानं शेषजलमानञ्च नोपात्तं तत्र योगरत्नाकरोक्तव्यवस्थैवानुसर्त्तव्या । यदुक्तं क्वाथविधौ तत्रैव अन्यानि यानि द्रव्याणि योक्तव्यानि पुटादिषु । तानि लौहसमान्येव जलं प्रागेव कीर्त्तितम् । लभ्यते स्वरसोयेषां तेषां क्वाथन्तु नेष्यते । त्रिफलाव्यतिरिक्तेन मतमेतत् पतञ्जलेरिति । जलं प्रागेव कीर्त्तितमिति मृदौ क्वाथार्थं चतुर्गुणं जलं देयं स्थाप्यश्चतुर्थोभागः । मध्यद्रव्येऽष्टगुणं जलं देयं स्थाप्यश्चाष्टमोभागः । कठोरद्रव्येत्र षोड़शगुणं जलं देयं स्थाप्यश्च षोड़शभागइति । ननु पुटेन किमत्र क्रियते उच्यते दोषनाशगुणोदय इति । यदुक्तं पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः । म्रियते पुटाल्लौहः पुटांशस्मात्

पुटने स्यात्तोपाकेऽधिकृतपुरुषे स्वभावबगविगमात्।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि ॥ ३७ ॥

अमृतसारः।

अभ्यहाक ब्रैविधिभिर्लोहकुर्याग्रीयबुद्धिभिरवद्यम्।

---

समाचरेत्। यथा यथा प्रदीयन्ते पुटाः सुबहवो यदि। तथा तथाभिवर्द्धन्ते गुणा एव सहस्रशः। तावल्लोहं पुटेद्धीरो यावत्सूर्यांशतं जले। निस्तरेत् लघुत्वेन समुत्तरति हंसवत्। तावच्च चूर्णयेदेनं यावत् कज्जलसन्निभम्। करोति निश्चिते नेत्रे. नैव पीड़ां समागपीति। पुटानां कर्म्मभेदेन संख्याभेदो यथा शतादिस्तु सहस्रान्तः पुटो देयोरसायने। इत्यादिशतपर्य्यन्तो गदे पुटविधिर्मतः। वाजिकर्म्मणि विज्ञेयः पुटः पञ्चशताधिकः। इत्योत्तरशतान्तस्तु पुटः पुटविचक्षणैः। यदा तु चूर्णितमात्रे लौहे पुटादेयास्तदा एतावत् भूयःसंख्यका अपि पुटा दीयन्ते। यदा तु प्रतिपुटान्ते पेषणं वस्त्रपूतञ्च तदा सप्ताष्टावेव विशिष्टफलदा भवन्तीत्यपदिशन्ति वृद्धाः। प्रतिपुटं पेषणमाह प्रतीति एतेन पेषणावश्यमावस्त्रपूतत्वाभ्यां अल्पीभूतपुटार्थैतत्तभेषजनिरासोऽपदेयभेषजद्रवसंस्काराधनञ्चेति भावः। कोमलाग्निनाञ्च पेषणं न कार्य्यमित्याह तावदीतयादि।— एतेन निर्मलत्वेऽपि पेषणं कार्य्यमितिभावः। पिष्टञ्च वस्त्रपूतं कार्य्यमित्याह तदय इत्यादि घनं निविड़ं सूक्ष्मञ्च यद्वासः तत्र इष्टवंत्र पूतमित्यर्थः। इदानीमातुरस्य प्रकृत्यादिकं निरूप्य उक्तभेषजेषु यदनुचितं तस्यापकर्षः कार्य्यः। अनुक्तयापुचितस्यादानं कार्य्यमित्याह पुटनइत्यादि अधिकृतेति अधिकृतपुरुषचिकित्स्यत्वेन प्राप्तइत्यर्थः ॥ ३७ ॥

इति पुटपाकविधिः।

लौहस्य पाकमधुना नागार्जुनशिष्टमभिदध्मः ॥ ३८ ॥
लोहारकूटताम्रकटाहे दृढमृण्मये प्रथमस्य शिवम्।
तद्वः पचेदचपलः काष्ठेऽनेन वह्निना मृदुना ॥ ३९ ॥
निक्षिप्य त्रिफलाजलमुदितं यत्तद्घृतस्य दुग्धस्य।
संचाल्य लौहमय्या दर्व्या लग्नं समुत्पाट्य ॥ ४० ॥
मृदुमध्यखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम्।
पित्तसमीरणश्लेष्मप्रकृतीनां यथाक्रमस्तु समः ॥

इदानीं लौहस्य प्रधाननिष्पत्तिपाकमाह अभ्यहेत्यादि। अभ्यस्तकर्मविधिभिः दृष्टकृतलौहपाकैः। बालकुशाग्रमिति तीक्ष्णां सूक्ष्माञ्च येन कुशाग्रमिव तीक्ष्णा सूक्ष्मा च बुद्धिर्येषां दुरूहस्यार्थस्य तीक्ष्णसूक्ष्मबुद्धिग्राह्यत्वात् तैरप्यवश्यं ज्ञातुमशक्यम्। नागार्जुनशिष्टं नागार्जुनेन कथितम्। लौहपाकारम्भोऽपि मङ्गलं कार्य्यम्। उक्तं हि पातञ्जले—मातृकां पूजयेत् सर्व्वां नायिकाञ्च विनायकम्। अभ्यर्च्य स्वस्त्ययनं कुर्य्यात् सदाहितमनाः सुधीः। पश्च एव भवेदेष त्रिवर्गफलदो नृणामिति॥३८॥

लौहपाकार्थं पात्रमाह लोहेत्यादि आरकूटः पित्तलम्। काष्ठेऽनेनेति काष्ठपदं तृणतुषादिव्युदासार्थं वह्निनेत्यत्रोव-ह्निना उक्तं हि — मृदुनाधोऽङ्गतापेन पक्वमयधानत इति ॥ ३९ ॥

स्थापितत्रिफलाभागद्वयकृतक्वाथादिप्रक्षेपार्थमाह निःक्षिप्येत्यादि उदितमित्युक्तपरिमाणम्। घृतादिदानक्रमस्तु भाजनाङ्कः यथा घृतेन लौहमालोड्य चूर्णेण समनन्तरम्। ततः क्वाथेन संयोज्य मन्देऽग्नौ शनकैः पचेत्। ततः सञ्चालयेल्लौहं लौहदर्व्यातिदीर्घयेति ॥ ४० ॥

इदानीं पित्तवातकफप्रकृतिषु क्रमात् पाकत्रयमाह मृदित्यादि। मध्यमपाको वातप्रकृतौ हित एव किन्तु प्रकृता-

अभ्यक्तदर्व्वि लोहं सुखदुःखस्खलनयोगि मृदुमधरम्।
उज्झितदर्व्वि खरं परिभाषन्ते केचिदाचार्य्याः॥
अन्ये विहीनदर्व्वी प्रलेपमाखूत्कराकृतिं ब्रुवते।
मृदुमधरमर्द्धचूर्णं सिकतापुञ्जोपमन्तु खरम्॥ ४१॥

---

न्तरेऽपि याञ्च इत्याह मध्यमन्तु सम इति। सर्व्वप्रकृतिसेव्यत्वेन सर्व्वास्वेव प्रकृतिषु उचितइत्यर्थः। अमोघोऽप्याह-दर्व्वीमाश्रियते यन्तु तञ्च स्खलनवानवा। खरपाकं विजानीयात् पित्ते तु निहितं सदा। सितापुञ्जोपमं यत्तु मूषिकोत्कारसन्निभम्। तद्वयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितम्। एकैकं गुणयोगित्वाञ्च तमिच्छन्ति तद्विदः। सर्व्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितमिति। एकीयमते मृदुमध्यखरपाकानां क्रमाल्लक्षणमाह अभ्यक्तेत्यादि। अभ्यक्ता घनपङ्कवत् संश्लिष्टा दर्व्वी येन ईदृशं खाद्यं मर्द्दिति मृदुपाकं ब्रुवते अभ्यक्तदर्व्वीत्यपि पाकः तथा सुखदुःखस्खलनयोगी कदाचित् दर्व्वीं त्यजति कदाचित् न त्यजति इत्यर्थः। एतादृशं यल्लौहं तन्मध्यममिति मध्यमपाकं ब्रुवते। तथा उज्झितदर्व्वीति यल्लौहं कदाचिदपि दर्व्वेयाः संत्यज्यते। तत् खरपाकं ब्रुवते इति। तथा अन्यतममतमाह अन्य इत्यादि।- विशेषेण विहीनस्त्यक्तोदर्व्वीप्रलेपो येन ईदृशं तथा आखूत्कराकृति इन्दुरमृत्तिकासदृशञ्च यल्लौहं तन्मृद्विति मृदुपाकं ब्रुवते। यथार्द्धचूर्णलौहं मध्यमिति मध्यपाकं ब्रुवते अर्द्धचूर्णमिति अर्द्धं चूर्णं अपरमर्द्धञ्च आखूत्कराकारमित्यर्थः। तथा सिकतापुञ्जोपमं वालुकाराशिसदृशं यल्लौहं चक्षुषा दृश्यते न तु स्पर्शेन तत् खरपाकं ब्रुवते। धातञ्जले तु स्पर्शादिनापि पाकज्ञानमुक्तं—तावल्लौहं पचेद्वैद्यो यावद्धस्तेन पीड़ितम्। सलुद्रं जायते व्यक्तं न निःसरति सन्धिभिः। अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम्। तदा सिद्धं विजानी-

त्रिविधोपि पाक ईदृक् सर्व्वेषां गुणकृदेव न तु विफलः ।
प्रकृतिविशेषे सूक्ष्मो गुणदोषौ जनयतीतरल्पम् ॥
विज्ञाय पाकमेवं द्रागवतार्य्य क्षितौ क्षणान् कियतः ।
विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम् ॥ ४२ ॥
यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्णत्वे ।
चूर्णीकृतमनुरूपं क्षिपेत्तथा न यदि तल्लाभः ॥

---

याक्षौषं लौहविशारदः । वर्त्तितोवर्त्तितोऽत्तिस्वरूपत्वं व्रजे-दिति । ताभ्यामेव शनैर्दृष्टं सिद्धं विद्यात्त्रिफिल्यकः । मन्द-माक्र यथा लौहमलव्याधिललक्षणम् । अतिपाकेन तज्ज्ञेयं स्वरसुच्छिन्नलक्षणमिति । लौहमारणेऽप्याह—अञ्जनाभं घनं स्निग्धं श्यामलमथोद्धरेत् । भल्लिशमन्यसि क्षिप्तं सम्यक् पाकस्य लक्षणमिति ॥ ४१ ॥

त्रिविधोऽप्ययं पाको न विफलमित्याह त्रिविध इत्यादि ।—लौहपाकानन्तरं त्रिफलादिचूर्णप्रक्षेपमाह विज्ञायेत्यादि ।—द्राक् शीघ्रं क्षितौ गाकाशे कियत्क्षणान् विश्राम्येत्यनेन स-र्व्वेषा निष्पत्तिर्न प्रतिपद्यते किन्तार्थं मनाक् तप्तत्वं यदाह नतञ्ज्ञिः अवतार्य्य मनाक् तप्त इति । इति कर्त्तव्यताविष योगरत्नाकरसमुच्चयोक्तानुसर्त्तव्या । अनुक्तं तत्रैव -- अवतार्य्य ततो दर्व्या परिघट्ट्य पुनः पुनः । यदा पाकस्वतो भूतोष्मिः-क्षिपेदौषधं तदा । स्तोकं स्तोकं न दातव्यं परिघट्ट्य निरन्तर-मिति ॥ ४२ ॥

लाभे सति सौगन्ध्यार्थं कान्तलौहजन्तीयदोषहरणार्थञ्च क-र्पूरप्रक्षेपमाह यदीत्यादि ।-- विगलित इति अपगते । अनु-रूप इत्यनेन यावतानुत्कटगन्धस्त्रादूपकल्पोभवति तावन्मान-मित्यर्थः । नवा न यदि तल्लाभ इति यदि कर्पूरलाभो न स्यात् तदा नवा क्षिपेदित्यन्वयः । पक्वलौहं दिनान्तरे वार-

पात्रं ततः प्रसारं सुचिरघृतस्थितप्रभाविरूक्षत्वे ।
गाढ़ाश्मादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम् ॥ ४२ ॥
यदि तु परिस्रुतिहेतोर्घृतमीषेताधिकं ततोऽभ्यधिकम् ।
भाण्डे निधाय रक्षेद्राधुरप्रयोगो ह्यनेन महान् ॥
अयसि विरूक्षीभूते स्नेहस्त्रिफलाघृतेन सम्पाद्यः ।
एतत्ततो गुणोत्तरमितरथामुना स्नेहनीयं तत् ॥

---

त्वचमिति च शृङ्गं पेटव्यम् । उक्तं हि योगरत्नाकरे—पिष्टाश्म रजनीमेषां पेटकः शीतलीकृतः । शिला शिलातले चूर्णं शिलापुत्रेण ताडयेदिति । अथ सिद्धस्य लौहस्य स्थापनार्थं पात्रमाह पात्रमित्यादि सुचिरकालं घृतस्थित्या प्रभाविरूक्षत्वं यस्य तादृशैर्भ्यस्तादिनं व्याप्य घृतभावितं यत् पात्रं तस्मिन्नित्यर्थः । गाढ़ाश्मादिभाण्डं दधिदुग्धादिभावितं पात्रं लौहभाण्डाभाव इति कान्तादिलौहपात्राभावे तदुक्तं — कान्तादिलौहभाण्डे तु तद्वत् ताम्रमये शुभे । चिराज्यभाविते मार्दे लौहताम्राद्यसम्भव इति ॥ ४२ ॥

इदानीमयःपाकार्थं दत्तं घृतमधिकं यद्युपलभ्यते तदा तदाज्यभावितलौहरूक्षत्वनिवृत्त्यर्थं पात्रान्तरे स्थाप्यमित्याह यदित्यादि ।- घृतस्याधिक्यमेव कथं ज्ञातव्यमित्याह परिस्रुतिहेतोरिति परिस्रुतिः पात्रादुच्छलितत्वम् इत्येव उपलभेत । किमर्थं तद्घृतं रक्षणीयमित्याह भाण्डप्रयोग इत्यादि हि यतोऽनेन लौहपात्रादुच्छलितघृतेन महानुपयोगो महत्प्रयोजनं भावि वर्त्तते तच्च रूक्षीभूतलौहस्नेहनादिरूपं उक्तं हि—भवेद्यदि कथञ्चिल्लौहे स्नेहनादधिकं हविः । तदन्यत् पात्रेऽपि तत् स्थाप्यं स्नेहनार्थं विरूक्षिते । अथवा मर्द्दनं लौहे यन्मधुसर्पिषोच्यते । तदनेनैव कर्त्तव्यमिति केचिद्व्यवस्थिताः । तारं पुन-

अतः परं त्रिफलाकल्कैर्भवत्यमयसोऽमुनैव यंसन्ति ।
केवलमपीदमसितं जनयत्ययसो गुणान् कियतः ॥ ४४ ॥
अथवा वक्ष्यमाणविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय ।
लौहचतुर्थांशसमं द्विगुणं वा पञ्चगुणभागम् ॥
प्रक्षिप्यायः प्राग्वत् पचेदुभाभ्यां भवेद्यो यावत् ।

---

लौहपाकोच्छलितं घृतं न लभ्यते तदा त्रिफलाक्वाथकल्काभ्यामन्यद्घृतं पक्त्वा तल्लौहस्य सेचनं कार्यमित्याह अथसीत्यादि । किन्तु त्रिफलाघृतात् लौहपाकोच्छलितं घृतमेवोत्कृष्टगुणमित्याह एतदित्यादि । एतदिति लौहपाकोच्छलितं घृतं तत इति त्रिफलाघृतात् गुणोत्तरमुत्कृष्टगुणमिति । अमुना घृतेन तदयः सेचनीयमिति । तस्यैव घृतस्य प्रयोजनान्तरमाह अतन्त्रेत्यादि । अमुनैवेति लौहपाकोच्छलितघृतेनेत्यर्थः लौहोच्छलितघृतस्योत्कृष्टगुणत्वमप्याह केवलमित्यादि केवलं लौहपाकोच्छलितघृतम् । जनयत्ययसो गुणान् कियत इति लौहसम्बन्धेन लौहगुणानुविधानादिति भावः ॥ ४४ ॥

इदानीं पित्तवृद्धिं प्रति अस्यैव लौहे चतुर्थांशसमादिनान्तोऽभ्रकप्रवेशेन लौहपाकं वक्तुं विधिमाह अथवेत्यादि वक्ष्यमाणविधिनेति कृष्णाभ्रकमभेकवपुरित्यादिना ग्रन्थेन योऽभ्रकसंस्कारस्य विधिरभिहितः तत्कथनेन विधिना संस्कृतमभ्रकचूर्णं निश्चन्द्रीकृतमादाय अयो लौहचूर्णं प्रक्षिप्य पचेदिति । कियन्मात्रमभ्रकचूर्णं ग्राह्यमिति जिज्ञासायामभ्रस्यैव भागकल्पनामाह लौहचतुर्थेत्यादि । लौहचूर्णमपेक्ष्य निश्चन्द्रीकृताभ्रकचूर्णस्य चतुर्थो भागः पाक्षिक इत्यर्थः । तथा पञ्चमीयैकपक्षान्तरे लौहचूर्णस्य द्वयन्तु अभ्रस्य पुनरेको भागः तेन लौहस्य भागद्वयं अभ्रस्य तदर्धमेको भाग इति अभ्रस्या-

तावन्मानानुसृतैः सत्रिफलादिद्रव्यपरिमाणम् ॥
इदमप्यायकमिदमतिपित्तनुदिदमेव कान्तिबलजननम्।
सम्भाति लटद्गुडौ परमधिकाधिकमात्रया विहितम् ॥ ४५ ॥

इति पाकविधिः।

---

द्विभागत्वम्। तथा एकोभागोलौहस्यापर एकोभागोऽभ्रस्येति लौहसमत्वमभ्रस्येति। एवमेकोभागोलौहस्य द्वयन्तु अभ्रस्येति द्विगुणत्वम्। एकमेकोभागोलौहस्याभ्रस्य भागत्रयं अभ्रस्येति त्रिगुणत्वम्। तथा लौहस्यैकोभागः भागचतुष्टयन्तु अभ्रस्य तथा एकोभागोलौहस्य पञ्चभागस्तु अभ्रस्येति ज्ञेयम्। एवं क्रमेण लौहाभ्रकाभ्यां मिलित्वा एकपलादित्रयोदशपलान्त-मानव्यवस्थया पाकः कार्य्य इत्याह प्राग्वदित्यादि एवञ्च सत्य-भ्रकप्रवेशेन प्रधाननिश्चित्तिपाकार्थं त्रिफलाकाथदुग्धघृतपञ्च-पञ्चचूर्णपरिमाणं लौहद्रव्यमिति निर्णयार्थमाह सभाभ्यां भवे-दित्यादि अयमर्थः सभाभ्यां लौहाभ्रकाभ्यां मिलित्वा याव-द्गलोभवेत् तावदेव लौहमानं परिकल्प्य तन्मानानुसारेण त्रिफलादिमानं कल्पनीयम्। पूर्व्वं केवललौहपाके त्रिफला-दीनां यावन्मानमुक्तं इदानीं मिलितलौहाभ्रकेऽपि तावदेवे-त्यर्थः। अतएव लौहरसाभ्रकयोगमपेक्ष्य योगरत्नाकरेऽप्य-भिहितम् :— यावल्लौहरजस्तस्मात् भवेद्गुन्न पारदः। तद-र्द्धेन चन्द्रं श्रोक्तं अभ्रं तत् पतञ्जलेः। मानेन त्रितयस्यास्य नित्यं ग्राह्यं कल्पनमिति। ननु किमर्थं पुनरुत्तरोत्तरमधिकाधिक-मात्रया लौहे विहितमभ्रकमित्यत आह इदमित्यादि इदं अत्रांशे अधिकाधिकमात्रया समुपयुक्तं वह्निविना अ-प्यायकत्वादिगुणविशिष्टं भवतीत्यर्थः। अप्यायकरणं अक्षतसि-क्तमिव पुरुषं तत्क्षणं करोतीत्यर्थः। सम्भाति लटद्गुधाविति लटद्गुडौ पुरुषस्य बाधां न जनयत इत्यर्थः किम्वा आहार-

अथ शुद्धाभ्रकविधिः।

कृष्णाभ्रमभेकवपुर्वज्राख्यञ्चैकपत्रकं कृत्वा।
काष्ठमयोदूखलके चूर्णं मुषलेन कुर्व्वीत॥
भूयो दृषदि च पिष्टं वासः सूक्ष्माम्बरावनतगलितम्।
मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत्त्रिदिनम्॥
अत्र तद्रसादथ पिण्याकैर्मन्तकधान्यभक्तस्य।

---

जातमर्धिकस्थमखिलं परि...तेत्र एषा बुभुक्षा च न पुरुषमरणं करोतीत्यर्थः॥ ४५॥

इति पाकविधिः।

अक्रव्यविधिसंस्कृतकृष्णाभ्रचूर्णमित्युक्तं अतस्तामेवाभ्रकशुद्धिमाह कृष्णाभ्रमित्यादि।— अभेकवपुरिति भेकस्य वपुः हरितपीतादिवर्णं भवति तेन यदधिकं वर्णेन भेकस्य वपुरिव एकदेशेऽपि न भवति तदेव च वज्राख्यं यस्य प्रसिद्धिः तदुक्तं योगरत्नाकरे — अप्रशस्तं कठोराङ्गं गुरुकज्जलसन्निभम्। यत्र शब्दायते वह्नौ नैवोच्छूनं भवेदपि। सदाकरसमुद्भूतं वज्रेति प्रथमं घनमिति। तदभ्रकं नखादिभिरेकपत्रं कार्यं भूयः पुनः दृषदि शिलायां पिष्टं चूर्णीकृतं घनतरवाससा छानयित्वाऽधो यद्गलितं तद्ग्राह्यम्। मण्डूकपर्णी थानकुनीति ख्याता तद्रसादिति मण्डूकपर्णीस्वरसात्। अत्रोदेति चोदोऽत्र शालिभक्तसिक्थकं अत्रोऽस्य तद्दिवस्थात्। पेषणानन्तरं यत् कर्त्तव्यं तदाह मण्डूकपर्णिकाया इत्यादि।— पूर्वैरमेनेति यत्रैव मण्डूकपर्णीरसे दिनत्रयं स्थापितमासीत् तेनैव रसेन विलोड्य मोदकाकारं कुर्य्यात् मोदयतीति मोदनमिति मोदकशब्दोऽपि मोदकार्थे द्रष्टव्यः। क्वचित्तु मोदकमिति पाठः। स च तत्तदाकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा शुष्कीकुर्य्यादित्यप-

अघोरात्तरक्ताभ्रस्वच्छजलेन प्रयत्नेन ॥
मण्डूकपर्णिकायाः पूर्व्वरसेनैव मोदनं कुर्य्यात् ॥ ४६ ॥
स्थालीपाकं पुटनं चाद्यैरपि भृङ्गराजाद्यैः ॥ ४७ ॥
ताड़ादिपत्त्रमध्ये कृत्वा पिण्डं निधाय भस्त्राग्नौ।
तावद्दहेन्न यावन्नीलोग्निर्दृश्यते सुचिरम् ॥

देया बोद्धव्यः। अथ तस्य कथोवनप्रकारः अघोराचार्य्यमतानुसारेण लिखद्रुम्। तत्र मण्डूकपर्णीरसेन यद्यपि पुनः मोदककरणं नास्ति तथापि षट्कर्म्मणा प्रतिसंस्कृतत्वोपदेशादिदं लिखितमिति बोध्यम् ॥ ४६ ॥

तदनु चास्य अभ्रस्य चूर्णीकृतस्य स्थालीपाकपुटपाके कर्त्तव्ये तदर्थं द्रव्यानाह स्थालीपाकमित्यादि। आद्यैर्भृङ्गराजाद्यैरिति लौहपुटनविधौ भृङ्गराजकेशराजशतावरीकन्दमानादिरसैरित्यर्थः। आद्यैरित्यत्र अन्यैरपि पाठः। किन्तु पूर्वपाठ एव टीकाकारसम्मत ॥ ४७ ॥

एवं पुटादिशोधितस्याभ्रस्य वह्नौ ध्मापनं कार्य्यं ततस्तद्विधिमाह ताड़ादिपत्त्रेत्यादि ताड़ा स्वनामख्याता आदिशब्दात् केतकादिपत्त्रं बोध्यम्। किन्त्विदानीं ताड़ादिपत्त्रपिहितस्याभ्रस्य ध्मापनं व्यवहरन्ति। पिण्डीकरणञ्च भृङ्गराजादिद्रवालोड़नाद्‌विगन्तव्यम्।

दुग्ध प्रक्षाल्येति दुग्धनिर्व्वापितोत्थापिताभ्रकसंलग्नं यद्दुग्धम्। यद्यपीदानीं ताड़ादिपत्त्रपिहितस्य ध्मापनमभ्रस्य न व्यवहरन्ति किन्तु पुटैरेवास्य निश्चन्द्रकं क्रियते तथाप्यस्मात् बहुधा कृतत्वात् आसम्यक् निश्चन्द्रकत्वमनेनास्य भवत्येव ध्मापितं यतोऽभ्रस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति तच्च येन केनापि भेषजेन भवतु।

निर्व्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु ।
पिष्ट्वा दृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रिकं कुर्य्यात् ॥ ४८ ॥

भक्षणविधिः ।

नानाविधरुक्शान्त्यै पुष्ट्यै कान्त्यै श्रियं समभ्यर्च्य ।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम् ॥

---

अपरापरेऽभ्रकमारणप्रकारा नानाचार्य्योक्ताः सन्ति ते च योगरत्नाकरसमुच्चयादधिगन्तव्याः । तत्र चक्रिदत्तमतैकं यथा ।– आम्रभल्लोदवैः । पिष्टमभ्रकं तत्र संस्थितम् । वज्र-मानात्रिसंहारखण्डकर्णरसैरथ । इन्द्रदारकपिण्डेन काकमा-रिषजेन च । क्षीरदृष्टतीक्ष्णकाण्डामेयराजजैः । पेषणं भा-वनं कुर्य्यात् पुटपाकमनेकधा । यावन्निश्चन्द्रत्वं स्यात्ततो मो-चरसेन च । काकमारिषजेनापि स्थालीपाकं प्रदापयेत् । यावद्वर्त्तत्वमायाति शुद्धिरेव विशायसः । कत दर्वीरं श्वेतपु-नर्नवा लक्षणा स्वनामख्याता मोचा रम्भा व्यक्तमन्यत् कि-न्त्वयं वृद्धवैद्यैः प्रायः क्रियते ॥ ४८ ॥

दूत्यभ्रकविधिः ।

इदानीं निष्पन्नलौहस्य भक्षणविधिमाह नानेत्यादि । नानाविधव्याधयः पुराणज्वरातीसारग्रहणीरक्तपित्तराजय-क्ष्म प्रभृतयः । अमृतमिति अमृतमिवामृतं तच्च क्रियमाणमुप-योज्यं तत्राह दशेत्यादि लक्षणा रक्ति तेन चरकमानमाष-कमित्यर्थः । अयञ्च दशरक्तिपरिमाणारम्भः उत्तमपुरुषबलव-योऽभिहितः तेन मध्यमाधमपुरुषशक्तिवयोऽपेक्षया इदं दश-रक्तिपरिमाणं यथाक्रमं मध्यमाधमयोरधिकमधिकतरञ्च भव-तीति । बलाद्यपेक्षया उक्तपरिमाणादल्पाल्पतरपरिमाणेना-प्यारम्भः । वर्द्धने कर्त्तव्ये न पुनर्दशरक्तिपरिमाणं युक्तमिति कृत्वा तावत् परिमाणमेव कर्त्तव्यमिति मात्मोदकवन्निबद्धोम

इयञ्च गालपरिमाणं यन्त्रिवयोभेदमाकलय्य पुनः।
इयदधिकं तदविकातरमिय्येव न मात्रमोदकवत्॥ ४८॥
सममन्यणामलपात्रे लौहे लौहेन मर्द्दयेद्गाढ़ं भूयोभूयः।
दत्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम्।
वर्ष्यं गृह्णाति यथा मध्वरयकत्वेन पङ्कमविशिंषत्॥ ५०॥
इदमिह दृष्टोपकरणमेतददृष्टन्तु मन्त्रेण स्वाहान्तेन।
विमर्द्दोभवति फड़न्तेन लौहवलरचा॥
सनमस्कारेण वलिर्भचणमथसोऽङ्गमन्त्रेन।
ओं अमृतोद्भवाय स्वाहा॥ ओं अमृते ह्रूं फट् ओं नमश्चण्ड-वज्रपाणये। महायक्षसेनाधिपतये सुरगुरुविद्यामहावलाय स्वाहा। ओं अमृते ह्रूं॥ ५१॥

---

कार्य्यइत्यर्थः। तेन भारओवर्द्धनस्यापि पञ्चद्विवेकगुञ्जया तथापि पञ्चसप्तनवरक्तिकाः प्रथमदिने तथा — रक्तिमेकामुपक्रम्य यावत् सुवर्णवरक्तिका इत्यादि यत्तन्त्रान्तरे युक्तं सर्व्वमनेन तत् संगृहीतं ज्ञेयम्॥ ४८॥

लौहमर्द्दनार्थं पात्रमाह समेत्यादि उत्तानवामकरतलस्थापनार्थं तत्पात्रं भाजनाकारं करणीयं लौहेनेति लौहदण्डेन मधु तदुचितं दत्वा अधिकमिति मध्वपेक्षया किञ्चिदधिकं घृतं मिश्रणीयम्। मर्द्दनविश्यर्थं लक्षणमाह वर्ष्यमित्यादि। अविशिंषदिति स्वतन्त्रं मध्वरयकत्वेन एकत्वेनाविशिंषत् विशेषमकुर्व्वत् अतएव पङ्कमिति॥ ५०॥

दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरिति दृष्टमुक्तामन्त्रजमदृष्टार्थमाह इदमित्यादि।— तत्र प्रथमं लौहमर्द्दनमन्त्रमाह ओं अमृतोद्भवाय इत्यादि अयं स्वाहान्तोमर्द्दनमन्त्रः। लौहरक्षणमन्त्रमाह ओं अमृते ह्रूं फट् इति। वलिदानमन्त्रमाह ओं नम इत्यादि। भक्षणमन्त्रमाह ओं अमृते ह्रूमिति॥५१॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत् ।
कान्तक्रामकममलं संचत्रैव रसं पिबेद्दिने न तु तत् ॥
आचम्यच ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ॥ ५२ ॥
नातप्रविष्टोनाप्यतिभाषी नातिस्थितस्तिष्ठेत् ।
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥
जह्याश्च दिवानिद्रामहितञ्चाकालभुक्तञ्च ।
वातकृतः पित्तकृतः सर्व्वान् कट्वम्लतिक्तकषायान् ॥
तत्त्वणविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥ ५३ ॥

---

लोढ़ भेषजपाकार्थमनुपानमाह जग्धेत्यादि नीरञ्चामलं आकाशगुणतयभूयिष्ट भूभागाश्रयं क्षीरञ्च गव्यं सर्व्वत्र उक्तञ्च — सर्व्वत्र गव्यमेवेति मतमाह पतञ्जलिरिति । अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणं तदुक्तं योगरत्नाकरे — अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधा इति । तथान्यत्रोक्तम् । अनुपानं प्रयोक्तव्यं लौहात् पञ्चगुणं पयइति । अनुपानं कृत्वा लौहदोषनिराशाय निम्बचः कान्तक्रामकस्य स्वरसमात्रं पेयमित्याह कान्तक्रामकमित्यादि । आचम्येति आचमनञ्च शृतशीतजलेन रंसोदकेन वा यदुक्तं—कृत्वानुपानमाचम्य शृतशीतजलेन वा यद्वाइंरोदकेनेवेत्यादि ॥ ५२ ॥

अनुपानादिकं कृत्वा यथा स्यातव्यं तदाह नातपरिष्ट इत्यादि नाभिस्थितइति शुक्रीभूतः दण्डायमानः सन् अति न तिष्ठेत् चिरं न तिष्ठेदित्यर्थः । अपर परिवर्जनीयमाह अत्यन्तेत्यादि अत्यन्तेति वातादिभिः सम्बध्यते यानमश्वादियानं आदिशब्दादीर्षा चिन्ताविषमाङ्गन्यासादीनां ग्रहणम् । अकालभुक्तं अजीर्णादौ भोजनम् । वर्ज्जनीयरसानाह वातकृत इत्यादिकं हेतुगर्भमेव विशेषणं किम्वा वातकृतः पित्तकृतइतानेन कट्वम्लतिक्तकषायाः पिप्पल्यामलकगुडूचीहरीतक्यादयः

अघितं तद्यः पश्चात् पततु न वा पाटवं छुद्भवताम्।
आर्तिर्भवतु न वाऽन्ते कूजति भोक्तव्यमव्याजकम्॥ ५४॥
प्रथमं पीत्वा दुग्धं शाल्यन्नं विशदसिक्थमश्नीयात्।
घृतसंसृतमश्नीयात् मांसैर्वैष्किरैः प्रायः॥
उत्तमम्भूचरभूचरविष्किरमांसं तथाजमैणादिकम्।
अन्यदपि जलचराणां घृतरोमापेक्षया न्यायः॥
मांसालाभे मत्स्या अदोषलाः स्थूलसद्गुणा ग्राह्याः।
मद्गुरसरोहितप्रमुखादग्धास्तु पललाग्निनाङ्गुना:॥

---

वातपित्तेन कुर्वन्ति तेषामुपयोगो न विरुध्यतइति दर्शयति। विशेषेण वर्ज्जनीयविधानमाह तत्त्वणेतरादि अत्रापि जन्मा-दिति पूर्व्वोक्तं सर्व्वत्रैव॥ ५३॥

प्रागुक्तयुक्तं लौहसेवनः कस्यामवस्थायां भोक्तव्यमित्याह अघितमित्यादि।— अघितं तद्यः पश्चादिति गुदेन पततु प्रवर्त्ततां नवा तथार्त्तिरिति। बुभुक्षा पीड़ा भवतु वा नवा तथापि पाटवं आलस्यादिराहित्यं छद् भवतु तथा लौह सं-भावितदेहे सम्यक् वायोः सञ्चरणेनान्त्र कूजनञ्च छद् भवतु तदैव अव्याजं निःशङ्कं भोक्तव्यं छद् इतरझीकारविश्रामे एतेन पाटवमन्त्रकूजनमेतदुभयमेव भोजनं प्रतिप्रयोजकमि-त्यर्थः॥ ५४॥

इदानीं भोजनं येन विधिना कर्त्तव्यं तदाह प्रथममि-त्यादि। विशदं शुभ्रं अक्लिन्नमिति नान्योन्यसंलग्नम्। दु-ग्धमिति जीवद्वत्सशुक्लायाः कृष्णाया वा प्रस्तुवत्याया वा ग्रा-ह्यम्। वैष्किरैरिति तित्तिरादिविष्किरमांसैः। प्रायः शब्दा-दाजैणादिकं बोद्धव्यम्। एतदेवाहउत्तममित्यादि उत्तमभूच-रजाङ्गलादेशचराः लावतित्तिरीशशकादयः विष्किराः कुक्कुटा-

शृङ्गाटकफलकशेरुकाङ्कोलफलतालनारिकेलादि।
अन्यदपि यच्च हृद्यं मधुरं पनसादिकं ज्यायः॥
केवुकताड़करीरान् वार्त्ताकुपटोलफलदलसमठाम्।
मुद्गमसूरेक्षुरसान् शंसन्ति निरामिषेष्वेतान्॥ ५५॥
शाकं प्रहेयमखिलं स्तोकं रुचये तु वास्तूकं दद्यात्।
विहितनिषिद्धादन्यन्मध्यमकोटिस्थितं विद्यात्॥ ५६॥
तप्तदुग्धानुपानं प्रायः सारयति बहुकोष्ठस्य।
अनुपीतमम्बु यद्वा कोमलशस्य नारिकेलस्य॥

दयः एषां मांसमुत्तममिति बालस्थविरव्याधितादिवर्ज्जिता-नाम्। आदिशब्दात् कृष्णसारगोधादयः। अन्यदपीति वि-ष्किरादिव्यतिरिक्तमित्यर्थः। जलचराः हंसादयः पृथुरोमापे-क्षया ज्याय इति मत्स्यापेक्षया श्रेष्ठमित्यर्थः। अन्ये तु पृथुरोमा शकुल्यमित्याहुः। मांसाप्राप्तौ मत्स्यविशेषोपयोगमाह मांसा-लाभ इत्यादि। के ते मद्गुरा इत्याह मद्गुरेत्यादि।– एतेन मद्गुरादयो दग्धाः सन्तः पललादिति मांसात् मनाक् न्यूनाः किञ्चिद्धीना इत्यर्थः।

इदानीमतोचितं फलकन्दमाह शृङ्गाटकेत्यादि। आ-दिशब्दादाम्रखर्ज्जुरादिकम्। निरामिषव्यञ्जनार्थमाह केवु-केत्यादि ताड़करीरास्ताड़काङ्कुराः। फलदलेति पटोलस्य फलदलम्॥ ५५॥

शाकं पुनः सकलमेव वर्ज्जनीयमित्याह शाकमित्यादि।— प्रहेयमित्य वश्यत्याज्यं रुच्यर्थं पुनर्वास्तूकमेवाल्पप्रमाणं दद्यात्। विहितनिषिद्धव्यतिरिक्तं यद्भक्ष्यं तत् साधारणं ज्ञेयमित्याह विहितेत्यादि॥ ५६॥

इदानीं बहुकोष्ठं प्रति अनुपानविशेषमाह तप्तेत्यादि। तप्तक्षीरानुपानेन व्यवहरन्ति वृद्धाः। नारिकेलोदकस्य प्रच-

यस्य न तथा सरति सयवक्षारं जलं पिबेत् कोष्णम् ।
कोष्णं त्रिफलाक्वाथं समाथं क्षारं ततोऽप्यधिकम् ॥ ५७ ॥
त्रीणि दिनानि समं स्यादह्नि चतुर्थे तु वर्द्धयेत् क्रमशः ।
यावच्चाष्टममाषं न वर्द्धयेत् पुनरितोऽप्यधिकम् ॥
आदौ रक्तिद्वितयं द्वितीयवृद्धौ तु रक्तिकात्रितयम् ।
रक्तिपञ्चकं पञ्चकमत ऊर्द्धं वर्द्धयेन्नियतम् ॥ ५८ ॥

---

इति एवमपि कृते यदा न प्रवृत्तिस्तदा तस्य किं कर्त्तव्यमित्याह यस्येत्यादि उष्णजले कोष्ठानुरूपं यवक्षारं प्रक्षिप्य पिबेदित्यर्थः । प्रयोगान्तरमाह त्रिफलेत्यादि क्षारं यवक्षारं समाथमिति सहितमित्यर्थः । यवक्षारप्रक्षेपश्च प्रक्षेपः पादिकः क्वाथादिति परिभाषयैव । तत इत्युक्तयोगात् ॥ ५७ ॥

लौहममायाद्वृद्धिर्हि क्रमेणैव कार्य्या अतस्तमेव वृद्धिक्रमं दर्शयति त्रीणि दिनानीत्यादि येन परिमाणेन लौहभक्षणारम्भः कृतः तेनैव परिमाणेन दिनत्रयं कार्य्यं चतुर्थे दिनादारभ्य पुनरपि दिनत्रयं यावत् समवृद्धौ वर्द्धयेत् त्रीणि दिनानि समंस्यादित्युक्ते ततोऽपि सप्तमदिने या रक्तिवृद्धिः कृता तयैव वृद्ध्या पुनरपि दिनत्रयं यावत् वर्द्धयेत् त्रीणि दिनानि समं स्यादित्युक्तेरित्यादि बोध्यं एवं क्रमेणाष्टमाषकपर्य्यन्तं वृद्धिः कार्य्या इतोऽधिकवृद्धिर्न कार्य्येत्याह यावदष्टममाषमित्यादि । क्रमशो वर्द्धयेदित्युक्तमतस्तमेव क्रममाह आदावित्यादि आदौ लौहप्रयोगारम्भे रक्तिद्वयं कृत्वा त्र्यहमुपयोज्यं ततः प्रथमवृद्धौ चतुर्थदिनमारभ्य रक्तिद्वयं कृत्वा त्र्यहं वृद्धिः कार्य्या तेन द्वितीयत्र्यहे प्रतिदिनं रक्तिकाचतुष्टयं भवति ततो द्वितीयवृद्धौ रक्तित्रयं कृत्वा त्र्यहं वृद्धिः तेन तृतीयत्र्यहे प्रतिदिनं सप्तरक्तिका भवन्ति अत ऊर्द्धं चतुर्थपञ्चमादित्र्यहेषु त्रीणि दिनानि समं स्यादित्युक्तरीत्या क्रमेण रक्तिपञ्चकं कृत्वा अष्ट-

वा सरिकाकल्कपक्षे दिनानि यावन्ति वर्द्धितं प्रथमम् ।
तावन्ति वर्षशेषे प्रतिलोमं ह्रासयेत्तदयः ॥
तेऽष्टमाषकेषु प्रातर्माषकत्रयमश्नीयात् ।
सायञ्च तावदन्नोमध्ये माषद्वयं शेषम् ॥ ५८ ॥
एवं तदभ्यतमश्नन् कान्तिं लभते चिरस्थिरं देहम् ।
सप्ताहत्रयमात्रात् सर्व्वरुजोऽहन्ति किं बहुना ॥

---

माषकं यावत् वर्द्धयेत् । तेन चतुर्थत्र्यहे द्वादशरक्तिः । पञ्चमत्र्यहे सप्तदशरक्तिः षष्ठे द्वाविंशतिरित्यादि क्रमेयं तेन पञ्चदिनादधिकं सप्तसप्ताहे दशरक्तिक्रमाषेण द्विरक्तिकाधिका अष्टौ माषका भवन्ति अत्र च तत्र चतुरक्तिका वृद्धिं त्यक्त्वा यथोक्तवृद्धौ वृद्धासया कुर्व्वन्तीतेत्रव सिद्धान्तः ॥ ५८ ॥

इदानीं सम्वत्सरं यावद्यदि कर्त्तव्यमिदं रसायनं स्यात् तदा वर्षावशेषदिनानि यावन्ति भवन्ति तावन्त्येव प्रतिलोमं रक्तिकादिक्रमेण ह्रासः कार्य्य इत्याह वात्सरिकेत्यादि । इदानीं पञ्चदिनाधिकसप्तसप्ताहैरष्टमाषकप्रमाणे सञ्जाते सति वत्सराभ्यन्तर एव केन प्रकारेण तल्लौहमुपयोज्यमित्याह तेष्वित्यादि । अष्टमाषकेषु मध्ये माषकत्रयं प्रातः । तावदिति माषकत्रयं सायाह्ने अन्नोमध्ये भोजनसमये शेषं माषकद्वयम् । अन्यत्राप्युक्तं प्रातर्माषत्रयं कार्य्यं मध्याह्ने माषकद्वयम् । माषत्रयं दिवाशेषे माषकाष्टकभक्षणमिति । इदानीन्तु रक्तिकाद्वयमारभ्य योगिनं प्रति रक्तिकाद्वयवृद्ध्यैव त्रिसप्ताहपञ्चसप्ताहादिभिः किञ्चिदधिकमाषकद्वयं यावत् वृद्धिः ततो द्विसप्ताहादिभिः रक्तिकाद्वयेनैव ह्रास इति प्रायो व्यवहरन्ति वृद्धाः । उत्तरक्रिया चात्र द्विगुणा कार्य्या तदुक्तं पातञ्जले इति सुश्रुतक्रियायाः स्याद्द्विगुणा चोत्तरक्रिया । उत्तरक्रियात्र नातुरपरिष्टोजातरतिभाषी नातिश्लिष्टक्लिष्टेत्यादिना उक्तैव ॥५८॥

आर्य्याभिरिह नवत्या सप्तविधीनां यथावदाख्यातम् ।
अमतिविपर्य्ययसंशयशून्यमनुष्ठानमुन्नीतम् ॥
मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य ।
निरबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्म्मा ॥ ९० ॥

भक्षणविधिः ।

अमृतसारं लौहं समाप्तम् ।

यत्र तत्रोद्भवं लौहं निःशेषं मारितं यदि ।
त्रिफलाव्योषसंयुक्तं भक्षयेद्गुल्मनाशनम् ॥ ९१ ॥

---

इदानीमस्य लौहस्य फलमाह एवमित्यादि । उपसंहरति आर्य्याभिरित्यादिना सप्तविधयश्च साध्यसाधनपरिमाणविधिः स्थालीपाकविधिः पुटनविधिः प्रधाननिष्पत्तिः पाकविधिरनुविधिर्भक्षणविधिश्चेति । एषामनुष्ठानं नवत्या आर्य्याभिः कापोतकर्म्मा अमतिविपर्य्ययसंशयशून्यं यथास्यात्तथा निबबन्ध इत्यर्थः । कापोतइति निर्दिष्टनामधेयः पुरुषः । उत्कृष्टरूपः षट्कर्म्मा श्रोत्रियः उक्तं हि — याजनं यजनं दानं ग्रहणञ्चैव परिग्रहः । अध्यापनमध्ययनं श्रोत्रियः षड्भिरेव चेति । अमतिः सर्व्वथा ज्ञानाज्ञानराहित्यं तस्मिंश्च दुर्भ्रमः स च द्विधा एककोटिकोऽनेककोटिकश्च तत्राद्योपरिपर्य्ययः द्वितीयश्च संशय इति । अनुष्ठीयत इत्यनुष्ठानं ग्रन्थसन्दर्भ एव । यथावदाख्यातमित्यत्र पूर्व्वाचार्य्यैरिति शेषः । उन्नीतमिति गुरुपरम्परया उपदेशपूर्व्वकं कथितमित्यर्थः । मुनिरचितेत्यत्र मुनिर्नागार्जुनः । बान्धवानामिति सद्व्याख्यानम् । एवं चतुर्भिरार्य्या-त्वेनावश्योपकर्त्तव्यता च बन्धुत्वं प्रतिपादितं । अस्य निबद्धस्य अमतिविपर्य्ययसंशयनिरासः संक्षेपश्चेति गुणद्वयमुक्तम् ॥ ९० ॥

इत्यमृतसारलौहमारणविधिः भक्षणविधिश्च ।

सामान्याद्द्विगुणश्चौड्रं कलिङ्गोऽष्टगुणस्ततः ।
तस्माच्छतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविंशभिर्गुणैः ।
ततः कोटिसहस्रघ्ना अयस्कान्तं महागुणम् ॥ ६२ ॥

ताम्रयोगः ।

रसतस्ताम्रं द्विगुणं ताम्रां कृष्णाभ्रकं द्विगुणम् ।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततोद्विविधा ॥

---

इदानीं नागार्ज्जुनोक्तं दासरसायनलौहमाह यत्र तत्रे-त्यादि यत्र तत्र भवमिति औड्रकालिङ्गादि यत्किञ्चिद्देशभवं वज्रपाण्ड्यादिकमेव निःशेषमिति सर्व्वथैव हतं निःशेषमित्यत्र निरुत्थमिति पाठे टङ्कणादियोगेनापि वह्नौ ध्मापनात् य उपतिष्ठते पुनर्लौहभावं नापद्यत इत्यर्थः । त्रिफलेत्यादि अयं त्रिकटु त्रिफला त्रिकटु चूर्णञ्च मिलित्वा लौहसमं बोध्यं संयुक्तं सम्यक् युक्तं तेन मधुघृताभ्यां लौहपात्रे लौहदण्डेन विमर्द्द्य भक्षणीयं रक्तिकादि क्रमेणेति वदन्ति वृद्धाः । अन्ये-त्वादौ माषकमेकमुपयोज्यमित्याहुः । वृद्धौ मध्ये वा अग्नि-बलमपेक्ष्य यथाशक्ति कुर्व्वन् सार्द्धसंवत्सरात् वलीं नाशये-दिति दासरसायनवटिकायामुक्तम् ॥ ६१ ॥

लौहानां गुणमाह सामान्यादित्यादि इयह भक्तिपर्य्यन्त देशदक्षिणोत्तरदिकसम्भवं लौहं सामान्यं द्विगुणमिति सामान्य-लौहात् द्विगुणगुणकारकम् । औड्रमिति औड्रदेशोद्भवं भद्रमिति भद्रदेशोद्भवं एषाञ्च भक्षण लक्षणञ्च टीकायामनुस-न्धेयं इह तु विस्तारभयान्न लिखितम् ॥ ६२ ॥

सम्प्रति ताम्रयोगमाह रसतइत्यादि शोधितात् पारदात् ताम्रं वक्ष्यमाणक्रमेण मारितचूर्णीकृतं द्विगुणं ग्राह्यं कृष्णाभ्रञ्च वक्ष्यमाणरीत्या शोधितं चूर्णीकृतं ताम्राद्द्विगुणं ग्राह्यम् ।

पत्नीकृतस्य गन्धकयोगाद्वा मारणं तथा लवणैः।
अम्ले धापितताम्रे निर्गुण्डीकल्ककाञ्जिकमग्ने॥
यत् पतति गैरिकाभं तत्पिष्टमर्द्धगन्धकं तदनु।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकन्तु पुनः॥
छिन्नमोचिन्यवपिण्डे क्षिप्तं तदनु मार्द्दसंपुटे क्षिप्ते।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधुचन्द्रिकाविरहितम्॥
रेचितताम्रेण रसः खल्लशिलायां घृष्टः पिण्डिका कार्य्या।

---

कृष्णेति अभ्रकविशेषणात् भेकवपुषो निरासः। एषां रसादीनां पृथगेव शुद्धिः। तत इति तेषु मध्ये ताम्रशुद्धिं द्विधा आह क्रियाप्रकारद्वयमित्याह पत्नीकृतस्येत्यादि मारणमिति छेदः एतच्च तनुपत्नीकृतम्। द्वितीयां शुद्धिमाह तथा लवणैरित्यादि। लवणैः सैन्धवादिभिः पञ्चभिरेव। अम्लइति क्षिप्ते निर्गुण्डी निसुन्दारः तदीयमूलपत्रकल्कयुक्तकाञ्जिकमग्नइत्यर्थः। अत्र द्रुतरूपं यत्ताम्रं पतति तद्गैरिकवल्लोहितमित्यर्थः। ताम्रादर्द्धं गन्धकं दत्त्वा तावदेकीकृत्य पेष्टव्यं ततः स्थाल्यामारोप्य तुषवह्निक्रिया क्षिप्त्वा लौहवत् पुटो देयः। अभ्रकशुद्धिमाह अभ्रकन्त्वित्यादि अम्लाम्भसा काञ्जिकेन पिष्टं तत् छिन्नमोचिकापिण्डे कृत्वा एकस्मिन्पात्रे निधाय अपरेण पिधाय तीक्ष्णमिति बहुलं यथा स्यात्तथा दग्धं पुटितं सत् चन्द्रिकारहितं भवति तदनु पुटादाकृष्य शिलायां पिष्ट्वा चूर्णीकृत्य तत् ग्राह्यमित्यर्थः। अथ जारितताम्रचूर्णमिलितस्य रसस्य शुद्धिप्रकारमाह रेचितेत्यादि। रेचितताम्रेण मारिततामेण सह रसः खल्लशिलायां मेलयित्वा घृष्ट्वा पिण्डिका कार्य्या। तदनु निर्गुण्डीकल्कमिश्रिते उष्णसलिले काञ्जिके सा पिण्डिका अस-कृदित्यनेकवारनुत् स्वेद्य शुद्धा भवतीति शेषार्थम्। अत् स्वेदनप्रकारस्यार्थं सूत्रनियामकभार्ग्यादिगणान्यतमद्रवे रस पिण्डितं

उत्स्वेद्य गृह्यसलिलेन निर्गुण्डीवल्कोरसद्रवच्छन्दौ ॥
एतत् सिद्धं त्रितयं चूर्णिततात्राद्धिकैः पृथक् युक्तम् ।
पिप्पलीविडङ्गमरिचैः खल्वं द्वित्रिमाषिकं भक्ष्यम् ॥
शूलाम्लपित्तक्षयथुग्रहणीयक्ष्मादिकुक्षिरोगेषु ।
रसायनं महदेतत् परिहारोनियमतोनात ॥ ६३ ॥

ताम्रयोगः ।

तनुपत्रीकृतं ताम्रं नेपालं गन्धकं समम् ।
कृत्वा चोर्द्धमधोमध्ये स्थालिपाकमध्यसंस्थितम् ॥
कृत्वा खल्पशरावेण स्थालिमध्ये पिधाय च ।

---

मिलितरसताम्रचूर्णं दोलापाकेन निर्गुण्डीवल्केन मिश्रितकाञ्जिकेनाधोज्वालया ताप्यमानेन उत्स्वेदनीयमसदृदित्यर्थः। सूतनियामकश्च भार्ग्यादिगणोयोगरत्नाकरे यथा भार्गी शरपुङ्खा कुठारछिन्ना ब्राह्मी मूषिकपर्णिका पुनर्नवापराजिता अपाकपुष्पी भेकाम्ला रुदन्ती मयूरशिखा चेति। भार्ग्यादिरेष विख्यातगणः सूतनियामक इति । अग्निक्षापेनापि रसं क्वचिदपि न नीतं न ददातीत्यर्थः। सूतनियामकौषध मध्यगं रसं सकाञ्जिकदोलायन्त्रे पचेत्। तदनु त्रितयसिद्धं रसाभ्रताम्रचूर्णं पिप्पल्यादित्रयस्य प्रत्येकं ताम्रचूर्णादर्द्धमानं गृहीत्वा संयोजनीयं तत एकीकृत्य अग्निबलापेक्षया द्वित्रिमाषकादिमुपयोज्यम्। आदिशब्देन दृगक्षशूलः। कुक्षिरोगेष्विति अग्निमान्द्यादिष्वपीत्यर्थः। इति ताम्रयोगः ॥ ६३ ॥

ताम्रयोगान्तरमाह तनुपत्रीकृतमित्यादि। नेपालमिति नेपालदेशोद्भवं ताम्रं तनुपत्रीकृतमिति पत्रं यथा स्यात्तथा परीकृतं पत्रतता काष्ठावेध्यावस्थोपादानेन लभत इति तानि च तनूनि ताम्रपत्राणि अनेकानि कृत्वा जम्बीराम्लरसेन संमर्द्य प्रक्षाल्य संशोध्य तदनु ताम्रसमनेन शोधितगन्धकं

शर्कराभक्तलेपेन लिप्त्वा सन्धिं तदूर्द्ध्वतः ॥
वालुकापूरितस्थाल्यां पिहितायां पुनस्तथा ।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना ।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम् ॥
शिलापुत्रेण संमर्द्य द्रुतं हृष्टं पुनः पुनः ।
कृत्वा देयं मृतं ताम्रं कर्षमात्रं ततः पुनः ॥
रसोन्मथितः शुद्धस्तावन्मात्रः प्रदीयते ।
ततस्तथैवं संमर्द्य पुनराज्यं प्रदापयेत् ॥
अष्टविन्दुक्रमात्तञ्च मर्द्दयेन्मूर्च्छितं तथा ।
सर्वं स्यात्तत आकृष्य शिलापुत्रादिसंगतम् ॥
संहृत्याम्लभ्रसप्रस्तेन विलोड़ितम् ।

---

सचूर्णं तदनन्तरं स्थालिकायां कियदपि गन्धकचूर्णं दत्त्वा तदुपरि कियदपि ताम्रपत्रं निवेश्य पुनस्तदुपरि गन्धकचूर्णं देयमित्येवं क्रमेण सर्व्वाणि ताम्रपत्राणि गन्धकचूर्णसहितानि उपर्य्यधोभावे ततोऽल्पशरावेण स्थालान्तरनिवेशयोगेन तत्ताम्रपत्रं पिधाय तच्छरावप्रान्तञ्च शर्करासहितभक्तलेपेन लिप्त्वा तस्य शरावस्योपरिभागे वालुकापूर्णं तत्स्थालीपात्रं कृत्वा शरावेण तस्याः स्थाल्या मुखं पिधाय तत्रैव भक्तलेपेन लिप्त्वा प्रहरमेवमविच्छेदेनाधोज्वालां प्रदापयेत् । इति ताम्रमारणम् । ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभिः सह योजनीयमित्याह तत इत्यादि । कथं योजना कर्त्तव्येत्याह अथेत्यादि । अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णकर्षमेकं ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण संमर्द्य पौनःपुन्येन हृष्ट्वा द्रवीभूते तस्मिन्

पुनस्तथैव वह्निस्थलौहपात्रे विमर्द्दयेत् ॥
यावद्द्रवक्षयं पश्चादाकृष्य संप्रपेषितम् ।
अलम्बुष रसेनैव गुड़कं संप्रकल्पयेत् ॥
तत् पिण्डं वस्त्रविस्तीर्णं पिण्डे त्रिकटुजे पुनः ।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेद्बुधः ॥
ततस्तां पोट्टलीमाज्यमग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलोभिषक् ॥
यदा निस्फेणता चाज्ये पुटिका च दृढ़ा भवेत् ।
तदा पक्वं तमाकृष्य पञ्चगुञ्जातुलाधृतम् ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु अल्पपित्तोच्छ्रये पुनः ॥
त्रिफलैव समादेया कोष्णं वारि पिबेदनु ।

---

मृततास्रचूर्णं कर्षमानं दत्वा तथैव शिलापुत्त्रेण घर्षणीयं ततः पुनरिति ततोनन्तरं अग्नितापहृत एव अस्मिन् रसः पारदोऽपि तावन्मानः कर्षमान एव देयः पुनस्तेनैव मर्द्दनीयं किन्तु शिष्टोरसः अम्लमथितः सन् मुहुः चाङ्गेरीजम्बीराद्यम्लरसमथनान्मुहुः तदनु अष्टबिन्दुपरिमितं घृतं दत्त्वा पुनर्मर्द्दयेत् शिलापुत्रेणैव। तथा तेन प्रकारेण सर्व्वं गन्धकताम्रादिकं संमूर्च्छितमेकीभूतं स्यात्। तावल्लौहपात्रात् निःशेषमाकृष्य तथा शिलापुत्रादिसंगतं शिलापुत्रादिग्रथितं सुदृढ़मपि भूतं संहृत्य पलङ्कषनामकमुण्डरसेन विलोड्य रसद्रवक्षयं पुनर्वह्निस्थलौहपात्रे मर्द्दयेत् तत आकृष्य अलम्बुषरसेनैव शिलायां पिष्ट्वा गुड़िकां कल्पयेत्। तदनन्तरं किं विधेयमित्याह तत्पिण्डमित्यादि। ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूपं त्रिकटुकं दत्त्वा विस्तार्य्य तदुपरि अपरवितताऽतिनिर्म्मलवस्त्रखण्डे तं ताम्रौषधगुड़कं निधाय ततो दृढ़ां

सप्तमे दिवसे रक्तिवृद्धिक्रमात्तु माषकम् ॥
यावत् प्रयोगस्य तथैवापकर्षः पुनर्भवेत्।
योगोऽयं ग्रहणीयक्ष्मपित्तशूलाम्लपित्तहा ॥
रसायनञ्चैतदिष्टं गुदकीलादनाशनम्।
न चात्र परिहारोऽस्ति विहाराहारकर्म्मणि ॥ ६४ ॥
हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः।
जत्वाभं मृदु मृत्स्नाच्छं यन्मलन्तच्छिलाजतु ॥

---

पोट्टलिकां बद्ध्वा घृतपूर्णस्थालीपात्रे सूत्रेण दण्डसंलग्नतया दोलायाकविधिना तां पोट्टलीं तत्रारोप्य घृतनिमग्नां कृत्वा पचेत्। पाकज्ञानार्थमाह यदेत्यादि। पुटिका च दृढ़ा भवेदिति पुटिका पोट्टलिका तस्या दृढ़ता च दण्डिकया ताड्या ज्ञेया। त्रिकटु त्रिफलयोश्च मिलित्वैव पञ्चगुञ्जेति ताम्रतुल्यं प्रातरित्यर्द्धप्रहरे। अनुपानमाह तक्रमित्यादि। अम्लपित्ते तु त्रिकटुचूर्णं परित्यज्य त्रिफलैव ताम्रतुल्या देया। तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह अम्लपित्तोक्तय इत्यादि। त्रिफलैव समा देया त्रिफलैव ताम्रतुल्या देयेत्यर्थः। तथा कोष्णजलं चानुपिवेदिति। वृद्धिक्रममाह सप्तम इत्यादि। सप्तम इत्यत्र वीप्सा ज्ञेया तेन सप्तमे सप्तमे दिवसे रक्तिकाप्रमाणेन वृद्धिः कार्य्या। माषकमानं यावदयं प्रयोगः कार्य्यः। तेन माषकादूर्द्धं वृद्धिर्न कर्त्तव्येत्यर्थः। येनैव क्रमेण वृद्धिः कार्य्या तेनैव क्रमेणोपत्याह तथैवापकर्षः पुनर्भवेदिति। केचित्तु वृद्धवैद्यास्त्रिफलाव्यतिरिक्तेन त्रिकटुकादिकमिदमौषधं मधुना समालोड्य ददति। तेनैव क्रमान् विशेषो दृश्यते। गुदकीलादिनाशनमित्यादिग्रहणात् पाण्डुरोगादयः। इति ताम्रयोगः॥ ६४ ॥

इदानीं चरकोक्तशिलाजतुरसायनमाह हेमाद्या

अनम्लश्चाकषायश्च कटुपाकि शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भव: ॥
हेम्नोऽथ रजतात्ताम्राद्वरं कृष्णायसादपि ।
मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यत् ॥
विपाके कटु तिक्तश्च तत् सुवर्णस्य निस्रवम् ।
राजतं कटुकं श्वेतं स्वादु शीतं विपच्यते ॥
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु

---

इत्यादि । गिरिगता धातवो गिरिधातव: हेमाद्या इति तद्विशेषणं आद्यशब्दात् लौहरूप्यताम्रसीसकगैरिकमन:शिलादीनामपि ग्रहणं अतएवोक्तं हारीते—सुवर्णरूप्यत्रपुसीसताम्रमित्यादि । अत्रानम्लमित्यादि विशिष्टप्रतिषेधस्य शेषाद्यनुज्ञाफलकं तस्माद्रसचतुष्टयस्यात्र विधि: । धातुभ्यश्चतुर्भ्य इति रसायनाधिक्यात् तेन सुवर्णरूप्यत्रपुसीसेत्यादिना हारीतेन यदेवं विविधधातुसम्भवकत्वमुक्तं तेन समं न विरोध: । नात्युष्णशीतमिति शीतोष्णयोर्बलवत्त्वं निषिध्यते तेन किञ्चिदुष्णं किञ्चिच्छीतलं शिलाजतु भवतीति । ते के चत्वारो धातव इत्याह हेम्न इत्यादि । क्रमेण हेमादिसम्भवानां चतुर्णां लक्षणमाह मधुरमित्यादि चकारात् स्निग्धत्वादिकं बोध्यं यदाह हारीत:—स्निग्धं घनं काञ्चनगैरिकाभं सतिक्तशीतं मधुरं सुवर्णादिति । अत्र शिलाजतुसामान्यगुणकथने अम्लकषायव्यतिरिक्तरसचतुष्टयमुक्तं तथा कटुपाकीत्यप्युक्तं तेन विशेषगुणकथने पुनर्योरसोऽभिधीयते तत्रोत्कर्षवानिति ज्ञेय: । सामान्यगुणोक्तरसोऽनुक्तोऽपि लभ्यत एव । यस्तु रौप्यभवे कटुपाकविरुद्धो मधुरक उक्त: स उत्सर्गापवादन्यायेन समर्थनीय: । अन्ये तत्तु समधुरविरुद्धं पच्यत इत्याहु: अतएव हारीते विदारित्वमस्य यदुक्तं तदप्युपपद्यते । तथा—

यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम्॥
विपाके कटु शीतञ्च सर्व्वश्रेष्ठं तदाश्मजम्।
गोमूत्रगन्धः सर्व्वेषां सर्व्वकर्म्मसु यौगिकः॥
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु॥
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः॥ ६५॥
लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि।
तृणाग्रे कृतं सर्व्वमधोगच्छति तन्तुवत्॥ ६६॥

---

रौप्याकरोत्थन्तु तृणालवणं सक्षारकन्तत् कटुकं विदाहीति। मुक्तिमुपवर्णयन्ति। अत्र वीर्य्यं ताम्रभवस्योष्णमुक्तं तथाला-यसानाञ्च शीतमुक्तं तेन नातुरश्चाशीतवीर्य्यतयोः सामान्य-गुणोक्तयोरवकाशोनास्तीति केचिदाहुः तन्न युक्तं यतोनातुर-ष्णाशीतत्वं विधीयते किन्तु शीतोष्णयोर्व्वलवत्त्वमात्रं निषिध्यते तेन किञ्चिच्छिलाजतु शीतं उष्णञ्च किञ्चिच्छिलाजतु भवतीति प्रागेव व्याख्यातं ताम्रभवशिलाजतुगुणकथने तिक्तोष्णमित्यत्र तीक्ष्णोष्णमिति केचित् पठन्ति तन्मते ताम्रजे यद्यपि रसो-नोक्तस्तथापि सामान्योक्तचतूरसत्वमेव सातुभवरसभावेन ज्ञेय-मित्यर्थः आहुः। पश्चिममित्यायसम्। यथाक्रममिति वात-पित्ते सौवर्ण्यं, श्लेष्मपित्तजे रौप्यजं, कफे ताम्रजं, त्रिदोषजे लौहजमित्यर्थः॥ ६५॥

श्रेष्ठशिलाजतुनोलक्षणमाह लौहकिट्टायत इत्यादि। यत् शिलाजतु वह्नौ विगतधूमं सत् दह्यते लौहमलवच्च भवति तच्छ्रेष्ठम्। परीक्षान्तरमाह अम्भसीति अम्भसि अग्रे कृतं जले क्षिप्तं सत् प्रक्षालितन्तु यातिशावते तन्तुवत् गच्छति अधस्तात् तन्तुवल्लम्ब्यते तद् शिलाजतुश्रेष्ठमित्यर्थः॥ ६६॥

मलिनं यद्भवेत् तच्च चालयेत् केवलाम्भसा।
लौहपात्रेषु विधिना ऊर्द्ध्वीभूतञ्च संहरेत्॥
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम्।
वीर्य्योत्कर्षं परं याति सर्व्वैरेकैकशोऽपि वा॥
प्रक्षिप्योद्धृतमावानं पुनस्तत् प्रक्षिपेद्रसे।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना॥
तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं काथ्यम्।

शिलाजतुशोधनमाह मलिनमित्यादि। अम्भसा उष्णोदकेन लौहपात्रेषु विधिनेति हारीतोक्तशिलाजतुशोधनविधिना ऊर्द्ध्वीभूतं यत्तत् संहरेत् संगृह्णीयात् काचादिनिर्म्मलपात्रे स्थापयेदित्यर्थः। तत्रायं शोधनविधिः प्रथमं केवलं शिलाजतु जले धौतं कृत्वा तदनु कीटादिदुष्टौषधिदोषविनाशाय अगुरुतुवरीनिम्बपत्रयागुग्गुलैः धूपयित्वा तदनु शुष्कं चूर्णीकृत्य तदनु भाजनाकारलौहपात्रे कृत्वा दशमूलकषायं त्रिफलाक्काथं वा केवलोष्णोदकं वा प्रक्षिप्य विमर्द्दन लौहमुषलिकया तरलीकृत्यप्रचण्डातपे स्थापनीयम्। अत्र च प्रचण्डातपावस्थानेन सरवदूर्द्ध्वं यदुत्तिष्ठति तत् पुनर्गृहीत्वा काचादिनिर्म्मलपात्रे स्थाप्यं एवं शिलाजतु भावनायां योज्यं उक्तं हि हारीते—तद्ग्राहयित्वा क्रमशो विभज्य देशे शुचौ मङ्गलसिद्धियुक्ते। तिथौ च पुण्ये सुदिने च युक्ते नक्षत्रयोगेन शिवेन चापि। लौहाढकीनिम्बगुडूचीसर्पिर्यवैर्यथावत् परिधूपयेच्च। सन्ताजिकाकीटपतङ्गदंशदुष्टौषधिदोषविनाशनस्तदिति। इदानीं चरकोक्तभावनाविधिमाह वातपित्तेत्यादि निर्य्यूहः क्वाथः सुभावितमिति सप्ताहम्। सर्व्वैरिति वातघ्नादिक्काथैः। भावनातः किं स्यादित्याह वीर्य्योत्कर्षमित्यादि। प्रक्षिप्येत्यादि रसे वातघ्नादिक्काथे कोष्णे तच्छिलाजतु प्रक्षिप्य

ततः क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः।
पूर्व्वोक्तेन विधानेन लौहैश्चूर्णीकृतैः सह ॥
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम्।
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ॥
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत्।
प्रयोगः सप्त सप्ताहास्त्रयश्चैकश्च सप्तकः ॥
निर्द्दिष्टस्त्रिविधस्तस्य परोमध्योऽवरस्तथा।
मात्रापलं त्वर्द्धपलं स्यात् कर्षन्तु कनीयसी ॥
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्ज्जयेत् सर्व्वकालञ्च कुलत्थान् परिवर्ज्जयेत् ॥

---

पश्चाद्दावानं तपने शुष्कपर्य्यन्तं कृत्वा पुनरपि तद्रसे प्रक्षिपेत्। वानं शुष्कं शुष्के वानमुभे त्रिष्वित्यमरः। इदानीं भावनार्थ-द्रव्यादिकमाह तुल्यमित्यादि तन्त्रान्तरस्य गिरिजेन शिला-जतुना तुल्यं भावनौषधं दशमूलादि द्रव्यं क्वाथ्यं ततः समर-सतां जातमिति तच्छिलाजतुक्वाथेन सह समरसत्वमिति चालोड़नेन एकीभूय तुल्यतां यातमित्यर्थः। एवं त्रिद्धं भावितं शिलाजतु लौहचूर्णेन सार्द्धमेकीकृतञ्च दुग्धेन पातव्यमित्याह पूर्व्वोक्तेनेति चरक एव प्रतिचिके रसायनपादे पूर्व्वोक्तविधिः। अत्र भागानुक्त्या शिलाजतुलौहयोः समत्वं कश्चिदाह तन्न शिलाजतुनोऽधिकृतत्वात् प्राधान्यात् तदपेक्षयैव पादिकस्य लौहचूर्णस्य न्याय्यत्वात् हारीतेऽप्येवमेवोक्तं क्षीराशी क्षीरप्र-धानभोजनकारी। इदानीमेतत्प्रयोगस्य कालभेदेन त्रैविध्य-माह प्रयोग इत्यादि। सप्तसप्ताहा इति सप्त सप्ताहा एकोन-पञ्चाशद्दिनानि तद्व्यापकप्रयोग इत्यर्थः। एवं त्रयश्चैकश्च सप्तक इति बोध्यम्। भक्षणार्थं त्रिविधां मात्रामाह मात्रेत्यादि।

पयांसि शुक्तानि रसाः सयूषास्तोयं समूत्रं विविधाः कषायाः।
आलोडनार्थं गिरिजस्य शस्तास्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम्।
चरकोक्तशिलाजतुविधानं सोपस्कारमेतत् ॥ ६७ ॥

शिवागुड़िका।

काले तु रवितापाढ्ये कृष्णायसजं शिलाजतुश्च वरम्।
त्रिफलारससंयुक्तं त्र्यहश्च शुष्कं पुनः शुष्कम् ॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य।
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः ॥
एकाहं क्षीरेण तु तत् पुनर्भावयेत् शुष्कम्।
सप्ताहं भाव्यं स्यात् क्वाथैनैषां यथालाभम् ॥

---

अस्मिन् प्रयोगे वर्ज्जमाह शिलाजतुप्रयोगे त्वित्यादि विदाहीनि वंशकरीरमरिचराजिकादीनि शिलाजतुप्रयोगे गुरुद्रव्यनिषेधेऽपि गुरुक्षीरप्रयोगाभिधानं उत्सर्गापवादन्यायेन न विरोधमिति। केचित्तु कुलत्थानिति कुलत्थादीन् तेन काकमाचीकपोतयोरपि ग्रहणं उक्तं हि वाभटे—कुलत्थां काकमाचीञ्च कपोतञ्च सदा त्यजेदित्याहुः सर्व्वकालमिति यावद्रसायनहिता गुणास्तिष्ठन्ति। केचित्तु यावज्जीवनं कुलत्थवर्जनमाहुः। कुलत्थस्य वर्ज्जने सर्व्वकालीनत्वस्योपपत्तेश्चरके चैव तेषां प्रयोगं प्रतिषिध्यत इति। यैर्द्रव्यैरालोड्य शिलाजतु पेयं तान्याह पयांसीत्यादि चरकस्य। सोपस्कारमिति चरके परीक्षादिकं नोक्तं अत्र पुनर्लौहकिट्टायत इत्यादिना तदप्युक्तमिति सोपस्कारत्वम् ॥ ६७ ॥

चरकोक्तशिलाजतुविधिमभिधाय शैवतन्त्रोक्तप्रसिद्धशिलाजतुप्रयोगं शिवगुड़िकामाह काल इत्यादि। रवितापाढ्य इति विशेषणाद् ग्रीष्म इति यावत् अन्ये तु शरदमप्याहुः। शिलाजतुनोऽत्र षोड़शपलमात्रा, वक्ष्यति च पलानि दश षट्

काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरी द्राक्षा।
ऋद्धियुगर्षभवीरामुण्डितिका जीरकोंऽशुमतयौ च॥
रास्नापुष्करचित्रकदन्तीभकणाकशिकुचव्याब्दाः।
कटुकाम्लकीपादे तानि पलांशिकानि कार्य्याणि॥
अवशेषे स्नावितानां रसेन पादांशिकेन भाव्यानि।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च॥
द्विपलश्च त्रिकमागधिकाकटुकर्कटाख्यमरिचानाम्।
चूर्णं पलञ्च विदार्य्यास्तालीशपलानि चत्वारि॥
षोडशसितापलानि चत्वारि घृतस्य माक्षिकस्याष्टौ।
तिलतैलस्य द्विपलं चूर्णार्द्धंपलानि पञ्चानाम्॥
त्वक्क्षीरिपत्रत्वङ्नागैलानां मिश्रयित्वा तु।
गिरिजस्य षोडशपलैर्गुडिकाः कार्य्यास्ततोऽक्षसमाः॥

---

चेति। तेन तन्मानसमं मिलितत्रिफलाद्रव्यं गृहीत्वा क्वाथयित्वा त्र्यहं भावना कर्त्तव्येत्याह त्रिफलेत्यादि। अत्र तुल्यं गिरिजेन जलमित्यादि पूर्व्वोक्तवचनानुसारेण त्रिफलाक्वाथं कृत्वा त्र्यहं भावना कार्य्येत्यर्थः। एवं दशमूलकाद्यादिभिर्गोमूत्रान्तैरपि त्र्यहं त्र्यहं क्रमेण भावयेदित्यर्थः। क्षीरेण पुनरेकाहं परमिति क्षीरेण एकाहमेव भावयेदित्यर्थः। वक्ष्यमाणकाकोल्यादिक्वाथेन पुनः सप्ताहं भावना कर्त्तव्येत्याह सप्ताहं भाव्यं स्यादिति। एषामिति वक्ष्यमाणकाकोल्यादीनाम्। यथालाभमिति वचनात् इन्द्रयवकटुरोहिण्यादिव्यतिरेकेणापि। विदारीयुग्ममिति विदारीक्षीरविदार्य्यौ क्षीरविदार्य्यास्तु लक्षणं क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारीतिभग्नचिकित्सोक्तगन्धतैलव्याख्यायां गदाधरेणोक्तम्। ऋद्धियुगं ऋद्धिवृद्धी वीरा मांसीति त्रिविक्रमः जलशाकमिति रत्नप्रभा। जीरके

ताः शुष्का नवकुम्भे जाते पुष्पाधिवासिते स्थाप्याः।
तासामेका काले भक्ष्या पेयापिवा सततम् ॥
क्षीररसदाड़िमरसाः सुरासवं मधु च शिशिरतोयानि।
आलोड़नानि तासामनुपाने वा प्रशस्यन्ते ॥
जीर्णे लघ्वन्नपयोजाङ्गलीनिर्यूहयूषभोजी स्यात्।
सप्ताहं यावदतःपरं भवेत् सर्व्वं सामान्यम् ॥
भुक्तापि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित्।
निरुपद्रवा प्रयुक्ता सुकुमारकैः कामिभिश्चैव ॥
सम्वत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम्।
बद्धवार्षिकमपि गाढ़ं यक्ष्माणं चाढ्यवातञ्च ॥
ज्वरयोनिशुक्रदोषप्लीहार्शःपाण्डुग्रहणीरोगान्।
व्रध्नवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥

---

इत्यादि कृष्णाशुक्लजीरके अंशुमत्यौ शालपर्णीपृश्निपर्ण्यौ इभ-कणा गजपिप्पली कटुका कटुरोहिणी एतान्यष्टविंशतिद्र-व्याणि लिखितानि। वाभटे तु रसायनतन्त्रपठितशिवगुड़िका पाठे ऋद्धिऋषभकादिषड़द्रव्याणि पठ्यन्ते तद्यथा ऋद्धि-ऋषभकौ मुण्डिरीन्द्रयवौ कटुरोहिणी कर्कटशृङ्गी चेति तदेव-मुभयाचार्य्यप्रामाण्यादुभयथैव प्रयोगसङ्गतिरभ्युपेया। अस्याः पिप्पल्यादिवत् गणत्वविवक्षाया यथालाभवचनादेता न षोड़श-प्रयाणि न त्यज्यन्तेऽपीति केचित्। एषां चाष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां क्वथनार्थे देयजलद्रोणसाधितैः पक्वाशरावैः सप्तधाविभक्तैः सप्तदिनानि भावना; [illegible] किन्तु सप्त-दिनैःकाथस्याम्लता भवन्ति ततश्चैषामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां सप्तदिनविभागेन पलचतुष्टयं मिलित्वा ग्राह्यं तेन प्रतिदिनं पलचतुष्टयविभागेन काकोल्यादीनां प्रत्येकं माषा ८ रक्तिका २ ग्राह्यं एवं जलद्रोणस्यापि सप्तदिनविभागेन देय-

जठरं श्वित्रं कुष्ठं पाण्डुत्वं क्लैव्यं मदं क्षयशोषम्।
उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्व्वान्॥
आनाहमतीसारं साहन्दरं कामलाप्रमेहांश्च।
यकृदर्व्वुदानि विद्रधिभगन्दरं रक्तपित्तञ्च॥
अतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति।
दंष्ट्राविषं समौलं गराणि बहुप्रकाराणि॥
मन्त्रौषधियोगान् विप्रयुक्तान् भौतिकांस्तथा भावान्।
पापालक्ष्म्यौ चेयं शमयेद्गुडिका शिवानाम्ना॥
बल्या हृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम्।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च।
श्रीमान् प्रहृष्टमेधः स्मृतिबुद्धिबलान्वितोऽतुलशरीरः॥
पृथोजोऽतिविमलेन्द्रियतेजोबलसम्पदुपेतः।
वलीपलितरोगरहितोजीवेच्छरदां शतद्वयं पुरुषः॥

---

जलशराव ८ स १ माषा ८ रति १ अस्य पादावशिष्टतया स्थाप्यं जल श २ कर्ष १ माषा २ अस्मिन् क्वाथे पूतोष्णे प्रतिदिनं शिलाजतुभावना एवं सप्ताहं कर्त्तव्यम्। दश षट् चेति षोडशेत्यर्थः। यद्यपि निर्द्देशस्य मानप्रधानत्वात् विश्वादीनां मरिचान्तानां मिलित्वैव पलद्वयं युज्यते तथापि वाभटप्रामाण्यात् प्रत्येकमेव द्विपलं ग्राह्यम्। पञ्चानामिति त्वक्क्षीर्य्यादेलान्तानां प्रत्येकमर्द्धपलं वाभटदर्शनादेव। त्वक्क्षीरा वंशलोचना। गिरिजस्य षोड़शपलैर्मिश्रयित्वेति योज्यम्। इह सर्व्वेष्वेव शिलाजतुप्रयोगेषु कर्म्मवेशषु प्रथमं शोधनं विधाय तिक्तकघृतं ह्यहं त्र्यहं वापि बलानुरूपप्रमाणं दातव्यं यथा स्निग्धोभवति तदुक्तं तन्त्रप्रदीपे — संशुद्धकायोविमलेन्द्रियश्च प्रशस्तनक्षत्रमुहूर्त्तयोगे। पिबेद् घृतं तिक्तकषायसिद्धं त्र्यहं त्र्यहं वापि बलानुरूपमित्यादि। अक्षसमा चात्युत्तममाला

सम्बत्सरप्रयोगाद्द्वाभ्यां शतानि चत्वारि।
सर्व्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम्॥
समुद्भूताऽमृतमन्थनोत्थःस्वेदः शिलाभ्यो नतवज्रिरेः प्राक्।
योमन्दरस्थाऽत्मभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी॥
शिवागुड़िकेति रसायनमुक्तं गिरीशेन गणपतये।
शिववदनविनिर्गता यस्मात्तस्मात् शिवागुड़िकेति॥
शैवसिद्धान्तोक्ता शिवागुड़िकेयम्॥ ६८॥

अमृतभल्लातकी।

सुपक्वभल्लातफलानि सम्यग् द्विधा विदार्य्याढ़कसम्मितानि।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि॥

अतस्तदनुसारेण मध्यमाधमपुरुषापेक्षया मात्रोक्ता यदृच्छया कृत्यनियमेन तेन कदाचित् भुक्तापि भक्षिता सती विकारं न जनयेदित्यर्थः। आढ़ग्रात जयतान्मः सहजहेतुज कामग्रहय-परिग्रहार्थं माहडंग कवग्रमित्यभयपदोपादानं बोध्यं यद्यपि बीजदोषोत्थस्य सहजकुष्ठामसाध्यत्वेनोक्तं तथापि प्रयोगमाहा-त्म्यसूचनार्थमिदमुक्तं गराणि संयोगविषाणि भौतिकान् भावानिति भूतकृताः पीड़ाः। सम्बत्सरप्रयोगादिति पूर्व्वेण सम्बध्यते द्वाभ्यामिति सम्बत्सरद्वयेनेत्यर्थः। शिलाजतुनः प्रागुत्पत्तिमाह समुद्भूतेत्यादि अमृतमन्थनोत्थ इति अमृत-मन्थनसमयजः। हितायेत्यादि हितायेत्यत्र जगतामिति शेषः॥ ६८॥

अमृतभल्लातमाह सुपक्वेत्यादि भल्लातकान्यत्र हारीतो-क्तामृतभल्लातकीहतीक्तरीत्या ग्राह्याणि यथा — भल्लातकानां पवनोद्धृतानां छन्नचुग्रतानामिह चाढ़कं स्यात्। तच्चेष्टका-चूर्णकणैर्विघृष्य प्रक्षाल्य धीरो विधिवत् प्रवाते। शुष्कं पुन-र्द्विदलीकृतञ्च ततः पचेदप्सु चतुर्गुणासु। पादावशिष्टं परि-

पुनः पचेत् क्षीरचतुर्गुणेन घृतांशमुक्तेन घनं यथा स्यात्।
सितोपलाषोड़शभिः पलैस्तु विमिश्रय संस्थाप्य दिनानि सप्त॥
ततः प्रयोज्याग्निबलेन मात्रां जयेद्गुदोत्थानखिलान् विकारान्।
कचान् सुनीलान् घनकुञ्चिताग्रान् सुपर्णदृष्टिं सुकुमारताञ्च॥
जरां क्षयानाश्च मतङ्गजं बलं स्वरं मयूरस्य क्षुताशदीप्तिम्।

---

पूतशीतं घृतेन तुल्येन पचेत् सुशीतम्। तदर्द्धया शर्करया-वकीर्णं ततः खजेनोन्मथितं विधाय। भाण्डे विशुद्धे त्वथ धान्य-राशौ संस्थापयेत् सप्तदिनानि चेति। ततसप्तरात्रात् परि-जातवीर्य्यमित्यादि। अत्र भल्लातकानां चतुःषष्टिपलानि तदपेक्षया चतुर्गुणं जलं ग्राह्यमानं द्रवद्वैगुण्याच्चतुःषष्टिशराव-परिमितं यद्यपि तथापि वक्ष्यमाणतन्त्रान्तरीयवाक्यैकतानु-रोधात् आढ़के पलविवक्षां विधाय पलोल्लेखगतत्वेन द्वैगुण्यं न विधेयं तथा क्वचित् पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यै-कतानुरोधात् पलोल्लेखगते द्रव्येऽपि कुड़वादिविवक्षायां द्वैगुण्यं भवति। तथापि चरके क्षतक्षीणचिकित्सिते मधुकाष्टपलं द्राक्षा प्रस्थकाथ इत्यादिना यः प्रयोग उक्तः स जतुकर्णे द्राक्षाप्रस्थः मधुकार्द्धप्रस्थ इत्यादि ग्रन्थेन पठितः तेन जतुकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्वैगुण्यमेव जलं भवति तत्प्रत्ययाच्चरकेऽपि मधुकाष्टपलोल्लेखविहितेऽपि क्वाथे कुड़वद्वयविवक्षया कृतद्वैगुण्यमेव जलं दीयते। तद्वदत्रापि आढ़के पलविवक्षां विधाय द्वैगुण्यं न कार्य्यं तदेव तन्त्रान्तरीयवाक्यं यथा-भल्लातकाढ़कं क्षुण्णं जलाढ़कद्वये शृतम्। पादशेषे रसे तस्मिन् घृतप्रस्थंसमन्वितो क्षीराढ़कं ततो दत्त्वा सितायाः प्रस्थमेव च। तावच्च साधयेद्धीमान् यावल्लेहत्वमागतम्। अर्शसां नाशनं श्रेष्ठं दीपनं कुष्ठनाशनम्। अम्लपित्तादघ्नं प्रोक्तं वाजीकरण-

चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम्।
सर्पिःक्षौद्रयुतं लीढ़ा शतं गच्छेद्वराङ्गनाः॥
एवमामलकं चूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भिर्युक्तं लीढ़ा पयः पिवेत्॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यते॥ ३॥
विदारीकन्दकल्कन्तु घृतेन पयसा नरः।
उड़ुम्बरसमं खादन् वृद्धोऽपि तरुणायते॥ ४॥
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत्॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना॥

---

मांसस्य क्षीरेण सह विरोधोदर्शितस्तथापि तत्सामान्यवचनमिदं पुनरपवादरूपं विशिष्टवस्तावस्तुविषयतया न विरोधमावहति। असकृदिति सप्तधा पूर्व्ववदिति अक्षतपूर्व्वस्त्रीसङ्गमवत्॥२॥

चूर्णमित्यादि सुश्रुतस्य स्वरसोऽपि विदार्य्या एव। एवमित्यादि चक्र स्वरसभावितस्याप्युक्तत्वात् एवमित्यतिदेशस्य वैयर्थ्यं वैयर्थ्यं स्यात् तेन विदारीचूर्णवत् क्षौद्रघृताभ्यामामलकस्य तत्स्वरसभावितस्य प्रयोग इति कश्चित् तेन आमलकचूर्णस्य द्विधा प्रयोगः एकः घृतक्षौद्राभ्यां अन्यश्च शर्करामधुघृतपयोऽनुपानैश्चेति। अन्ये तु एवमित्यतिदेशः सुकृतत्वविधानार्थमित्याहुः॥ ३॥

विदारीत्यादि सुश्रुतस्य अत्र घृतेनेत्यत्र सृतेनेति पाठे केवलं जलसृतेनेत्यर्थः॥ ४॥

स्वयंगुप्तेत्यादि सुश्रुतस्य। उच्चटेत्याद्यपि तस्यैव। सुखार्थिनेत्यत्र बलार्थिनेति सुश्रुते पठ्यते। एवमितत्रनेन पयसेति बुध्यते। कर्षमितत्यादि चरकस्य मधुकं यष्टिमधु। मितत्रवेण

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ॥
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत्।
गोक्षुरकः क्षुरकः शतमूलीवानरिनागबलातिबला च ॥
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति।
घृतभृष्टो दुग्धमाषपायसो वृष्य उत्तमः ॥ ५ ॥
दध्नः सरं शरच्चन्द्रसन्निभं दोषवर्जितम्।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्या च बुद्धिमान् ॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे।
मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम् ॥

---

इति नित्यशुक्रवेगमभिभूतः। गोक्षुर इत्यादौ क्षुरकः कोकिलाक्षः वानरी शूकशिम्बी, शतमूली च वानरी चेति समाहारद्वन्द्वः अत्र षष्ठीबहुवचनान्तः पाठएव साधुः। एषां क्षुरकगोक्षुरवानरीणां फलबीजं ग्राह्यं यदुक्तमष्टतवल्लयां गोकण्टक्षुरकपिकच्छुशफरीकुशीवलाचूर्णशतेन [ गोकण्टक्षुरकपिकच्छुफलवरीकुशीवलाचूर्णश्टतेन ] पयसा रात्रिसमय इत्यादि। अत्र कुशीगोरक्षतण्डुला। घृतेत्यादौ माषपायसो माषविदलदुग्धेन कृतः पायसः स च भृष्टो घृतेन सन्तलितः ॥ ५ ॥

दध्न इत्यादि। चरकस्य। दोषवर्जितमिति मलिनत्वादिदोषवर्जितम्। युक्त्यायुक्तमिति यथातिमाधुर्य्यं न स्यात् कटुत्वञ्चाधिकं न भवति तथा शर्करामरिचादि योज्यमित्यर्थः। मार्जितमिति पाठे पटे घृष्टं तमिति षष्टिकोदनम्। निश्चलस्तु मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकोदनमिति पठ्यते। तस्मिन् मार्जिते पूते रस इत्यर्थात् ततोऽत्र शीते शीतवीर्य्ये षष्टिकभक्तं प्रक्षिपेत् ततोऽद्यादिति। उपरिष्टादिति भुक्तो-

तदद्यादुपरिष्टाच्च रसालं मात्रया पिबेत् ।
वर्णस्वरबलोपेतः पुमांस्तेन हि जायते ॥ ६ ॥
आर्द्राणि मत्स्यमांसानि शफरीः सुसंभर्जिताम् ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥ ७ ॥

नारसिंहचूर्णम् ।

शतावरीरजःप्रस्थं प्रस्थं गोक्षुरकस्य च ।
वाराह्याविंशतिपलं गुडूच्याः पञ्चविंशतिः ॥
भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु ।
तिलानां शोधितानाञ्च प्रस्थं दद्यात् सुचूर्णितम् ॥
त्र्यूषणस्य पलान्यष्टौ शर्करायाश्च सप्ततिः ।
माक्षिकं शर्करार्द्धेन माक्षिकार्द्धेन वै घृतम् ॥
शतावरीसमं देयं विदारीकन्दजं रजः ।
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत् ॥

---

त्यर्थः । रसालालक्षणं यथा-सचतुर्जातकाजाजीसगुडार्द्रक नागरम् । रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधीति अन्यत्र यथा — अर्द्धाढकं सुचिरपर्य्युषितस्य दध्नः खण्डस्य षोड़शपलानि शशिप्रभस्य । सर्पिः पलं मधुपलं मरिचार्द्धकं शुण्ठ्यास्तथार्द्धपलमर्द्धपलं चतुर्णाम् । सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरगन्धसुरभिर्भाण्डसंस्था । एषा वृकोदर कृता सुरसा रसाला यास्वादिता भगवता मधुसूदनेन ॥ ६

आर्द्राणीत्यादि । चरकस्य । आर्द्राणि सद्यस्कानीत्यर्थः मत्स्योऽत्र प्रधानकल्पतया रोहितः ॥ ७ ॥

शतावरीत्यादि । चन्द्रटस्य । वाराह्या इति वराह कन्दस्य तल्लक्षणं यथा — ताम्बूलसदृशैः पत्रैर्ग्रन्थिभिः समन्वितम् । सर्ज्जार्ज्जुननिभैः पुष्पैः शोभते सुसुगन्धिभिः । वराह च्छविरोमैन पिच्छलेन सुवर्च्चसा । कन्देन कटुतिक्तेन शीतोत्पन्न

पलार्द्धमुपयुञ्जीत यथेष्टञ्चापि भोजनम्।
मासैकमुपयोगेन जरां हन्ति रुजामपि॥
वलीपलितखालित्यमेहपाण्ड्वाद्यपीनसान्।
हन्त्यष्टादशकुष्ठानि तथाष्टावुदराणि च॥
भगन्दरं मूत्रकृच्छ्रं गृध्रसीं सहलीमकम्।
क्षयञ्चैव महाश्वासान् पञ्च कासान् सुदारुणान्॥
अशीतिं वातजान् रोगान् चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान्॥
सर्व्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा।
स काञ्चनाभोऽनगराजविक्रमस्तुरङ्गमञ्चाप्यनुयाति वेगतः॥
स्त्रीणां शतं गच्छति सोऽतिरेकं प्रकृष्टदृष्टिश्च यथा विहङ्गः।
पुत्रान् संजनयेद्वीरान् नरसिंहनिभांस्तथा॥
नारसिंहमिदं चूर्णं सर्व्वरोगहरं नृणाम्।
वाराहीकन्दसङ्गस्तु चर्म्मकारालुकोमतः॥
पश्चिमे धृष्टिशब्दाख्योवाराहलोमवानिव॥ ८॥

---

सुगन्धिना। जायते सा गिरौ रम्ये विन्ध्ये श्रीपर्व्वते तथा।
वृन्दे तु वाराहसदृशवत् कन्दोवाराहीकन्दसंज्ञितः। भिषजां तदलाभे च चर्म्मकारालुकोमतइत्युक्तम्। किन्तुवाराहीकन्दापेक्षया चर्म्मकारालुकस्यातिहीनगुणत्वेन नास्य तत्प्रतिनिधित्वं युक्तम्। गुडूच्याः पञ्चविंशति इत्यपपाठः। तन्त्रान्तरे-भल्लातकं प्रस्थयुग्मं तत्सप्तपलोनं तुडूच्याश्चेत्युक्तत्वात् यतः प्रस्थयुगमेव सप्तपलोनं सत्पञ्चविंशतिपलानि भवन्ति त्र्यूषणस्य मिलित्वा पलान्यष्टौ। विदारी भूमिकुष्माण्डः। पलार्द्धमिति पूर्व्वयुगाभिप्राये॥ इदानीमष्टमासकेन व्यवहारः। आढ्रइति आढ्रमाढकः। यथा भीमोभीमसेनः। वाराहीकन्दस्य दुर्लभतया चर्म्मकारालुकमेव गौड़ीयैर्व्वाराहीकन्दसंज्ञया गृह्यते।

गोधूमाद्यं घृतम् ।

गोधूमाच्च पलशतं निःक्वाथ्य सलिलाढ़के ।
पादावशेषे पूते च द्रव्याणीमानि दापयेत् ॥
गोधूमं मुञ्जातफलं माषद्राक्षापरूषकम् ।
काकोलीक्षीरकालीजीवन्ती शतावरी ॥
अश्वगन्धा सखर्ज्जुरं मधुकं त्रूषणं सिता ।
भल्लातकमात्मगुप्ता समभागानि कारयेत् ॥
घृतप्रस्थं पचेदेकं क्षीरं दत्त्वा चतुर्गुणम् ।
मृद्वग्निना च संसिद्धे द्रव्याण्येतानि निक्षिपेत् ॥
त्वगेलापिप्पलीधान्यकर्पूरं नागकेशरम् ।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥
दग्धे कुशदण्डेनालोड्य विधिवद्विनियोजयेत् ।
शाल्योदनेन भुञ्जीत पिवेन्मांसरसेन वा ॥
केवलस्य पिवेदस्य पलमात्रां प्रमाणतः ।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥
बल्यं परं वातहरं शुक्रसंजननं परम् ।
मूत्रकृच्छ्रप्रशमनं वृद्धानाञ्चापि शस्यते ।

---

वस्तुतस्तु वराहकन्दकाश्चर्म्मकारालुकं द्रव्यान्तरं तल्लक्षणाभावात् ॥ ८ ॥

गोधूमेत्यादि गोधूमोधवलसारोग्राह्य उत्कृष्टत्वात् सलिलाढ़के पादशेष इति योज्यं अतो गोधूमशतपले ऽकद्रोणो देयइति चक्रः । बकुलस्तु निःक्वाथ्येत्यनेनैव संवध्यते । तथैव निर्द्दिष्टत्वात् पादशेषञ्च प्रस्थइति व्याचष्टे किन्तु चक्रपक्ष एव प्रचरति । मुञ्जातकफलं सोत्तरपथिकं तदप्राप्तौ तालमस्तकम् । धारावल्यास्तु तालमस्तकमित्येवास्ति । परूषकं परूषस्य फलं खर्ज्जुरं पिण्डखर्ज्जूरं मधुकं यष्टिमधु अन्ये तु मधूकमिति

पलद्वयं तदश्नीयाद्‌गरात्मतन्द्रितः।
क्षीणां शतञ्च भजते पीत्वा चानुपिबेत् पयः॥
अश्विभ्यां निर्मितञ्चैतत् गोधूमाद्यं रसायनम्।
जलद्रोणे तु गोधूमक्काथे तच्छेषमाढ़कम्॥
मुञ्जातकस्य स्थाने तु तद्‌गुणं तालमस्तकम्।
कल्कद्रव्यसमं मानं त्वगादेः साहचर्य्यतः॥ ९॥

शतावरीघृतम्।

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्कंरापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुच्यते॥ १०॥

गुड़कुष्माण्डकः।

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत्॥
त्वक्‌पत्रधान्यव्योषजीरकैलाद्वयात्मकम्।

---

पठित्वा मधूकस्य फलमाह: सिता शर्करा। आत्मगुप्तायाः स्थानमिति निश्चयः फलमित्यन्ये। संसिद्ध इत्यनन्तरं पूते चेति शेषः। त्वगादीनाञ्च मानं कल्कतुल्यं वक्ष्यति ततः शीतीभूते शर्करामधुनोर्म्मिलित्वाऽष्टौ पलानि। पूर्व्वं पलमात्रां पिबेदिति यदुक्तं तत् प्रथमतः अनन्तरं सात्म्यभावे सति पलद्वयं न पुनरितोऽधिकमिति॥ ९॥

घृतमित्यादि। चरकस्य। विशदर्शितं प्रक्षेपः पादिकः न्यायात् स्नेहे कल्कसमोमतद्रवत्वाः शर्करापिप्पलीक्षौद्राणां कल्क समत्वं ज्ञेयम्॥ १०॥

कुष्माण्डेत्यादि घृततैलयोर्म्मिलित्वा प्रस्थं अत्र खण्डकुष्माण्डवत् त्वग्बीजादिवर्ज्जितं सुस्विन्नगलितपिण्डकुष्माण्डभर्ज्जनं कार्य्यं यावन्मधुनिभः पाको भवति। ततः द्रवार्थमेव

ग्रन्थिकं चव्यमातङ्गपिप्पलीविडभेषजम् ॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम्।
चूर्णीकृतं पलांशञ्च गुडस्य च तुलां पचेत् ॥
शीतीभूते पलान्यष्टौ मधुनः संप्रदापयेत्।
कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते ॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम्।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः ॥
क्षयेण च गृहीतानां परमेतद्भिषग्जितम्।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् ॥
गुडकुष्माण्डकं ख्यातं अश्विभ्यां समुदाहृतम्।
खण्डकुष्माण्डवत् पाकं स्विन्नकुष्माण्डकद्रवः ॥ ११ ॥
यत् किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥ १२ ॥
भल्लातकहरीतकीफलदाड़िमफलदाड़िमवल्कलसाधितं कुरुते।
लिङ्गं मर्द्दनविधिना कटुतैलं वाजिलिङ्गाभम् ॥

---

गालितकुष्माण्डद्रवमेव प्रस्थचतुष्टयं गृहीत्वा तेन द्रवेण पुराणगुड़पलशतमेकीकृत्य पूत्वा (कुष्माण्डं पचेत्। ततोऽवतारिते कोष्णे त्वक्पत्रादिचूर्णप्रक्षेपः। जीरकैलाद्वयेति जीरकद्वयमेलाद्वयञ्चेति मातङ्गपिप्पली गजपिप्पली।— प्रलम्बं तालाङ्कुरः तालखण्डइत्यन्ये भाद्य एव पञ्चोयुक्तो हृद्यत्वात्। मन्दाग्नीनामल्पमात्रयेति शेषः प्रमदासु प्रसक्तानां वाजीकरणमित्यन्वयः। तथा ये क्षीणरेतसस्तेषामुत्तमं तद्भिषग्जितमिति योज्यम्। पाकमित्यादृक्तं खण्डकुष्माण्डकञ्च रक्तपित्तोक्तं गुड़कुष्माण्डके द्रवइति पाठे द्रवः स्विन्नकुष्माण्डस्यैव ज्ञेयः ॥ ११ ॥

अनुक्तवाजीकरणसंग्रहार्थमाह यत्किञ्चिदित्यादि ॥ १२ ॥

कनकरसमह्यवर्त्तितहयगन्धामूलमिश्रपद्मचूर्णयुतम् ।
माहिषमिह नवनीतं गलवीजे तत्र फलमध्ये ॥
गोमयगाढ़ोद्वर्त्तितं पूर्व्वं पश्चादनेन संलिप्तम् ।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयितम् ॥ १३ ॥

अश्वगन्धातैलम् ।

अश्वगन्धावरीकुष्ठं मांसीसिंहीफलान्वितम् ।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥
स्तनलिङ्गकर्णानां पालिवर्द्धनं मक्षणादिदम् ॥ १४ ॥
भल्लातकोद्वृहतीफलनलिनीदलसिन्धुजन्मजलशूकैः ।
माहिषनवनीतेन करम्बितैः सप्तदिनमुषितैः ॥
मूलेन हयगन्धायामहिषीमलमथितं पूर्व्वमथ लिप्तम् ।
भवति लघुलतरासभलिङ्गं ध्रुवं पुंसाम् ॥ १५ ॥

---

इदानीं लिङ्गवृद्धत्वादपत्यस्य तद्वृद्धियोगानाह भल्लातकेत्यादि अयं योगो भल्लातकासत्त्वाय न देयः जलशूकात चतुर्गुणं बोध्यं कनकेत्यादि कनकं धुस्तूरं तस्य पत्ररसः। तत्फलमिति धुस्तूरमेव। गोमयेन सद्यस्केन लिङ्गे गाढ़मुद्वर्त्तनं कृत्वा ततोऽनेन लेप इति। कठिनाङ्गना इति कठिनाङ्गनाः प्रायेण द्राविड़नाटमालवदेशजाः। तासु प्रायशोवृहत्तरस्मरतेनैव तुष्यन्तीति कठिनत्वम् ॥ १३ ॥

अश्वगन्धातैले फलं वृहतीफलं कर्णपालिः कर्णनाड़िका॥१४॥

भल्लातकेत्यादौ करम्बिताः मिश्रितास्तैः। अनन्तरं हयगन्धायाः मूले विवरं कृत्वा सप्तदिनमुषितैर्भल्लातकादिभिर्लिप्तं लिङ्गमित्यन्वयः कीदृशं लिङ्गं महिषीमलेन मथितं पूर्व्वं मर्द्दितं पूर्व्वं एतेनादौ महिषीमलेन लिङ्गं सम्मर्द्द्य पश्चात् भल्लातकादिभिर्लिप्तं लिङ्गं लघुलतगर्द्दभलिङ्गं भवतीति ॥ १५ ॥

नीलोत्पलसितपङ्कजकेशरमधुकशर्करावलिप्तेन ।
सुरते सुचिरं रमते दृढ़लिङ्गो भवति नातिविवरेण ॥ १६ ॥
सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।
चरणाभ्यङ्गेन रतेर्वीर्यसम्भाद् दृढं लिङ्गम् ॥ १७ ॥
समाक्षं छागसलिलसंस्थं करभवारुणीमूलम् ।
गाढ़ोद्वर्त्तनविधिना लिङ्गस्तम्भं रते कुरुते ॥ १८ ॥
गोरेकोन्नतशृङ्गत्वग्भवचूर्णेन धूपितं वस्त्रम् ।
परिधाय भजन् ललनां नैकाण्डो भवति दुर्भर्त्तः ॥ १९ ॥
समतिलगोक्षुरचूर्णं छागीक्षीरेण साधितं समधु ।
भुक्तं ख्यापयति षाण्डं वर्जितं कुप्रयोगेण ॥ २० ॥

---

इदानीं वाजीकरणप्रसङ्गात् वीर्य्यसम्भ्रममाह नीलोत्पले-त्यादि । नीलोत्पलश्वेतपद्मयोः केशरम् । एभिः सर्व्वैः पिष्टै-र्लिङ्गं लिप्त्वा चिरकालं कामुकोरमत इत्यर्थः । अतिविवरेण अतिक्रान्तच्छिद्रेण ॥ १६ ॥

सिद्धमित्यादौ ।— भूमिलता किञ्चुलुकः तया मिश्रितं कुसुम्भबीजस्य तैलं सिद्धमिति पक्वमित्यर्थः ॥ १७ ॥

समाक्षमित्यादि ।— छागमूत्रसलिलं छागमूत्रं करभवा-रुणी उष्ट्रकण्टकः गङ्गापालङ्केति केचित् ॥ १८ ॥

इदानीं कुप्रयोगजातध्वजभङ्गचिकित्सामाह गोरित्यादि ।— यस्या धेनोरेकं शृङ्गमुन्नतं भवति तत्त्वक्चूर्णेन धूपितं वस्त्रं पिधायेत्यर्थः । यः पुरुषोनियमेन एकस्त्रीगामी स्त्र्यन्तरगमने तु ध्वजोत्थानं न भवति स एकान्त उच्यते ॥ १९ ॥

समेत्यादि ।— अत्र निस्तुषतिलगोक्षुरबीजचूर्णं छाग-दुग्धेन तत्कारिकां सावयित्वा शीते मधु दत्त्वा भक्षयेत् । षाण्डं क्लिबत्वानम् ॥ २० ॥

योगश्चवराङ्गवह्नं मथितेन व्यालित्यं हरति।
कम्बुवगो शृङ्गोद्भवलेपो योगजभ्रजभङ्गहरः॥ २१॥
कुष्ठैलवालुकैलासुलकधन्याकमधुकजलतः कवलः।
अपहरति पूतिगन्धं रसोन मदिरादिजं गन्धम्॥ २२॥
श्रोत्रेण वीजपूरत्वक्र व्रीडाधोवातगन्धनुत्॥ २३॥

इति हृष्याधिकारः।

---

## अथ स्नेहाधिकारः।

सर्पिस्तैलं वसा मज्जा स्नेहेषु प्रवरं मतम्।

---

कुप्रयोगेण लिङ्गानुत्थानं यत् तच्चिकित्सामाह योगजे-त्यादि। मथितेन घोलेन। कम्बुलेत्यादि।—कम्बुं मुखं यस्य गोः श्रृङ्गं न तु बलीवर्दस्य। कम्बुमुखगोगवीशृङ्गेण लेपनं लिङ्गस्य॥ २१॥

कुष्ठेत्यादौ मधुकं यष्टिमधु यदुक्तं लोकव्यवहाराख्यकाम-शास्त्रे कुष्ठैलवालुकैलामुलकधन्याकयष्टिमधुकवलः। हरति मुखपूतिगन्धं रसोनमदिरादिगन्धञ्च। दम्पत्योरन्यतरस्य मुख-पूतिगन्धेन भोगभङ्गप्रसङ्गः स्यादतस्तद्गन्धापनयनद्वारस्य योगस्य हृष्याद्दत्वं ज्ञेयम्। एवं वक्ष्यमाणयोगेऽपि बोध्यम्॥ २२॥

श्रोत्रेत्यादौ।— वीजपूरोमौखर इति ख्यातः। अयञ्च लेपः शयनसमये बोध्यः। अधोवातः गुदवायुः। वीजपूरपत्र-लेपस्तु अधोवातनिरोधं जनयति यदुक्तं तत्रैव योलेढि शयन-काले मधुमिश्रं वीजपूरदलचूर्णम्। स व्रीडाकरवातप्रसराव-रोधात् सुखं स्वपितीति॥ २३॥

इति हृष्याधिकारः।

---

तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥ १ ॥

रसायनवाजीकरणे पञ्चकर्म्मविशुद्धौ कर्त्तव्ये अतः पञ्चकर्म्माणि वाच्यानि पञ्चकर्म्मणाञ्च स्वेदपूर्व्वकत्वात् पुनः स्वेदस्य स्नेहपूर्व्वकत्वात् प्रथमं स्नेहविधिमाह सर्पिरित्यादि ।- वाभटस्य एतत् सर्पिरादिचतुष्टयं स्नेहेषु स्नेहकारकद्रव्येषु दधिक्षीरादिषु मध्ये प्रवरं श्रेष्ठं स्नेहनप्रकर्षादित्यर्थः । तत्रापीति तेष्वपि सर्पिरादिषु मध्ये सर्पिरुत्तमं श्रेष्ठम् । संस्कारोगुणान्तराधानमिति तस्यानुवर्त्तनमनुविधानम् । तैलादयोहि द्रव्यान्तरसंस्कृताः सन्तः स्वगुणं विहायैव संस्कारकद्रव्यगुणान् वहन्ति । सर्पिस्तु स्वगुणान् संस्कारद्रव्यगुणांश्च वहति अतएवोक्तं नान्यस्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते । यथा सर्पिरतः सर्पिः सर्व्वस्नेहोत्तमं मतमिति । अत संस्कारद्रव्यचित्रकादेर्गुणाधानेऽपि सर्पिर्न स्वगुणान् स्नेहशैत्यादीन् जहाति किन्तु स्वगुणांस्तद्गुणांश्च वहति । यतोऽनुशब्देन पश्चाद्वाचिना स्वगुणवर्त्तनस्य पश्चात् संस्कारकगुणवर्त्तनमुच्यते । स्नेहाद्वातं शमयति पित्तं माधुर्य्यशैत्यतः । घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम् । न च वाच्यं रुक्षोष्णचित्रकादिसंस्कारात् रुक्षोष्णं सर्पिर्भवति ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथमत्र तिष्ठतः । यतः सर्पिः सम्बन्धचित्रकावयवानुगतं हि रुक्षोष्णत्वं सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः । इदमेव च सर्पिषः संस्कारानुवर्त्तनं यत्स्वगुणविरुद्धस्यापि गुणानुपघातेन धारणमित्यादि व्याख्यान्तरमस्मदीयचरकतत्त्वप्रदीपिकायामेवानुसन्धेयम् । केचित्तु संस्कारः स्वीयगुणः शीतत्वादिः अनुशब्दः सहार्थे तेन विरुद्धवीर्य्याणामौषधानां संयोगेऽपि संस्कारोऽनुवर्त्तते तैलादीनान्तु दाहज्वरे चन्दनादितैलोपदेशात्तैलस्योष्णत्वं शीतवीर्य्यचन्दनादि द्रव्ययोगान्निवर्त्तते नैतद्रूपं घृतस्येत्याहुः ॥ १ ॥

केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देयं बहुकफे चापि व्योषक्षारसमायुतम्॥
तथा शोधयितुमेवाग्निनाड्यां यस्यते घृतम्॥ २॥
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु।
तैलं लाघवदार्ढ्यार्थी क्रूरकोष्ठेषु देहिषु॥ ३॥
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु।
रूक्षक्लेशसहात्यग्निवातावृतपथेषु च॥
शेषौ वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च।
तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि॥ ४॥
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे।
साधारणर्त्तौ स्नेहं पिबेत् कार्य्यवशादिह॥ ५॥

---

घृतविषयमाह केवलमित्यादि।- केवलं द्रव्यान्तरसंयोगरहितम्॥ २॥

तैलविषयमाह ग्रन्थीत्यादि। वाभटस्य॥ ३॥

वसामज्जाविषयमाह वातातपेत्यादि वाभटस्य शेषाविति छेदः। वातादिभिः क्षीणधातवो ये। ते तथा क्लेशसहः क्लेशक्षमः क्लेशसहदूत्यत्र क्लेशक्षयेति पाठो लेखकदोषात्। वातावृतपथेष्विति वातावृतस्रोतःसु शेषाविति वसामज्जानौ। वसायास्त्वन्यदपि विषयान्तरमाह वसा त्वित्यादि। रुजाशब्दः वस्त्यादिभिः सम्बध्यते। आहतः शस्त्रेण, भ्रष्टयोनि स्वस्थानाच्च प्रच्युतयोनिः॥ ४॥

इदानीं स्नेहानामुपयोगकालमाह तैलमित्यादि वाभटस्य साधारणर्त्तौ स्नेहं पिबेदित्युत्सर्गः। साधारणश्च प्रावृट्शरद्वसन्ताख्यं शोधनमधिकृत्योक्तमृतुत्रयं यदाह दृढबलः- अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः। तदन्तरे प्रावृडाद्यास्त्रेयाः साधारणास्त्रयः। प्रावृट्शुक्लनभौ ज्ञेयौ शरदूर्ज्जसहौ पुनः। तपस्यश्च मधुश्चैव वसन्तं शोधनं प्रतीति। भा

वातपित्ताधिकाराबाबुष्णे चापि पिवेन्नरः ।
श्लेष्माधिको दिवा शीते पिवेच्चामलभास्करे ॥ ६ ॥

---

साधारणा इत्यनुक्तोष्णशीतवर्षा इत्यर्थः । शुक्रमभावित्यारापादृश्चावणौ माष्टङ्ित्यक्तं अतएव निर्द्देशात् शुक्रशब्द आषाढवचनोऽपि ज्ञेयः । किम्वा शुचिर्नभावेति पाठः । अर्ज्जसहौ कार्त्तिकमार्गशीर्षौ तपस्यः फाल्गुणः मधुश्चैत्र इति । वर्षान्त इति शरदि । अन्त्यौ वसामज्जानौ । माधव इति वैशाखे । यद्यपि वैशाखो न साधारणर्त्तुमध्ये पठितः किन्तु फाल्गुणचैत्ररूपोवसन्तएव तत्रापि प्रभूत कफतया स्नेहपानविषयत्वेनात्र नोक्तः । वैशाखन्तु बलक्षयधातुक्षयकारक इति । अत्र बल्योवातुकारक: वसामज्जप्रयोगो युक्त एवेत्यर्थः । अन्त्याविततदपि पाठः । कुतः पुनरुक्तसमय एव स्नेहं पिवेदित्यत आह कार्य्य बशात्तुतदिति संशोधनरूपप्रयोजनवशात् संशोधनं हि साधारणर्त्तौ उत्सर्गतो विधीयते । तेन तदङ्गविशेषं स्नेहपानमपि तत्रैवेत्यर्थः ॥ ५ ॥

इदानीमात्ययिकातङ्कग्रस्तौतेनातुरेणाशीतेऽपि यथास्नेहपानं विधेयं तथा दोष विशेषे च यथा स्नेहपानं तदाह वातपित्ताधिक इत्यादि । वातश्च पित्तञ्च वातपित्तं तदधिकोवातपित्ताधिकः । रात्राविति सायं उष्णे ग्रीष्मे श्लेष्माधिकग्रहणमितरत्र शीतविकारसामञ्जग्रस्तौतपुरुषोपलक्षणं तेन वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते । अतएव सुश्रुतेऽप्युक्तं-वातपित्ताधिकोरात्रौ वातश्लेष्माधिकोदिवेति । केवलवाताधिकस्य तथा पित्ताधिकस्य तथा श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव । पानकालोवक्ष्यमाणः वक्ष्यति हि - पिवेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः इत्यादि । व्याख्यान्तरञ्च चक्रदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयम् । अमलभास्कर इति दुर्द्दिनव्युदासार्थं मध्याह्नग्रहणार्थं वा ॥ ६ ॥

स्नेह्य संशोध्य मद्यस्त्रीव्यायामासक्तचिन्तकाः।
वृद्धाबालाबलकृशारूक्षक्षीणास्त्ररेतसः॥
वातार्त्तस्यन्दतिमिरदारुणप्रतिरोधिनः।
स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः॥
ऊरुस्तम्भातिसाराम-गलरोग-गरोदरैः।
मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीड़िताः॥
आमप्रसूतायुक्ते च नस्ये वस्तौ विरेचने॥ ७॥
स्नेहसात्म्यः क्लेशसहोदृढः काले च शीतले।
अच्छमेव पिवेत् स्नेहमच्छपानं हि शोभनम्॥ ८॥

---

इदानीं स्नेहार्हानाह स्नेह्येत्यादि वाभटस्य स्नेह्या इति छेदः। स्नेह्या इति स्नेहार्हाः एवं संशोध्या इति वमनादिसंशोधनयोग्याः मद्या इति मद्यादिष्वासक्ताः चिन्तकाश्चिन्ताकुलाः। अबल इत्यशक्योऽपि यो बलरहितः कृश इति मांसोपचयहीनः। क्षीणास्त्ररेतसः इत्यो रक्तशुक्रे येषां क्षीणास्त्ररेतसः वातार्त्ता वातरोगिणः स्यन्दोऽभिष्यन्दः स च पुराणाभिमतः दारुणोदुःसाध्यः प्रतिरोधो जागरणम्। अत्यन्तजागरशील इत्यर्थः। अन्ये तु उन्मीलनयुक्ता इत्यर्थः।

असेह्यानाह नत्वित्यादि।— अतिशब्दोदुर्बलान्तेषु प्रत्येकं योज्यः। अतएवाल्पबलाः स्नेह्याः नत्वतिदुर्बला इति न पूर्व्वापरविरोधः। आमप्रसूता इत्यपरिणतगर्भस्रावयुक्ता इत्यर्थः वाभटे त्वपप्रसूतेत्यक्षयाः पठति व्याचष्टे च सुतगर्भेति सुश्रुतेन अकाले च प्रसूता स्त्रीत्युक्तम्। युक्त इति तत्काल-प्रयुक्ते॥ ७॥

अच्छस्नेहपानविषयमाह स्नेहेत्यादि। सुश्रुतस्य दृढ़ इति बलवान् काले च शीतलइति यद्यपि पूर्व्वोक्तसाधारण-

पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः।
बृंहणार्थं पुनराहारे नैशे जीर्णे पिबेन्नरः॥
अहोरात्रमहः कृत्स्नं दिनार्द्धञ्च प्रतीक्षते।
उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति॥

---

काल एव स्नेहविषयस्तथाप्यात्ययिकविकारवशात् यदि शीतले काले स्नेहोपयोगः कर्त्तव्यः स्यात् तदाऽच्छमेव पिबेदित्यर्थः। अन्ये तु इह इति पदं दूरीकृत्य काले चानतिशीतल इति पठन्ति। अच्छ इत्यादिनाऽस्य सम्बन्धः॥ ८॥

सम्प्रति संशमनस्नेहस्य संशोधनार्थस्नेहस्य च पानकाल-माह पिबेदित्यादि। संशमनमिति न शोधयति यद्दोषान् तथा संशोधनमिति संशोधयति यद्दोष इत्याद्युक्तलक्षणम्। अन्न-काले द्विप्रहरादिलक्षणे तत्र बुभुक्षा कदाचिन्न स्यादिति तदर्थं प्रकाङ्क्षित इति विशेषणम्। बृंहणार्थन्तु स्नेहं विश्रुततादिकं नैशे निशान्तरकृते चाहारे जीर्णे सति मनुष्यः पिबेदित्यर्थः। अयमत्राभिसन्धिः संशमनार्थं स्नेहो यदि जरणान्ते प्रातरेव क्रियते तदा कोष्ठोपलेपाद्दोषस्याच्छयात्तेन दोषेण सह स्नेह उत्क्लेशं कुर्य्यात् न तु दोषसंशमनं अतएव संशमकोऽन्नकाले-ऽभिहितः। संशोधनार्थन्तु स्नेहो दोषोत्क्लेशकर एवापेक्षित इति दोषशोफावस्थायामेव प्रातःकाले तत्पानं युक्तमिति। एतच्च कालनियमनमुत्सर्गः तेन वातपित्ताधिको रात्रावित्यपवाद-विषयव्यतिरिक्त एवास्य विषयो ज्ञेयः। स्नेहमात्रायास्त्रै-विध्यमाह अहोरात्रमित्यष्टप्रहरोपलक्षणं एवमहःकृत्स्न-मिति तत्प्रहरप्रहरचतुष्टयं दिनार्द्धमिति तत् प्रहरद्वयमुप-लक्षयति अतएवोक्तं वाभटे द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जी-र्य्यन्ति याः क्रमादित्यादि तेन प्रहराद्यतीतेऽपि हीने मात्रा पीता यथोक्तप्रहरादिकालमतिक्रम्य दिनान्तरे रात्रौ वा जीर्य्य

उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्काथौषधेषु च ॥ ९ ॥
जलमुष्णं घृते पेयं यूषस्तैलेऽनुपस्यते ।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्व्वेषूष्णमथाम्बु वा ॥
भल्लातके तौवरे स्नेहे शीतमेव जलं पिवेत् ।
स्नेहपीतस्तु तृष्णायां पिवेदुष्णोदकं नरः ॥
एवं चानु प्रशाम्यन्त्यां स्नेहमुष्णाम्बुनोद्धरेत् ॥ १० ॥
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति ।
विष्टभ्य वापि जीर्य्येत्तं वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने ।
जीर्णाजीर्णविशङ्कायां पिवेदुष्णोदकं नरः ॥
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्ने भवेत् प्रति ॥ ११ ॥

---

मात्रामन्तव्या यदा पुनरहोरात्रपरिणामिनी मात्रा क्रियते तदहोरात्रेण कार्य्यः । अतएव चरके उत्तममात्रा स्नेहपान-विषय-पुरुष-मभिप्रेतस्योक्ता । क्षुत्पिपासासहादिति अनया तु चरकपरिभाषया प्रायेण व्यवहरन्ति वृद्धाः । तेन उत्तमादि-पुरुषाणां स्नेहमात्रां प्रति वृद्धव्यवहारसिद्धमतमाह उत्तम-स्येत्यादि ॥ ९ ॥

अनुपानमाह जलमित्यादि ।— अन्विति अनुपाने । सर्व्वेषूष्णमथाम्बु वेति यदुक्तं तदपवादमाह भल्लातेत्यादि । भल्लाततुवरयोः स्नेह इति विग्रहः । तुवरो वृक्षविशेषः तत्फल-भवस्नेह इत्यर्थः उक्तं हि सुश्रुते—पत्रैस्तु केशराकारैः फलैः सर्षपसन्निभैः । वृक्षस्तु वरकोनाम पश्चिमार्णवतीरज इति । पीतस्नेहे यदि तृष्णा स्यात् तदा तत्र प्रतिकारमाह स्नेह-पीतइत्यादि पीतस्नेह इत्यर्थः । उद्धरेदिति वमेत् ॥ १० ॥

अविधिपीतस्नेहजव्यापदः प्रतिकारमाह मिथ्याचारा-

भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम्॥ १२॥
त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः।

---

इत्यादि सुश्रुतस्य मिथ्याचारादिति शीतगुरुगादिसेवनाद्-यथाविध्यनुपयोगात् बहुत्वादित्यतिमात्रत्वात् विष्टभ्य मलादिरोधं कृत्वा जीर्णा जीर्यमाणा वाल्पस्नेहावधिषेण ज्ञेया॥११॥

इदानीं स्नेहमपेक्ष्याकालतयन्नितमाहारमाह भोज्य इत्यादि। वाभटस्य अत्र स्नेहमिति शेषः। श्व इत्यागामिदिने स्नेहं पास्यन् तथा तस्मिन्नेव दिने स्नेहं पिबन् तथा पीतवानपि यः पुरुषः समात्रया अन्नं भोज्यः भोजयितव्य इति। कीदृशमन्नं भोजयितव्यमित्याह द्रवोष्णमित्यादि। अनभिष्यन्दीति न स्रोतोऽवरोधकं असङ्करमिति न संयोगविरुद्धं निश्चलस्तु पास्यन्नित्यत्र पाय्यमिति पठित्वा पाययितव्यं स्नेहमिति शेष इत्याह किन्तु चरके — द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः। नातिस्निग्धं न संकीर्णं स्नेहं पातुमिच्छतीति। तथा वाभटपुस्तकेष्वपि बहुशोऽपास्यन्नितेत्येव पाठः टीकाकृद्भिश्च व्याख्यात इति॥ १२॥

पञ्चकर्मार्थं स्नेहप्रयोगावधिकालमाह त्र्यहावरमित्यादि।-त्र्यहेण त्र्यहं व्याप्य क्रियमाणस्नेहनेनावरं अधमं यथा स्यात्तथा स्निग्धो नरः स्वेदयितव्यो भवति। एतच्च मृदुकोष्ठविषयकं उक्तञ्च — मृदुकोष्ठस्त्रिरात्रेण स्निह्यतीति। तथा सप्तदिनं व्याप्य परं सप्तदिनरूपं वा अपरमुत्कृष्टं यथा स्यात्तथा स्निग्धो नरः स्वेदयितव्यः। एतच्च क्रूरकोष्ठविषयं उक्तञ्च — स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानव इति। मध्यकोष्ठं प्रति तु स्नेहनप्रकर्षकालो यद्यपि नोक्तस्तथापि चतुरहादिना मध्यकोष्ठस्य स्नेहनं ज्ञेयम्। यदाह सुश्रुतः —

नातःपरं स्नेहनमादिशन्ति सात्मीभवेत् सप्तदिनात् परन्तु॥
मृदुकोष्ठस्त्रिरात्रेण स्निह्यतयच्छोपसेवया॥ १३॥

पिबेत् त्र्यहं चतुरहं पञ्चाहं षड़हं वेति। उक्तसप्तदिनरूप-स्नेहनकालानतिक्रमं सोपपत्तिकमाह नातःपरमित्यादि अतःपरमिति सप्तदिनात् परं कुतोनोपदिशन्तीत्यत आह सात्मीभवेदिति। सुश्रुतेऽप्युक्तं — सप्तरात्रात् परं स्नेहः सात्मीभावाय कल्पयतइति। सप्तरात्रात् परेण क्रियमाणः स्नेहः सप्तरात्रप्रयोगेण सात्मीभूतत्वात् न स्नेहनमधिकं करोतीत्यर्थः। तेन यथाम्नात स्नेहप्रयोगेण सप्ताहोपयुक्तेन स्नेहनं न भूतं मात्रयाऽल्पत्वात् सा मात्रा सप्तदिनात् परं न प्रयोक्तव्येव तस्याः स्नेहमात्रयाः सात्मीभूतत्वात्। या पुनरधिका मात्रा सात्मतां न गता सा सप्ताहात् परमपि स्नेहनार्थं कर्त्तव्येव। वृद्धास्तु यदि सप्तरात्रेणापि पुरुषः स्निग्धो न भवति तदा किञ्चित् विश्रामं कृत्वा पुनरधिकमात्रया स्नेहं प्रयुञ्जते। ननु यदि क्रूरकोष्ठः सप्तरात्रेण स्निह्यतीति व्यवस्था तत् कथमिह नातःपरं स्नेहनमादिशन्तीत्यनेन सप्तरात्रेणाप्य स्नेहनमुच्यतइति ब्रूमः। क्रूरकोष्ठः सप्तरात्रेणैव स्निह्यति परन्तु क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीनमात्रा प्रयुज्यते तदा सप्तरात्रेणापि न स्निह्यतीति। यत्तु तन्त्रान्तरे—तत् त्रिंशन्नवरात्राणि स्नेहपानं विधीयत इत्यनेन सप्तरात्रादूर्द्धमपि स्नेहनं विहितं तदपि सात्मीभूत-हीन-मात्रापेक्षयैवाधिक मात्राभिप्रायेण ज्ञेयम्। अत्र च सप्तरात्रादूर्द्ध्वं स्नेहप्रयोगस्य निषेधात् त्र्यहादर्व्वाक् प्रयोगस्य चानिषेधात् सद्यःस्नेहप्रयोगे एकदिनेनापि स्नेहनमनुजानाति। यस्तु कश्चिन्मृदुकोष्ठं प्रति त्र्यहादूर्द्धं न स्नेहनं कर्त्तव्यं

स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः।
स्निग्धद्रवोष्णधन्वोत्थरसभुक्स्नेहमाचरन्॥
स्निग्धस्त्र्यहं स्थितः कुर्य्याद्विरेकं वमनं पुनः।
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः॥ १४॥
वातानुलोम्यं दीप्ताग्निर्व्वर्च्चः स्निग्धमसंहतम्।

सात्मीभावादिति चतुर्थोऽत्र लभतइति यद्याख्यानयति तन्न यतः सात्मीभावः सप्तदिननिर्व्वर्त्तितयैवाचार्य्येणोक्तः। तेनाल्पमात्राप्रयुक्तेन स्नेहेन त्र्यहाद् यदि न स्निह्यति मृदुकोष्ठस्तदाधिकदिनान्यपि तत्र स्नेहः कर्त्तव्य एवेत्यर्थः। मृदुकोष्ठादिलक्षणमाह मृदुकोष्ठेत्यादि यस्त्रिरात्रेण स्निह्यति स मृदुकोष्ठ इत्यादि व्याख्येयम्। मध्यकोष्ठलक्षणन्तु यद्यपि नोक्तं तथापि मध्यविधया चतुरहादिना यः स्निह्यति स मध्यकोष्ठइति ज्ञेयः॥ १३॥

इदानीं संशोधनस्नेहपाने कर्त्तव्ये यद्विधेयं तदाह स्निग्धेत्यादि वाभटस्य। स्निग्धस्त्र्यहं स्थित इति स्निग्धोभूत्वा त्रिदिनं परित्यक्तस्नेहपानः सन् विरेकं कुर्य्यात् विरेचनौषधं पिबेदित्यर्थः। एकाहमित्यत्रापि स्थितइति योज्यं तेन स्निग्धोभूत्वा एकाहं स्थितइति परित्यक्तस्नेहपानः सन् दिनान्तरञ्च कफकरैर्ग्राम्यानूपरसादिभिः कफमुत्क्लेश्य प्रवृत्तानुखं कारयित्वा वमनं कुर्य्यादित्यर्थः। इदानीं स्नेहोपरमत्रिरात्र एव यद्विधेयस्तदाह स्निग्धद्रवोष्णेत्यादि। स्नेहमाचरन्नित्यत्र स्वेदमाचरन्नित्यपि पाठः। स्नेहोपरमत्रिरात्रे स्नेहपाननिषेधस्योक्तत्वात् चरकेऽप्युक्तं—स्नेहात् प्रस्कन्दनो जन्तुस्त्रिरात्रोपरतः पिबेत्। स्नेहञ्च द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम्। एकाहः परतस्तद्वद् भुक्त्वा प्रच्छर्दनं पिबेदिति॥ १४॥

सम्यक्स्निग्धस्य तथा रूक्षस्य तथातिस्निग्धस्य च लक्ष-

स्नेहोद्वेगः श्रमः सम्यक् स्निग्धे रूक्षे विपर्य्ययः॥
अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम्॥
श्यामाककोरदूषान्नतक्रपिण्याकसक्तुभिः॥ १५॥
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु।
योगानिमाननुद्वेगात् सद्यः स्नेहान् प्रयोजयेत्॥
भृष्टे मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला।
सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते॥
सर्पिस्तैलवसामज्जातण्डुलप्रसृतैः शृता।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता॥ १६॥
सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते॥ १७॥
शर्करायृतसंसृष्टे दुह्याद्गां कलसेऽथवा।
पाययेदूक्षमेतद्धि सद्यः स्नेहनमुच्यते॥ १८॥

---

प्राग्वाह वातानुलोम्येत्यादि।— वाभटस्य असंहतमित्यकठिनम्। स्नेहोद्वेगोऽनिच्छाक्लमोग्लानिः सुश्रुते—ग्लानिः सदनमङ्गानामित्युक्तम्। रूक्षणं श्यामाकादिभिरित्यन्वयः॥१५॥

इदानीं विषयाभिधानपूर्ब्बकं सद्यःस्नेहयोगानाह वालेत्यादि।— वाभटस्य। अनुद्वेगानित्यवैराग्यजनकानित्यर्थः। भृष्टेत्यादि।— सुश्रुतस्य भृष्टइति सन्तलिते, मांसरस इत्यनन्तरं सिद्ध इति शेषः। स्वल्पतण्डुलेत्यत्र सुकल्पितेति पाठान्तरम्। सर्पिरित्यादि प्रसृतं पलद्वयं पेयेति पातव्या॥ १६॥

सर्पिष्मतीत्यादि सुश्रुतस्य बहुतिलेत्यनेन निस्तुषतिलानां त्रयोभागाः, एकस्तण्डुलानामिति। इयञ्च सुखोष्णा योज्या सुश्रुते तथैवोक्तत्वात् चक्रेण प्रतिसंस्कृत्य लिखितमेतत्। तत्र हि तथैवेत्यत्र यवागूरिति पठ्यते॥ १७॥

ग्राम्यानूपौदकं मांसं गुड़ं दधिपयस्तिलान्।
कुष्ठी शोथी प्रमेही च स्नेहनेन प्रयोजयेत्॥
स्नेहैर्यथा स्वं तान् सिद्धैः स्नेहयेदविकारिभिः।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलया सह॥
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदनमन्तरम्।
स्नेहस्वेदोपपन्नस्य संशोधनमथान्तरम्॥ १८॥
इति स्नेहाधिकारः।

---

## अथ स्वेदाधिकारः।

वातश्लेष्माणि वाते वा कफे वा स्वेद इष्यते।

---

शर्करेत्यादि सुश्रुतस्य। रूक्षमिति पुरुषविशेषणम्॥१८॥ येषु व्याधिषु स्नेहनार्थं यानि द्रव्याणि न प्रयोज्यानि तान्याह ग्राम्येत्यादि।— स्नेहन इति स्नेहनिमित्तम्। तर्हि तैः कैः स्नेह्याइत्याह स्नेहैरित्यादि। यथा स्वमिति योयत्र स्नेहोयुज्यते सर्पिरादिः, सिद्धैरिति तत्तद्व्याधिहरत्वेन प्रसिद्धैः सिद्धैरिति पदं पिप्पल्यादिभिः प्रत्येकं योज्यं पिप्पल्यादिसिद्धाः स्नेहाः कुष्ठादिषु यथासंख्यमिति केचित्। तन्न वाभटे व्यतिक्रमेणाभिधानात् यथा — गुड़ानूपामिषक्षीरतिलमाषसुरादधि। कुष्ठशोथप्रमेहेषु स्नेहनार्थं न कल्पयेत्। त्रिफलापिप्पली-पथ्यागुग्गुल्वादिविपाचितान्। स्नेहान् यथा स्वमेतेषां योजयेदविकारिण इति। स्नेहादिषु स्नेहस्य प्राग्भावमाह स्नेहमित्यादि स्पष्टम्॥ १८॥

इति स्नेहाधिकारः।

---

स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः॥
आमाशयगते वाते कफे पक्काशयाश्रये।
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च॥ १॥
वृषणौ हृदयं दृष्टी स्वेदयेन् मृदु वा न वा।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः॥ २॥

---

स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरमित्युक्तेः स्नेहान-न्तरं स्वेदमाह तत्र दोषविशेषापेक्षया स्वेदस्य कल्पनाभेद-माह वातेत्यादि अत्र यथासंख्यमन्वयः। स्निग्धरूक्ष इति स्निग्धरूक्षद्रव्यकृतत्वात्। रोगाद्यपेक्षयापि स्वेदस्य कल्पना-भेदमाह व्याधावित्यादि। व्याधौ महाबले महाशीते शीतल-कृते महाशीतले तथा शरीरे च महाबले महानिति मृदुमध्य-स्वेदापेक्षया प्रचण्डतापत्वेन कालबाहुल्येन च एवं दुर्बल इति मध्यम इति च व्याख्येयम्। वाते स्निग्धः कफे रूक्ष इति यदुक्तं तस्य देशविशेषापेक्षया व्यभिचारमाह आमाशये-त्यादि।— वाभटस्य आमाशय इति कफस्थानोपलक्षणं अत्रापि यथासंख्यमन्वयः तेन कफस्थानापेक्षया पूर्वं रूक्ष-स्वेदं कृत्वा वातापेक्षः स्निग्धस्वेदः कार्यः यदुक्तं स्थानं जयेद्धि पूर्वमिति एवं पक्काशयगते स्नेहपूर्व इति व्याख्येयम्॥१॥

अस्वेद्यदेशानाह वृषणावित्यादि यदि वृषणे स्वेदः क्रियते तदा तत्र प्रत्यासन्नशुक्रस्य स्वातस्य उपघातात् क्लीवत्वं स्यात्। हृदयस्याप्योजःक्षयप्रसङ्गात्। दृष्ट्यां तर्पणस्नेहक्षयात् तिमि-रमान्ध्यं वा भवेदिति। मृदुवानवेति स्वेदैकसाध्ये वृषणा-दिगते व्याधौ मृदु स्वेदयेत्। स्वेदव्यतिरिक्तोपायान्तरसम्भवे

न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान्।
स्तम्भनीयक्षतक्षीणविषमद्यविकारिणः॥
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः।
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान्॥
भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान्।
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान्॥
गर्भिणीं पुष्पितां सूतां मृदुवातात्ययिके गदे॥३॥

---

तु न चेत् बाध्यः। दृष्टदृष्ट्यात् स्वेदातीवेदोऽक्षातश्च दृष्टेति भावे क्तः॥२॥

अस्वेद्यानाह न स्वेदयेदित्यादि वाभटस्य अतिस्थूलरूक्ष-दुर्बलक्षीणानां स्वेदासहत्वात् प्राणोपरोधः मूर्च्छितानां पित्तवृद्ध्या मूर्च्छैव भवति। स्तम्भनीया यावदतिसारपीड़िताद्यः एषां स्वेदात् पित्तवृद्ध्या रोगवृद्धिः स्यात्। क्षतस्य स्वेदाद्रक्तातिप्रवृत्तिः विषमद्यविकारिणामपि पित्तवृद्ध्या तयोरपि प्रकोपात् वेगः तिमिरे तर्पणस्य प्रत्ययः उदरे अत्युष्णादिनिदानत्वेन तद्वृद्धिरेव विसर्पकुष्ठयोरक्तदुष्टिः एवमाढ्यरोगे आढ्य-रोगोवातरक्तं शोषे रसादिक्षयः। पीतदुग्धादौ उत्क्लेशाद्यः कृतविरेके पित्तवृद्ध्या तदतियोगः। भ्रष्टगुदो गुदभ्रंशी दग्ध-गुदः क्षाराग्न्यादिभिः। गुदभ्रंशदाहयोः पित्तवृद्ध्यासरत्वेन-क्रमेण तयोरेव वृद्धिः। क्षुधायां वह्निवृद्ध्या धातुपाकः तृष्णायां पित्तवृद्धिः कामलापाण्ड्वोश्च पित्तवृद्ध्या तद्वृद्धिः गर्भिण्याः गर्भव्यापत्तिः पुष्पितायां रक्तातियोगः। सूतामित्य-पहृतां प्रसूतगर्भामिति यावत्। अस्यास्तु स्वेदात् रक्ताति-प्रवृत्तिः स्यादिति भावः। सम्यक्प्रसूतायास्तु स्वेदविधानमग्रे वक्ष्यति। एषु च मेदस्यादिषु यदि स्वेदैकसाध्यः रुग्व्याध्यादि-र्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेक्ष्यापि मृदु-

स्वेदोचितस्त्वनाग्नेयो शाते मेदः कफावृते।
निवातं गुरुप्रावरणं भयम्॥
उपनाहाहवक्रोधभूरिपानक्षुधातपाः।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते॥ ४॥
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे।
संजाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता॥ ५॥
स्फोटोत्पत्तिः पित्तरक्तप्रकोपो मदो मूर्च्छा भ्रमदाहौ क्लमश्च।
अति स्वेदे सन्धिपीड़ा तृषा च क्रियाः शीतास्तत्र कुर्य्याद्भिषक्॥
सर्व्वान स्वेदान् निवाते तु जीर्णान्ने चावचारयेत्॥ ६॥
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम्।

---

स्वेदोविवेय इत्याह वहुत्रात्ययिके गद इति॥ ३॥

अनाग्नेयस्वेदस्य विषयमाह स्वेदोचित इत्यादि वाग्भटस्य। अनाग्नेयस्वेदानाह निवातमित्यादि वाग्भटस्य। उपनाहोवस्त्रोलेपः स हि वस्त्रत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति। भूरिपानं मद्यस्य॥ ४॥

स्वेदस्य सम्यग्योगलक्षणमाह शीतेत्यादि।-स्वेदे घर्म्मे स्वेदनादिति प्रसङ्गदृश्यात्। अत्र शीताद्युपहारस्य स्वेदस्य सम्यग्योगलक्षणत्वेन शीतादेरर्थतोऽनुपरमस्य स्वेदासम्यग्योगलक्षणत्वमुक्तं भवति। सुश्रुतेऽप्युक्तं — स्वेदस्रावो व्याधिहानिर्लघुत्वं शीतादीनां मार्द्दवं चातुरस्य। सम्यक्स्विन्नलक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्ययेन भवेत्तदिति॥ ५॥

स्वेदातियोगलक्षणं चिकित्सितञ्चाह स्फोटेत्यादि। सुश्रुतस्य स्वेदा यत्र यथा प्रयोज्यास्तानाह सर्व्वानित्यादि।—सुश्रुतस्य। जीर्णेन्न इत्युत्सर्गस्तेन विष्टम्भा जीर्णादौ यत् स्वेदविधानं विष्टम्भे स्वेदनं कार्य्यमित्यादिनोक्तं तदपवादतया न दूष्यतीति॥ ६॥

शोधनीयास्तु ये केचित् पूर्व्वं स्वेद्यास्तु ते मताः॥
पश्चात् स्वेद्या हृते शल्ये मूढ़गर्भानुपद्रवाः।
सम्यक् प्रजाता काले च पश्चात् स्वेद्या विजानता॥
स्वेद्याः पश्चाच्च पूर्वेञ्च भगन्दर्य्यर्शसस्तथा।
तप्तैः सैकतपाणिकांस्यवसनैः स्वेदोऽथवाङ्गारकै-
र्लेपाद्यातकरैः सहाम्लकवणस्नेहैः सुखोष्णैर्भवेत्।
एवं तप्तपयोम्बुवातशमनक्वाथादिसेकादिभिः
सप्ते(?)ोत्रनिषेवनोष्णवहद्वाष्पैः शिलाद्यैः क्रमात्॥

इदानीं ये च पूर्व्वं स्वेदविषयास्तथा पश्चाद् ये स्वेदविषया ये च कालद्वयेऽपि स्वेदविषयास्तान् क्रमेणाह येषामित्यादि सुश्रुतस्य शल्य इति गर्भरूपशल्ये अनुपद्रवा गर्भस्रावाद्युपद्रवादिरहिता सम्यक्प्रजाता सम्यक् प्रसूता। पूर्व्वं पश्चाच्च स्वेद्या इति भगन्दरेऽर्शसि च पूर्वं स्वेदस्तप्तलौहशलाकया दाहरूपः पश्चात् स्वेदस्तु दाहानन्तरमुष्णोदकोपवेशनरूपो-ज्ञेयः। सुश्रुते तापरास्रोदनाहद्रवभेदेन चतुर्व्विधस्वेदस्त-स्यानाह तप्तैरित्यादिना अङ्गारैरित्यन्तेन तापस्वेदः। सिकतैव सैकतम्। सुश्रुतेऽप्युक्तं तत्र तापस्वेदोनाम यः पाणि-कांस्यकन्दुकपालवालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो-ऽङ्गशः खादिराङ्गारैरिति। लेपेत्यादिना सुखोष्णैरित्यन्तेन उपनाहस्वेदः। वातहरैर्व्वा रालमांसैर्भद्रदार्व्वादिभिश्च काञ्जि-कादियुक्तैः सुखोष्णैर्लेपात् यः स्वेदकः स उपनाहकृतार्थः। एवमित्यादि स्वेकादिभिरित्यन्तेन द्रवस्वेदः पयोदुग्धं सुश्रु-तेऽपि द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्णकटाहे द्रोण्यां वावगाह्य स्वेदयेत्। एवं पयोमांसरसयूषतैलधान्याम्लघृतवसा-मूत्रेष्ववगाहते सुखोष्णैः कषायैः परिषिञ्चेदिति। तप्तैरित्या-दिना शिलाद्यैरित्यन्तेन वाष्पस्वेदः। शिलाद्यैरित्याद्यशब्दात्

तापोपनाहद्रवबाष्पपूर्व्वाः स्वेदास्ततोऽन्त्यप्रथमौ कफे स्तः।
वायौ द्वितीयः पवने कफे च पित्तोपसृष्टे विहितस्तृतीयः॥ ७॥
इति स्वेदाधिकारः।

---

## अथ वमनाधिकारः।

स्निग्धस्विन्नं कफे सम्यक् संयोगे वा कफोल्बने।
श्वोवम्यमुत्क्लिष्टकफं मत्स्यमांसतिलादिभिः॥
यथाविकारं विहितां मधुसैन्धवसंयुताम्।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम्॥

---

कपालेष्टकालोष्ठपिण्डादीनां ग्रहणं अत्रैव विशेषणं तोये-तरादि। सुश्रुते तु बाष्पस्वेदस्तु कपालपाषाणेष्टकालोष्ठपि-ण्डानग्निवर्णानद्भिरासिच्य स्वेदितव्यमुक्तम्। एषां स्वेदानां विषयमाह तत इत्यादि सप्तमपद्यान्तमस्ति। तेषु स्वेदेषु मध्ये आद्यन्तस्वेदौ बाष्पस्वेदतापस्वेदौ कफे स्तः। द्वितीय इत्युप-नाहोवायौ तृतीय इति द्रवस्वेदः पित्तोपसृष्टे वाते कफे च भवति सुश्रुतेऽप्युक्तं तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ उपनाहस्वेदोवातघ्नःअन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति। ननु पित्तोपसृष्टे कथं स्वेदोवातश्लेष्मणि वाते वेत्यनेनैव विरो-धात् उच्यते पित्तयुक्तेऽपि द्रवस्वेदविधानात् वातश्लेष्मणीत्यादि वचनं प्रायिकं ज्ञेयमिति॥ ७॥

इति स्वेदाधिकारः।

---

इदानीं स्नेहस्वेदानन्तरीयत्वात् पञ्चकर्म्माणि व्याख्यानि। तत्र यद्यपि पञ्चकर्म्मसु वस्तेरेव प्राधान्यं यदुक्तं उपक्रमाणां सर्व्वेषां सोऽग्रणीरीति तथापि पञ्चकर्म्मणामौत्सर्गिकप्रवृत्तौ

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामाभूतसङ्घास्तु पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १ ॥
पूर्व्वाह्णे पाययेत् पीतो जानुतुल्यासने स्थितः ।
तन्मना जातहृल्लासप्रसेकश्छर्द्दयेत्ततः ॥
अङ्गुलीभ्यामनायस्तनालेन मृदुनाथवा ॥ २ ॥

---

वमनविरेचनपूर्व्वकैव वस्तिप्रवृत्तिर्भवतीति कृत्वा वमनविरेचने एव प्रथममभिधातव्ये तत्रापि वमनपूर्व्वकत्वात् विरेचनस्य विरेचनात् प्राक् वमनमाह स्निग्धेत्यादि। सम्यक्स्निग्धस्विन्नं पुरुषं भैषज्यमात्रां पूर्व्वाह्णे पाययेदिति वक्ष्यमाणेनान्वयः । वमनस्य विषयमाह कफ इत्यादि कफे केवलकफे कफोल्वन इति कफप्रधाने । श्वोवम्यमित्यादि श्व इत्यागामिदिवसे यदि पुरुषोवम्योवमनार्होभवति तदा तत्पूर्व्वदिवसे मत्स्यादिभिः कफ उत्क्लेशनीय इत्यर्थः । उत्क्लिष्टकफाय दीयमानं वमनं न दुःखमावहति उक्तं हि कफे उच्छर्द्दयति त्वदुःखमिति । मात्रामित्यनपायिपरिमाणम् । मधुसैन्धवसंयुतामित्यनेन सर्व्वेष्विव वमनयोगे मधुसैन्धवयोर्द्देयतां बोधयति । कोष्ठं विभज्येति कोठाद्यपेक्षया मधु सैन्धवञ्च स्तोकं बहु वा देयमित्यर्थः । मन्त्राभिमन्त्रितमित्युक्तमतोमन्त्रमाह ब्रह्मेत्यादि ॥ १ ॥

वमनौषधपानानन्तरीयविधिमाह पीत इत्यादि ।-तन्मना इति वान्तमना । अङ्गुलीभ्यामित्यत्र परिकीर्त्तितनखाभ्यां कण्ठमभिस्पृशन्निति शेषः चरकेऽपि सुपरिलिखितनखाभ्यां कण्ठमभिस्पृशन्नित्युक्तः । अनायस्त इति ऋजुमृदुना नालेनेत्युत्पलनालेन ॥ २ ॥

वमनविधिमभिधाय वमनयोगानाहकृष्णेत्यादि अत्र

कृष्णेन्द्रयवसिन्धूत्थवचाकल्कयुतं पिबेत् ।
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम् ॥ ३ ॥
तण्डुलसलिलनिष्पिष्टं यः पीत्त्वा वमति पूर्व्वोक्ते ।
फलिनीवल्कलमुष्णं हरति गरं सकफपित्तरुजम् ॥ ४ ॥
क्षौद्रलीढं ताम्ररजोवमनं गरदोषनुत् ।

पञ्चकषायः ।

आटरूषं वचा निम्बं पटोलं फलिनीत्वचम् ।

---

कृष्णादीनां मिलित्वा कर्षः यष्टिकषायं यष्टिमधुकषायं कषायञ्च क्वाथ्यद्रव्यस्य कुड़वं श्रपयित्वा जलाढ़के चतुर्भागावशिष्टन्तु वमनेष्ववचारयेदिति परिभाषया कार्य्यः तत्र चतुर्भागावशिष्टः कषायः प्रस्थमात्रो भवति । चरके तु पूर्णं शरावं पिबेदित्युक्तमतोविरोधः नैवं चरके तु पूर्णं शरावमिति यदुक्तं तदेकशरावपानाभिप्रायेण तेनेह प्रस्थमात्रे कषाये शरावमेकं पीत्वा शेषकषायभागो रक्षणीयोऽयोगे सति पुनः पानार्थमित्यभिप्रायः एतच्च मात्राकथनं मन्दबुद्धेरनध्यवसायस्य स्यादित्येवं कथं क्रियते इति वस्तुतस्तु कोष्ठाद्यपेक्षयैव मात्रा कल्पनीयेति सिद्धान्तः । अयएव कोष्ठं विभज्य मात्रामित्युक्तं सर्व्वत्रैव वमनयोगे उष्णोदरं मधुसैन्धवं देयम् । न चोष्णे मधु विरुध्यते इति वाच्यं वमनस्यापक्कस्यैव ऊर्द्धगमनात् जठराग्निपाके हि विरोधोभवति । वृद्धवैद्यास्तु अयोगे कदाचित् सम्भावनया मधु न प्रक्षिपन्त्येव ॥ ३ ॥

तण्डुलसलिलेत्यादौ ।— पानमपि तण्डुलजलेनैव । फलिनी प्रियङ्गुः तद्वल्कलं कर्षमानं मधुसैन्धवेऽपि कर्षमाने एतच्चदिङ्मात्रं तेन कोष्ठाद्यपेक्षया स्तोकं बहु वा त्रियते पानार्थं तण्डुलसलिलमपि शरावमात्रं पूर्णं शरावमित्युक्तेः॥४॥

क्षौद्रेत्यादौ ।— रसायनाधिकारोक्तताम्रयोगवन्मारित-

क्वाथयित्वा पिबेत्तोयं वान्तिकृन्मदनान्वितम् ॥
क्वाथ्यद्रव्यस्य कुड़वं श्रपयित्वा जलाढ़के।
चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत् ॥ ५ ॥
निम्बकषायोपेतं फलिनीगदमदनमधुकसिन्धूत्थम्।
मधुयुतमेतद्वमनं कफपूर्णाशये शस्तम् ॥ ६ ॥
फलजीमूतकेच्वाकुकुटजाः क्लतवेधनः।
धामार्गवश्च संयोज्याः सर्व्वथा वमनेष्वमी ॥ ७ ॥
क्रमात् कफः पित्तमथानिलश्च यस्येति सम्यग्वमितः स दृष्टः।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तेनोर्लघुत्वेऽपि च लक्ष्यमाणे॥८॥

---

पुटितनैपाल- ताम्र-चूर्णं रक्तिपञ्चकं मधुना संमर्द्य लेह्यम्। अस्य ताम्रयोगस्य वमनकारकत्वं वमनौषधभावितत्वाद्देवेति ज्ञेयम्। अटरूषेत्यादावपि पूर्व्वोक्तपरिभाषयैव क्वाथः करणीयः। मदनफलन्तु कर्षमात्रं प्रक्षेप्यमित्याहुः पञ्चकषायः॥५॥

निम्बकषायोपेतमित्यादौ गदः कुष्ठं फलिनीकुष्ठमधुकानां मिलित्वा कर्षः मदनफलस्य च कर्षः सैन्धवस्य माषकचतुष्टयं मधुनोऽष्टौ माषका इति प्रक्षेपव्यवस्था इत्याहुः ॥ ६ ॥

वमनयोगेषु योगिकद्रव्याण्याह फलमित्यादि फलं मदनफलं जीमूतको देवदाली घोषकभेदः इक्ष्वाकुः क्लितकतुम्बी क्लतवेधनः ज्योत्स्निका धामार्गवः पीतघोषः। एषां जीमूतादीनाञ्च फलं एते च दोषाद्यपेक्षया कल्कक्वाथादिकल्पनया वमनयोगेषु योज्या इत्यर्थः ॥ ७ ॥

इदानीं वमनस्य सम्यग्योगलक्षणमाह क्रमादित्यादि क्रमादिति वचनेन यथोक्तक्रमलक्षणेन कफाद्यागमनं सम्यग्योगलक्षणमिति बोधयति। यतः कफादूर्द्धं यदा पित्तं गतं स्यात्तदा तत्पित्तागमनेऽपि सति न शुद्धिः। किन्तु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः। तत्र

दुश्छर्दिते स्फोटककोठकण्डूहृत्खाविशुद्धिर्गुरुगात्रता च ॥९॥
तृण्मोहमूर्च्छानिलकोपनिद्राबलादिहानिर्व्वमितेऽति विद्यात्।
ततः सायं प्रभाते वा क्षुद्वान् पेयादिकं भजेत् ॥ १० ॥
पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च ।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः ॥ ११ ॥

---

पित्तानयनं कफानयनान्तरमेव भवति । इयमेवात्यन्तिकी शुद्धिरव्यभिचारिणी हृत्पार्श्वेत्यादिना वमनस्य नैसर्गिक-शुद्धिमाह । सम्यग्वमित-दृष्ट-द्रुतमन्वयः ॥ ८ ॥

दुश्छर्दित-इत्यादिना अर्द्धश्लोकेनायोगलक्षणमाह । हृत्खाविशुद्धिरित्यादि हृदयस्य तथा खानामिन्द्रियाणां स्रोतसामशुद्धिरित्यर्थः ॥ ९ ॥

तृण्मोहेत्यादिना अतियोगलक्षणमाह ।— अतिवमित द्रुतमन्वयः आदिशब्देनैव वर्णस्वरादिग्रहणं बलातिहानिरित्यपि पाठः एतदनन्तरं किं पथ्यं देयं न वेति तामाह तत इत्यादि यस्य सम्यग्योगः क्षुधा च स्यात्तदा सायमन्यथा तु प्रातः पेयादिकं भजेदित्यर्थः। भेलेऽप्युक्तं वमितं लङ्घयेत् सम्यक्शुद्धिलिङ्गान्यलक्षयन् । तानि दृष्ट्वा तु पेयादिक्रमं कुर्य्यान्न लङ्घयेदिति ॥ १० ॥

तमेव पेयादिक्रममाह पेयामित्यादि पेयादिलक्षणञ्च ज्वराधिकार एवोक्तं व्याख्यातञ्च । विलेपीशब्दो विलेपीवचनः अकृतश्च यूषः स्नेहाद्यसंस्कृतः कृतस्तु स्नेहलवणादिसंस्कृतः एवं रसोऽपि कृताकृतव्यवस्था उक्तञ्च [illegible]— अस्नेहलवणं सर्व्वमकृतं कटुकैर्व्विना । विज्ञेयं लव[illegible]र्युक्तं संस्कृतं कृतमिति । अस्नेहलवणमितीषत्स्नेहलव[illegible] अत एवोपकल्पनीये तनुना तनुस्नेहलवणोपपन्नेन [illegible]कम् । संस्कृ-

तमिति वचनाच्च समग्रसाधनं यावता भवति तावदेव लवणादिकं कृते देयमिति बोधयति। अकृतकृतयोर्मध्ये अकृतोलघुर्भवति उक्तं हि - अकृताख्योलघुस्तत्र तनुविट्कूयते स चीति। अकृतं कृतञ्चेति चकारोयमन्वाचयशिष्टः तेन कृतस्यानैयत्यं बोधयति तत्रचाकृतावेव यूषरसौ लाघवादग्निसन्धुक्षणार्थं देयौ कृतौ पुनरवस्थाविशेषादिति। अतएवोपकल्पनीये तनुना तनुस्नेहलवणोपपन्नेत्यनेन चौदकलावणिकेत्यनेन च अकृतयोरेव यूषरसयोर्हानं साक्षादुक्तं कृतौ पुनरवस्थाविशेषनियतत्वान्न साक्षादुक्तौ। त्रिरित्यन्नकालत्रयं द्विरित्यन्नकालद्वयं एकश-इत्येकान्नकालं एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः सम्बध्यते। तथा त्रिरित्यादिपदत्रयञ्च प्रधानशुद्ध्यादिशुद्धेषु त्रिषु यथाक्रमं योज्यं तेन प्रधानशुद्धिशुद्धे पेयादिक्रमं प्रत्येकं त्रिः कर्त्तव्यः तेनान्नकालत्रये पेया, ततः परेणान्नकालत्रये विलेपी, ततः परेणान्नकालत्रये कृताकृतयूषयोरन्यतरेण सहितमन्नं ततोऽपि परो ऽन्नकालत्रये कृताकृतरसयोरन्यतरेण सहितमन्नं देयमिति। द्वादशभिरन्नकालैर्वमनदिनसायाह्नात् प्रभृति सप्तरात्रेण पेयादिक्रमः समाप्यते। अन्नकालस्तु उत्सर्गसिद्धः सायं प्रातश्चेति अयमेव च क्रम-उपकल्पनीयेऽपि ततः सायाह्ने लोहितशालीतण्डुलानामित्यादिना यावत् द्वादशे चान्नकालइत्यनेनोक्तः। एवं मध्यशुद्धिशुद्धे द्विः पेयादिक्रमः। अवरशुद्धिशुद्धे चैकशः पेयादिक्रमोव्याख्येयः। एवञ्च मध्यशुद्धिशुद्धेऽष्टान्नकालिकः, अवरशुद्धिशुद्धे तु चतुरन्नकालिकः क्रमोभवतीति व्याख्यान्तरञ्च अस्मदीयचरकतत्त्व-प्रदीपिकाया-मनुसन्धेयम्। यद्यपि प्रधानशुद्ध्या निःशेषदोषहरणादुदीर्य्य पावकौ-निरपवाद-एव भवति तथापि तत्र भूरिदोषनिर्हरणेन तात्कालिकाशयदौर्बल्यादग्निमान्द्यं सहदेव संभवतीति तेनात्र पेयादिक्रमश्चिरं क्रियत इति ज्ञेयम्॥ १९॥

जघन्यमध्यप्रवरे तु वेगाश्चत्वार-इष्टावमने षड्ष्टौ।
इष्टैव ते द्वित्रिगुणाविरेके प्रस्थस्तथा द्वित्रिचतुर्गुणाश्च ॥१२॥
पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः॥१३॥
द्वित्रान् सविट्कानपनीयवेगान् मेयं विरेके वमने तु पीतम्।
वमने च विरेके च तथा शोणितमोक्षणे॥

इदानीं प्रधानशुद्ध्यादिज्ञानार्थं तल्लक्षणमाह जघन्ये-त्यादि।— जघन्यमध्यप्रवरे वमने यथाक्रमं चत्वारः षड़ष्टौ वेगा-उक्ताः तेन चतुर्भिर्वेगैः यत्तु वमनं तज्जघन्यं यत्तु षड्-भिस्तन्मध्यमं यत्त्वष्टाभिस्तत् प्रवरम्। तथा विरेकेऽपि जघन्ये-ष्टवेगाः। मध्ये तु विरेचने द्विगुणाश्च विंशतिरित्यर्थः। प्रवरे तु विरेचने त्रिगुणाश्च त्रिंशदित्यर्थः। वेगसंख्या-भेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरतां क्रमेणाह प्रस्थस्तथेति। जघन्ये विरेके द्विगुणः प्रस्थः, मध्ये तु त्रिगुणः, प्रवरे च चतुर्गुण इति॥१२॥

पित्तान्तमित्यादिना वमनविरेचनयोर्दोषप्रवृत्त्यन्तोप-लक्षितामान्तिकीं शुद्धिं तथा वमनस्य तु दोषमानभेदो-पलक्षितां मानिकीं शुद्धिमाह।— पित्तप्रवृत्तिरन्ते यस्य तत् पित्तान्तं एवं कफान्तमपि ज्ञेयम्। विरेकादर्द्धमित्यनेन वमनस्य दोषप्रमाणोपलक्षितान्तिकी शुद्धिरुक्ता। जघन्य-मध्यप्रवरे विरेके प्रस्थस्तथेत्यादिना यद्दोषमानमुक्तं तदपेक्ष्य वमनेऽर्द्धमित्यर्थः। तेन वमने जघन्ये प्रस्थ एकः मध्ये तु सार्द्ध-प्रस्थः प्रवरे तु द्वौ प्रस्थाविति। एतेन वैगिकी मानिकी चान्तिकी चेति शुद्धित्रयमुक्तम्। कृत्वाक्षैत्यादिना चा-ङ्गिकी शुद्धिः पूर्व्वमेवोक्ता, तेन चतुर्व्विधशुद्धिश्चरकेणोक्ता प्रपञ्चश्चास्य वचनस्य चरकतत्त्वप्रदीपिकायामनुसन्धेय-इति॥१३॥

वमने विरेचने च यथा दोषमानं कार्य्यं तदाह द्वित्रानि-

सार्द्धं त्रयोदशपलं प्रस्थमाहुर्मनीषिणः।
अयोगे तकृतं कार्य्यं पुनर्व्वापि विशोधनम्॥
अतिवान्तं घृताभ्यक्तमवगाह्य हिमे जले।
उपाचरेत् सिताक्षौद्रमिश्रैर्लेहैश्चिकित्सकः।
वमनेऽतिप्रवृत्ते तु श्रेष्ठं कार्य्यं विरेचनम्॥ १४॥
न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम्।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोहिताक्षेपकपीड़िताञ्च॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे।
दुष्टे च कोष्ठे क्रिमिभिर्म्मनुष्यं न वामयेद्वर्चसि चातिबद्धे॥
एतेऽप्यजीर्णव्यथितावाम्याये च विषातुराः।
अतुग्रश्लेष्मकफाये च ते च स्युर्म्मधुकाम्बुना॥ १५॥
इति वमनाधिकारः।

---

त्र्यादि द्वौ वा त्रयो वा परिमाणमेषां हित्वा, हित्वानित्यव्यवस्थितपरिभाषया मलभागस्य मेयतां दर्शयति। वमने तु पीतमिति वमने पीतमौषधं वर्जयित्वा शेषोमेयः पूर्व्वन्तु विरेके प्रस्थ इत्युक्तं अतस्तत्स्वरूपमाह वमने चेत्यादि। क्रमेण वमनयोगातियोगचिकित्सामाह अयोगइत्यादि। विशोधनं वमनं विरेचनञ्च। लेहैरिति यन्तूनां मन्थैः। अतिवान्तौ च विरेचनं प्रतिमार्गहरणरूपत्वात्॥ १४॥

अवाम्यानाह न वामयेदित्यादि।— अवाम्यत्वेनोक्तानामप्यात्ययिकव्याधौ वमनमाह एतेऽपीत्यादि॥ १५॥

इति वमनाधिकारः।

# अथ विरेचनाधिकारः।

स्निग्धस्विन्नाय वान्ताय दातव्यन्तु विरेचनम्।
अन्यथा योजितं ह्येतद्ग्रहणी गदकृन्मतम्॥ १॥
पित्तेन मृदुकोष्ठः स्यात् क्रूरोवातकफाश्रयात्।
मध्यमः समदोषत्वाद्योज्या मात्रानुरूपतः॥ २॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम्।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशिकम्॥ ३॥

---

वमनानन्तरं विरेचनस्य विधानाद्वमनमभिधाय विरेचनमाह स्निग्धेत्यादि।— स्निग्धस्विन्नायेति वमनानन्तरमपि स्निग्धस्विन्नाय तदुक्तं— कर्मणां वमनादीनामन्तरे त्वन्तरे पुनः। स्नेहस्वेदौ प्रयुञ्जीत संशोधनमनन्तरमिति। अन्यथेति वमनं विना। सुश्रुतेऽप्युक्तं— अवान्तस्य हि सामाग्नी रिक्तस्यापि सतोऽधः। स्तम्भं श्लेष्माग्रहणीं कुर्दयेदिति। अयञ्च विरेचनयोगः पूर्वोक्तमतिक्रम्यैव देयः। उक्तं हि वाभटे — श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेदिति॥ १॥

मात्राविश्वर्थं कोष्ठकममाह पित्तेनेत्यादि।— मात्रा योज्यानुरूपतइति मृदौ मृद्वी क्रूरे तीक्ष्णा मध्यमे मध्यमा इत्यर्थः॥ २॥

शर्करेत्यादि।— सुश्रुतस्य। त्रिवृत् श्रेष्ठत्वादरुणमूला ग्राह्या एवमन्यत्रापि यदाह सुश्रुतः— अरुणाभं त्रिवृन्मूलं श्रेष्ठमाहुर्विरेचन इति। इति। अत्र शर्करा त्रिवृच्चूर्णसमा त्रिवृच्चूर्णमपि कोष्ठाद्यपेक्षया ग्राह्यं लेहत्वमात्रकारकं क्षौद्रम्। त्वक्पत्रमरिचांशिकमिति तच्चूर्णापेक्षया त्वक्पत्रादि मिलित्वा पादिकमित्यर्थः। त्वक्पत्रसुरभीकृतमिति पाठान्तरे

त्रिवृच्चूर्णं सितायुक्तं पिबेच्छ्रेष्ठं विरेचनम् ।
छित्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः परिवेष्य रज्वा ॥
पक्वन्तु सम्यक् पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम् ॥ ४ ॥
पिप्पलीनागरक्षारं श्यामा त्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम् ॥ ५ ॥
हरीतकीविड़ङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत् सर्व्वं गोमूत्रेण विरेचनम् ॥ ६ ॥
त्रिवृच्छायात्रयसमा त्रिफला तत्समानि च ।
क्षारकृष्णाविड़ङ्गानितच्चूर्णं मधुसर्पिषा ॥

---

यावता सौरभ्यं स्यात्तावदेव त्वक्पत्रं देयमिति । त्रिवृच्चूर्णं ८ शर्करा मा ८ गुड़त्वकतेजपत्रमरिचं मर ७ ॥ ३ ॥

त्रिवृदित्यादि चरकस्य पूर्व्ववदेवात्रापि त्रिवृन्मानं ज्ञेयम् । छित्वेत्यादि ।— चरकस्य त्रिभण्डी त्रिवृताभेदः पुटपाकयुक्त्येति काश्मर्य्यादिपत्राच्छादन-कुशवेष्टनमृदावलेपननिर्धूमाङ्गारप्लोषणादिना ॥ ४ ॥

पिप्पलीत्यादि ।— क्षारोयवक्षारः श्यामेति श्याममूला त्रिवृत् । त्रिवृदित्यरुणमूला । अत्र पिप्पलीनागरयोः कटुत्वमात्रकारिका मात्रा तेन पिप्पलीचूर्णं माषा २ शुण्ठीचूर्णं माषा २ क्षारादित्रयस्य प्रत्येकं माषकचतुष्टयं ततोमिलित्वा कर्षोलेह्यः एवमन्यत्राप्युक्तमित्याहुः ॥ ५ ॥

हरीतकीत्यादि ।— एषां चूर्णं गोमूत्रेण पेयमित्यर्थः । हरीतकी मा ४ विड़ङ्गादित्रयस्य प्रमा २ त्रिवृत् मा ५ मरिच मा १ एवं मिलित्वा कर्षमात्रं गोमूत्रपलेनालोड्य पेयमित्यर्थः ॥ ६ ॥

त्रिवृच्छायात्रयेत्यादि ।— त्रिवृताचूर्णं मा १२ त्रिफलाचूर्णं प्रमा ४ यवक्षारादीनाञ्च प्रमा ५ मिलित्वाचूर्णात् कर्ष-

त्रिवृत्तादृगुडेन गुड़िकां कृत्वा वाप्युपयोजयेत्।
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान्॥
इत्यन्यानपि चाप्येतन्निरपाय विरेचनम्।

अभयाद्योमोदकः।

अभयापिप्पलीमूलं मरिचं नागरं तथा।
त्वक्पत्रपिप्पलीमुस्तविड़ङ्गामलकानि च॥
कर्षः प्रत्येकमेषान्तु दन्त्याः कर्षत्रयन्तथा।
षट्कर्षाश्च सितायास्तु द्विपलं त्रिवृतो भवेत्॥
सर्व्वं सुचूर्णितं कृत्वा मधुना मोदकं कृतम्।
खादेत् प्रतिदिनञ्चैकं शीतञ्चानुपिबेज्जलम्॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते।
पाण्डुरोगं विषं कासं जङ्घापार्श्वरुजान्तथा॥
पृष्ठार्त्तिमूत्रकृच्छ्रञ्च दुर्नामभगन्दरम्।
अश्मरीमेहकुष्ठञ्च दाहशोथोदराणि च॥
यक्ष्माणं चक्षुषोरोगं क्रमं वैद्येन जानता।
योजितोऽयं निहन्त्याशु अभयाद्यो हि मोदकः॥
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन च।
युक्तं पीत्वा पयोभिर्व्वा न चिरेण विरिच्यते॥ ७॥
स्रोतोविशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जोऽग्निरनामयत्वम्।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण॥८॥

---

मेकं गृहीत्वा घृतमधुभ्यां लेह्यं गुड़िकापक्षे तु पुरातनगुड़तो२
एतत्त्रिवृतादिचूर्णेन समं विमर्द्य कर्षमाना गुड़िका कार्या
तन्मोदकमनुपेयम्। अभयेत्यादि योगद्वयं स्पष्टम्॥ ७॥

विरेकसम्यग्योगलक्षणमाह स्रोतोविशुद्धीत्यादि। चर-
कस्य ऊर्जोऽग्निरिति बलवानग्निरित्यर्थः। अनामयत्वमिति

स्यात् श्लेष्मपित्तानिलसंप्रकोपः सादस्तथाग्नेर्गुरुता प्रतिश्या ।
तन्द्रा तथा छर्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते ॥९॥
कफाख्यपित्तक्षयजानिलोत्थाः सुप्त्यङ्गमर्द्दक्लमवेपनाद्याः ।
निद्राबलाभावतमःप्रवेशाः सोन्मादहिक्काश्च विरेचितेऽति ॥
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेत्तद्दिवसे यवागूम् ।
पित्रव्यये तद्दिवसे तु सायं पेयाक्रमो वान्तवदिष्यते तु ॥१०॥
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण ।
महान् स्थिरः सर्व्वसहस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः ॥
कषायमधुरैः पित्ते विरेकः कटुकैः कफे ।
स्निग्धोष्णलवणैर्व्वायोरप्रवृत्ते च पाययेत् ॥
उष्णाम्बु स्वेदयेच्चास्य पाणितापेन चोदरम् ॥ ११ ॥

---

विरेचनजेतश्चद्दोषजनितविकारव्यपगमः । क्रमेण विट्पित्तादीनां प्राप्तिः प्रवृत्तिरित्यर्थः । अत्रापि यथोक्तक्रमलक्षणेन विट्पित्तादिप्रवर्त्तनेन सम्यग्विरिक्तलक्षणं भवतीति पूर्व्ववदेव ज्ञेयम् । अत्रापि पूर्व्वार्द्धेन विरेकस्य लैङ्गिकी शुद्धिः द्वितीयार्द्धेन पुनरात्यन्तिकी शुद्धिरिति ज्ञेयम् ॥ ८ ॥

स्यादित्यादिना पद्येनायोगकृतलक्षणमाह न च वातानुलोम्यमित्यादि वातविबन्ध इत्यर्थः । गुरुतेति कोष्ठस्य गात्रस्य च ॥ ९ ॥

कफेत्यादिना विरेचनातियोगलक्षणमाह ।— क्षयशब्दः कफादिभिः प्रत्येकं संबध्यते अभावशब्दोऽपि निद्राबलाभ्यामिति । अतिविरेचित-इत्यन्वयः । अत्रैव यद्यग्निमान्द्यादिकं स्यात् तदा तस्मिन् दिवसे लङ्घनमन्यथा तु सायं यवागूर्देयेत्याह मन्दाग्निमित्यादि सुश्रुतस्य विपर्य्यय इत्यग्निमान्द्याभावे पेयाक्रम — इति पेयां विलेपीमकृतमित्यादिनोक्तः १०॥

उक्तपेयाक्रमस्य फलमाह यथेत्यादि । इदानीं दोषभेदा-

उत्थानेऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुनः पिबेत् ।
अदृढस्नेहकोष्ठस्तु पिबेदूर्द्ध्वं दशाहतः ॥
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ।
यौगिकं सम्यगालोच्य स्मरन् पूर्व्वमनुक्रमम् ॥ १२ ॥
दुर्बलः शोधितः पूर्व्वमल्पदोषः कृशोनरः ।
अपरिज्ञातकोष्ठस्तु पिबेन्मृद्वल्पमौषधम् ॥
वरं तदसकृत् पीतमन्यथा संशयावहम् ।
दोषाग्नेर्नाश्य भेषज्यमविरेच्यैव जीर्य्यति ॥
तेभ्योवस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ॥ १३ ॥

---

द्विरेकमाह कषायेतरादि वाभटस्य वायोरिति छेदः। अप्रवृत्ते तु पुरीषादौ उष्णाम्बु पाययेदिति योज्यम् ॥ ११ ॥

अतयन्त्राल्पप्रवृत्ते दोषे अपरस्मिन्नहनि विरेकमाह उत्थान इत्यादि।— उत्थानं मलप्रवर्त्तनं पुनः पिबेदिति तत्र विरेचनमिति शेषः। यदि पुनरसम्यक् स्निग्धकोष्ठोभवति पुमान् तदा दशाहादूर्द्ध्वं विरेचनं पिबेदित्याह अदृढस्नेहकोष्ठ-इत्यादि। अदृढस्नेहकोष्ठ इति असम्यक्स्निग्धकोष्ठ-इत्यर्थः। स्मरन् पूर्व्वमनुक्रममिति येन मात्राभियोगेन पूर्व्वमयोगोऽभूत् तत् स्मृत्वा परिहर्त्तव्यः ॥ १२ ॥

दुर्व्वलादिषु यादृग्विरेचनं प्रयोक्तव्यं तदाह दुर्व्वल-इत्यादि।- दुर्व्वलोऽन्तःशक्तिहीनः कृशः क्षीणमांसः। वह्निरिति स्वदुर्वीर्य्यम्। अत्यन्तवातविष्टब्धकोष्ठादौ यथा विरेचनं कार्य्यं तदाह रूक्षेत्यादि।— रूक्षादयः कोष्ठेन सार्द्धं सम्बध्यन्ते। अविरिच्यैवेति विरेकमकृत्वा। वस्तिर्निरूहइति केचित्। अन्ये तु निरूहापेक्षया स्नेहवस्तेर्व्वातप्रशमकत्वेनानुवासनमत्र वस्ति-शब्दार्थ इत्याहुः। अन्ये तूभयमपीत्याहुः ॥ १३ ॥

अस्निग्धे रेचनं स्निग्धं रुक्षं स्निग्धेऽतिशस्यते ।
विरुक्ष्य स्नेहसात्म्यन्तु भूयः स्निग्धं विरेचयेत् ॥ १४ ॥
पद्मकोशीरनागाह्वचन्दनानि प्रयोजयेत् ।
अतियोगे विरेकस्य पानालेपनसेचनैः ॥
सौवीरपिष्टाम्रवल्कलाभिर्लेपोऽतिसारहा ॥ १५ ॥
अविरेच्या बालवृद्धश्रान्तभीतनवज्वराः ।
अल्पाग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ॥

इदानीं यद्यस्मिन् प्रयोज्यं तदाह अस्निग्धेत्यादि ।-अस्निग्ध-इतीषत्स्निग्धे रूक्षं स्निग्धेति शस्यत-इत्यतिस्निग्धे रूक्षं रेचनं शस्यत-इत्यर्थः ॥ १४ ॥

इदानीं रेचनातियोगचिकित्सामाह पद्मकेत्यादि । ननु अयोगातियोगवत् विरेकमिथ्यायोगचिकित्सा कुतोनोक्ता सत्यं दोषाणां हि प्रवृत्तौ चतुर्व्विधेव गतिर्भवति सम्यक्प्रवृत्तिरति-प्रवृत्तिरप्रवृत्तिरल्पप्रवृत्तिश्चेति । तत्राल्पप्रवृत्यप्रवृत्तिश्चेति त्वयोगग्रहीत-एव वा प्रतिलोम्येन प्रवृत्तिर्मिथ्यायोगत्वेन वाच्या साप्यनपेक्षितस्य दोषस्याऽप्रवृत्तिकत्वादयोगान्तर्भूतैव अतएवोक्तं चरके —अयोगप्रतिलोम्येन न चाल्पं वा प्रवर्त्त-नमिति । अतोवमनविरेचने मिथ्यायोगं नेच्छन्तीति कृत्वा मिथ्यायोगचिकित्सितस्येत्यनुपादानं बोध्यम् ॥ १५ ॥

निषिद्धविरेकानाह अविरेच्या इति । — आस्थापितो-निरूढ़ः अयञ्च निरूहान्तरं विरेकनिषेध औत्सर्गिकः । तेन तेभ्योवर्त्तिं पुरा दद्यादित्यादि विशेषविधिना तदपवादोप्रयुज्यत-एव किम्वा निरूहानन्तरं हि विरेकनिषेधः सप्ताहाभ्यन्तर-एव ज्ञेयः । सप्ताहादूर्द्ध्वन्तु विरेकोविहित-एवेति विधिनिषेधयोः कालभेदेन न विरोधः उक्तं हि चरके-नवोविरिक्तस्तु निरू-ढ़दानं विवर्ज्जयेत् सप्तदिनान्यवश्यम् । शुद्धे निरूहेण विरे-

अघल्या-स्थापित-क्रूरकोष्ठातिस्निग्धशोषिणः।
गर्भिणी नवसूता च तृष्णार्त्तोऽजीर्णवानपि ॥ १६ ॥
इति विरेचनाधिकारः।

---

## अथानुवासनाधिकारः।

वातोल्बनेषु दोषेषु वाते वा वस्तिरिष्यते।
अथो यतात् पादहीनं भोजयित्वानुवासयेत् ॥ १ ॥

---

चनश्चेति वदन्ति। अन्ये त्वेतद्विराधभियैव तेभ्योवस्तिं मुरा दद्यादित्यत्र वस्तिशब्दस्यानुवासनार्थमाहुरिति प्रागेवोक्तम्॥१६॥
इति विरेचनाधिकाः।

---

विरेचनात् सप्तरात्रगते जातवलाय वैकृताशयाय सायाह्ने सम्यगदेयोऽनुवासनइत्यनेनानुवासनस्य विवेचनी-यानन्तरीयत्वमुक्तं अतोविरेचनाधिकारमनु स्नेहवस्तिविचारः प्रस्तूयते अनुवसन्नपि न दूष्यति अनुदिवसं वा दीयते इत्यनु-वासननिरुक्तिः सुश्रुतोक्ता ज्ञेया। अत्र सामान्यतोवस्तिवि-षयमाह वातेत्यादि वाभटस्य यद्यपि सुश्रुते — वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यतइत्यनेन पित्तकफरक्ता-नामपि वस्तिविषयत्वमुक्तं तथापि वस्तिर्वातहराणामिति वच-नात् प्राधान्येन वायोरेव वस्तिविषयत्वं पित्तकफयोस्तु वात-स्थानगतयोस्तथा स्वस्थानस्थितयोर्व्वातानुबन्धयोर्व्वा वस्तिविष-यता। यदाह चरकः—पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्।·स्रंसनं त्रिन्मलान् वस्तिः पक्वाशयगतान् जयेदिति। तथा एकोपक्रमैतत्रनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः। रक्तमपि दुष्टं रक्तप्रसादनद्रव्यैर्दत्तवस्तिः प्रसादयति दोषहरणेनानुलोमयति। अत्र निरूहाङ्गस्यानुवासनस्य

न चाभुक्तवते स्नेहः प्रणिधेयः कथञ्चन ।
रूक्षत्वाच्छून्यकोष्ठस्य क्षिप्रमूर्द्ध्वमथोत्पतेत् ॥
षट्पली च भवेत् श्रेष्ठा मध्यमा त्रिपली भवेत् ।
कनीयसी सार्द्धपला त्रिधा मात्रानुवासने ॥

---

विधानं तदाह यथेत्यादि उचितादभ्यसात् पादहीनं चतुर्भागहीनम् । वस्तिर्हि द्विविधा अनुवासननिरूहभेदात् । स्नेहवस्तिरनुवासनं कषायवस्तिर्निरूहः । तत्र निरूहादूरस्थानुवासनस्य विधानम् ॥ १ ॥

अभुक्तवतेऽनुवासनवस्तिर्न देयइत्याह न चेत्यादि स्नेह-इति स्नेहवस्तिः अत्रैवोपपत्तिमाह रूक्षत्वादित्यादि। विदग्धान्ने तु वस्तिर्न देयः उक्तं हि — सदानुवासयेच्चापि भोजयित्वार्द्रपाणिनम् । ज्वरं विदग्धभुक्तस्य कुर्य्यात् स्नेहप्रयोजित इति । उत्तममध्यमाधमनरापेक्षया त्रिविधानुवाससनमात्रामाह षट्पलीत्यादि अध्यर्द्धपलेति सार्द्धपलमेकमित्यर्थः । एतच्च षट्पलादिमात्राविधानं क्रमेनैव विधेयम् । न त्वेकदिन-एवेत्याह प्रागित्यादि ।— आद्ये षट्पलस्नेहे गुरुमात्रारूपे प्रथमं पक्वस्नेहस्य द्विपलं ततोदिनैकं विश्राम्य पलार्द्धेन वृद्धिः एवं क्रमेण नवभिः स्नेहदानदिनैः षट्पलानि स्युः । अन्तरालदिवसाश्चाष्टावतोमिलित्वा सप्तदशवासरा भवन्ति । द्वितीये मध्यमे त्रिपलइति यावत् । तत्पलमादौ देयं तत-एकैकदिनं विश्राम्य अर्द्धेन कर्षेण वृद्धिः । अत्रापि नवभिः स्नेहपानदिवसैः पलत्रयं पूर्य्यं तृतीये कनीयसि सार्द्धपले आदौ कर्षद्वयं तथैव एकैकदिनं विश्राम्य वसुपरिमितैरित्यष्टाभिर्माषकैर्वृद्धिः कार्य्या। अत्रापि तावद्भिरेव स्नेहदानदिवसैः सार्द्धपलमानं पूर्य्यते । इयमेव कनीयसी मात्रा निरपाया सर्व्वलौकिकी सर्व्वकालिकी वृद्धव्यवहारसिद्धा च उक्तं

प्राग्देयमाद्ये द्विपलं पलार्द्धं द्वितीये पलमष्टमिः।
कर्षद्वयं वा वस्तुमाषद्विर्व्वेधौ तृतीये क्रम-एष उक्तः॥
स तु सैन्धवचूर्णेन घृताद्धेन च संयुतः।
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम्॥
विरिक्तश्चानुवास्यश्चेत् सप्तरात्रात् परं तदा॥ २॥
सुवर्णरूप्यत्रपुताम्ररीतिकांस्यायसास्थिद्रुमवेनुदन्तैः।
नलैर्विषाणैर्मणिभिश्च तैस्तैः कार्य्याणि नेत्राणि सुकर्णिकानि॥ ३

---

हि चरके —धर्म्मव्यायामभाराध्वयानस्त्रीकर्षितेषु च। दुर्ब्बले वातभग्ने च मात्रावस्तिः सदा हितः। ह्रस्वायाः स्नेहमात्रायामात्रावस्तिसमोभवेत्। ह्रस्वायाः स्नेहमात्रायायो-जितोऽस्तिमात्रावस्तिरित्यर्थः। एतानि स्नेहदानदिनानि नवेतुरत्सर्गः। तेन नवदिनादर्व्वागपि यदि स्नेहसात्म्यं भवति दिनत्रयेण चतुष्टयेन वा तदा तावतेवानुवासनं समाप्यते अनुवासनानन्तरश्च न दीयते। न च स्नेहः केवलोदेयः तदा केनाप्युपहित-इत्याह सत्वित्यादि सुश्रुतस्य चूर्णमानश्च हन्देन लिखितं यथा-चूर्णमाषः पले स्नेहे सिन्धुजन्मघृताह्वयोरिति। चक्रस्तु भानुमत्यां सैन्धवघृताह्वयोः प्रत्येकमङ्गुलीत्रयाग्रसंदंश-ग्राह्यं मानमित्याह। सहसेति यद्यपि स्नेहस्य शीघ्रागमनं दोषायैव यदुक्तं योऽन्यः शीघ्रनिवृत्तोऽन्यः स्नेहस्तिष्ठन्न कार्य्य-कृदिति तथापि वक्ष्यमाणस्नेहनिर्गमनकालाधिक कालनिरा-सार्थं सहसेत्युक्तम्। तेन सहसेत्यस्य यामत्रयान्तरमेवेत्यर्थः। विरेचनानन्तरं कियद्भिरह्नोभिरनुवास्य-इत्याह विरिक्त-इत्यादि॥ २॥

इदानीं वस्तिनलिका यैर्द्रव्यैर्विधेया तान्याह सुवर्णेत्यादि चरकस्य। त्रपु सीसकः रीतिः पित्तलं अस्थि हस्त्यादीनां

षड्द्वादशाष्टाङ्गुलसंमितानि षड्विंशतिद्वादशवर्षजानाम्।
स्युर्मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि वर्त्त्या पिहितानि चापि॥
यथा वयोऽङ्गुष्ठकनिष्ठकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुडिकामुखानि॥

दन्तस्य हस्तिनः विषाणैर्महिषादिश्रृङ्गैः मणिभिर्गोमेदकादिभिः सुकर्णिकानीत्यत्र त्रिकर्णिकानीति केचित् पठन्ति त्रिकर्णिकात्वञ्चाग्रे वक्ष्यति। एवं नलिकावस्तिगतश्च कषायादि द्रव्यनेत्रत्वान्नेत्रमिति संज्ञा॥ ३॥

इदानीं तन्नेत्रप्रमाणं वयोभेदाद्भिन्नमाह षडित्यादि षड्वर्षबालस्य स्वाङ्गुलेन षडङ्गुलं नेत्रं कार्य्यं एवं विंशतिवर्षस्य द्वादशाङ्गुलं तथा द्वादशवर्षस्याष्टाङ्गुलमिति यथासंख्यमन्वयः। ननु एकवर्षादारभ्य पञ्चवर्षान्तं तथा षड्वर्षादूर्द्धमेकादशवर्षं तथा द्वादशवर्षादूर्द्धं विंशतिवर्षं ततोऽपि सप्ततिं यावत् कियन्मानं नेत्रं कार्य्यं अत्राह एकवर्षात् प्रभृति षड्वर्षं यावत् षडङ्गुलमेव नेत्रं तथा सप्तवर्षादूर्द्धं ऊनविंशतिवर्षप्रभृति अष्टाङ्गुलं नेत्रं एवं विंशतिवर्षादूर्द्धं द्वादशाङ्गुलमेव नेत्रं कार्य्यं सप्ततिवर्षं यावदिति अयञ्चार्थः व्युत्क्रमाभिधानसामर्थ्यादेव लभ्यते। यतः षट्संख्यां निवेश्याष्टसंख्यानिवेशो युज्यते ततो द्वादशसंख्येति अतोव्युत्क्रमाभिधानबलादेव तदास्योपलम्भ-इति। अस्मादेव व्युत्क्रमाभिधानात् षड्वर्षादूर्द्धमेकादशवर्षं यावत् तथा द्वादशवर्षादूर्द्धं विंशतिवर्षं यावत् नेत्रप्रमाणं विकल्पोऽस्त्येवेति निदर्शयति तेन सप्तवर्षादौ प्रतिवर्षमेवाङ्गुलतृतीयभागवृद्ध्या द्वादशवर्षेऽष्टाङ्गुलं भवति तदा द्वादशवर्षादूर्द्धमपि प्रतिवर्षमर्द्धाङ्गुलवृद्ध्या विंशतिवर्षे द्वादशाङ्गुलं भवतीति स्पष्टं वाभटेप्युक्तं—वीक्ष्य वर्षान्तरे तु वयोबलशरीराणि प्रमाणमभिवर्द्धयेदिति वर्षान्तरेष्विति षड्द्वाद-

स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते बस्तिनिबन्धने द्वे ।
जारद्गवोमाहिषहारिणो वा स्याच्छौकरोवस्तिरजस्य वापि ॥
दृढ़स्तनुर्नष्टशिरोविगन्धः कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयोवीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ४ ॥

आदिवर्षान्तरालस्थितेषु सप्तमाष्टमादिवर्षेष्वित्यर्थः सुश्रुते तु साम्बत्सरिकाष्टद्विरष्टवर्षाणां षड़ष्टदशाङ्गुलं नेत्रमानमुक्तं पञ्च-विंशतिवर्षादूर्द्ध्वं द्वादशाङ्गुलमित्यनेन तथा वाभटेऽपि-ऊनेऽब्दे पञ्चपूर्णेऽस्मिन् आसप्तभ्योऽङ्गुलानि षट् सप्तमे सप्त तान्यष्टौ द्वादशे षोड़शे नवेत्यनेन च यो नेत्रमाणभेद उक्तः सोप्यदूरान्तरत्वान्नविरोधमावहतीति । एषाञ्च नेत्राग्ररन्ध्रं कीदृशं कार्य्यमित्याह स्युर्मुद्गेत्यादि षड़्द्वादशाङ्गुलानि यथा-संख्यं मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि कार्य्याणि स्युः । कर्कन्धु-शब्देनेहतदस्थि गृह्यते उक्तं हि सुश्रुते कोलास्थिमात्रच्छिद्र-मिति कर्कन्धुश्च शृगालकोलिः । इहबदरास्थिग्रहणे तु कनि-ष्ठाप्रमाणाग्रे तद्वहनं नार्हति । अन्ये तु एवं विरोधं पश्यन्तो-वदरास्थिमज्जानमिह कर्कन्धुशब्देनेह ग्राहयन्ति । सतीनोव-र्त्तुलकलायः । वर्त्त्या पिहितानीति दृश्यान्तरप्रवेशवस्तिद्रव्य-निर्गमननिरासार्थं वस्त्रादीनां वर्त्त्या पिहितमुखानि कार्य्याणि । यथावय इति यस्मिन् वयसि यन्नेत्रं विहितं यद्वयः-स्थस्यैव दृढ़ाङ्गुष्ठकनिष्ठाभ्यां यथासंख्यं मूले चाग्रे तुल्यपरि-परिमाणार्हं नेत्रं कर्त्तव्यमित्यर्थः । अङ्गुष्ठं दृढ़ाङ्गुष्ठं ऋजू-नीत्यादिना नेत्राकृतिमाह गोपुच्छाकृतित्वञ्चैषां मूलस्थौल्या-दग्रे तनुत्वादिति श्लक्ष्णानीत्यकर्कशानि गुड़िकामुखानीति गुड़िकाकारवर्त्तुलं मुखं येषां तेन वर्त्तुलमुखतया अतीक्ष्ण-मुखानि । सुकर्णिकानीति पूर्व्वमुक्तं अतः कर्णिकाव्यवस्थामाह स्यादित्यादि नेत्रस्याग्रप्रदेशे यश्चतुर्थोभागस्तत्र एका कर्णिका

निरूहमात्रा प्रथमे प्रकुञ्चोवत्सरे परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥
प्रसृतं वर्द्धयेदूर्द्धं द्वादशाष्टादशस्य तु ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ ५ ॥

---

कर्त्तव्या नेत्रस्यातिप्रवेशनिरासार्थमिति भावः । मूलाश्रिते वस्तिनि बन्धने द्वे इति नेत्रस्य मूले तु चर्म्मपुटकबन्धनार्थं कर्णिकाद्वयं कार्य्यमित्यर्थः । वस्त्यर्थं येषां मूत्रपुटकं ग्राह्यं तदाह जारद्गव इत्यादि जारद्गव इति वृद्धगोभववस्तिरिति । वस्तिरिति मूत्रपुटकं कोषावरकचर्म्मेति केचित् । नष्टशिर इति समुद्धृतशिरासन्ततिः कषायरक्त इति दि फलादिकषाय-द्रव्यभावनया रञ्जितः अतएव विगन्धः विगतपूतिगन्धः । वयो-वीच्य यथानुरूपमिति वयोभेदेन वत्सरादिरूपेण यथोक्तेन यथावस्तिर्यस्यानुरूपस्तत्प्रमाणोभवति स तस्य नेत्रे बन्धनीयः सुबद्धसूत्र इति सुदृढबन्धसूत्र इत्यर्थः ॥ ४ ॥

यद्यपि षट्पली तु भवेज्ज्येष्ठेत्यादिनानुवासनमात्रा उक्तैव तथाप्यनुवक्तव्यविशेषार्थं पुनरप्यनुवासनमात्रा वक्तव्या । सा च निरूहमात्रातिदेशेन वाच्या अतोऽनुवासनाधिकार एव प्रथमं निरूहमात्रामाह निरूहमात्रेत्यादि वाभटस्य प्रथमे वत्सरे निरूहमात्रा प्रकुञ्चः पलमित्यर्थः । परमिति दत्तरात् पर-मिति, प्रत्यब्दं प्रकुञ्चेन पलेन वृद्धिः कार्य्येति यावत् । षट्-प्रसृता द्वादशपलानि भवन्तीत्यर्थः । प्रसृतन्तु पलद्वयमिति एतेन प्रत्यब्दं प्रकुञ्चवृद्ध्या द्वादशभिर्वर्षैः षट्प्रसृता भवन्ती-त्यर्थः द्वादशेतिच्छेदः । तत इति द्वादशवर्षादूर्द्धं प्रत्यब्दमेकैकं प्रसृतं कृत्वा वर्द्धयेत् यावद्द्वादशप्रसृता भवन्ती एतेन द्वादश-वर्षानन्तरं त्रयोदशवर्षमारभ्य अष्टादशवर्षपर्य्यन्तं प्रतिवर्षमे-कैकं प्रसृतं वृद्ध्या द्वादशप्रसृतपूरणं भवति । अष्टादशेतत्रष्टा-

यथावयं निरूहस्य पादोमात्रानुवासने।
कृतचंक्रमणं मुक्तविण्मूत्रं शयने सुखे॥
नात्युच्छ्रितेन चोच्छीर्षे संविष्टं वामपार्श्वतः।
सङ्कोच्य दक्षिणं सक्थि प्रसार्य्य च ततोऽपरम्॥
बस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत्।
तथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे॥

---

दशवर्षदेशीयस्य पुंसः सप्ततेरिति सप्ततिवर्षं यावत् इदं द्वादश-प्रसृतस्वरूपमेव मानं ज्ञेयमित्यर्थः। दशैवप्रसृताः परमिति प्रतारूं प्रसृतवृद्ध्या अष्टादशस्य अष्टादशवर्षस्य द्वादशप्रसृता भवन्ति अतः सप्ततिवर्षपर्य्यन्तं द्वादशप्रसृता एव परं सप्ततिव-र्षोर्द्धं दशप्रसृता एवेत्यर्थः। दृष्टान्तो पुनरर्द्धमात्रिकेण व्यव-हारः तेन महत्यपि पुंसि षट्प्रसृता एव दीयन्ते इन्दुबैद्यैरिति ज्ञेयम्॥ ५॥

इदानीमुक्तनिरूहमात्रादेशेन प्रकृतानुवासनामात्रामाह यथावयमित्यादि।- यस्मिन् वयसि यन्निरूहमानमुक्तं तस्मिन् वयसि अनुवासनमानं यन्निरूहाच्चतुर्थांशमित्यर्थः। एतेन प्रथमवर्षीयस्य बालस्य उत्कृष्टं निरूहमानं पलमुक्तं तस्य चतुर्थांशो[illegible]नुवासनार्थमित्यर्थः। एवं द्वित्रिवार्षिकबालादौ द्वित्रिकार्षिकं बोध्यम्। ननु षट्पली तु भवेज्ज्येष्ठेत्यादिना पूर्व्वं त्रिविधानुवासनमात्रोक्ता अत्र पुनरन्यथैवेति विरोधः उच्यते अष्टादशवर्षं यावत् द्वादश प्रसृतो निरूह उक्तः तस्य चतुर्थो-ऽंशः षट्पल एव यथा द्वादशवर्षं प्रति षट् प्रसृता उक्ता एषां चतुर्थोभागस्त्रिपल एव तथा षड्वर्षस्य षट्पलमितास्य पादः सार्द्धपलमिति अवान्तरे एकद्वित्रिवर्षादौ चतुर्द्दशवर्षादौ च ये मान भेदाः सन्ति तेषाञ्चोक्तमानानुसारेणोहः कार्य्यइत्येक-

उच्छ्रासत्र वस्तेर्वदनं बद्धा हस्तमकम्पयन् ।
पृष्ठवंशं प्रति ततोनातिद्रुतविलम्बितम् ॥
नातिवेगं नचा मन्दं सकृदेव प्रपीड़येत् ।
सावशेषं प्रकुर्व्वीत वायुः शेषे हि तिष्ठति ॥ ६ ॥
निरूहदानेऽपि विधिरयमेव समीरितः ।
ततः प्रणिहिते स्नेहे उत्तानोवाक्शतं भवेत् ॥

---

वाच्यतया न पूर्व्वापरवचनविरोधः। किन्तु षट्पञ्चेत्यादि वाक्यमुत्तममध्यमाधमवयानलशरीरभेदभिन्नसुवर्णमितं त्रिविधं मानमाश्रित्योक्तं तेन तत्तैलपर्यादिवयोभेदभिन्नमात्राभिधानान्नन्यूनता दोष इति ज्ञेयः। इदानीं किम्भूतस्य तदनुवासनं देयं इत्याह कृतेत्यादि वाभटस्त्र शयनइति शय्यायाम् । वामपार्श्वेतइति वामपार्श्वेन सन्निष्टं सुप्तं वामपार्श्वशयनप्रयोजनञ्च चरकेणोक्तं यथा वामाश्रयौग्निग्रहण्यौ गुदञ्च तत्पार्श्वसंस्थस्य सुखोपलब्धिः। क्रीयन्त-एवं वलयश्च तस्मात् सव्यं शयानोर्हति वस्तिदानमिति। सक्थीति जङ्घा अपरमिति वामं सव्य इति वामे वस्तिमिति बद्धचर्म्मपुटाहितस्नेहयुक्तं नेत्रमेव दक्षिणेनेति। हस्तेन उच्छ्रास्य वस्तेर्व्वदनं बद्धेति वस्तेश्चर्म्मपुटस्य मुखं उच्छ्रास्य उद्गाम्य पश्चात् बद्धेत्यर्थः। वस्तिमुखोच्छ्रासनञ्च द्रवाभिघातजनितवातस्य निर्गमनार्थं उच्छ्रास्य वस्तेर्व्वदने बध्व इति पाठः। पृष्ठवंशप्रतीति पृष्ठवंशं वाध्वीकृत्य तेन पृष्ठवंशानुसारेण ऋजु यथास्यात्तथा नेत्रं प्रणयेदित्यर्थः। चरकेपि ऋजुपृष्ठवंशमित्युक्तं सकृदित्येकवारमेव वस्तिपुटकान्तर्गतद्रव्यभागस्तु न निःशेषोदेय इतत्राह। सावशेषमितत्रादि वायुशेषे हि तिष्ठतीति निःशेषदाने हि पुटान्तर्गतो वायुर्गुदं प्रविश्य वस्तिमाध्मापयेदिति भावः॥ ६ ॥

इदानीमुक्तानुवासनदानविधिं निरूहेप्यतिदिशति निरू-

प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं प्रसर्पति।
आकुञ्चयेत् शनैः सक्थि सक्थिनी बाहू ततः परम्॥
ताड़येत्तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः।
स्फिचोश्चैनं ततः श्रोण्यां शय्यां त्रिवत्क्षिपेच्छनैः॥

---

इदानोऽपीत्याहि। इत्ते च स्नेहे याहृशेन स्थातव्यं यच्च कर्त्तव्यं तदाह तत इत्याहि सुश्रुतस्य वाक् शतस्वरं तदुच्चारणं शतवा यावत् कालेन भवति तावत् उत्तानो भूत्वा तिष्ठेदित्यर्थः। अन्ये तु वाक्शतं छोटिकाशतमित्याहुः। प्रसारितैः सर्वगात्रैरङ्गप्रत्यङ्गादिभिरित्यर्थः ततो एवं कृते किं स्यादित्याह तथेति।— आकुञ्चयेदित्याहि सक्थिद्वयं तथा बाहू च निराकुञ्चयेदिति शेषः। आकुञ्चनान्यथानुपपत्त्यैव प्रसारणमपि लभ्यते। तेन पादद्वयं बाहुद्वयं पादतलं वा विस्तार्य ततः संकोच्य शनैः प्रसारयेदित्यर्थः। उक्तं हि चरके—ईषच्च पादाङ्गुलीयुग्ममाञ्छेदिति। आञ्छेत् प्रसारयेदित्यर्थः। तत्र तु प्रसारणान्यथानुपपत्तौ वा कुञ्चनं लभ्यत इत्येकवाक्यता च ज्ञेया ततः परं बाहू च तदङ्गुलिद्वयञ्च विस्तार्य ततः संकोच्य प्रसारयेदिति। चरके तु बाहुसंकोचप्रसारणे नोक्त इति शेषः। ताड़येदित्यादि स्फिचोश्चैनमित्यन्तः। एनमातुरम्। तलयोः पादतलकरतलयोस्तथा स्फिचोश्च त्रींस्त्रीन् वारान् शनैः शनैस्ताड़येदिति मुष्टिना हन्यादिति एतच्च ताड़नं अनुवासनस्नेहस्य शीघ्रनिःसरणं यथा न भवेदित्येतदर्थं क्रियते यदाह हढबलः—हत्वा स्फिचौ पाणितलेन हन्यात् स्नेहस्य शीघ्रागमरक्षणार्थमिति। ततः श्रोण्यौ शय्यां त्रिवत्क्षिपेत्तत इति शय्यामित्यन्तरं प्रतीति शेषः। तेन शय्यां प्रति श्रोण्यौ त्रिवत्क्षिपेदित्यर्थ इति श्रीकण्ठः वयन्तु शय्यामित्यन्तरं तत्पार्ष्णिभ्यामिति शेषः। तेन तत् पार्ष्णिभ्यां शय्यां ताड़येदिति योज्यं

एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक्।
आसीत शयने काममासीदाचारिकेरतः॥ ७॥
योज्यः शीघ्रं निवृत्तेऽस्यः स्नेहोऽतिष्ठन्न कार्यकृत्॥ ८॥
सानिल सपुरीषश्च स्नेहः प्रत्येति यस्य वै।
विना पीड़ां त्रियामस्थः स सम्यगनुवासितः॥ ९॥

---

उक्तं हि—हस्तेनोत्तानदेहस्य पार्ष्णिना ताड़येत् स्फिचौ। तत् पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेदिति व्याचक्षते। श्रोणौ त्रिरुत्क्षिपेदिति पादयोर्भिषतश्श्रोणौ त्रिरुत्क्षिपेदित्यर्थः। एतदपि पार्ष्णिभ्यां शय्याताड़नं स्नेहशीघ्रागमनरक्षणार्थमेव ज्ञेयं एतच्च शीघ्रागमनरक्षणार्थं कर्म यद्यपि पश्चादुक्तं तथापि स्नेहशीघ्रगमनेन वस्तेर्निष्प्रयोजनता स्यादिति कृत्वा प्रथममेव कार्य्यम्। अतएव भानुमत्यां चक्रोप्याह स्फिचश्चैनमिति एतदपि पश्चादुक्तं तथाप्यभिधानक्रमतत्त्वमकृत्वा प्रथममेव ज्ञेयमिति मन्दायस इति अत्यल्पप्रत्यवायकरविक्षेपणादिशरीरचेष्टः काममासीदित्यनेन दृढ़वस्त्राकृगात्रमर्द्दनाङ्गुलीस्फोटादिकमिच्छतः कार्य्यमिति सूच्यते उक्तं हि—स्नेहेन पार्ष्ण्यङ्गुलिपिण्डिकाश्च ये चास्य गात्रावयवास्रुजार्त्ताः। तांश्चावमर्द्दीत सुखं ततश्च निद्रामुपासीतकृतोपधान इति। आचारिकेरत इति क्रोधादि वर्ज्जमाद्याचाररतपरः॥ ७॥

यदि तु स्नेहोऽल्पमात्र एवातिमात्रत्वादिदोषेण निःसरति तदा किं कार्य्यमित्याह योज्य इत्यादि वाभटस्य शीघ्र इति त्रियामादर्व्वाक् तत्र द्वितीयस्नेहदानमल्पमात्रयैव विधेयम्। प्रथमस्नेहदानेनैव कोष्ठावलेपसिद्धत्वात्। सुश्रुतेऽप्युक्तं तत्र ऽस्योल्पतरोदेय इति पूर्व्वदत्तस्नेहादल्पतर इति॥ ८॥

सानिल इत्यादिना सौश्रुतानुवासनसम्यग्योगलक्षणमाह विना पीड़ां त्रियामस्थ इत्यत्र उषाचार्यो विना शीघ्रमिति

क्वाथार्द्धमात्रयाप्रातर्धान्यशुण्ठीजलं पिबेत्।
पित्तोत्तरे कदुष्णाम्भस्तावन्मात्रं पिबेदनु॥
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते।

---

पाठे उषादाहः. चाषा पिपासा शोषमिति यामलस्यानन्तर-मेवेतत्यर्थः॥ ६॥

क्रोष्ठावलेपच्छेदपाकार्थमाह क्वाथार्द्धमात्रयेत्यादि।- यस्य पुरुषस्याग्न्याद्यपेक्षया यावान् संशमनः क्वाथः समर्हति तस्यार्द्धं धान्यशुण्ठीजलं षडङ्गविधिना कर्त्तव्यमिति चक्रः तत्र धान्यस्य द्वादशमाषकाः शुण्ठ्याश्च षट्चत्वारोवेति मिलित्वा कर्षमानत्वं ज्ञेयम्। एतच्च धान्यशुण्ठीजलं न प्रत्यहं देयं किन्त्वेकान्तरमिति तदुक्तं—एकान्तरोपयोगेन धान्यशुण्ठीजलं पिबेदिति। ऊर्ध्वगतस्तावदेकान्तरमेवानुवास-नदानं, यस्मिन् दिवसे अनुवासनं न दीयते तस्मिन्नेव दिने धान्यशुण्ठीजलं देयं अनुवासनदिने तु न देयं यदाह चरकः:- भुक्तस्नेहं द्रवोष्णञ्च लघुपथ्योपसेवनम्। भुक्तवान् मात्रया भोज्य अनुवास्यस्त्र्यहात् त्र्यहात्। धान्यनागरसंसिद्धं तोयं दद्याद्विचक्षणः व्युषिताय निशां कल्यमुष्णं वा केवलं जल-मिति। व्युषितायेति अनुवासनस्नेहं दत्त्वा निशां व्युषिताये-त्यर्थः। एतेन यस्मिन् दिने अनुवासनस्नेहो न दीयते तस्मि-न्नेव दिने धान्यनागरसिद्धं जलं देयमिति बोधयतीति। कल्य-मिति प्रातः। पित्तोल्वणे तु दोषे धान्यशुण्ठीजलं त्यक्त्वा कोष्णजलं देयमित्याह पित्तोत्तरमित्यादि तावन्मात्रमिति क्वाथप्रमाणम्। त्रियामस्थस्नेहस्य सम्यगनुवासनलिङ्गत्वं यदुक्तं तदपवादमाह अह्नोरात्रादित्यादि सुश्रुतस्य अह्नोरा-त्रादिति वस्तिप्रणिधानदिनरात्र्यभिप्रायेण तेन यामत्रयात्

अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ॥
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ १० ॥
यस्त्र नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ।
सर्व्वोऽल्पो वावृतोरौक्ष्यादुपेक्ष्यः संविजानता ॥ ११ ॥
अनायन्तमहोरात्रात् स्नेहं सोपद्रवं हरेत् ।

---

परतोऽपि याममेव मनागच्छन्नपि स्नेहो न दुष्यति न व्यापदं करोतीत्यर्थः. वस्तिगुणानिति स्नेहनवृंहणादीन् जीर्ण इति परिणतः अल्पगुण इति वाय्वग्निभ्यामभिभूय पाकं नीत्वा न सम्यक् स्नेहनादिकं करोति । वीर्य्येण देहं भावयित्वा प्रत्यागच्छन्नेव स्नेहो यथोक्तगुणकारक इतिभावः । पक्वाशयस्थस्यापि स्नेहस्य पाकोऽग्निमत्याशक्तया देहतेजसा च संगच्छत एव अतएवोक्तं चरके — एवमाशुजरां स्नेहोवात्यन्तुसिकतास्विव । एभ्योऽन्येषां त्र्यहात् प्रायः स्नेहं पचति पावक इति ॥ १० ॥

इदानीं यः स्नेहः सर्व्वथा निःसृतः समुदायेनैकदेशेन वा यदि व्यापदं न करोति तदा तत्प्रवर्त्तनाय यत्नो न विधेय इत्याह यस्येत्यादि हृदवलस्य अनिःसृतोऽपि स्तम्भरूपादिकमुपद्रवं न कुर्य्यादिति । अल्पोवावृत इति स्तोकनिःसृतः स्तोकस्यावृतइत्यर्थः । आवृतस्यापि स्तम्भाद्युपद्रवाकरणे हेतुमाह रौक्ष्यादित्यादि ।—शरीरस्याल्परूक्षतया तिष्ठन्नपि स्नेहोरूक्षशरीरं भावयन्नेव न व्यापदं करोतीत्यर्थः । अन्ये तु सर्व्वोऽल्पो वा धृत इति पठन्ति रौक्ष्याच्छरीरोक्तवायुनावृतः प्रतिवद्धः स्नेहोनिःसृतोपि व्यापदजनकत्वादुपेक्ष्य इत्याहुः । उपेक्ष्य इति न तत्र वातावृतस्नेहप्रवर्त्तनी चिकित्साकार्य्येत्यर्थः ॥ ११ ॥

अनायन्तमित्यादि ।—सुश्रुतस्य । हरेदिति शोधनवस्ति-

स्नेहवस्तावनायाते नान्यः स्नेहोविधीयते ॥ १२ ॥
अशुद्धस्य मलोन्मिश्रः स्नेहोनैति यदा पुनः।
तदाङ्गसदनाध्मानशूलाः श्वासश्च जायते ॥
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम्।
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धञ्चाप्यनुवासनम् ॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः।
स्नेहवीर्य्यं तथादत्ते स्नेहेनानुविसर्पति ॥ १३ ॥
अशुद्धमपि वा तेन केवलेनाभिपीड़ितम्।
अहोरात्रस्य कालेषु सर्व्वेष्वेवानुवासयेत् ॥ १४ ॥
अनुवासयेत् तृतीयेऽह्नि पञ्चमे वा पुनश्च तम्।

भिरिति शेषः अतएवाह स्नेहवस्तावित्यादि सुश्रुतस्य नान्यस्नेहोविधीयत इति स्नेहातियोगभयात् शोधनवस्तिस्तुदीयत एवेत्यर्थः ॥ १२ ॥

सचिकित्सितं व्यापदमाह अशुद्धस्येत्यादि अशुद्धस्येति वमनेन विरेचनेन वा तीक्ष्णमित्यनुवासनविशेषणं अन्ये तु निरूहणमित्यस्य विशेषणमित्याहुः। वमनविरेकाभ्यां शुद्धस्यैव स्नेहवस्तिर्देयो न पुनरविशुद्धस्येत्याह स्नेहवस्तिरित्यादि ।— कुतो न विधेय इत्याह स्नेहवीर्य्यमित्यादि तथा दत्ते स्नेहे अविशुद्धदेहप्रयुक्ते स्नेहे सति स्नेहवीर्य्यं यस्मान्नानुविसर्पति देहमितिशेषः। स्नेहमित्यत्र देहमिति पाठे तथादत्त इत्यत्र स्नेहवस्ताविति शेषोबध्यः ॥ १३ ॥

अशुद्धस्य स्नेहवस्तिर्नदेय इति यदुक्तं तदपवादमाह अशुद्धमपीति केवलेनेति निरावरणेन अहोरात्रस्य कालेष्विति अहोरात्रेर्व्वा ये कालाः पूर्व्वोक्ताः पूर्व्वराह्णादयस्तेष्वित्यर्थः ॥ १४ ॥

एकमनुवासनं दत्त्वा कियता कालेनानुवासनं देयमि-

यथा वा स्नेहपक्तिः स्यात्तथाऽप्युल्वणमारुतान् ।
व्यायामनित्यान् दीप्ताग्नीन् रुक्षांश्च प्रतिवासरम् ॥ १५ ॥
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ १६ ॥

---

त्याह अनुवासयेदित्यादि वाभटस्य स्नेहपक्तिः स्यादितिच्छेदः । तस्मिन्निति प्रथममनुवासितं तृतीये पञ्चमे वाऽहनि अनुवासयेत् अत्र सति रूक्षवाते त्र्यहेऽनुवासनं देयं मन्दाग्नौ रूक्षकफपित्ते तु पञ्चम दिनेऽनुवासनमिति व्यवस्था । यथा वा स्नेहपक्तिः स्यादित्यनेनाग्न्यपेक्षया उक्तकालातिक्रमोऽपि कार्य्य इति बोधयति । उल्वणवातादीन् प्रति तु प्रत्यहमेवानुवासनं देयमित्याह अतोपीत्यादि अतोपीतित्र्यहादिदेयानुवासनापेक्षयापीत्यर्थः । हारीतोऽप्याह हृष्टातिरूक्षं पवनस्य रूपं दिनेदिने वस्तिमुदाहरन्तीति । सुश्रुतेऽप्युक्तं रूक्षस्य बहुवातस्य स्नेहवस्तिं दिने दिने । दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात् त्र्यहादिति । अनयैवोक्तरीत्या निरूहानन्तरमनुवासनकालोऽप्यूहनीयः । यदाह दृढबलः—त्र्यहे त्र्यहे वाप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनञ्चेति । एवं यस्मिन् दोषे यावन्त्यनुवासनानि देयानि तदपि चरकादावेवानुसर्त्तव्यानि ॥ १५ ॥

कियन्तः स्नेहवस्तयः प्रयोज्या इत्याह इतीत्यादि वाभटस्य ननु त्रिचतुर्भिः स्नेहैरित्यनेन चतुःसंख्यवस्तिदानं विधीयते तथा च विरोधः उक्तं हि चरके—वस्तीन् युग्मान्, कुशलोविदध्यादिति युग्मवस्तिदानञ्च प्रभावादेवात्मोपकारीति महर्षिवचनाद्विज्ञायते यथा युग्मेष्वहःसु पुत्त्रकामौ संवसेतामिति अयुग्मदानोपपत्तिश्चास्तीति प्रसङ्गेनानुकथिता,चाऽयमत्रायमत्र त्रिचतुरैरित्यनेन युग्मवस्तिदानमुक्तं तन्निरूहाङ्ग-

विष्टब्धानिलविण्मूत्रः स्नेहो हीनेऽनुवासने।
दाहज्वरपिपासार्त्तिकरश्चात्यनुवासने॥ १७॥
स्नेहयुक्तं निरूहं वा नैकमेवातिशीलयेत्।
स्नेहात् पित्तकफोत्क्लेदो निरूहात् पवनाद्भयम्॥ १८॥

---

तथा स्नेहनार्थं क्रियमाणानुवासनविषयं अयुग्मवस्तिदानान्तु स्वतन्त्रक्रियमाणानुवासनविषयमतोऽभिन्न-विषयतया न विरोधः। किंवा चरके अयुग्मानितरस्य सान्तराणीत्यर्थः तेन यत्राहतरानुवासनं देयं तदयुग्मकं निरूहान्तरितं कर्त्तव्यं तेन नवसु एकादशसु वानुवासनेषु दत्तेषु यदि वायुर्न शाम्यति तदा तस्य मार्गावरणनिरासार्थं निरूहं दत्त्वा पुनर्यथोक्तसंख्यानुवासनं देयमित्यर्थः। स्निग्ध-द्रुत्यत्र देह-इति शेषः। एवमस्निग्ध-द्रुत्यत्रापि। शोधनमिति निरूहविशेषणं स्नेहनमित्यनुवासनम्॥ १६॥

अनुवासनयोगातियोगलक्षणमाह विष्टब्धेत्यादि सुश्रुतस्य विष्टब्धान्यनिलविण्मूत्राणि यस्मात् स्नेहात् अनिलादिसञ्चारद्रुत्यर्थः॥ १७॥

निरूहानुवासनयोः परस्पराश्रयाणेन दोषमाह स्नेहवस्तिमित्यादि। चरकस्य एकमेवेति परस्परान्तरितं उत्क्लेदः पित्तकफोत्क्लेशः केचित्तु स्नेहात् पित्तकफोत्क्लेश-द्रुति पठन्ति। निरूहात् पवनात् भयमिति निरन्तरनिरूहेण शरीरस्य शोधनातियोगात् पवनाद्भयं स्यादिति भावः। अनुवासनार्थञ्च तैलं पक्वमेव ग्राह्यं नापक्वं यदाह दृढवलः—न चामं प्रणयेत् स्नेहं यदभिष्यन्दयेद् गुदमिति। अनुवासनार्थञ्च तैलं यद्यप्यस्मिन् प्रकरणे नोक्तं तथापि वातव्याध्युक्तमेव नारायणतैलादिकमिहाप्यनुवासनीयम्॥ १८॥

अनास्थाप्यये ऽभिधेया नानुवास्याश्च ते मताः ॥ १८ ॥
विशेषतस्त्वमी पाण्डुकामलामेहपीनसाः ।
निरन्नप्लीहविड्भेदी गुरुकोष्ठकफोदराः ॥
अभिष्यन्दभृशस्थूलक्रिमिकोष्ठाढ्यमारुताः ।
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ॥ २० ॥
अनास्थाप्यस्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।
आमातिसारी वमिमान् संशुद्धोदत्तनावनः ॥
श्वासकासप्रसेकार्शोहिक्काध्मानाल्पवह्नयः ।
शूलपायुः कृताहारोबद्धच्छिद्रदकोदरी ।
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥ २१ ॥
नचैकान्तेन निर्द्दिष्टेऽप्यत्राभिनिविशेद्बुधः ।

---

येषामनुवासनं न देयं तानाह अनास्थाप्या-इत्यग्रादि आस्थापनं निरूहणं अनास्थाप्या अनिरूह्या-इत्यर्थ. ॥ १८ ॥

अतिदेशेनाननुवासनीयानभिधाय विशेषतो येनानुवासनीयास्तानाह विशेषतइत्यादि वाभटस्य कृताहारोऽप्यनास्थाप्यत्वेन व्यक्तव्यः ततश्च—अनास्थाप्याघेऽभिधेयानानुवास्याच ते मता इत्युक्तेः कृताहारस्याननुवास्यत्वं स्यादतस्तन्निरासार्थमत्र निरूह-उक्तः । आढ्यमारुत-ऊरुस्तम्भः । एषाञ्च पाण्ड्वादीनां अनुवासनेन ये दोषास्ते चरके पञ्चकर्मीयसिद्धावनुसन्धेया इह तु विस्तारभयान्नोक्ताः ॥ २० ॥

अनास्थाप्यानाह अनास्थाप्या-इत्यादि वाभटस्य अत्यर्थस्निग्धादीनां आस्थापनदोषास्तत्रैवानुसन्धेयाः । मासान् सप्त च गर्भिणीत्यत्रान्त्यसंयोगे द्वितीया । तेनैकमासात् प्रभृति सप्तमासपर्य्यन्तं वस्तिनिषेध इति ॥ २१ ॥

इदानीं वमनविरेचनवस्त्यविकारे वमनाद्यविधेयत्वेन तथा वमनादिविषयत्वेन प्रतिपादितेषु वमनादिनिवृत्तिप्रवृत्तिनि-

भवेत् कदाचित् कार्य्यापि शिरुद्धापि मता क्रिया ॥ २२ ॥
छर्द्दि हृद्रोगगुल्मार्त्तं वमनं स्वे चिकित्सिते।
अवस्थां प्राप्य निर्द्दिष्टं कुष्ठिनां वस्तिकर्म्म च ॥ २३ ॥

इत्यनुवासनाधिकारः।

---

# अथ निरूहाधिकारः।

अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत् ॥ १ ॥

---

अयं निषेधयत्नाच्च न चैकान्तेनेत्यादि दृढ़बलस्य। निर्द्दिष्टेऽप्यर्थे एकान्तेन नाभिनिवेशेत् यथोक्त एवार्थः कार्य्य-इति निर्ब्बन्धं न कुर्य्यादित्यर्थः अथ किमर्थं यथोक्तार्थस्यैवार्थस्यावधारणं न क्रियत-इत्याह भवेदित्यादि यतो-विरुद्धत्वेन शास्त्राभिमतापि क्रिया कदाचिदवस्थावशेन कार्य्या भवेत्। चरकेऽप्युक्तं उत्पाद्यते हि सावस्था देशकालबलं प्रति। यस्यां कार्य्यमकार्य्यं स्यात् कर्म्मकार्य्यञ्च वर्ज्जितमिति ॥ २२ ॥

इदानीं निषिद्धमप्यवस्थावशेन क्रियत इत्युदाहरणमुपन्यस्य दर्शयति छर्द्दिहृद्रोगेत्यादि।— वाभटस्य। अवामयादीनामपि छर्द्द्यादीनां वमनं स्वे चिकित्सिते छर्द्द्यादि चिकित्साध्याये अवस्थां प्राप्य निर्द्दिष्टमित्यर्थः। अवस्थां प्राप्य निर्द्दिष्टमित्यनेनावस्थाविशेषएव निषिद्धविधानं सामान्यतस्तु निषेध इति। उत्सर्गापवादतया निषेध निषिद्धकरणयोरविरोधइति दर्शयति। एवमन्यत्रापि निषेधविषये वमनादिविधानमवस्थाविशेषपरतया समाधेयम् ॥ २३ ॥

इत्यनुवासनाधिकारः।

---

अनुवासनेन स्निग्धस्य निरूहविधानादनुवासनाधिकारमनु निरूहमाह अनुवास्येत्यादि। तृतीयेऽह्नीत्यादि

मध्याह्ने किञ्चिदावृत्ते प्रयुक्तो वलिमङ्गले।
अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम्॥
मधुस्नेहनकल्काख्यकषायावापतः क्रमात्।
त्रीणि षड्‌द्वे दश त्रीणि पलान्यनिलरोगिषु॥

अनुवासनदिनमारभ्य तृतीय दिनइत्यर्थः तृतीयेऽङ्कीति प्राथिकं चेयं पञ्चमे तद्विधानात् यदाह वाभटः-पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे। निरूहनिरुक्तिश्च सुश्रुते यथादोषनिर्हरणाच्छरीररोहणाद्वा निरूह-इति। शरीररोहणन्तु वयःस्थापनेन शरीरपुनर्नवीकरणं अतएवास्थापनमपि निरूहस्य संज्ञान्तरं वयःस्थापनादायुःस्थापनाद्वेति॥१॥

निरूहदानसमयमाह मध्याह्न-इत्यादि वाभटस्य किञ्चिदावृत्त-इत्यल्पस्खलिते। अभ्यक्तस्वेदितोत्सृष्टमलमिति अभ्यक्तेत्यनेन अभ्यङ्गविषयेऽपि स्नेहप्रयोगं कर्त्तव्यतया वा अनुजानाति। स्वेदो यद्यपि-पञ्चकर्म्मपूर्व्वकतयाभुक्तोऽपि गम्यत-एव यदुक्तं—अनुपस्थितदोषाणां स्नेहस्वेदोपपादनैः। पञ्चकर्म्माणि कुर्व्वीतेति तथाप्यभ्यङ्गक्रियमाणस्नेहसहचरत्वेऽपि स्वेदविधानार्थं स्वेदितेत्युक्तम्। उत्सृष्टमलमिति त्यक्तमूत्रपुरीषम्। नातिबुभुक्षितमिति बुभुक्षितस्य हि निरूहोऽतियोगायोर्द्ध्वगमनाय च स्यादिति भावः। निरूहोऽपि पश्चाङ्गो भवति। अतो मध्वादेरङ्गपञ्चकस्य दोषभेदेन मानभेदार्थं परिभाषामाह मधुनेत्यादि। स्नेहनं स्नेहं तैलं आमस्य निषिद्धत्वात् किम्वा स्नेहशब्देनात्र मज्जानं वर्ज्जयित्वा स्नेहत्रयस्य ग्रहणं यदुक्तं-विद्यादिस्निग्धविदः स्नेहावस्थायं मज्जवर्ज्जित-इति। मदनफलशतपुष्पादीनां कल्कः आवापशब्देन तु मधुस्नेहकल्ककाथव्यतिरिक्तक्षीरमूत्रकाञ्जिकजम्बीरमांसरसादिद्रव्यमुच्यते एतादौ पुनरावापशब्देन प्रक्षेपः। कल्कोवाप्यभिधीयतइति।

पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्।
षट् क्षौद्रे द्वे दश क्वाथे क्वाथे चापि निरूहणम्॥ २॥
इत्यादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतद्वयम्॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत्।

अनिलरोगेषु क्रमात् यथासंख्यं मधुन-क्षौद्रे पलानि स्नेहस्य षट् कल्कस्य द्वे कषायस्य दश तानि चावापसेर्ऽति एवं मिलित्वा द्वादशप्रसृतोनिरूहो भवति प्रसृतन्तु पलद्वयमिति। एवं पित्तश्लेष्मणि च व्याख्येयं द्विपञ्चेति दश-इत्यर्थः। इदन्तु यद्द्वादशप्रसृतमान निरूहस्योक्तं तदष्टादशवर्षमारभ्य सप्ततिवर्षपर्य्यन्तं बोध्यं तेन वयोभेदेन निरूहमात्राभेदश्चरकाद्यनुसरणीयः। तेन यत्र द्वादशप्रसृतापेक्षया हीनमात्रो-निरूहः कर्त्तव्यो भवति तत्र मधुस्नेहादीनामुक्तमात्रानुसारेण मात्रा कल्पनीया द्वादशप्रसृताधिकमात्रा च न कर्त्तव्यैव उक्तं हि चरके द्वादशपरं स्युरिति परं शब्दोऽवधारणे द्वादशैव प्रसृताः स्युरित्यर्थः। एतश्च चरकवचनं परमतप्रक्षेपणार्थं ज्ञेयं तेन सुश्रुते द्वादश प्रसृतं किञ्चित् त्रिंशत्पलमथापरे इत्यनेन यदेकीयमतमुपन्यस्तं तत् प्रतिक्षिपति द्वादशप्रसृताधिकमानस्यमहात्ययत्वादिति। हारीतेऽप्युक्तं — अष्टौदर्श परमतप्रमाणमिति॥ २॥

निरूहे द्रव्यसंयोजनाक्रममाह दत्त्वेत्यादि सुश्रुतस्य प्रथमं शिलादिखरमर्दनभाजने तथोक्तमानं मधुसैन्धवचूर्णञ्च स्थापयित्वा चिरं घर्षणं कार्य्यं यावदेकीभवति, तदनु स्नेहप्रसृतद्वयमपि मधुना सार्द्धं मथ्नीयात् यावदेकी भवति एकीभूते च स्नेहे कल्कस्य प्रसृतं कषायस्य पञ्चप्रसृतानि दत्त्वा

संमूर्च्छितं कषायं तं पञ्चप्रसृतसंमितम् ॥
वितरेत्तु यथा वायमन्ते द्विप्रसृतोन्मितम्।
वस्त्रपूतन्तथोष्णाम्बु कुम्भीवाष्पेण तापितः ॥
एवं प्रकल्पितोवस्तिर्द्वादशप्रसृतो भवेत् ॥ ३ ॥
न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च।
न करोति च सीमन्तं स निरूहः सुयोजितः ॥ ४ ॥
पूर्व्वोक्तेन विधानेन गुदवस्तिं निधापयेत्।
लिंगन्मात्रास्थितोवस्तिस्ततस्स्यात्कुको भवेत् ॥

आलोड़येत्तदनु प्रसृतद्वयमावापं वितरेदित्यर्थः। अयञ्च निरूहद्रव्यसंयोजनक्रमः पित्ते चत्वारि चत्वारीत्याद्युक्तमान-सम्वादात् पित्तोक्तनिरूहमानमधिकृत्य यद्यप्युक्तस्तथापि एक-त्रोक्तोविधिरन्यत्राप्युपतिष्ठत-इति न्यायात् कफवातोक्तनि-रूहेऽपि ज्ञेयः। द्वादशप्रसृत इति यद्यपत्र सैन्धवाद्यमधिक-मपि भवति तथाप्यल्पत्वादविगणय्योक्तं द्वादशप्रसृतइति ॥३॥

इदानीं सम्यग्योजितस्य निरूहस्य लक्षणमाह न धाव-तीत्यादि औषधं मिलितमधुस्नेहकषायकल्करूपं निरूहौषधं पाणिं न धावति तनु तया प्रचालितप्रायं हस्तं न करोतीत्य-र्थः। स्यातिघनतया पाणिं चावलिप्य यदौषधं न तिष्ठति तथा तदौषधं सीमन्तं तैलादिरेखां न करोति न दर्शयति। सुयोजित इति सम्यग्योजितः ॥ ४ ॥

अथ प्रयोजनानन्तरं यद्विधेयं तदाह पूर्व्वोक्तेत्यादि पूर्व्वो-क्तेनेत्यनुवासनोक्तेन वस्तिमिति निरूहं स च वस्तिः कियन्तं कालं गुदे स्थाप्य इत्याह लिंगन्मात्रेत्यादि मात्रास्वरूपञ्चा-ग्निवेशेनोक्तं यथा—यावत् पर्य्येति हस्ताग्रं दक्षिणं जानुम-ण्डलम्। निमेषोन्मेषकालो वा सा मात्रा परिकीर्त्तितेति। उत्कटक उत्कुटीति लोके एतच्च लिंगन्मात्रोपस्थापनं सद्कोष्ठ

जानुमण्डलमावेष्ट दत्तं दक्षिणपाणिना।
छुटिकाभिश्चतुर्विंशत्यतं तिष्ठेद्वेगवान्।
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः॥ ५॥
सम्यङ्निरूढलिङ्गे तु प्राप्ते वस्तिं निवारयेत्।
प्रसृष्टविट्कमूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवानि॥
रोगोपशान्तिः प्रकृतिस्थता च बलञ्च तत्स्यात् सुनिरूढलिङ्गम्॥ ६

---

वेगवन्तञ्च प्रति बोध्यम्। अवेगवन्तं क्रूरकोष्ठञ्च प्रतियद्विवेय-त्वदाह जानुमण्डलेत्यादि छुटिकेत इत्याछुटिकाः 'दत्तं छुटायमन्दमित्यन्वयः छुटा तुरीति लोके। कियती छुटा देया इत्याह द्वितीयमित्यादि। अत्र दद्यादिति शेषः। चतुर्थञ्चा यथार्थतइति निरूहसाध्यप्रयोजनानुरोधात् चतुर्थमपि पुटकं दद्यादित्यर्थः नतु दृढबलेन चतुर्थवस्तिदानं न मन्यते यथा स्निग्धोष्ण एकः पवने समासौ द्वौ स्वादुशीतौ पयसा च पित्ते। त्रयः समूत्राः कटुकोष्णतीक्ष्णा कफे निरूहा न परं विधेयाः। तथा वाभटेप्युक्तं—त्रिभ्यः परं वस्तिमतोनेच्छन्त्यन्ये चिकित्सकाः। न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रतीति। नैवं निषिद्धेऽपि बहुपुस्तकविषयतया प्रायिकं चतुर्थपुटकदानन्तु कचित् क्रूरकोष्ठे बलीयसि बहुदोषे च पुरुष-इति भिन्नत्वविषयतया न विरोधं अतएव यथार्थत-इत्युक्तम्॥ ५॥

वस्तिनिवारणविधिमाह सम्यगित्यादि तदेव सम्यग् लिङ्गमाह प्रसृटेत्यादि। दृढबलस्य। प्रसृष्टं सम्यक् प्रवृत्तं आशयलाघवानीत्यत्र चामयलाघवानीति पाठे रोगोपशान्तिरित्यनन्तरं वा शब्दोद्धेयः। तेन निरूहसाध्यानां विकाराणां लाघवमुपशान्तिर्वा भवतीत्यर्थः। रोगोपशान्तिरिति वचनं रोगिविषयत्वं प्रकृतिस्थित-इति तु स्वस्थविषयं तेनात्र पौनरुक्त्यं नाशङ्कनीयम्॥ ६॥

अयोगश्चातियोगश्च निरूहस्य विरिक्तवत्।
स्निग्धोष्ण एकः पवने समांसो द्वौ स्वादुशीतौ पयसा च पित्ते॥

---

अनुवासनयोगातियोगलक्षणं निरूहेऽप्यतिदिशति अयोगश्चेत्यादि। इदानीं दोषभेदेन वस्तिपुटकसंख्यां नियमयन्नाह स्निग्धोष्ण-इत्यादि एकः-इत्येकपुटकः समांस-इति मांसरससहितः। उक्तं हि वाभटे वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितइति। वाते स्निग्धोष्णस्तथा मांसरससहितस्तथा एक एव निरूहपुटको देयो नत्वधिकः। समांस इत्यत्र निरूह इति केचित् पठन्ति निरूहोऽत्र पुटकाभिधायी पयसा चेत्युपलक्षणे तृतीया पयसा युक्तावित्यर्थः। कटूष्णतीक्ष्णत्वञ्च कटुकादिद्रव्ययोगादेव ज्ञेयम्। न परं विधेया इत्यनेन सुश्रुतोऽत्र चतुर्वस्तिदानमतस्यैव शरीरहिंसकं निषेधयति। वाभटेऽप्युक्तं त्रिभ्यः परं वस्तिमतोनेच्छन्त्यन्ये चिकित्सकाः। न हि दोषचतुर्थोऽस्तिपुनर्दीयेत यं प्रतीति। अस्यैव दोषभेदेनोक्तस्य वस्तिपुटकसंख्याभेदस्य फलम् ह एकोपकर्षतीत्यादि स्वमार्गादिति स्वस्थानात् एतच्चानिलादिसर्व्वत्रैव योज्यं अनिलस्य हि पाकाशयस्थानं तस्य प्रत्यासन्नत्वादेकपुटकोऽप्यनिलमपकर्षति द्वितीयादिपुटदानं तत्र निष्फलमिति भाव एवं पित्ते तृतीयपुटकदानं कफे चतुर्थपुटकदानं न कार्य्यं फलाभावात्। पक्वाशयापेक्षया पित्ताशयस्य व्यवहितत्वात् द्वितीयं पित्तं स्वाशयादपकर्षति ततोऽपि कफाशयस्य व्यवहितत्वात् तृतीयपुटकः कफमपकर्षति। स्वमार्गादित्यनेन यदि दोषाः स्वस्थानस्था भवन्ति तदैवायं नियम इति बोधयति तेन यदि पित्तकफौ पक्वाशयस्थौ भवतः तदा प्रथमपुटकोऽपि तत्स्थानगतपित्तकफप्रशमनं तथा द्वितीयतृतीयावपि पित्तकफस्थानगतवायुप्रशमनं कुरुत इति ज्ञेयम्। पित्तकफयोस्तु यद्यपि मुख्यं

अथः प्रयुक्ताः कटुकोष्णरुक्षाः कफे निरूहास्तनपरं विधेयाः।
एकोऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः॥७॥
अनायान्तं मुहूर्त्तान्तं निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् क्षारमूत्राम्लसंयुतैः॥
विगुणानिलविष्टब्धश्चिरं तिष्ठन्निरूहणम्।
शूलारतिज्वराटोपान् मरणं वा प्रयच्छति॥ ८॥
न तु भुक्तवते देयमास्थापनमिति स्थितिः।
आमं तद्धि हरेद्भुक्तं छर्द्दिं दोषांश्च कोपयेत्॥ ९॥
आवस्थिकः क्रमश्चापि मत्वा कार्य्यो निरूहणे॥ १०॥

---

चिकित्सितं वस्तिदानं न भवति तथापि वातावरके वातानुबन्धे वा पित्तकफे चैतद्वस्तिदानं ज्ञेयं तदुक्तं सुश्रुते वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यत-इति। वस्तेस्तु प्राधान्यतो वस्तिगतदोषहरकत्वमेवौत्सर्गिकं तेन पित्तादिस्थाने विशेषवस्तिविधानसामर्थ्यात् पित्तादिस्थानगतदोषहरणमप्यपवादरूपतया न विरुध्यते॥ ७॥

यद्युक्त-लक्षणान्निरूहो न प्रवर्त्तते तदा किं कर्त्तव्यं तदाह अनायन्तमित्यादि सुश्रुतस्य मुहूर्त्तोनाडिकाशोधनैरिति शोधनद्रव्यकृतैः। निरूहस्य चिरस्थानगतदोषहरणमप्यपवादरूपतया न विरुध्यते॥ ८॥

भुक्तवतो निरूहदाननिषेधमाह नत्वित्यादि स्थितिरिदा-नुर्व्वंदनिश्चयः हरेदित्यधोहरेत् छर्द्दिमित्यूर्द्धं जनयेदितिशेषः॥ ९॥

अवस्थावशेन यथोक्तक्रमव्यभिचारं दर्शयन्नाह आवस्थिक इत्यादि तस्यैव मत्वेतरवस्थां बुद्ध्वा निरूहणा इत्यावस्थिक इत्यवस्थोचितक्रमः कार्य्यः तेनावस्थाविशेषे निषिद्धनिरूहेऽपि प्रतिकारं चिन्तयित्वा निरूहो देयएवेत्यर्थः। यथाभुक्तवतो-

अतिप्रपीड़ितोवस्तिरतिकस्याशयं ततः।
वातेरितोनासिकाभ्यां सुखतो वा प्रपद्यते ॥
कर्द्दिश्वासमूर्च्छादीन् प्रकुर्य्याद्दाहमेव च।
तत्र चूर्णं गलापीड़ं कुर्य्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौच तीक्ष्णौ सेकांश्च शीतलान् ॥ ११ ॥
सुनिरूढमथोष्णाम्बुस्नातं भुक्तरसौदनम्।
यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ १२ ॥

---

निषिद्धोऽपि निरूहोऽत्यर्थशूलवेदनायां वैतरणवस्तिरूपो-दीयते तथा उदरादिषु निषिद्धो निरूहोऽवस्थायां किमिति निरूह एव क्रियते चिकित्सान्तरमेव कथं न क्रियते इति न वाच्यं वस्तिगतदोषे हि मलाहृते वस्तिरूपं प्रधानं चिकि-त्सितं मलापहरणेन दोषान् क्षपयति न तत्र चिकित्सान्तरं प्रभवति अतस्तस्यामवस्थायामनार्हनिरूहणामपि दोषमल-हरोनिरूहोदेय एवेति ॥ १० ॥

वस्तेरतिपीड़नेन दोषमाह अतिप्रपीड़ित-इत्यादि सुश्रु-तस्य आशयमिति पक्वाशयादिकं नासिकाभ्यामिति नासापु-टाभ्यां आदिशब्दादाध्मानादयः। अत यत्प्रतिविधेयन्तदाह तत्रेत्यादि गलापीड़मिति गलपीड़नं एतच्च तथा कार्य्यं यथा न म्रियते उक्तं हि — वस्त्रपाणिग्रहैः कण्ठं कृच्छ्राम्न म्रियते यथेति। अवधूननमित्यत्र केशेष्वाकृष्येति शेषः। उक्तं हि — केशेष्वालम्ब्य वा केशे धुनुयादिति। एतच्च वस्तिव्यापच्चिकि-त्सितं लेशत एवोक्तम्। विस्तारस्तु चरकादावनुसन्धेय इति॥ ११॥

निरूहसम्यग्योगानन्तरं यद्विधेयं तदाह सुनिरूढमि-त्यादि सुश्रुतस्य उष्णाम्बुस्नानमिति शिरोविहाय ज्ञेयं शिरसि तु शीतलजलेनेति वृद्धाव्यवहरन्ति। अत्र केचित् षड़ङ्गवि-धिना नागरसाधितमुष्णोदकं पानार्थमुपदिशन्ति यदुक्तं —

मरुद्धतस्य पवनाद्भयं बलवदिष्यते।
रसौदनस्तेन शस्तस्तद्दहश्चानुवासनम्॥ १३

ततः प्रत्यागते बस्तौ वार्य्युष्णं नागरैः शृतम्। पाययेत् स्नातमशोधयच्च स्नापयेदुष्णवारिणेति। स्नेहवस्तिनेति स्नेहवस्तिदानन्तु दृढबलेनोक्तं यथा—प्रत्यागते कोष्णजलाभिषिक्तः शाल्यन्नमद्यात्तनुलावणेन। जीर्णे तु सायं लघुचाल्पमात्रं भुक्तानुवास्यः परिहारार्थम्। निरूहपादांशसमेन तैलेनाम्लानि लशौषवसाधितेनेति। निरूहपादांशसमेनेति निरूहपादप्रमाणेन चतुर्विंशतिपले षट्पलेन स्नेहेनेत्यर्थः। इयञ्चोत्तममात्रानुवासनस्य उक्तञ्च उत्तमा षट्पली मात्रा मध्यमा त्रिपली भवेत्। कनीयस्यर्द्धपला त्रिधा मात्रानुवासन इति। एषाञ्च षट्पली मात्रा प्रबलाग्निं प्रतेव बोध्या। अन्येत्वाहुः निरूहदानदिने यः स्नेहवस्तिर्दीयते सोऽल्पमात्र एव न तु षटपलं निरूहश्याकुलिताग्नित्वात् अतएवाह भोजः-सम्यक् निरूढं तैलाक्तं जलेनोष्णेन सेचितम्। योजयेदल्पमात्रेण तत्क्षणं स्नेहवस्तिनेति। अत्र तत्क्षणमिति तद्दिनोपलक्षणं तेन सायं दीयते स्नेहवस्तिः। तस्मादत्र सार्द्धपलरूपा वरमात्रा स्नेहस्य ज्ञेया। न चैवं चरकविरोधः चतुर्विंशतिपलस्य निरूहस्य पादः षट्पलं तस्यांशश्चतुर्थोभागः सार्द्धैकपलं तत्समं तैलमिति हि तदर्थः। दृढबलस्तु सार्द्धकर्षेण स्नेहेनानुवासनं कुर्वन्ति निरूहस्य मन्दाग्नित्वात्॥ १२॥

कुतोमांसरसः स्नेहवस्तिस्तत्रोपदिश्यतइत्यत आह तदह इत्यादि निरूढस्तमरुद्दोषस्य बलवत्वेनागतात् भीतिरिति भावः॥ १३॥

इदानीं निरूहयोगावाच्याः। तत्र प्रथमं प्रसिद्धत्वादद्धंमात्रिकवस्तिमाह दशमूलीत्यादिचन्द्राटीकाः तन्मान्तरश

षड्गुमात्रकः ।

दशमूलीकषाये तु शताह्वाञ्च प्रयोजयेत् ।
सैन्धवाच्च मधुनो द्विपलं द्विपलं तथा ॥
तैलस्य फलमेकन्तु फलस्यैव तु योजयेत्
षड्गुमात्रकसंज्ञोऽयं वशिष्ठेयो निरूहवत् ॥

उत्सर्गचतुर्विंशतिपलनिरूहापेक्षया मात्राद्धमस्येति कृत्वा द्वादशपलोऽयं निरूहोज्ञेयः षड्गुमात्रिक इत्यर्थः । अतएव मधुस्नेहक्काथ्येत्यादि परिभाषया यद्द्रव्यमानमुक्तं तदर्द्धमान-मेवात्र ज्ञेयम् । तेन द्वादशभिः पलैरेकः पुटकः एवं त्रयः पुट-कादेयाः । अत्र पुटकत्रयार्थं दशमूलस्य प्रत्येकं कर्षत्रयं कृतः सार्द्धसप्तपलानि तत्र क्काथ्यपरिभाषया जलस्यापि सार्द्ध-सप्तशरावाः एभिश्च षष्ठिपलानि भवन्तीति एषां चतुर्थांश-शेषात् पञ्चदशपलानि दशमूलकषायस्य भवन्ति । तत्रैव पुटकार्थं पञ्चपलानि ग्राह्याणि च परपुटकयोर्द्वयोरपि दशपलं विभज्य देयम् । शताह्वा शतपुष्पा तस्या कल्कः कर्षः । एतत्पेषणमपि दशमूलक्काथेनैव विधेयम् । इत्यास्तु जलेनापि पेषणं कुर्व्वन्ति । एतच्चाभिमानमेकैकपुटकं प्रत्येक बोध्यं एवं सैन्धवाद्यादिकमप्येकस्मिन्नेकस्मिन् पुटके देयम् । तैलस्यापि द्विपलमित्यर्थः । फलस्येति मदनफलस्य फलमेकमात्रतिमा-नात् संयोजनपरिपाटी च इत्यादौ सैन्धवस्याक्षमित्यादि वाक्येनैवोक्ता एवं सर्व्वत्र । सर्व्वत्रैव निरूहे अनुक्तगोमूत्रका-ञ्जिकादिद्रव्यदानार्थं क्षौद्रगुड़मिति परिभाषामनन्तरमेव वक्ष्यति तेषाञ्च द्रव्याणां माननिर्णयार्थं इन्द्रवचनमेवानुसन्-धेयं तद्यथा--सिन्धुजन्मनोद्विपलं मधुनः पलद्वयं तैलात् करतलमथितं पात्रे गुड़स्नेहं भवेद्र यावत् । दशफलस्य क्काथं दत्त्वा पलपञ्चकं मदनमेकं गुड़शतपुष्पादीनां कर्षं कर्षं तथा

न च स्नेहो न च स्वेदं परिहारविधिर्न च ।
आत्रेयानुमतोऽप्येष सर्व्वरोगनिवारणः ॥
यक्ष्मघ्नश्च शूलघ्नश्च क्रिमिघ्नश्च विशेषतः ।
शुक्रसंजननोऽप्येष वातशोणितनाशनः ॥
बलवर्णकरोऽप्येष वस्तिः पुंसवनः परः ॥ १४ ॥

कर्षं माषकपञ्चसंहितम् । पूरकजम्बीरमांसपयसो तुपजल-गोजलयोरपि प्रत्येकं पुटमाहेति । जम्बीति पक्वाति ग्लईफलं तदपि सास्थि ग्राह्येत्युपदेशः पूरकजम्बीरादीनां माषकपञ्च-सहितं कर्षमित्यर्थः । पूरकोमातुलुङ्ग अत्र पक्वफलरसो-ऽभ्युते । एवं जम्बीरस्यापि माषकपञ्चसंहितम् । चीरकर्षन्तु चर्णीकृतस्य मिलितनिरूहस्य चर्मपुटकप्रवेशसमये प्रक्षेप्यं अन्यथा न धारणोपयं पाणिमियादि लक्षणं न स्यादित्या-हुर्वृद्धवैद्याः । अनेन प्रकारेण पुटकत्रयमुत्सर्गः । एतेन पुट-कद्वयेनापि सम्यङ्निरूहलक्षणं तत्र तावन्मात्रमेवेति । सुख-ग्रहणार्थमद्रमात्राधिकवस्तेः पत्रिका लिख्यते पुटकत्रयार्थं दशमूल प्रक ३ पाय श ७ पल ४ शे पल १५ भागत्रयं कृत्वा एकपुटकार्थं दशमूलकषायं पल ५ प्रक्षेपार्थं सुपिष्टशोधक-शतपुष्पा क १ सैन्धव क १ मधु प २ पक्वतैल प २ पिष्टमदन-फल गो १ पुराणगुड क १ आठासहितकृपक्व तिन्तिडीफलं क १ सुपक्वमातुलुङ्गरस-जम्बीररस-मांसरस-काञ्जीगोमूत्र प्रत्ये १ मा ५ एतत् सर्वं पूर्व्वोक्तसंयोजनपरिपाट्या मेलयित्वा वस्ते दृढ़ं बाष्पस्वेदेन कदुष्णीकृत्य ग्राह्यं तदनु गव्यदुग्ध क १ मा ५ प्रक्षिप्यालोड्य चर्म्मपुटके प्रक्षेप्यमिति । एतदेव विधानं द्वितीये तृतीयेऽपि ज्ञेयम् ॥ १४ ॥

स्नेहं गुड़ं मांसरसं पयश्च अम्लानि मूत्रं मधुसैन्धवे च ।
एतान्यनुक्तानि च दापयेत्तु निरूहयोगे मदनात् फलञ्च ॥
लवणं कार्षिकं दद्यात् फलमेकन्तु मादनम् ॥ १५ ॥
वाते गुड़: सिता पित्ते कफे सिद्धार्थकादय: ॥ १६ ॥

क्षारवस्ति: ।

सैन्धवाक्षं समादाय शताह्वाक्षं तथैव च ।
गोमूत्रस्य पलान्यष्टावम्लिकाया: पलद्वयम् ॥

---

इदानीं सर्व्वेष्वेव निरूहेषु चानुक्तान्यान्यद्रव्याणि अवश्यं प्रक्षेप्याणि तानि दापयितुं हारीतवचनमुपन्यस्यति स्नेहं गुड़मित्यादि सुश्रुतस्त्वेतदधिकमप्याह क्षीराण्यम्लानि मूत्राणि स्नेहा: क्वाथारसास्तथा। लवणानि फलं क्षौद्रं शताह्वा क्वाथारसास्तथा । लवणानि फलं क्षौद्रं शताह्वा सर्षपा वचा। एला त्रिकटुकं रास्ना सरलं देवदारु च । रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च । निरूहेषु यथालाभ एष वर्गो विधीयत-इति। सैन्धवमदनफलयोर्मिलितनियतमानमाह लवणमित्यादि फलमेकमित्याकृतिमानात् ॥ १५ ॥

दोषभेदेन गुड़िकादीनां प्रक्षेप्यत्वमाह वातेत्यादि। आदिशब्दात् सुश्रुतोक्तवचात्रिकटुकादीनां ग्रहणम् । अत्रान्तरे चरकोक्त-एरण्डवस्तिरिष्टफलोबोध्य: । सोऽप्यर्द्धमात्रिकोक्तकल्पनानुसारेणार्द्धमात्रिकयैव वृद्धै: प्रयुज्यते। स चात्र विस्तारभयान्न विवृत-इति तत्रैवानुसन्धेय: ॥ १६ ॥

क्षारवस्तिमाह सैन्धवाक्षमित्यादि वस्तिरयमेतावन्मात्र एव दीयते इयञ्च मात्रा एकपुटकस्य। अम्लिकायाइति साम्लितिन्तिड़ीफलस्य । निरूहयोगे मदनात् फलञ्चेत्युक्तत्वात् एवं मदनफलमप्यत्र वृद्धैर्दीयते। अतएव चन्द्राटोऽप्याह गोमूत्रस्य पलान्यष्टौ द्वे चूड़ाम्लिकयो: पले। कर्षञ्च शतपुष्पायास्तथाक्षं

गुडस्य द्वे पलेचैव सर्व्वमालोड्य यत्नतः।
वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः॥
शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्।
क्रिम्युदावर्त्तगुल्मादीन् सद्यो हन्यान्निषेवितः॥ १७॥

वैतरणवस्तिः।

पलमुक्तिकर्षकुडवैरम्लीगुडसिन्धुजन्मगोमूत्रैः।

---

सैन्धवस्य च। मदनस्य फलञ्चैकं खजेन सुविलोडितम्। वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः। वातविट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्। शूलोदावर्त्तगुल्मादीन् सद्यो हन्यात् प्रयोजित। गोमूत्रवस्तिरित्येष विज्ञेयः शोधनः परः। क्षितः साधारणो वस्तः शुद्धे तु तैलसंयुतः। बलवर्णकरः पुंसामग्निसन्दीपनं परमिति। अस्मादेव वचनात् गोमूत्रवस्तिरित्यपि संज्ञान्तरमस्य बोध्यम्। तथा निरावरणे तु तैलमपि देयं तैलञ्च पलमात्रं बोध्यं तदुक्तमायुर्व्वेदसारे अष्टौ पलानि मूत्रस्य गुड़स्य तु पलद्वयम्। तद्वदम्लीफलं दत्त्वा मिषाक्षं सैन्धवस्य च। वस्तं सामेऽनिले युञ्ज्यात्शुद्धे तैलपलान्वितम्। क्षारवस्तिमिमं सिद्धं वातोदावर्त्तनाशनमिति। इदानीं क्षारवस्तेः पत्रिका लिख्यते। सैन्धवचूर्णं क १ शलुफाकल्क क १ गोमूत्रपल ८ सुपिष्ट-अस्थिसहित-पक्व-तिन्तिड़ीफल पल २ पुराणगुड़ पल २ सुपक्वमदन गो १ निरामवाते पक्वतैल प १। एतत् सर्व्वं पूर्व्ववन्मर्द्दयित्वा वस्त्रपूतं कृत्वा कदुष्णीकृत्य देयम्॥ १७॥

वैतरणवस्तिमाह पलमुक्तीत्यादि मुक्तिरर्द्धपलं अम्लीति तिन्तिड़ीफलं पलादिमानञ्च क्रमात् अम्लीगुड़ादिषु योज्यम्। लड़शोऽत्र द्रवद्वैगुण्यादष्टौ पलानि ईषत्तैलपलमिति व्यवहरन्ति वृद्धाः। अत्रापि मदनफलमेकं देयमित्याहुः। इय-

तैलयुतोयं वस्तिः शूलानाहामवातहृत्॥
वैतरणः क्षारवस्तिर्भुक्ते चापि प्रदीयते॥ १८॥
बदर्य्यैरावतीशेलु शाल्मलीधन्वनाङ्कुराः।
क्षीरसिद्धाः सुसिद्धाः स्युः सास्नाः पिच्छिलसंज्ञिताः॥
वराहमाहिषौरभ्रवैड़ालैणेयकौक्कटम्।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु॥ १९॥
चरकादौ समुद्दिष्टावस्तयो ये सहस्रशः।
व्यवहारो न तैः प्रायोनिबद्धानात्र तेनते॥ २०॥

सोऽपि वैतरणोक्तमात्रा एव पुरुषस्यैव ज्ञेया। अत्यन्तशूलपीड़ायां वस्तिद्वयमिदं भुक्तेऽपि दीयत इत्याह वैतरण इत्यादि।-अत्यन्तशूलावस्थायां पीड़ायामावश्यकमिदं विधानं नतु सर्व्वकालिकं भुक्ते निरूहस्यातिदोषलत्वात् किन्तु भुक्ते क्षारवस्तिर्नप्रचरति। वैतरणस्तु चरत्येव एतदपि दुर्ब्बलविषयमपि ज्ञेयं तदुक्तं भावमिश्रेणाथ सायाह्ने दुर्ब्बलस्य प्रशस्यते। अथ चेद्बलवान् जन्तुरभुक्तोऽपि तदा क्वचिदिति॥ १८॥

पिच्छिलवस्तिमाह बदरीत्यादि सुश्रुतस्य ऐरावती नागबला शेलुश्लेष्मातकः धन्वनोधामनिरिति प्रसिद्धस्तस्य एषामङ्कुरा अभिनव पल्लवाः अत्र द्रव्यस्याष्टेकोभागः वयोभागाजलमिलिताः सास्राः सरक्ताः रक्तञ्च येषां ग्राह्यं तानाह वराहेत्यादि एतच्च शोणितं सद्यस्कमेव वस्तौ देयं सद्यस्कैर्मृदितैर्वस्तिरिति चरकवचनात्। अयञ्च वस्तिर्यथोक्तद्रव्यमानेनैव कार्य्यः। मात्रा चास्याष्टमासिकवस्तिवत् मात्रैः तैलवस्तिवद्देत्याहुः॥ १९॥

इदानीं चरकाद्युक्तानामन्येषां वस्तीनामनभिधाने उपपत्तिमाह चरकादावित्यादि प्राय इति वचनात् तेऽप्यवस्थायां प्रयोज्या इति सूचयति॥ २०॥

बस्तिर्वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च।
सर्व्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्व्वगदापहश्च ॥ २१ ॥

इति निरूहाधिकारः।

---

## अथ नस्याधिकारः।

प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनन्तथा।
शिरोविरेचनं चेति नस्तः कर्म्म च पञ्चधा ॥

---

बस्तिसामान्यगुणानाह बस्तिरित्यादि सर्व्वगदापह इति निखिलसर्व्वदोषापहः कृत्वा त्रैदोषिकव्याधिहर-इति चरक-व्याख्या अन्यथा व्याख्याने तु श्लेष्मपित्तानिलकर्षीत्यनेन तथा सर्व्वान् विकारान् शमयेदित्यनेन च न पौनरुक्त्यं स्यात्। इदमप्यत्र सुश्रुतवचनं बोध्यं—नरस्योत्तमसत्त्वस्य तीक्ष्णबस्तिं प्रयोजयेत्। मध्यं मध्यमसत्त्वस्य हीनसत्त्वस्य वै मृदुम्। अपि हीनक्रमं कुर्य्यान्नतु कुर्य्यादिति क्रमम्। विशेषात् सुकुमाराणां हीन एव क्रमोचित इति ॥ २१ ॥

इति निरूहाधिकारः।

---

पञ्चकर्म्मपरिशेष्यान्नस्यमाह प्रतिमर्ष इत्यादि। प्रतिमर्ष-लक्षणमाह ईषदित्यादि सुश्रुतस्य ईषदुच्छिङ्घनादिति अर्द्ध-श्लोकस्य पाठात्। ननु चरके न चोच्छिङ्घेदित्युक्तम्। अत्र तु ईषदुच्छिङ्घनमुक्तमतो विरोधः। अत्र केचिदीषदुच्छिङ्घनमेवेति समादधति अन्ये तु चरकोक्तप्रतिमर्षः स्वल्पप्रमाणोऽनु-च्छिङ्घनः सार्व्वकालिको ज्ञेयः अतएव तत्र प्रातर्निशि च सर्व्वदेत्युक्तं यस्तु सुश्रुतोक्तः न भूरिमात्रो नाशो हार्य्यमा-

ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते।
नस्तो निषिक्तन्तु विद्यात् प्रतिमर्षं प्रमाणतः॥ १॥
प्रतिमर्षन्तु नस्यार्थं करोति न च दोषवान्।
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्व्वदा।
नचोच्छिङ्घेदरोगाणां प्रतिमर्षः सदार्ढ्यकृत्॥ २॥
निशाहर्भुक्तवान्ताहः स्वप्नाध्वश्रमरेतसाम्।
शिरोऽभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्च्चसाम्॥

लिङ्ग इत्यभिधेयः प्रतिमर्ष-ईषदुच्छिङ्घनइत्याद्यः। नस्तोनिषिक्त-इति नासापुटद्वये निषिक्तः प्रमाणत-इति परिमाणतः परिमाणद्वारकमेतल्लक्षणमित्यर्थः॥ १॥

प्रतिमर्षकर्म्माह प्रतिमर्षन्त्वित्यादि चरकस्य। नस्यार्थमिति नस्यस्य स्नेहनशोधनरूपप्रयोजनद्वयं उक्तं हि—स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते। न च दोषवानिति व्यापत्कृत् प्रकारान्तरेणापि। प्रतिमर्षमात्रामाह नस्तः स्नेहाङ्गुलीमित्यादि चरकस्य नस्त-इति नासायां स्नेहाङ्गुलीमिति स्नेहपूरिताङ्गुलीं दद्यात् एतेन स्नेहमग्नाङ्गुलीतो यावान् स्नेहः पतति सैव प्रतिमर्षमात्रा सर्व्वदेति सर्व्वेष्वेव ऋतुषु। न च नावनादिवदत्रोच्छिङ्घनं कर्त्तव्यमित्याह नचोच्छिङ्घेदित्यादि अरोगाणामित्यनेन सुस्थविषयत्वमस्योक्तं दार्ढ्यकृदिति दन्तःशिरःकपालादिदार्ढ्यकृत्॥ २॥

सर्व्वदेत्यस्यार्थमाह निशेत्यादि वाभटस्य। असौ प्रतिमर्षः बिन्दुद्वयपरिमितोनिशादीनामन्ते समाप्तौ वैद्येन योज्यः निशान्त-इति प्रातः। अह्नोन्त-इति सायं सुश्रुतेऽपि कल्योत्थित-इत्यनेन प्रातःकाल उक्तः। अध्वेति पथादिश्रमः श्रमशब्देनाध्वव्यतिरिक्तोव्यायाम उच्यते सुश्रुतेऽपि व्यायामाध्वपरिश्रान्तेनेत्युक्तम्। रेतःशब्देन रेतःसरणोपलक्षितव्यायाम-

दन्तकाष्ठस्य हास्यस्य योऽन्योऽन्तेऽसौ द्विबिन्दुकः॥ ३॥
शोधनः स्तम्भनश्च स्यादवपीड़ो द्विधा मतः।
अवपीड्य दीयते यस्मादवपीड़स्ततस्तु सः॥
स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा।
बलार्थं दीयते स्नेहो-नस्तः शब्दोऽत्र वर्त्तते॥ ४॥

---

उच्यते। प्रस्राव-इति मूत्रोत्सर्गः वर्च्चः पुरीषोत्सर्गः एषु पञ्च-दशसु कालेषु प्रतिमर्षदानप्रयोजनं .वाभटेनैवोक्तमनुसर्त्तव्यं तद्यथा—निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम्। शिरो-ऽभ्यञ्जनगण्डूष प्रस्रावाञ्जनवर्च्चसाम्। दन्तकाष्ठस्य हास्यस्य योऽन्योऽन्तेऽसौ द्विबिन्दुकः। पञ्चसु स्रोतसां शुद्धिः क्लमनाश-स्त्रिषु क्रमात्। दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः। निशाहर्भुक्तवान्ताहः स्वप्नेषु पञ्चसु प्रतिमर्षदानात् स्रोतसां शुद्धिर्भवति त्रिष्विति अध्वश्रमरेतःसु क्लमनाशः स्यात् शिरो-ऽभ्यञ्जनादिषु वर्च्चोऽन्तेषु तु प्रतिमर्षदानात् दृग्बलं स्यात् ततोऽनन्तरं दन्तकाष्ठस्य हास्यस्य चान्ते योजितः प्रतिमर्षः क्रमात् दन्तदार्ढ्यमरुतोवायोः प्रशमनं करोतीत्यर्थः॥ ३॥

अवपीड़माह शोधन-इत्यादि चरकस्य अत्र संशमनमि-त्यवपीड़स्य कर्म्मोच्छन्ति ततपुनरिह स्तम्भनएवान्तर्भवति। नस्यमाह स्नेहार्थमित्यादि ग्रीवास्कन्धोरसां रक्षणार्थमित्य-न्वयः। नस्तंशब्दो नस्यपर्य्यायः नासाभ्यां दीयत-इति नस्यं नासाशब्दात् शरीरावयवत्वात् यत् प्रत्ययेन अतएवाह सुश्रुतः औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम्। अनया च निरुक्त्या यद्यपि सामान्य वचन-एवायं नस्यशब्दः तथापि नस्तःशब्दोऽत्र वर्त्तत इत्यभिधानात् विशेष-वृत्तितामपि नस्यशब्दस्य बोधयति एतेन यथा निदानशब्दो-निदानपञ्चके तथा निदानविशेषे च वर्त्तते तथायं नस्यश-

नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः ।
प्रत्येकशोनस्तकयोर्न्नृणामिति विनिश्चयः ॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः ।
द्वात्रिंशद्विन्दवश्चात्र शुक्तिरित्यभिधीयते ॥
द्वे शुक्ती पाणिशुक्तिश्च देयात्र कुशलैर्नवैः ॥ ५ ॥

शब्दोऽपि नस्यशिरोविरेचनप्रतिमर्षावपीड़प्रधमनेषु तथा नस्य-विशेषे च स्नेहार्थे शून्यशिरसामित्यादिनोक्ते वर्त्तते । सुश्रुते-नापि ततोनस्यशब्दः पञ्चधा निपातितइत्यादिनायमर्थ-उक्तः । एतेन नासास्रोतसि दोषोपशमनार्थं यद्दीयते तन्न-स्यमिति नस्यादिपञ्चकसामान्यलक्षणं तथा प्रतिमर्शादि-भिन्नत्वे सति स्नेहनार्थं यद्दीयते तन्नस्यमिति तु नस्यविशे-षलक्षणं बोध्यमित्याहुः ॥ ४ ॥

स्नैहिकनस्यार्थं स्नेहस्य मानमाह नस्यस्येत्यादि स्नेहा-क्तप्रदेशिनीपर्व्वद्वयात् यावान् स्नेहः स्रवति तावान् स्नेहो-बिन्दुरित्युच्यते उक्तं हि वाभटे—प्रदेशिन्यङ्गुलीपर्व्वद्वयान्मा-ग्नसमुद्धृतात् । यावत् पतत्यसौ बिन्दुरिति नस्तकयोरिति नासापुटयोः एषा प्रथममात्रा । द्वितीयां तृतीयाञ्च मात्रा-माह शुक्तिश्च पाणिशुक्तिश्चेति शुक्तिर्द्वितीया पाणिशुक्तिस्तृती-येत्यर्थः एताश्च तिस्रोमात्रा यथाबलं प्रयोज्या इति सुश्रुते-ऽप्युक्तं तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्व्वद्वयनिःसृता प्रथमा मात्रा । द्वितीया शुक्तिस्तृतीया पाणिशुक्तिरित्येता-स्तिस्रोमात्रा यथाबलं प्रयोज्याइति । शुक्तिपाणिशुक्तिशब्दयो-रर्थमाह द्वात्रिंशद्विन्दव-इति द्वे शुक्तीति चतुःषष्टिबिन्दव-इत्यर्थः । इदन्तु शुक्तिपाणिशुक्त्याख्यमात्राद्वयं मिलित्वैव नासापुटाभ्यां प्रयोज्यं न तु प्रथममात्रावत् प्रत्येकश इत्याहुः एतच्च स्नेहनस्यं न गिलेत् किन्तु त्यजेदेव उक्तं हि सुश्रुते स्नेहनस्यं न चोपगिलेत् कथञ्चिदपीति ॥ ५ ॥

तैलं कफे च वाते च केवले पवने वसाम्।
दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जासमारुते ॥ ६ ॥
ध्मापनं रेचनश्चूर्णोयुञ्ज्यात्तं मुखवायुना।
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ॥
स हि भूरितरन्दोषं चूर्णत्वादपकर्षति ॥ ७ ॥
शिरोविरेचनद्रव्यैः स्नेहैर्व्वातैः प्रसाधितैः।
शिरोविरेचनं दद्याद् रोगेषु तेषु बुद्धिमान् ॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये।
शोथगण्डक्रिमिग्रन्थिकुष्ठापस्मार पीनसे ॥ ८ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च।

---

इदानीं यस्मिन् दोषे यः स्नेहः प्रयोज्यस्तमाह तैलमित्यादि चकारात् वातकफसंसर्गे च तैलं देयमित्यर्थः। केवल-इति निरावरणे वाते मज्जा तु समारुतवाते ॥ ६ ॥

प्रधमनमाह ध्मापनमित्यादि वाभटस्य रेचन-इति शिरो-विरेचनद्रव्यस्ततः क्रिया देहस्रोतोविशोधन-इत्यर्थः। स इति चूर्णः चूर्णत्वादिति सूक्ष्मस्रोतोऽनुसारित्वादितरभिसन्धिः एतच्च प्रधमनं चूर्णं प्रतनुवस्त्रे बद्ध्वा जिघ्रेदित्यपि दृष्टव्यवहार-सिद्धोविधिर्व्बोध्यः ॥ ७ ॥

शिरोविरेचनमाह शिरोविरेचनेत्यादि शिरोविरेचन-द्रव्यैरित्यपामार्गवीजादिभिस्तैः कल्कितैर्द्रव्यमिश्रितैरेतत् साधितैः स्नेहैर्व्वा इत्यर्थः अस्य च मात्रार्थं सिद्धसारोयथा चत्वारोविन्दवः षड् वा तथाष्टौ वा यथावलम्। शिरोविरे-चने योज्या जर्द्धजत्रुविकारिणामिति। जाड्यं ग्रीवादिस्तम्भः स्यन्दोऽभिष्यन्दरोगः पीनस-इति पुराणपीनसे ॥ ८ ॥

येन विधिना तच्छिरोविरेचनं कर्त्तव्यं तदाह स्निग्धेत्यादि

निवातशयनस्थस्य जत्रूर्द्ध्वं स्वेदयेत् पुनः ॥
अथोत्तानार्द्धदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते ॥
नासापुटं पिधायैकं पर्य्यायेण निषेचयेत् ।
उष्णाम्बुतप्तं भैषज्यं प्रणाड्या पिचुना तथा ॥
दत्ते पादतलस्कन्धहस्तकर्णादि मर्द्दयेत् ।
शनैरुच्छिङ्ख्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः ॥
आभेषजक्षयादेवत् द्विस्त्रिर्वा नस्यमाचरेत् ॥ ६ ॥
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ।

---

वाभटस्य प्राक् कृतावश्यकस्य चेति प्राक् पूर्व्वं कृतमावश्यकं अवश्यकरणीयं मलमूत्रविसर्गमुखधावनादिकं येन तस्य। जत्रूर्द्धमिति ग्रीवामूलादिकं स्वेदयेत् पुनरित्यनेन उत्वर्गसिद्धपञ्चकर्म्माङ्गभूत स्वेदापेक्षया भिन्न एव नस्याव्यवहितपूर्व्वकाले पुनः स्वेदः कर्त्तव्य इति बोधयति। किञ्चिदुन्नतपादस्येति चरकेऽपि पादोन्नतस्येत्युक्तं पर्य्यायेणेति क्रमेण न त्वेकदा उष्णाम्बुतप्तमिति उष्णाम्बुयोगादुष्णाम्बुवास्पेन वा तप्तं प्रणाड्येति नस्यनलिकया पिचुनेति तूलकेन आदिशब्दात् ग्रीवाननादीनां ग्रहणं पार्श्वयोरिति वामदक्षिणनासापुटयोः आभेषजक्षयादिति छेदः भेषजनिःसरणपर्य्यन्तं शनैरुच्छिङ्ख्य निष्ठीवेदित्यर्थः। एवमुक्तपरिपाट्या वारद्वयं त्रयं वा दोषापेक्षया अधिकमपि नस्यं कुर्य्यादित्यर्थः। नस्ये क्रियमाणे यदि नस्यस्य सम्यक्प्रयोगेण मूर्च्छा स्यात्तदा शिरः परित्यज्य शीततोयेन सेचनं कार्य्यं अतएवैतदनन्तरं वाभटे यथा—मूर्च्छायां शीततोयेन सिञ्चेत् परिहरन् शिरइति ॥ ६ ॥

शिरोविरेचनस्यान्तरीयं विधिमाह स्नेहमित्यादि वाभटस्य स्नेहमिति स्नेहनस्यम्। स्नेहनस्यं रेचननस्यञ्च कियन्तं

त्र्यहात्त्र्यहाच्च सप्ताहं स्नेहकर्म्म समाचरेत्।
एकाहान्तरितं कुर्य्याद्रेचनं शिरसस्तथा ॥ १० ॥
सम्यक्‌स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षिपाटवम् ॥ ११ ॥
रूक्षेऽक्षिस्तब्धताशोषोनासास्ये मूर्द्धशून्यता।
स्निग्धेऽतिकण्डुगुरुताप्रसेकारुचिपीनसाः ॥ १२ ॥

---

कालं कया परिपाट्या कुर्य्यादित्याह त्र्यहात्त्र्यहादित्यादि एकैकदिनमन्तरीकृत्य सप्ताहमन्तरितदिनानि वर्जयित्वा स्नेहनस्यं शिरसोविरेचनन्तु एकाहानन्तरितं कुर्य्यात् तेन यस्मिन् दिने स्नेहनस्यं न दीयते तस्मिन् तस्मिन्नेव दिने रेचननस्यं देयमित्यर्थः। एतेनैकस्मिन् दिने स्नेहं अपरस्मिन् दिने शिरोविरेचनमेव सपरत्वापरत्वे सति शिरोविरेचान्तरं स्नेहनस्यं भवति एकाहान्तरितः शिरोविरेकः कार्य्य-इत्यत्स्वर्गस्तेन द्व्यन्तरमपि ज्ञेयं तथा सप्ताहमित्युपलक्षणं तेन त्र्यहादिकमपि दोषाद्यपेक्षया ज्ञेयं उक्तं हि — एकान्तरं द्व्यन्तरम्वा नस्यं दद्याद्विचक्षणः। सप्ताहन्तु परं ज्ञेयं विश्रान्तस्य पुनः पुनः। त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितम्। परं नवाहमूर्द्धन्तु न वाहात् सात्म्यतां व्रजेत् ॥ १० ॥

सम्यक्‌स्निग्धलक्षणमाह सम्यगित्यादि वाभटस्य सुखशब्दः उच्छ्वासादिना बोधान्तेन सम्बध्यते अक्षीतीन्द्रियोपलक्षणं अक्षपाटवमिति वा पाठः तन्त्रान्तरे प्रसादश्चेन्द्रियाणामित्युक्तम् ॥ ११ ॥

असम्यक् स्निग्धलक्षणमाह। रूक्ष-इत्यादि वाभटस्य रूक्ष-इत्यसम्यग्‌स्निग्धे। अतिस्निग्धलक्षणमाह स्निग्ध-इत्यादि वाभटस्य अतिस्निग्धइत्यन्वयः। प्रसेक-इति कफप्रसेकः ॥ १२ ॥

सुविरिक्तेऽचिरलघुतायक्तस्वरविशुद्धयः ।
दुर्व्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम् ॥
नवपीनसरोगार्त्तसूतिकाश्वास—कासिनाम् ।
शुद्धानां दत्तवस्तीनां तथानार्त्तवदुर्द्दिने ॥
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ॥ १३ ॥
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनद्वादशे धूमः कवलोनोनपञ्चमे ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ।

---

स्नैहिकनस्यस्य सम्यगयोगादीनभिधाय रेचननस्यस्यापि तानाह सुविरिक्त इत्यादि वाभटस्य क्षामता शुष्कदूषधातुता येषां नस्यं न विधेयं तानाह तोयेत्यादि वाभटस्य तोयादिकं पीतं यैस्ते तथेति आहिताग्न्यादित्वात् परनिपातः अनार्त्तवदुर्द्दिने हेमन्तशिशिरयोर्म्मेघव्याप्तेऽह्नि । अन्यत्रात्ययिके व्याधाविति आत्ययिके च व्याधौ नस्यैकसाध्ये निषिद्धनस्यानामपि नस्यं विधेयमेवेत्यर्थः नैषां नस्यं प्रयोजयेदिति श्लोकपादश्चक्रेण प्रतिसंस्कृतस्य दृष्टः ॥ १३ ॥

इदानीं यस्मिन् वयसि नस्यं न विधेयं तदाह न नस्यमित्यादि वाभटस्य ऊनसप्ताब्द इति एकवर्षमारभ्य षष्ठवर्षपर्य्यन्त इति प्रतिमर्षव्यतिरिक्तं नस्यं न प्रयोज्यं सप्तमवर्षात् प्रभृति तु विधेयमेवेत्यर्थः. उक्तं हि सुश्रुतेन सप्तवर्षमुपादायनस्यकर्म्म चतुर्व्विधमिति अतीताशीतवत्सर-इति एकाशीतीत्यादौ निषेध्यं प्रस्तावात् निषेध्यधूमकवलादीनप्याह न चोनद्वादश-इत्यादि ऊनद्वादश-इति एकवर्षमारभ्य एकादशवर्षपर्य्यन्तं एवं वक्ष्यमाणेऽपि ज्ञेयम् । शुद्धिरिति वमन-

आजन्ममरणं शस्तः प्रतिमर्षवस्तु वासवम् ॥ १४ ॥

इति नस्याधिकारः।

समाप्तश्च पञ्चकर्म्माधिकारः।

---

## अथ धूमाधिकारः।

प्रायोगिकः स्नैहिकश्च धूमोवैरेचनस्तथा।
कासघ्नोवामनश्च धूमः पञ्चविधोमतः ॥ १ ॥
ऋजुत्रिकोषफलितं कोलास्थ्यग्रप्रमाणितम्।

---

विरेचने प्रतिमर्षस्तथा वस्तिरिति सर्व्वकालमेव विधेय इत्याह आजन्मेत्यादि ॥ १४ ॥

इति नस्याधिकारः।

समाप्तः पञ्चकर्म्माधिकारः।

---

नस्यवन्नासाप्रयोज्यत्वसाधर्म्म्यात् पञ्चसंख्या सामान्याच्च नस्यानन्तरविधेयत्वाच्च नस्यानन्तरं धूममाह प्रायोगिक इत्यादि प्रयोगिकइति नित्यपेयधूमस्य संज्ञाप्रयोगः सतताभ्यासः तद्विषयकोधूमः प्रायोगिकः। स्नेहाय प्रभवतीति स्नैहिकः। दोषविरेचनाद्वैरेचनिकः कासं हरतीति कासघ्नः। वामयतीति वामनः। यद्यपि चरके प्रायोगिकस्नैहिकवैरेचनिकभेदात् त्रिविधएव धूम-उक्तस्तथापि प्रायोगिके कासघ्नं वैरेचनिके च वामनीयमन्तर्भाव्यचरकसुश्रुतयोर्व्विरोधः परिहरणीयः ॥ १ ॥

धूमपानार्थं नलिकाविधानमाह ऋज्वित्यादि चरकस्य त्रिकोषफलितमिति त्रिभिः पर्व्वभिर्भिन्नैः समन्वितं त्रिधा

बस्तिनेत्रसमद्रव्य धूमनेत्रं प्रशस्यते ॥
सार्द्धत्र्यंशयुतः पूर्णोऽहस्तः प्रायोगिकादिषु ।
नेत्रे कासहरे त्र्यंशहीनः शेषे दशाङ्गुलः ॥ २ ॥
औषधैर्व्वर्त्तिकां कृत्वा शरीगर्भां विशोषिताम् ।
विगर्भामग्निसंसृष्टां कृत्वा धूमं पिबेन्नरः ॥
वक्त्रेणैव वमेद्धूमं नस्तोऽग्रुणा वा पिबन् ।

त्रिकोषस्त्रिभङ्गः तेन यस्मिन् नेत्रे स्थानत्रये भङ्गः कार्य्यः स च नलिकात्रयेन घटनीय इत्याङ्कः । कोलास्थ्यग्रप्रमाणित-मिति अस्य नेत्रस्याग्रं कोलास्थिप्रवेशयोगं कार्य्यमित्यर्थः । स्वल्पास्याङ्गुष्ठप्रवेशयोग्यम् । यदाह वाभटः—मूलाग्रेऽङ्गुष्ठ-कोलास्थिप्रवेशं धूमनेत्रकमिति । बस्तिनेत्रसमद्रव्यमिति बस्ति-नेत्रेण समं तुल्यं यद्द्रव्यं सुवर्णरूप्यताम्रादिकम् । धूमभेदेन नेत्रमानभेदमाह सार्द्ध-इत्यादि हस्तोऽत्र चतुर्व्विंशत्यङ्गुल-परिमितः तेन प्रायोगिके धूमे सार्द्धोहस्तः षट्त्रिंशदङ्गुलः । त्र्यंशयुत इति चतुर्व्विंशत्यङ्गुलस्य तृतीयोंऽशोऽष्टाङ्गुलं तेन संयुक्तोहस्तइत्यर्थः एतेन—स्नैहिके द्वात्रिंशदङ्गुलं नेत्रमित्यर्थः। वैरेचने तु पूर्णोहस्तश्चतुर्व्विंशत्यङ्गुलमित्यर्थः कासहरे धूमे त्र्यंशहीनोहस्तः षोड़शाङ्गुलमित्यर्थः शेष इति वामके ॥ २ ॥

इदानीं धूमपानार्थं नलिकामभिधाय धूमपानं यथाविधेयं तदाह औषधैरित्यादि औषधैरिति गन्धैरकुष्ठतगरैरित्यादिना वक्ष्यमाणैरौषधैर्व्वर्त्तिकां कृत्वा धूमं पिबेत् । वर्त्तिकाकरण-प्रकारमाह शरीगर्भामित्यादि शरी शरपुष्पस्य नालिका सा गर्भे अभ्यन्तरे यस्याः तां एतेन पिष्टैर्भेषजैः शरीं प्रलिप्य वर्त्तिः कार्य्येत्यर्थः विगर्भामिति तां वर्त्तिं विशोष्य ततः शरी-माकृष्य विगर्भां कुर्य्यादित्यर्थः । अग्निसंसृष्टामिति तां विगर्भां वर्त्तिं नेत्राग्रे समारोप्य अग्निसंसृष्टां कृत्वा धूमं पिबेदि-

उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत्।
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये॥ ३॥
गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिकी मता।
स्नैहिकी तु मधूच्छिष्टस्नेहगुग्गुलुसर्ज्जकैः॥
शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचने मता।
कासघ्नैरेव कासघ्नी वामनैर्वामनी मता॥ ४॥
योज्या न पित्तरक्तार्त्तिविरिक्तोदरमेहिषु।
तिमिरोर्द्ध्वानिलाध्मानरोहिणीदत्तवस्तिषु॥

---

त्यर्थः। एषा वर्त्तिरष्टाङ्गुला यववन्मध्यस्थूला परिणाहेनाङ्गुष्ठसम्मिता कर्त्तव्या। उक्तञ्च — पिष्टा लिम्पेच्छरीषिकां तां वर्त्तिं यवसन्निभाम्। स्थूलाङ्गुष्ठिकां कुर्य्यादष्टाङ्गुलसमां भिषगिति। धूमं पीत्वा धूमं कथं वमेदित्याह वक्त्रेणेत्यादि मतम्-इति नासिकया सार्व्वविभक्तिकस्तसि एवम्प्रकारेण नासिकानिषिध्यते वक्त्रेणैव धूमं वमेत् न तु नासयेत्यर्थः। अत्र हेतुश्चरकेणोक्तो यथा—प्रतिलोमं गतो ह्यास्य धूमोहि स्याद्धि चक्षुषि इति। वक्त्रधूमपाननासाधूमपानयोर्व्विषयावाह उर इत्यादि॥ ३॥

औषधैर्व्वर्त्तिकां कृत्वेत्युक्तं अतोवर्त्त्यर्थमौषधान्याह गन्धैरित्यादि गन्धैरित्यगुर्व्वादि सुगन्धिद्रव्यैः। अकुष्ठतगरैरिति कुष्ठतगरवर्ज्जितैः। कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावकत्वात्। उक्तञ्च ग्रायके—नतकुष्ठे स्रावयतोधूमवर्त्तिप्रयोजिते। मस्तुलुङ्गं विशेषेण तस्मात्तेनैव योजयेदिति। मधुच्छिष्टं सिक्थकं स्नेहोऽत्र घृतं वसा च वसाघृतमधुच्छिष्टैरिति वचनात्। शिरोविरेचनैर्द्रव्यैरिति। श्वेताज्योतिष्मतयादिभिश्चरकोक्तैः। कासघ्नैरिति वृहतीकण्टकारीकटुकासमर्द्दादिभिः सुश्रुतोक्तैः। वामनैरिति स्नायुचर्म्मखुरश्टङ्गादिभिः सुश्रुतोक्तैः॥४॥

मन्यामन्युदधिक्षीरक्षौद्रक्षेड़विषाशिषु ।
शिरस्यभिहते पाण्डुरोगे जागरिते निशि ॥
रक्तपित्तान्ध्यवाधिर्य्य तृण्मूर्च्छामदमोहक्वत् ।
धूमोऽकालेऽतिपीतोवा तत्र शीतोविधिर्हितः ।
एतद्धूमविधानन्तु लेशतः संप्रकाशितम् ॥ ५ ॥

इति धूमाधिकारः ।

---

## अथ कवलगण्डूषाधिकारः ।

स्निग्धोष्णैः स्नैहिकोवाते स्वादुशीतैः प्रसादनः ।
पित्ते कटूम्ललवणैरुक्षैः संशोधनः कफे ॥
कषायस्वादुतिक्तैश्च कवलोरोपणोव्रणे ॥ १ ॥

---

येषु धूमोन विधेयस्तानाह शोऽन्याद्युत्यादि वाभटस्य दत्तवस्तिरित्यादि कृतनिरूहेषु । अकालातिपीतधूमयोर्हीषमाह रक्तपित्तेत्यादि अत्र पीतोवेतिच्छेदः । धूमपानविधिश्चरक-सुश्रुतादावति प्रपञ्च-इह तु ग्रन्थगौरवभयात् संक्षेपेणैवोक्त-इत्याह एतदित्यादि ॥ ५ ॥

इति धूमपानाधिकारः ।

---

ऊर्द्धगतदोषहरत्वसामान्यात् धूमाधिकारानन्तरं कव-लगण्डूषाधिकारः प्रारभ्यते तत्र कवड़श्चतुर्व्विधो-भवति यदाह सुश्रुतः—चतुर्व्विधः कवलः स्नेही प्रसादी शोधिरोपणाविति । अतस्तेषां स्वरूपं विषयश्चाह स्निग्धोष्णैरिति सुश्रुतस्य यद्यपि तन्त्रान्तरे वैरेचनस्तम्भनाभ्यां सह षड़्विधत्वमेवोक्तं तथाप्यत्र संशोधने वैरेचनस्य प्रसादने च स्तम्भनस्यान्तर्भावान्न विरो-धः । वाभटे तु कवड़गण्डूषयोरत्रवान्तर चतुर्व्विधत्वमुक्तं यथा-

सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता।
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता॥
तावच्च धारणीयोऽयं यावद्दोषप्रवर्त्तनम्।
पुनश्चान्योऽपि दातव्यस्तथा चौद्रघृतादिभिः॥ २॥
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥
दाहतृष्णाव्रणान् हन्ति मधुगण्डूषधारणम्।
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्॥
तदेवालवणं शीतं मुखशोषहरं परम्।
आशुक्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्॥

---

चतुःप्रकारो गण्डूषः स्निग्धः शमनशोधनौ। रोपणश्च तथाख्यातः स्नेहादिषु योज्यास्तैलादिषु। अन्तो-व्रणघ्न-इति॥ १॥

मात्राभेदेन कवलगण्डूषयोर्भेदमाह सुखमित्यादि सुश्रुतश्च। असौ कवलः कियन्तं कालं मुखे धारणीय इत्याह तावदित्यादि अत्र चौद्रं कफे कफपित्ते च। आदिशब्देन दुग्धादिकं यदाह सुश्रुतः—एवं स्नेहपयःचौद्ररसमूत्राम्लसंयुताः। कषायोष्णोदकाभ्याञ्च कवला दोषतो-हिता इति॥२॥

कवलस्य सम्यग्योगलक्षणमाह व्याधेरित्यादि सुश्रुतश्च अयोगातियोगलक्षणमित्यतोऽनन्तरं यथा—हीने जाड्यकफोत्क्लेशावरसंज्ञानमेव च। अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमादिति। एतच्च सामान्ययोगातियोगलक्षणं शोधनकवडस्येति भानुमतीप्रभृतयः। चक्रेण सम्यग्योगलक्षणविपर्य्ययेणैव असम्यग्योगलक्षणं सुधिभिरूहनीयं इत्यभिप्रायेण अयोगातियोगलक्षणं नोक्तमिति॥ ३॥

मुखे हितं वातहरं तैलगण्डूषधारणम् ॥ ४ ॥

इति कवलगण्डूषाधिकारः ।

---

## अथाश्च्योतनाञ्जनतर्पणपुटपाकाधिकारः ।

सर्व्वेषामक्षिरोगाणामादावाश्च्योतनं हितम् ।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिवर्हणम् ॥
उष्णं वाते कफे चोष्णं तच्छीतं रक्तपित्तयोः ।
निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥
शुक्तौ प्रलम्बयान्येन पिचुवर्त्त्या कनीनिके ।
दशद्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥
ततः प्रमृज्य मृदुना चेलेन कफवातयोः ।
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ १ ॥

---

दाहेत्यादि वाभटस्य पाठः ग्रीष्मं क्षाराम्बु यवक्षारजलं तैलमिति तिलतैलम् ॥ ४ ॥

इति कवड़गण्डूषाधिकारः ।

---

पूर्व्वोक्तसङ्गत्यैवाश्च्योतनाधिकारमाह सर्व्वेषामित्यादि । दोषभेदेन तदाह उष्णमित्यादि वाभटस्य उष्णमितीषदुष्णम् । निवातस्थस्येत्यादौ शुक्तावित्ति निर्म्मलपात्रोपलक्षणं अन्येनेति दक्षिणपाणिना । प्रलम्बयेति लम्बमानयेत्यर्थः । पिचुवर्त्त्यातूलकवर्त्त्या कनीनिके नासिकादेशसन्निहितचक्षुःकोणे द्व्यङ्गुलादिति नेत्रकनीनिकस्योपरि पिचुवर्त्तिं द्व्यङ्गुलमुत्तोल्य निवातप्रदेशस्थातुरस्य वैद्योवामेन पाणिना लोचनमुन्मील्य मृदु यथा भवति तथा लोचनं स्वेदयेत् । कफवातयोरिति वातकफयोः ॥ १ ॥

अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाश्चिसेचनम्।
अतिशीतन्तु कुरुते निस्तोदस्तम्भवेदनाः॥
कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु।
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम्॥ २॥
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रिते मले।
पक्वलिङ्गेऽल्पशोथार्त्तिकण्डूपैच्छिल्यलक्षिते॥
मन्दघर्षाश्रुरागेऽक्षिप्रयोज्यं घनदूषिके॥ ३॥

अत्युष्णतीक्ष्णाश्च्योतनस्य तथा अतिशीतस्य च दोषमाह अत्युष्णमित्यादि। इदानीं बहुमात्रस्य तथाल्पमात्रस्य तथा चाप्याश्च्योतनस्य दोषमाह कषाय-इत्यादि वाभटस्य कषायवर्त्मतामिति रक्तवर्त्मतामिति कृष्णवर्त्मतां वा। घर्षमिति करकरिकाम्। बह्विति बहुपरिमाणाश्च्योतनं कषायवर्त्मतादिकं कुरुत इति शेष.। अत्यल्पमाश्च्योतनं विकारवृद्धिं कुरुते। तथा अपरिस्रुतमित्यपूतमाश्च्योतनं संरम्भं शोथं कुरुते। यद्यपि सुश्रुते आश्च्योतनवत् सेकोऽप्युक्तः यथा-तर्पणः पुटपाकश्च सेकश्चाश्च्योतनाञ्जनमिति। तथापि वाभटमते आश्च्योतन-एव सेकस्यान्तर्भावादविरोधः॥ २॥

आश्च्योतनानन्तरमञ्जनमाह अथेत्यादि अथेत्यानन्तर्य्ये शुद्धतनोरिति कषायशिरोविरेकाभ्याम्। नेत्रमात्राश्रिते मलइति। नेत्रएव स्थिते दोष इत्यर्थः। एतेन प्रदेशान्तरस्थदोषहन्तृत्वमञ्जनस्योक्तम्। नेत्रायश्रिते दोषप्राप्तमञ्जनमाचरेदिति तथा पक्वलिङ्गे पक्वाक्षिरोगलक्षणे सत्येवाञ्जनं प्रयोज्यं तदेव पक्वलक्षणं कथं ज्ञातव्यमित्यत आह अल्पशोथेत्यादि। अल्पशब्दस्य शोथादिभिः प्रत्येकमन्वयः एवं मन्दशब्दस्यापि घर्षादिभिः। लक्षित इति ज्ञायते। दूषिका नेत्रक्लेदिका॥ ३॥

लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा।
अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः॥
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम्॥ ४॥
दशाङ्गुला तनुर्मध्ये शलाकामुकुलानना॥ ५॥
प्रशस्ता लेखने ताम्री रोपणे काललोहजा।
अङ्गुलीव सुवर्णोत्था रूप्यजा च प्रसादने॥
पिण्डोरसक्रियाचूर्णं त्रिवैवाञ्जनकल्पना।
गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत्॥
अथानुन्मीलयन् दृष्टी अन्तः सञ्चारयेच्छनैः।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम्॥
अपेतौषधसम्बन्धं निर्वृतं नयनं यदा।
व्याधिदोषर्त्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा॥
दक्षिणाङ्गुष्ठकेनाक्षि ततोवामं सवाससा।
ऊर्द्ध्वं वर्त्मनि संगृह्य शोध्यं वामेन चेतरम्॥ ६॥
निशि स्वप्नेन मध्याह्ने पानाच्चोष्णगभस्तिभिः।

---

अञ्जनस्य त्रैविध्यमाह लेखनमित्यादि वाभटस्य अञ्जनमितिशेषः। एषां स्वरूपमाह लेखनं तत्रेत्यादि तत्रेति त्रिषु लेखनादिषु मध्ये पटुलवणं पटुपिप्पल्याम्लादिकषायादिभिर्द्रव्यैर्यदञ्जनं तल्लेखनमित्यर्थः॥ ४॥

अञ्जनदानार्थं शलाकामाह दशाङ्गुलेत्यादि तत्रैव मुकुलानना कुन्दजातीमल्लिकामुकुलमुखी॥ ५॥

अञ्जनभेदेन शलाकाभेदमाह प्रशस्तेत्यादि काललोहः पाण्ड्वादिः। प्रसादने तु अङ्गुल्येव शरीरशलाका तथां सुवर्णजा रूप्यजा च शलाका प्रशस्तेत्यर्थः॥ ६॥

र्निशीत्यादि। ननु विरेकं कुर्वेतं चक्षुरादितंत्र प्राप्य शीति तत् कथं सर्व्वेदेतुत्वं नैवं यतः विरेकं कुर्वेतं चक्षु-

अक्षिरोगाय दोषाः स्युर्वर्द्धितोत्पीड़ितद्रुताः ॥
प्रातः सायञ्च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत् सदा ॥ ७ ॥
कण्ड्वाद्ये ऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः।
तीक्ष्णाञ्जनाभितप्ते तु दृशि प्रत्यञ्जनं हिमम् ॥ ८ ॥
नाञ्जयेद्भीतवमितविरिक्ताशितवेगिते।
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोषजागरे ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः।
अजीर्णेऽप्यर्कसन्तप्ते दिवास्वप्ने पिपासिते ॥

---

रादितंत्र प्राप्य सीदतीत्युच्यते सुश्रुताभिप्रायादिदं वाक्यं किम्वा अत्युद्रिक्तकफापेक्षया दिवाञ्जनं बोध्यं उक्तं हि अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे। काममह्नपि नात्युष्णे तीक्ष्णाञ्जनं प्रयोजयेदिति। लेखनीये गद इति लेखनीयशुक्लादौ। ननु विरेकं दुर्बलं चक्षुरादितंत्र प्राप्य सीदतीति वचनमनुपपन्नं यतो नेत्रस्य तैजसत्वादितंत्र प्राप्य तेजोवृद्धिरेव सुतरां तेजसः सामान्यवृद्धिकारणमिति सिद्धान्तः नैवं काल-स्योष्णत्वादञ्जनस्य च तीक्ष्णत्वादतियोगेन दृष्ट्युपघातः स्यादिति ॥ ७ ॥

अञ्जनदत्तेपि यदि कण्ड्वाद्यादिकं तिष्ठति तदा पुनरपि तीक्ष्णमञ्जनं धूमं वा योजयेदित्यत आह कण्ड्वाद्ये इत्यादि वाभटस्य। यदि पुनस्तीक्ष्णाञ्जनविधानेन दाहः स्यात्तदा दृष्टिप्रसादनमञ्जनं कार्य्यमित्याह तीक्ष्णाञ्जनेत्यादि। अस्यैवा-भितप्त इति सदाहे। प्रत्यञ्जनमिति तीक्ष्णाञ्जनप्रत्यनीक मञ्जनं मृदुशीतलस्निग्धमित्यर्थः ॥ ८ ॥

अञ्जनं येषु न विधेयं तानाह नाञ्जयेदित्यादि वाभटस्य अशिते सद्योभुक्ते। वेगितइति दोषवेगोदये सुश्रुतेऽप्युक्तं दोष-

निर्व्वाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः।
काले साधारणे प्रातः सायं वोत्तानशायिनः॥
यवमाषमयी पाली नेत्रकोशाद्बहिः समाम्।
चतुरोच्चां दृढ़ां कृत्वा यथास्वं सिद्धमावपेत्॥
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम्।
नक्तान्ध्य-वात-तिमिर-कृच्छ्र-रोधादिके वसाम्॥ ६॥
आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्व्वतः।
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते॥
हृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च।
शतानि सप्तचाष्टौ च दशमन्थेऽनिले दश॥

---

वेगोदयेऽप्युक्तं कुर्य्यात्तांस्तानुपद्रवान् इति। ज्वरिते नवज्वरिते तान्ताच्च इति। सूक्ष्मभास्वरादिरूपदर्शनात्तान्ते अक्षिणी यस्य तस्मिन् अदृष्टेऽर्के इत्यनुदिते जलादिच्छन्न इत्याह सुश्रुतेऽप्येवमेवोक्तम्।

एकाश्रयत्वादस्मिन्नधिकारे तर्पणमाह निवात इत्यादि वाभटस्य पालीमित्यालवालं चतुरोच्चां दृढ़ामिति चतुरोच्छ्रयां दृढां निविड़ां यथा स्नेहो न स्रवति इत्यर्थः। यथा स्वं सिद्धं सर्पिरिति तत्तद्दोषप्रत्यनीकद्रव्यपक्वमित्यर्थः। पात्रस्थं घृतं तप्तजलस्योपरि स्थापयित्वा प्रविलायितं द्रवीकृतमित्यर्थः। आवपेत् पूरयेत्। व्याधिविशेषे स्नेहविशेषमाह नक्तान्धेत्यादि वाभटस्य अत्रापि यथा स्वं सिद्धमित्यादि योज्यमित्यन्वयः॥ ६॥

पूरणविधिमाह आपक्ष्माग्रादिति पक्ष्माग्रपर्य्यन्तं पूरयेदित्यर्थः।

अथ स्नेहे चक्षुः पूरयित्वा कियन्तं कालं व्याप्य स्नेहं स्थातव्यमिति जिज्ञासायामाह अथेत्यादि अथ घृतावपनान-

पित्ते षट् सुस्थवृत्ते च बलासे पञ्च धारयेत्।
कृत्वापाङ्गे ततोद्वारं स्नेहं पात्रे निगालयेत्॥
पिबेच्च धूमं नेक्षेत व्योमरूपञ्च भास्वरम्।
इत्थं प्रतिदिनं वाते पित्ते त्वेकान्तरं कफे॥
सुस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत्।
प्रकाशक्षमतास्वास्थ्यं विशदं लघुलोचनम्॥
तृप्ते विपर्य्ययोऽतृप्ते तृप्तेऽतिश्लेष्मजारुजः॥१०॥
पुटपाकं प्रयुञ्जीत पूर्व्वोक्तेष्वेव पक्ष्मसु॥११॥
सवाते स्नेहनः श्लेष्मसहिते लेखनोमतः।
दृग्दौर्व्वल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः॥१२॥

---

न्तरं शनकैरुन्मेषं कुर्व्वतस्तस्य आवर्त्तस्य मात्रां विगणयेत् मात्रा च लघ्वक्षरोच्चारणम्। तत्र वर्त्मस्थे व्याधौ शतमात्रां धारयेत् लघ्वक्षरशतोच्चारण कालसमकालं व्याप्य स्नेहं धारयेत्। सन्धिगते तु व्याधौ त्रीणि शतानि। शुक्लमण्डलगते तु पञ्चशतानि कृष्णमण्डलगते तु सप्तशतानि दृष्टिमण्डले चाष्टौ मन्थे दृत्यधिमन्थे दश इत्यादि क्रमेण धारयेत्। धारणानन्तरञ्च यत्कार्य्यं तदाह कृत्वेत्यादि द्वारमित्यालवाले छिद्रं कृत्वा। व्योमेत्याकाशं नेक्षेत भास्वरं रूपमग्न्यादिः। अयञ्च क्रमो यस्मिन् दोषे यावद्दिनं कार्य्यस्तदाह इत्थमित्यादि। अयञ्च दिनक्रमः चक्षुस्तृप्तिपर्य्यन्तं योज्य इत्याह आतृप्तेरित्यादि। विपर्य्यय इत्यादि विपर्य्ययः प्रकाशः क्षमतादिवैपरीत्यम्। अतितृप्ते तु श्लेष्मजारुजः कण्डूपैच्छिल्यादयः॥१०॥

पुटपाकमाह पुटपाकमित्यादि वाभटस्य पूर्व्वोक्तेष्विति तर्पणोक्तेषु रोगेष्वित्यर्थः॥११॥

स्नेहादिभेदेन त्रिविधस्य पुटपाकस्य पृथक् पृथक् विषयमाह सवातइत्यादि स इति पुटपाकः स्नेहनोवाते हितः।

बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः।
उरुबूकवटाम्भोजपत्रैः स्निग्धादिषु क्रमात् ॥
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः।
पचेत् प्रदीप्तैरग्न्याभं पक्कं निष्पीड्य तद्रसम् ॥
नेत्रे तर्पणवद्युञ्ज्यात् शतं द्वे त्रीणि धारयेत्।

---

श्लेष्मसहिते तु वाते लेखनः पुटपाको-हितइति हुगद्दौर्ब्बल्यादौ प्रसादनः पुटपाकोहित इत्यर्थः। इदञ्च पुटपाकत्रयं येद्रव्यैर्विधेयं तद्वाभटेनोक्तं इह तु ग्रन्थविस्तारभयात्तु क्रमेण न लिखितं किन्तू पयुक्तमिति मया लिख्यते यथा भूयशः प्रसन्नान्रमेद्गोमज्जवसामिषैः। स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत्। मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैन्धवैः। स्रोतोजशङ्खफेनालैर्लेखनोमस्तुकल्पितैः। *मृगपक्षियकृन्मज्जवसान्त्रहृदयामिषैः। मधूरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनइति ॥ १२ ॥

पुटपाकत्रयस्य कल्पनामाह बिल्वेत्यादि मांसयुक्तं भेषजञ्चानन्तरोक्तजीवनीयादिकं तयोः कल्करूपयोः पिण्डः। पृथग् बिल्वमात्रमिति पलमात्रम्। एरण्डादिपत्रैः क्रमेण स्निग्धादिषु स्नेहादिपुटपाकेषु वेष्टयित्वा अनन्तरं मृदा लिप्तं प्रदीप्तैर्धवधन्वनगोमयैः पचेत्। क्रमादिति धवधन्वनगोमयैरित्यत्रापि योजयन्ति केचित्। तेन स्नेहन-पुटपाके एरण्डपत्रेण वेष्टनं धवकाष्ठाङ्गारेण च पाकः। लेखने वटपत्रेण वेष्टनं धवकाष्ठाङ्गारेण च पाकः। प्रसादने तु अम्भोजपत्रैर्वेष्टनं गोमयाग्निना पाकइति। अग्न्याभमित्यग्निवर्णं एतच्च सम्यक्पाकज्ञानार्थमुक्तम्। तर्पणवद्युञ्ज्यादित्यनेन निर्व्वाते तर्पणोक्तविधिमातिदिशति।

एतद्रसञ्च कियन्तं कालं नेत्रे धारयेदित्याह शतं द्वित्रीणि धारयेदिति लेखनस्नेहनान्येष्विति। एतच्च यथा

लेखनस्नेहनान्तेषु कोष्णौ पूर्व्वौ हिमोऽपरः ॥
धूमपोऽन्ते तयोरेव योगास्तत्र च तर्पिवत् ॥ १३ ॥
तर्पणं पुटपाकञ्च नस्यानर्हेण योजयेत् ।
यावन्त्यहानि युञ्जीत द्विगुणोहित भाग्भवेत् ॥ १४ ॥

इत्याश्च्योतनाञ्जनतर्पणपुटपाकाधिकारः ।

---

## अथ शिराव्यधाधिकारः ।

अथ स्निग्धतनुः स्निग्धरसान्नप्रतिभोजितः ।
प्रत्यादित्यमुखं स्विन्नोजानुच्चासनसंस्थितः ॥

---

क्रमं योज्यं तेन लेखनपुटपाके शतमिति मात्राशतं धारयेत् । स्नेहने तु द्वे मात्राशते । अन्यद्दूति प्रसादने त्रीणि मात्राशतानि धारयेदित्यर्थः । पूर्व्वौ स्नेहलेखनौ कोष्णौ अपरइति प्रसादनो हिमः शीतलो योज्यः । धूमपोऽन्ते तयोरेवेति पूर्व्वयो. स्नेहलेखनयोरेव अन्ते धूमपः स्यात् न तु प्रसादनान्तइत्येव शब्दार्थः । योगास्तत्र च तर्पिवदिति तर्पणवदित्यर्थः ॥ १३ ॥

तर्पणपुटपाकौ येषां न कार्य्यौ तानाह तर्पणमित्यादि । नस्यानर्हे इति निषिद्ध नस्यपुरुषे ।

इदानीं तर्पणपुटपाकविधानानन्तरं यावन्ति दिनानि हितसेवनं कर्त्तव्यं तदाह यावन्तीत्यादि । यावन्ति दिनानि व्याप्य तर्पण पुटपाकविधिः कृतः तद्द्विगुणानि दिनानि हितसेविताभूत्वा तिष्ठेदित्यर्थः ॥ १४ ॥

इत्याश्च्योतनाञ्जनतर्पणपुटपाकविधिः ।

---

मृदुपट्टान्तकेशान्तो जानुस्थापितकूर्परः।
अङ्गुष्ठगर्भमुष्टिभ्यां मन्ये गाढं निपीड़येत्॥
दन्तसंपीड़नोत्कासगण्डाध्मानानि चाचरेत्।
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयेन्नरः॥
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्ज्जनीम्।
एवमुत्थाप्य विधिना शिरां विध्येच्छिरोगताम्॥१॥
विध्येद्धस्तशिरां बाहावनाकुञ्चितकूर्परे।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणम्॥
ऊर्द्ध्वं वेध्यप्रदेशाच्च पट्टिकाश्चतुरङ्गुले॥२॥

---

पूर्व्वन्तु नेत्ररोगे स्निग्धस्याज्येन कौम्भेन शिराव्यधैः शमं नयेदित्युक्तं अत आश्चोतनादिवत् शिराव्यधस्यापि नेत्ररोगहरत्वादनन्तरं शिराव्यधविधिर्व्वाच्यः। तत्र प्राधान्यात् प्रथमं शिरोगतशिराव्यधे कर्त्तव्ये शिरोत्थापनप्रकारमाह अथेत्यादि वाभटस्य चादित्याभिमुखं लघ्वीकृत्य जानूच्चासनसंस्थित इति उपविष्ट इत्यर्थः। मृदुना पट्टेनान्तो गृहीतो बद्ध इति यावत् केशान्तो यस्य स तथा। जानुनि स्थापितं कूर्परं कफोणिद्वयं येन स-तथा। मुष्टिभ्यां मन्ये ग्रीवाधमन्यौ प्रपीड़येत् तथा दन्तसम्पीड़नादिना मध्यतममाचरेत् चार्त्तवदिति शेषः। दन्तैर्दन्तानां पीड़नं दन्तपीड़नं उत्कासः कास एव गण्डाध्मानं वायुना मुखपूरणं सुश्रुतेऽप्युक्तं कर्म्म पुरुषस्य वायुना मुखं पूरयेदिति। तथा नरः परिचारकजनः पृष्ठतइति पृष्ठदेशे स्थित्वा एनमातुरं यन्त्रयेत्। किं कुर्व्वन् यन्त्रयेदित्याह वस्त्रं कन्धरायां ग्रीवायां परिक्षिप्य तस्य मध्ये स्वकीयवामतर्ज्जनीं न्यस्यारोप्य वस्त्रमावेष्टयन् पीड़येदित्यर्थः॥१॥

विध्येदित्यादि वाभटस्य अनाकुञ्चितः कूर्परः कफोणिर्यस्य। किं कृत्वा विध्येदित्याह सुखोपविष्टस्यातुरस्य अङ्गुष्ठ-

पादे तु सुस्थितेऽधस्तात् जानुसन्धेर्निपीड़िते ।
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ॥
द्वितीये कुञ्चिते किञ्चिदारूढ़े हस्तवत्ततः ।
बद्धा विध्येच्छिरामित्यमनुक्तेष्वपि कल्पयेत् ॥
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ।
ततो व्रीहिमुखं व्यध्यप्रदेशे न्यस्य पीड़येत् ॥
अङ्गुष्ठतर्ज्जनीभ्यान्तु तलप्रच्छादितं भिषक् ॥ ३ ॥
वामहस्तेन विन्यस्य कुठारीमितरेण तु ।
ताड़येन्मध्यमाङ्गुल्याङ्गुष्ठावष्टब्धमुक्तया ॥ ४ ॥

---

गर्भिणीं मुष्टिं बद्धा बन्धयित्वा पुनः किं कृत्वा वेध्यप्रदेशादुपरि चतुरङ्गुले यन्त्रपट्टिकां शिरायन्त्रणार्थं पट्टिकां वस्त्रादिपट्टीं बद्धा ॥ २ ॥

पदगतशिराव्यधप्रकारमाह पादेत्वित्यादि वाभटस्य सुस्थित इत्यनेन विषमपादन्यासं निरस्यति । किं किं विशिष्टे पादे जानुसन्धेरवधस्तात् वैद्यस्य कराभ्यामागुल्फं गुल्फपर्य्यन्तं गाढं निपीड़ितमित्यर्थः । द्वितीये तु चरणे तस्य सुस्थितपादस्योपरि आरूढे सति किञ्चिद्विशिष्टे द्वितीये चरणे किञ्चित् कुञ्चिते । हस्तवत्ततो बद्धेति यथा हस्ते यन्त्रादिकं बद्धा शिरां विध्येत् तथाऽत्रापीत्यर्थः । एवमुक्तरीत्याऽनुक्तप्रदेशविषयेऽपि यन्त्रं स्वबुद्ध्या कल्पयेदित्याह इत्यमित्यादि । व्रीहिमुखादिशस्त्रेण यथा शिराव्यधो विधेयस्तदाह तत इत्यादि न्यस्यारोप्याङ्गुष्ठतर्ज्जनीभ्यां पीड़येदित्यन्वयः । करतलप्रच्छादितमिति पीड़नक्रियाविशेषणं एतेन रक्तधारा नोर्द्ध्वमुत्तिष्ठति इत्यभिसन्धिः ॥ ३ ॥

कुठारिकाया वेधनप्रकारमाह वामहस्तेनेत्यादि इतरेण दक्षिणहस्तेन ताड़येदित्याह मध्यमाङ्गुल्येति अङ्गुष्ठविष्टब्ध-

मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्द्धमस्थ्नामुपरि शिरां विध्यन् कुठारिकाम् ॥ ५ ॥
असम्यगस्ते स्रवति विल्लव्योषनिशानतैः ।
सागारधूमलवणतैलैर्दिह्याच्छिरामुखम् ॥
सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च ।
अशुद्धौ बलिनोऽप्यस्त्रं न प्रस्थात् स्रावयेत् परम् ॥
अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा निलामयाः ।
तत्राभ्यङ्गरसक्षीररक्तपानानि भेषजम् ॥
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ।
प्रक्षाल्य तैलप्रोताक्तं बन्धनीयं शिरामुखम् ॥
अशुद्धं स्रावयेद्भूयः सायमन्त्यपरेऽपि वा ।
रक्तं त्व तिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ॥

---

मुक्तयेति आदौ दृढाङ्गुष्ठेनाविष्टभ्य मुक्तयेदित्यर्थः ॥ ४ ॥

इदानीमुक्तशस्त्रद्वयं यस्मिन् प्रदेशे योज्यं तमाह मांसलेत्यादि मांसले प्रदेशे शिरां विध्येदिति योज्यम् । व्रीह्यास्यमिति व्रीहिमुखं शस्त्रं एकं व्रीहिमात्रकं निक्षिपेत् प्रवेशयेत् । अस्थ्नामुपरि शिरां विधानकुठारिकां यवार्द्धमात्रां निक्षिपेदित्यर्थः ॥ ५ ॥

अयोगे चिकित्सामाह असम्यगित्यादि । अशुद्धाविति असम्यक् शुद्धौ । प्रस्थादिति प्रस्थोऽत्र सार्द्धत्रयोदशपलं परमित्यर्द्धम् । अत्रैव हेतुमाह अतिस्रुतावित्यादि तत्रेति रक्तातिस्रुतौ रसः मांसरसः । प्रक्षाल्येति शिरामुखमित्यन्वयः । तैलप्रोताक्तमिति तैलाप्लुतवस्त्रयुक्तमित्यर्थः । स्तम्भनीमिति वक्ष्यमाणां तामेव रक्षणीं क्रियामाह लोध्रेत्यादि पङ्कं रक्तचन्दनं अञ्जनं रसाञ्जनम् । क्षौममषी दग्धवस्त्रच क्षीरिणोवटोडुम्बरादयः तेषां त्वक् अङ्कुरश्च । पद्मकादि

लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः।
सर्जपालाञ्जनक्षौमससोक्षीरित्वगङ्कुरैः ॥
विचूर्णयेद् व्रणमुखं पद्मकादिहिमं पिबेत्।
तामेव वा शिरां विध्येद्व्यधात्तस्मादनन्तरम् ॥
शिरामुखं वा त्वरितं दहेत्तप्तशलाकया ॥ ६ ॥
सशेषमप्यसृग्धार्य्यं न चातिस्रुतिमाचरेत्।
हरेच्छृङ्गादिना शेषं प्रसादमथवा नयेत् ॥ ७ ॥
मर्म्महीने यथासन्नप्रदेशे व्यधयेच्छिराम् ॥ ८ ॥
नतूनषोड़शातीतसप्तत्यब्दस्रुतासृजाम्।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥
गर्भिणी-सूतिकाजीर्ण-पित्तास्रश्वासकासिनाम्।

---

पद्मकादिगणं हिममिति शीतकषायं पिबेदिति। तामिति पूर्व्वविद्धाम्। व्यधात् तस्मादनन्तरमिति पूर्व्वव्यधसमीपोर्द्ध-भागे शिरामुखमिति विद्धशिराव्रणमुखम् ॥ ६ ॥

दुष्टमपि रक्तं न निःशेषं स्रावयेदित्याह सशेषमिति दुष्ट-शोणितशेषं प्रसादमथवा नयेदिति प्रसादनलेपनादिना। शिरा हि दुष्टा-एव वेध्या नत्वदुष्टाः उक्तं हि—अदुष्टा न वेध्या-इति ॥ ७ ॥

यत्र प्रदेशे तु वेध्यशिरा न दृश्यते कथं तत्र शिराव्यधः कार्य्य-इत्याह मर्म्महीनइत्यादि वाभटस्य अत्र व्यध्यशिरा-णामदर्शनइति शेषः। अतएवैतस्मात् पूर्व्वं वाभटे यथोक्तानाम-मदर्शन-इत्युक्तम्। यथासन्नदेशइति यत्र देशे व्यध्यशिरा न दृश्यते तत्र समीपदेशे या अन्याः शिरा वा दृश्यन्ते ताएव वेध्या-इत्यर्थः। मर्म्महीन-इति मर्म्मवर्जिते ॥ ८ ॥

येषां शिराव्यधो न कार्य्यस्तानाह नत्वित्यादि वाभटस्य।

स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ॥
नायन्त्रितां शिरां विध्येन्न तीर्य्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥ ९ ॥
नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदाशरीरं ह्यनवस्थितासृग्वह्निर्विशेषेण च रक्षणीयः ॥
नरोहिताहारविहारसेवी मासम्भवेदावललाभतो वा ॥ १० ॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतशक्तिवेगम् ।
सुखान्वितं पुष्टिवलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥ ११ ॥

इति शिराव्यधाविकारः ।

---

## अथ सुस्थाधिकारः ।

ब्राह्मो मुहूर्त्ते उत्तिष्ठेत् सुस्थोरक्षार्थमायुषः
शरीरचिन्तां निर्व्वर्त्य कृतशौचविधिस्ततः ॥
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥

---

अन्यत्रात्ययिकाद्गदादिति आत्ययिके तु व्याधौ एष्वपि कालेषु शिराव्यधश्चैवेत्यर्थः ॥ ९ ॥

रक्तस्रावानन्तरं यद्विधेयं तदाह नात्युष्णेत्यादि अनवस्थितासृगिति प्रचुररक्तम् ॥ १० ॥

इदानीं शोणितादर्शनेऽपि विशुद्धरक्तज्ञानार्थं लक्षणमाह प्रसन्नेत्यादि वेगःपुरीषादीनाम् ॥ ११ ॥

इति शिरावयधाधिकारः ।

---

इदानीमातुरहितचिकित्सामभिधाय सुस्थवृत्तमाह ब्राह्म इत्यादि ब्राह्मोमुहूर्त्तोरात्रेः पश्चिमयामस्य शेषनाड़िकाद्वयम् । शरीरचिन्तां मूत्रपुरीषोत्सर्गादिकरूपाम् । तत इति

नद्यादजीर्णवमथुश्वासकासज्वरार्द्दितः।
तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत्॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत्।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम्॥
ततोनावनगण्डूषधूमताम्बूलभाग् भवेत्॥ १॥
ताम्बूलं क्षतपित्तास्रुरुक्षोत्कुपितचक्षुषाम्।
विषमूर्च्छामदार्त्तानामपथ्यञ्चापि शोषिणाम्॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत्॥
वार्य्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः॥ २॥
शरीरचेष्टा या चेष्टा स्थैर्य्यार्था बलवर्द्धनी।
देहव्यायामसंख्याता मात्रया तां समाचरेत्॥ ३॥

---

शौचविधेरनन्तरं दन्तपवनं भक्षयेदिति दन्ताः पूयन्ते अनेनेति दन्तपवनं दन्तकाष्ठं भुक्त्वा चेति भोजनानन्तरमपीत्यर्थः। दन्तकाष्ठं येन विधेयं तदाह नाद्यादिति दन्तपवमित्यन्वयः। सुवीरा नाम नदी तद्भवमञ्जनं सौवीराञ्जनं तल्लक्षणं यथा वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति। सौवीराञ्जनमिच्छन्ति आयुर्व्वेदार्थचिन्तका इति। नित्यं प्रत्यहं अत्र पञ्चरात्राष्टरात्रग्रहणमदूरान्तरकाले नियमदर्शनार्थं तेन दोषकालमपेक्ष्य अर्व्वाङ्मध्ये ऊर्द्ध्वञ्च कर्त्तव्यं स्रावणाञ्जनमिति। रसाञ्जनमिति दार्व्वीक्वाथसमुद्भव-इत्यर्थः॥ १॥

निषिद्धताम्बूलानाह ताम्बूलमित्यादि तमित्यभ्यङ्गम्॥२॥

शरीरेत्यादौ।—देहेत्यनेन मनोव्यायामं मनश्चिन्तनादिकं निरस्यति संख्यातेति संज्ञिता याच चेष्टाभिमता एतेन भारवहनाद्या वनिष्टादिकार्य्यवशात् क्रियमाणाचेष्टा निरस्यति। मात्रया तां समाचरेदिति मात्रा चार्द्धशक्तिः।

वातपित्तामयी बालोऽवृद्धोऽजीर्णी च तां त्यजेत्।
उद्वर्त्तनं तथा कार्य्यं ततः स्नानं समाचरेत्॥
उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः।
तेनैव तूत्तमाङ्गस्य बलहृत्‌ केशचक्षुषोः॥ ४॥
स्नानमर्द्दितनेत्रास्यकर्णरोगातिसारिषु।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्॥
नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिमलायनः।
स्नानशीलः सुसुरभिः सुवेशो निर्म्मलाम्बरः॥
धारयेत् सततं रत्नं सिद्धमन्त्रमहौषधीः।
सातपत्रपदत्राणो विचरेद्युगमात्रदृक्॥
निशि चात्ययिके कार्य्ये दण्डी मौनी सहायवान्।

---

यदाह वाभटः अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिरिति। अर्द्धशक्तिलक्षणं यथा कक्षे ललाटे ग्रीवायां स्कन्धे नासाङ्गसन्धिषु। स्वेदः संजायते यत्र बलार्द्धं तं विनिर्दिशेत्॥ ३॥

निषिद्धव्यायाममाह वातेत्यादि। तेनैवेति उष्णाम्बुना उत्तमाङ्गस्य मस्तकस्य सेकः केशचक्षुषोर्बलं हरतीति बलहृत्॥ ४॥

निषिद्धस्नानमाह स्नानमित्यादि। अङ्घ्री पादौ मलायनानि गुदोपस्थानि तानि निर्म्मलानि यस्य। निर्म्मलाम्बरइत्यत्र अनुल्बणोज्ज्वल इति वाभटे पठ्यते अनुल्बणोऽनुद्धत इत्यर्थः। युगं हस्तचतुष्टयम्। आतप्रयिक-इत्यत्रवश्यक र्त्तव्य। वेगानिति मूत्रपुरीषवेगानिति ईरयेदित्युदीरयेत्। वेगितइति संजातमूत्रपुरीषादिवेगितः। दशधा पापकर्म्माणीति उक्तञ्च—अदत्तानामुपादानं हिंसाचैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्। पारुष्यमनृतञ्चैव पैशुन्यं

जीर्णे हितं मितञ्चाद्यान्न वेगानीरयेद्बलात् ॥
न वेगितोऽन्यकार्य्यः स्यान्नाजित्वा साध्यमामयम् ।
दशधा पापकर्म्माणि कायवाङ्मानसैस्त्यजेत् ॥
काले हितं मितं ब्रूयादविसम्वादिपेशलम् ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥ ५ ॥
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ ६ ॥
नक्तं दिनानि मे यान्ति कथं भूतस्य संप्रति ।
दुःखभाक् न भयत्येवं नित्यं सन्निहितस्मृतिः ॥ ७ ॥

दिनाचारविधिः।

---

चापि सर्व्वशः। असम्बन्धप्रलापश्च वाङ्मयं स्याच्चतुष्टयम्। परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतमिति। अविसम्वादीति न पूर्व्वापरविरुद्धं पेशलं मधुरं काल इति यथोचितसमये ॥ ५ ॥

आत्मनइत्यादौ परेषां न समाचरेदिति परेषां प्रतिकूलानि अनिष्टानि न समाचरेत्। कुतो न आचरेदित्याह आत्मन इत्यादि आत्मनः प्राणभृतामेव आत्मसम्बन्धादित्यर्थः। जिब्बा आत्मनोयानिप्रतिकूलानि अनिष्टानि तानि परेषमपि माचरेदिति ॥ ६ ॥

नक्तमित्यादि कथम्भूतस्य कीदृशस्य मम पापं कुर्व्वतः पुन्नं कुर्व्वतो वा इयं परिहरतो वा सम्प्रति नक्तं दिनानि यान्ति एवं नित्यं सन्निहितस्मृतिर्यः पुरुषो भवति स दुःखभाक् न स्यात् सर्व्वदा स्मरन् पुरुषो दुष्कृतं त्यजति दुःखहेतुतया च सुकृतमन्विच्छति इत्यर्थः ॥ ७ ॥

इति दिनाचारः।

---

मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड़्तवः स्मृताः ।
बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥
सेवेतातोऽस्मिन् स्निग्धस्वाद्दम्ललवणान् रसान् ।
गोधूमपिष्टमांसेक्षुक्षीरोत्थविकृतीः सुरान् ॥
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम् ।
कुङ्कुमार्ककिरणान् स्वेदं पादत्राणञ्च सर्व्वदा ॥ १ ॥
प्रावाराजिनकौषेय प्रवेणीरौरवास्तृतम् ।
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ॥

---

पारिशेष्यादृतुचर्य्यारूपं सुस्थवृत्तमाह मासैरित्यादि ।—षड़्तवइति शिशिरवसन्त-ग्रीष्मवर्षाशरद्धेमन्ता इत्यर्थः । यद्यपि शिशिरादिऋतुत्रयमुत्तरायणत्वेन प्रशस्तत्वादग्रे चोद्दिष्टं तथापि बलवृद्धिप्रकर्षत्वेन प्राशस्त्यात् प्रथमं हेमन्तविधिमाह बलिन-इत्यादि बलिनइत्यनेन प्राणिबलस्याग्निबलहेतुत्वं दर्शयति उक्तं हि—पाककाले यथाहतादभिप्रायात् शीतः शीते बलं बलात् । अग्निरग्नेश्च धातूनां मार्ग्गं माशस्ततोऽज्ञमिति । किं बलिन-इत्युपचयरतः । शीतसंरोधादिति कुम्भकारस्य शयनपङ्कलेपन्यायात् शीतेन बहिरनिर्गच्छच्छरीरोष्मणो-रोधात् । रसानिति औदकानूपमांसरसान् । कीदृशान्स्वाद्दम्ललवणद्रव्यसंस्कारात् स्वाद्दम्ललवणान् उक्तं हि चरके—तस्मात्तुषारसमये स्वाद्दम्ललवणान् रसान् । औदकानूपमांसानां मेध्यानामुपयोजयेदिति ।- मासस्थाने मांसेति पाठो-वाभटपुस्तके नास्ति टीकायाञ्च न व्याख्यात-इति ॥१॥

प्रावारेत्यादि ।—वाभटस्य प्रावारोगुरुप्रवरणं कम्बलादि । अन्ये तु प्रावारः कार्पासलोमवद्गुरुतरौत्तम् । अजिनं सुखस्पर्शलोमशचर्म्म । कौषेयं क्रिमिकोषोद्भववस्त्रम् । प्रवेणी गोणी अन्ये तु प्रवेणी सूचीवारणाख्यो वस्त्रविशेष इत्याहुः ।

अङ्गारतापसन्तप्तगर्भभूवेश्मनि प्रियाम्।
पीवरोरुस्तनश्रोणीमालिङ्ग्यागुरुचर्च्चितम्॥ २॥
अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः।
तदा हि शीतमाध्वीकं रोद्रप्रादनकारणम्॥ ३॥
कफश्चितो-हि शिशिरे वसन्तेऽर्कांशुतापितः।
हत्वाग्निं कुरुते रोगां स्ततस्तत्र प्रयोजयेत्॥
तीक्ष्णं वमननस्यादिकवड़ग्रहमञ्जनम्।
व्यायामोद्वर्त्तनं धूमं शौचकार्य्ये सुखोदकम्॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः।
पुराण यवगोधूमक्षौद्रजाङ्गलशूल्यभुक्॥
प्रपिवेदासवारिष्टसीधुमाध्वीकमाधवान्।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम्॥
गुरूष्णस्निग्धमधुरं दिवास्वप्नञ्च वर्ज्जयेत्॥ ४॥

---

रौरवो वस्त्रभेद-इति केचित् अन्येतु कार्पासवस्त्रमेव इत्याहुः चरके रौरवस्थाने कुथकेति पठ्यते कथकस्तु चित्रकम्बलः। लघ्वास्वभावैर्लघुभिरिति नेपालकम्बल प्रचुरतूलकपट्टादिभिः। किं कृत्वा शयनं भजेदित्याह अङ्गारेत्यादि अङ्गारतापेन सन्तप्तं यत् गर्भगृहं गृहकोष्ठकं तथा भूगृहञ्च चरकेऽप्युक्तं सेवेत भूगृहञ्चोष्णामुष्णागर्भगृहन्तथेति॥ २॥

उक्तविधिं शिशिरेऽप्यतिदिशति अयमेवेत्यादि। अत्रैव हेतुमाह तदेतत्रादि॥ ३॥

वसन्तविधिमाह। कफइत्यादि। शूल्यं भटित्रं शूलपाचितमितरार्थ.। आसवारिष्ट सुराकृतसन्धानम्।सीधु गुड़ासवः माध्वीकं मधुकृतं-मद्यं अरुणस्तु मार्द्वीकेति पठित्वा मृद्वीकारसोद्भवं मद्यमिति व्याचष्टे। माधवोमधुरीकृत-आसवः। अनुभवेदितनेन शेषअवयार्थं स्त्रीकं मैथुन-मनुजानाति

मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम्।
मध्याह्ने चन्दनार्द्राङ्गः स्वप्याद्धारागृहेनिशि ॥
निशाकरकराकीर्णे प्रभाते सौधमस्तके।
निष्कामोष्ट्रजनैः पाणिस्पर्शैः सचन्दनैः ॥
सेव्यमानोभजेतास्थां मुक्तामणिविभूषितः ॥ ५ ॥
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् ॥ ६ ॥
भूवास्पान् मेघनिष्यन्दात् पाकादम्लाज्जलस्य च।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥

---

वसन्तस्यादानमध्यत्वादिति भावः। गुर्व्वीतयादौ चक्रस्याने भ्ष्णेतग्पपाठः ॥ ४ ॥

ग्रीष्मविधिमाह मयूखैरित्यादि मयूखैरिति किरणैः स्नेहं पेपीयते इत्यर्थः। पिबति ग्रीष्मेऽम्लचादुष्णत्वाच्च मद्यं न पेयमित्युत्सर्गः। यद्यपि सात्म्यानान्तु त्यागेन सात्म्यत्यागजाः रोगाः भवन्ति अत किं प्रतिविधेयमित्याह अल्पं वा सुबहूदकं वा पेयमिति। मध्याह्न इत्यादि धारागृहइति छेदः। निशि ... सम्बध्यते ॥ ५ ॥

वर्ज्जनीयमाह लवणेत्यादि ॥ ६ ॥

वर्षाविधिमाह भूवास्पानित्यादि भूवास्पं प्रभावादेव ... कोपनं अन्ये तु पित्तस्य इत्याहुः मेघनिष्यन्दः शैत्या- ... जनकः अम्लपाकता च स्वभावतः पित्तकरी। अग्नि- ... इत्यनेन अग्निमान्द्यमपि त्रिदोषकोपनमिति दर्श- ... अग्निमान्द्ये अपाकाम्लपाकाभ्यां कफपित्तकारिधातु-

भजेत् साधारणं सर्व्वमुष्मणस्तेजनञ्च यत्।
आस्थापनं शुद्धतनुर्जीर्णं धान्यं कृतान् रसान्॥
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम्।
दिव्यं कौपं शृतञ्चाम्भो-भोजनन्त्वतिदुर्द्दिने॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु॥ ७॥
नदीजलोदमन्थाहः स्वप्नायासातपांस्त्यजेत्॥ ८॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति॥
तज्जयाय घृतं तिक्तं विरेकोरक्तमोक्षणम्।
तिक्तस्वादुकषायञ्च क्षुधितोऽन्नं भजेल्लघु॥
शूकाः शालयोमुद्गाः सरोऽम्भः क्वथितं पयः।

---

पोषकरसानुत्पादनाच्च धातुक्षयेण वातकारि। एतेन वर्षासु अग्निमान्द्येन वातादिकोपः। वातादिकोपेन च वह्निमान्द्यं दर्शितं उक्तं हि वाभटे — भूवाष्पेनाम्लपाकेन मलिनेन च वारिणा। वह्निनैव च मन्देन तेष्वित्यन्योन्यं दूष्यति। पवमादय-इति प्रवनप्रधानाः। साधारणमिति शिशिरोष्मसमग्निसन्दीपनञ्च आस्थापनं निरूहणं शुद्धतनुरिति संस्कृतां-सरसान। मध्वरिष्टं मधुकृतमरिष्टं चिरन्तनं पुरातनम्। दिव्यमित्याकाशजलं भोजनमित्यादि परेण सम्बध्यते। संशुष्कमिति नातिद्रवं क्षौद्रवदिति मधुयुक्तम्। एतच्च वार्षिकदेहस्य शोधनार्थं ज्ञेयम्॥ ७॥

वर्ज्जनीयमाह नदीत्यादि उदकमन्थः उदकप्रधानोमन्थः अहःस्वप्नः दिवास्वप्नः॥ ८॥

शरद्विधिमाह वर्षेत्यादि उचितं समवेतं उपसवाय इत्यस्य रूपं समवायोऽत्र सतताभ्यासरूपः सम्बन्धः तेन शीतसमवेता-

शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ॥
शारदानि च माल्यानि वासांसि विमलानि च ॥ ९ ॥
तुषारक्षारसौहित्यदधितैलवसातपान् ।
तीक्ष्णमद्यदिवास्वप्नपुरोवातातपांस्त्यजेत् ॥
शीते वर्षासु चाद्यां स्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत् ।
स्वादून्निदाघे शरदि स्वादुतिक्तकषायकान् ॥
शरद्वसन्तयोरूक्षं शीतं घर्म्मघनान्तयोः ।
अन्नपानं समासेन विपरीतमतोऽन्यथा ॥
नित्यं सर्व्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ १० ॥

---

शान्तामित्यर्थः सहसा इत्यक्रमेण आचितमिति सञ्चितं वर्षासु प्रायः इति वचनात् कदाचित् वर्षासु शीतमसुराद्विसेवया पित्तचयभयात् शरदि कोपो न भवतेत्रव दर्शयति । तिक्तं इतं पञ्चतिक्तघृतादिकं कथितं पयइति शृतं दुग्धं प्रदोषे चेति चकारोऽवधारणे प्रदोष-एवेत्यर्थः ॥ ९ ॥

वर्ज्जनीयमाह तुषारेत्यादि । ऋतुभेदे रसानाह शीत-इत्यादि । वाभटस्य । शीतइति हिमशिशिरयोः आद्यान् त्री-निति स्वाद्वम्ललवणरसान् अन्त्यानिति कटुतिक्तकषायानिति । शरद्वसन्तयोरित्यादौ सदित्तेन पूर्व्वोक्तेनान्वयः । अतोऽन्यथेति हेमन्तशिशिरयोस्तु विपरीतमिति स्निग्धमुष्णमन्नपानं भोजयेदित्यर्थः । नित्यमिति सर्व्वदा सर्व्वेषां षण्णां रसानामभ्यासः कार्य्य एवञ्च सति शीते वर्षासु चाद्यांस्त्रीनित्यादि यदुक्तं तद्विरुध्यते इत्यत आह स्वस्वाधिक्यमितरादि यस्मिन् यस्मिन् ऋतौ योरसः सेव्यत्वेनोक्तः तस्याधिक्यमात्रे तद्वचनस्य तात्पर्य्यमिति भावः ॥ १० ॥

ऋतोरित्यादि पूर्व्वऋतोरन्त्यमासस्यान्तिमसप्ताहं तथा परऋतोराद्यमासस्य प्रथमसप्ताहमिति सप्ताहद्वयं ऋतुसन्धि-

अतो रात्र्यन्तसम्प्राप्तावृतुसन्धिरिति स्मृतः।
तत्र पूर्व्वोविधिस्त्याज्यः सेवनीयोऽपरः क्रमात्॥ ११॥
कृत्स्नमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम्।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते॥
देशानामामयानाञ्च विपरीतं गुणं गुणैः।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितञ्चाद्यमेव च॥ १२॥

---

रित्यर्थः। क्रमादिति न सहसा तत्त्यागशीलने विधेयः। अत्र
हेतुर्व्वाभटेनैवोक्तो यथा। असात्म्यजा हि रोगाः स्युः सहसा
त्यागशीलनादिति। सात्म्यत्यागादसात्म्यमेव नाचरेदि-
त्यर्थः॥ ११॥

उपसंहरति कृत्स्नमित्यादि। ऋतुसात्म्यप्रसङ्गेनाभ्यास-
सात्म्यमप्याह उपशेते-इत्यादि उपशेते सुखयति अपथ्यमपि
विकारं न जनयति कुतइत्याह औचित्यादित्यभ्यासात्।
अपथ्यमपि हि निरन्तराभ्यासात् विषमिवाशीविषस्य नोपघातं
भवतीति भावः। ओकोऽभ्यासः तेन सात्म्यमोकसात्म्यं देश-
सात्म्यं रोगसात्म्यञ्च दर्शयति देशानामित्यादि
पादीनां गुणैः स्नेहगौरवादि
विपरीतरौक्ष्यलाघवयुक्तं मु
नीयमन्नम्। चेष्टितञ्च व्याया
विद इत्यर्थः। एवमामया
रोगसात्म्यमित्यर्थः।
ग्रहणं ततश्च प्रभावै
आमयशब्देन चाग
स्यापि सात्म्य द
कृदानां का
पायमाह तत्रे

तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते ।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत् ॥ १३ ॥
नगरीनगरस्येव रथस्येव रथी यथा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितोभवेत् ॥ १४ ॥

इति स्वस्थाविकारः ।

---

गौड़ाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात् ।

---

तथातुरस्यं तच्च स्वास्थ्यमुभयं परिपाल्यते । विशुद्धाहाराचाराभ्यां सदा क्षीरमाणशरीरपोषणेन प्रत्यवायहेतुपरिहारेण च यथा दीपपरिपालनं स्नेहवर्त्तिदानात् पोषणेन क्रियते तथा निर्व्वापकहेतु वातादिपरिहारेण च । तत्र श्लोकपूर्व्वार्द्धेन स्वास्थ्यपोषकहेतुरुक्तः । उत्तरार्द्धेन तु स्वास्थ्य-विघातकहेतु-परिहारोऽभिधेय इति न पौनरुक्तम् । अनुत्पत्तिरिह उत्पाद-कसामग्रीविघट्टनम् ॥ १३ ॥

इत्था।.

मिति स्वाहृस्वल... णानुक्तस्य सुस्थविधेरवनेन कर्त्तव्यतामाह नग-
शरद्वसन्तयोरित्यादौ स... रथयोरधिकृतः । कृतेयमृते-
न्यथेति हेमन्तशिशिरयोस्तु वि...
भोजयेदित्यर्थः । नित्यमिति स... ...रः ।
भ्यासः कार्य्य एवञ्च सति शीते ...नासुत्कीर्त्तनपूर्व्वकं स्व-
यदुक्तं तद्विरुध्यते इत्यत आह स्वस्था. गौड़ाधिनाथो-नय-
यस्मिन् ऋतौ यो रसः सेव्यत्वेनोक्तः तस्या. ...री तथा पात्र-
तात्पर्य्यमिति भावः ॥ १० ॥ ...यः सुनय इति

ऋतोरित्यादि पूर्व्वऋतोरन्त्यमासस्यान्ति...तात् भानोरनु
परऋतोराद्यमासस्य प्रथमसप्ताहमिति सप्ताह...नुसहृतमर्थः ।

भानोरनु प्रथितलोध्रवली कुलीन:
श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥ १ ॥
य: सिद्धयोगलिखिताधिकसिद्धयोगा-
नत्रैव निक्षिपति केवल-मुद्धरे-द्वा ।
भट्टत्रिपथवेदविदा जनेन
दण्ड: पतेत् सपदि मूर्द्धनि तस्य शाप: ॥ २ ॥

समाप्तोऽयं ग्रन्थ:।

---

असद्व्याख्यानतमसा सुच्छन्नं चक्रसंग्रहम् ।
प्रकाशयितुमस्माभिर्निर्म्मिता तत्वचन्द्रिका ॥
आसीत् सभायां शिखरेश्वरस्य लब्धप्रतिष्ठ: किल साहिसेन:।
वाणीविलासं कविसार्व्वभौमं विजित्य य: प्राप यश:समुद्रम् ॥
काकुत्स्थसेन-स्तनय-स्ततोऽभूत् ततोऽपि लक्ष्मीधरसेननाम
तस्मा-दभू-द्रुद्ररणस्तनूजस्तस्मादनन्त-स्तनयोऽथ यत्ते ॥
मालञ्चिकाग्रामनिवासभूमेर्गौड़ावनीपालभिषग्वरस्य ।
अनन्तसेनस्य सुतोऽवधत्ते टीकामिमां श्रीशिवदाससेन: ॥
टीकानुपूर्व्वं-र्व्विहिता: स्वयैऽर्थाये वा गुरुभ्योऽधिगन-
सन्त्यत्र तेऽदस्तदलं श्रमेण टीक

---

विद्याकुलसम्पन्नो-हि भिष
कीन इति लोध्रवलीसंज्ञ:
य इतशादौ सिद्धयोग-
खितयोगमपेक्ष्याधिका
स्तानविक्रयोगान् त
नधिकसिद्धयोगा
देहश्चेव पुंसा द
थवेदविदा । का
भेद: अगय